## IX

### Conclusion

The *Adhyātma-Rāmāyana* is, therefore, a work of the 15th century A D Its philosophy is pure monism, distinct from the *Viśistādvaita* of the school of Rāmānuja and the *Acintya-bhedābheda* of the school of Caitanya Rāmānanda the founder of the Ramaite sect and his followers advocated the views of Rāmānuja The *Adhyātma-Rāmāyana* is, however, an attempt to supply a purely monistic basis to the Ramaite cult It, therefore, seems to represent an age when the neo-vedantic movement was started—a movement of which the principal advocates were Appayadīksita, Nrsimhāśrama (cf *Advaitadīpikā*, ed CSS), Madhusūdana-Sarasvati and others The movement was started in the 15th century and continued till the 17th century A D

The *ādhyātmic* character of the Rāma and Sītā stories does not seem to have any earlier basis In the Rāmāyana of Vālmīki there are certain passages in which a divine character has been attributed to Rāma While in the *Ādikānda* (I 12 ff) he is simply described as one who is great, equal to Prajāpati and as powerful as Visnu (महात्मा, प्रजापतिसमः, विष्णुना सदृशो वीर्ये), he is considered to be identical with Viṣṇu in the Lankākāṇda, 102—

भवान् नारायणः श्रीमान् देवश्चक्रायुधः प्रभुः।
शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः॥

On the fall of Rāvaṇa the various gods and Daśaratha appear in the sky to congratulate Rāma They describe him as the creator of all the world ( कर्त्ता सर्वस्य लोकस्य ), as one who is identical with Nārāyana, Viṣṇu etc The various gods like the Aśvins, the sun and the moon etc , constitute the various parts of his body He is thus the *virāt*, the sustainer of the world.

As this is out of tune with the main trend of the work which is purely heroic the whole canto and similar other verses have been

supposed to be later interpolations The work probably suffered in this way at the hands of the Ramaites when the Rāma cult had been established.

The erudite attempt to give a monistic turn to the tale of Rāma and Sītā had no such success as the popular songs of Tulasīdāsa and other devotional writers The verses of the *Adhyātma-Rāmāyana*, though still zealously read for religious purposes, do not arouse those deeper feelings in the hearts of the devotees which the songs of Tulasīdāsa do The age of dry philosophical enquiries as to the real nature of the god was long past and the heart of the average Hindu felt more at ease with the conception of a more concrete personal god—Rāma

Calcutta University
15th March, 1935

**P C. Bagchi**

# अध्यात्मरामायणस्य विषयानुक्रमणिका

——:*:——

## आदिकाण्डे

——o——

### प्रथमाध्यायस्य [ १—४४ ]

ग्रन्थकृतो मङ्गलाचरणम् (१)*। सूतमुखेन लोककल्याणकाम्यया पर्यटतो नारदस्य ब्रह्मसविधागमनवर्णनम् (३-४)। ब्रह्मकर्तृक प्राप्तस्य नारदस्याऽऽगमनकारणविषयक पर्यनुयोगः (४)। कलावुपस्थिते तदानीन्तनानां सर्वदुराचारपरायणानां धर्म्ये पथि मतिहीनानां स्त्रीजिनाना मानवानाम्, तत्तद्दोषदूषितानां विशेषेण स्वामिसत्काररहितानां श्वशुरद्रोहिणीनां मानवीनाञ्च कथ सद्गतिर्भविष्यतीति ब्रह्माण प्रति देवर्षेर्नारदस्य जिज्ञासा (५-६)। प्रश्नोत्तर-प्रदानमुखेन प्रजापतिना शिवपार्वतीसवादरूपम् 'अस्ति रामचरितात्मकमध्यात्मरामायणम्' तत्प्रचारस्तद्व्याख्यानादिकञ्च गतिनिदानमित्यस्य कीर्त्तनम्, अध्यात्मरामायणश्रवणकीर्तन-पठनपाठनानां सर्वाघनाशित्वस्य रामगीतामाहात्म्यस्यापि विशेषेण कीर्त्तनम् (७-२०)। शिवसकाशे पार्वत्या रामचरितपृच्छा (२०-२४)। शिवेन सीतारामहनूमत्सन्देशरूपस्य 'रावणादिवधानन्तरमयोध्यायामभिषिक्तस्य रामस्य तत्त्वजिज्ञासवे हनूमते तत्त्वकथनाय सीतां प्रत्यादेश' इत्यस्य वर्णनम् (२४-३२)। सीतया च नित्यानन्दस्य सदा निर्मुक्तस्य चिदात्मनो रामस्य सृष्ट्यादिकर्त्तृत्वाभावप्रतिपादनम्, आत्मनश्च सृष्ट्यादिसमर्थमूलप्रकृतित्वकथनम्। ततश्च तयव अयोध्यायां रामजन्म, रामस्य विश्वामित्रसाहायकम्, मखरक्षणम्, अहल्योद्धार, मैथिलचापभङ्ग, सीतापाणिग्रहणम्, परशुरामपराभव, सीतया सह द्वादशवत्सरान् अयोध्या-वास., दण्डकारण्यगमनम्, विराधमारीचयोर्वध, रावणकर्त्तृकच्छायासीताहृति, रामेण जटायुष. कबन्धस्य च मोक्ष, शवरीकृतरामपूजनम्, सुग्रीवमेलनम्, वालिविनाशः, सीतान्वेषणम्, समुद्रे सेतुबन्धनम्, लङ्कानिरोध., रावणवध, विभीषणाभिषेक, पुष्पकेण सीतया सहायोध्यागमनम्, अयोध्यायां रामाभिषेक —एवमादीनां सूत्राकाराणां रामायणवृत्तान्ताना वर्णनम् (३२-३७)। रामस्य निर्विकारित्वकथनम् (३८)। अत पर स्वयं राघवेणैव हनूमति आत्मानात्म-परात्मतत्त्वकथनम् (३९-४४)।

### द्वितीयाध्यायस्य [ ४५—५३ ]

शिवसकाशे पार्वत्या सङ्क्षेपत. श्रुतस्य रामचरितस्य विस्तरत. श्रवणेच्छाप्रकाश. (४५)। शिवेन 'मत्सकाशे रामेणैवोक्तपूर्वं तापत्रयविनाशपटीयोऽध्यात्मरामायणमद्य ते कथयिष्यामी'त्य-

* ग्रन्थान्तर्वर्ति नोऽङ्का. पत्रसङ्ख्यालेनावसेया।

भिधाय रामायणकथायाः प्रारम्भ. (४६)। तत्राऽऽदौ रावणादिनिशाचराणां पीडया पीडिताया गोरूपधराया धराया. सुरमुनिभिः सार्द्धं ब्रह्मसकाशगमनम्, रुदत्या च तया स्वव्यसनविनिवेदनम् (४६)। जगदाधारभूताया धराया वचनं श्रुत्वा देवै. परिवृतस्य पितामहस्य क्षीरसमुद्रतीरे विष्णुसकाशगमन तस्य स्तुतिश्च (४६-४७)। हरेराविर्भावः (४७)। श्रिया भूम्या चावस्थितं शङ्खचक्रगदापद्मधारिणं गरुडासनं भगवन्तमवलोक्य ब्रह्मणः पुन· स्तव· (४८-५१)। स्तुत्या परितुष्टस्य भगवत. 'किं करिष्यामी'ति ब्रह्मणि प्रश्नः (५१)। 'पौलस्त्यतनयो रावणः मद्दत्तेनैव वरेण दर्पितो निरन्तरमेव देवमनुष्यादीन् पीडयति तस्मै च मानुषेण ते मरणं नान्येनेति मया प्रदत्तो वर, अतस्त्वं मानुषो भूत्वा त जही'ति ब्रह्मप्रार्थना (५१ ५२)। एवमाकर्ण्य 'राम-भरतलक्ष्मणशत्रुघ्नरूपेणाऽऽत्मानं चतुर्धा विभज्य दशरथरूपिण. पूर्वजन्मार्जिततप प्रभावलब्धवरस्य कश्यपस्य गृहे उत्पत्स्यामहे, योगमायाऽपि जनकगृहे सीतेति नाम्ना उत्पत्स्यते, तत सर्वन्तेऽभिलषितं सम्पादयिष्याम' इति ब्रह्मणे विष्णोराश्वासप्रदानम् (५२-५३)।

मनुजावतारमङ्गीकुर्वतो नारायणस्याऽऽश्वासेनाऽऽश्वस्तस्य प्रजापतेर्देवान् प्रति वानरादि-सर्गाज्ञाप्रदान स्वभवनगमनञ्च (५३)। पितामहादेशेन देवानां वानरादिरूपधारण भगवदागमन-प्रतीक्षणञ्च (५३)।

## तृतीयाध्यायस्य [ ५४—७८ ]

सूर्यवशप्रसूतानां दशरथपूर्ववर्त्तिनां दिलीपरघ्वजप्रभृतीनामजतनयस्य दशरथस्य च जन्मादिकथनम् (५४)। अनपत्यता सर्वेषामेवाधोगतिकारणमिति सन्तप्तेन पुत्रहीनेन दशरथेन स्वगुरोर्वशिष्ठस्य सकाशे कथ मे पुत्रा भविष्यन्तीति प्रश्न (५४-५५)। वशिष्ठेन ऋष्यशृङ्गा-नयनस्य ऋष्यशृङ्गेण पुत्रेष्टियज्ञारम्भस्य चोपदेश (५६)। ऋष्यशृङ्गानयन तेन यज्ञारम्भश्च (५८)। हूयमानस्य स्वर्णपात्रस्थपायसहस्तस्य वह्नेराविर्भावस्तत्कर्त्तृक दशरथाय पायस-प्रदानञ्च (५८)। दशरथेन तस्य पायसान्नस्य विभज्य कौशल्यादिपत्नीभ्य प्रदानम् (६५)। कौशल्यादीनां गर्भधारणम् (६७)। कौशल्याया नीलोत्पलदलश्यामस्य चतुर्भुजस्य रामस्य उत्पत्ति (६७ ६९)। सुतरूपसन्दर्शनेन जातविस्मयाया 'स्वयं भगवान् स्वगर्भे जात' इति ज्ञाततत्त्वाया कौशल्याया परमात्मस्तव, तद्रूपोपसंहाराय याच्ञा च (६९-७३)। रामस्य बाल-भावावाप्ति बालवद्रोदनञ्च (७४)। कैकेय्या भरतस्य सुमित्रायां लक्ष्मणशत्रुघ्नयोश्चोत्पत्ति (७४)। वशिष्ठेनामीषां नामकरणम् (७५)। रामादीनां बाल्यक्रीडादि (७५-७८)। तेषामुपनयनं धनुर्वेदादिपर्यालोचनञ्च (७८)।

## चतुर्थाध्यायस्य [ ७६—८६ ]

रामदर्शनार्थमयोध्यायां कौशिकस्याऽऽगमनम् (७९-८०)। दशरथेन सत्कारपूर्वक मुनेरागमन-कारणस्य जिज्ञासा (८०-८१)। विश्वामित्रस्य यज्ञविघ्नविनिवारणाय रामानयनेच्छाविज्ञापनम्(८१)।

अप्राप्तवयस्कस्य रामस्य प्रेषणमनिच्छतो दशरथस्य वशिष्ठसकाशे कर्त्तव्यविषयकः प्रश्नः, तदुत्तरव्याजेन वशिष्ठस्य रामादीनां परमात्मत्वख्यापनम्, सीतारूपया प्रकृत्या सह मेलनायैव कौशिकस्याऽऽगमनमिति च ज्ञापनम् (८४)। विश्वामित्रेण सह रामलक्ष्मणयोर्गमनम् (८४)। पथि विश्वामित्रेण क्षुत्पिपासादिविनिवर्त्तनकारिण्योर्बलातिबलानाम्नोर्विद्ययो रामाय प्रदानम् (८५)। रामेण ताडकाविनाशः (८६)।

## पञ्चमाध्यायस्य [ ८७ १०३ ]

कामाश्रमवासानन्तरं रामादीनां सिद्धाश्रमापरनामकस्य वामनाश्रमस्य सम्प्राप्तिः (८७-८८)। रामादेशेन कौशिकस्य यज्ञारम्भः (८८)। यज्ञविघ्नाय मारीचसुबाहुप्रभृतीनामागमनम् (८९)। रामशरजर्जरितस्य मारीचस्य जलधौ पतनम्, सुबाहोर्जीवनान्तः, अन्येषाञ्च रक्षसां लक्ष्मणेन विनिपातनम् (८९)। ततो जनकयज्ञदर्शनप्रसङ्गेन तेषां रामादीनां मिथिलायात्रा (८९)। पथि रामपृष्टेन कौशिकेन अहल्याश्रमवृत्तान्तस्य अहल्याशक्रसगम-वृत्तान्त-गौतमाभिशापवृत्तान्तयोश्च वर्णनम् (९०-९२)। रामपादस्पर्शेनाहल्योद्धारः (९३)। अहल्यया रामस्यार्चनं स्तुतिश्च (९३-१०३)। अहल्याया गौतमसकाशगमनम् (१०३)।

## षष्ठाध्यायस्य [ १०४—११६ ]

रामादीनां मिथिलाप्राप्तिः (१०४)। तत्र जिज्ञासवे जनकाय कौशिकेन रामस्य ताडकानाशाहल्योद्धारादिवृत्तान्तानां कथनम्, माहेश्वरधनुर्दर्शनार्थमिहाऽऽगमनमिति विनिवेदनञ्च (१०५)। जनकाज्ञया हरधनुष आनयनम् (१०६)। रामस्य वामेन करेण धनुषस्तोलनं खण्डनञ्च (१०७)। विश्वामित्राज्ञया जनकेन दशरथादीनामानयनाय दूतस्य संप्रेषणम् (१०८-१०९)। ससुतस्य समन्त्रिपुरोहितस्य च दशरथस्य मिथिलायामागमनम् (१०९)। रामेण सीतायाः पाणिग्रहणम् (११२)। सीताप्रदानानन्तरं जनकेन विश्वामित्रादीनां सविधे सीतोत्पत्तिवृत्तान्त-नारदागमन-नारदोपदेशवृत्तान्तादिकस्य रामाय प्रदानार्थं हरधनुषः स्थापनमित्यस्य च विनिवेदनम् (११२-११४)। जनकेन परमात्मभूतस्य रामस्य स्तुतिः, रामाय यौतुकादिदानम् (११५)। रामादीनां मिथिलातोऽयोध्याप्रत्यागमनाय यात्रा (११६)।

## सप्तमाध्यायस्य [ ११७—१२८ ]

दशरथस्य दुर्निमित्तादिदर्शनम्, वशिष्ठेनाऽऽश्वासनम् (११७)। जामदग्न्यागमनम् (११८), तस्य दर्पहानिः (११९)। तेन रामस्य स्तुतिः, जन्मवृत्तकथनमुखेन तत्स्वरूप-कीर्त्तनञ्च (११९-१२७)। रामादीनामयोध्याप्राप्तिः। युधाजिता सह दशरथप्रेषितयोर्भरत-शत्रुघ्नयोः केकयराज्यगमनाय प्रस्थानम् (१२७-१२८)।

# अयोध्याकाण्डे

—o—

## प्रथमाध्यायस्य [ १२६—१४१ ]

रामदर्शनार्थं नारदागमनम् (१२९)। रामेणाभ्यर्हितस्य नारदस्य सकाशे आगमनकारणजिज्ञासा (१३०-१३१)। नारदेन रामस्य परब्रह्मत्वस्य प्रकटनम् (१३१-१३९)। रावणवधार्थमेव ते मनुष्यजन्मग्रहणमिति ख्यापनम् (१३९ १४०)। 'एतदर्थमेव ब्रह्मणाऽहं त्वत्सकाशं प्रहित' इत्युक्तिश्च (१४०)। रामस्य 'श्वो दण्डकारण्यं गमिष्यामीति सीताहरणमिषेण रावणं नाशयिष्यामी'ति च प्रतिज्ञा (१४१)। नारदस्य देवलोकं प्रति प्रस्थानम् (१४१)।

## द्वितीयाध्यायस्य [ १४२—१५७ ]

दशरथकर्तृको रामस्याभिषेकोद्योग. ( १४२-१४३ )। अभिषेकार्थं कर्त्तव्यानां कार्यजातानां विधानाय वशिष्ठस्य सुमन्त्रं प्रति आदेश (१४४-१४९), तस्य रामगृहगमनञ्च (१४६)। रामेण कुलगुरोर्वशिष्ठस्य सत्कार (१४६-१४७)। वशिष्ठकर्तृकं परमात्मभूतस्य श्रीरामचन्द्रस्य परमात्मत्वप्रकटनं (१४७-१४९), दशरथकृतराज्याभिषेकसङ्कल्पप्रकटनञ्च (१५०)। वशिष्ठस्य प्रस्थानम् (१५०)। राममातु कौशल्याया रामराज्याभिषेकसङ्कल्पसिद्ध्यर्थं देवादीनामाराधनम् (१५१)। रामराज्याभिषेकप्रवृत्तिं विदित्वा देवानां तद्विघाताय वाणीप्रेरणम् (१५१-१५२)। अयोध्यामुपगताया वाण्या मन्थरायामभिनिवेश (१५२)। वाणीभाराक्रान्तायाः कुब्जाया मन्थराया धात्रीमुखेण रामाभिषेचनसवादमाकर्ण्य कैकेयीसमीपागमनम् (१५२-१५३)। कुब्जामुखाद् रामाभिषेकवृत्तान्ताकर्णनेन हर्षपूरितहृदयया कैकेय्या कुब्जायै पारितोषिकरूपेण स्वर्णनूपुरस्य प्रदानम् (१५३)। कुब्जाया. खेद. (१५३)। तस्याश्च 'रामराज्याभिषेके तव पुत्रो भरतो दासस्त्वमपि दासी भविष्यसीत्याद्युक्त्या रामस्य चतुर्दशवर्षवनवासरूपं भरतस्याभिषेकरूपञ्च वरं दशरथसमीपे प्रार्थयस्वे'ति कैकेय्यै उपदेशदानम्, तदुपायरूपाया दशरथाङ्गीकृताया वरद्वयीप्रदानप्रतिश्रुतेरपि स्मारणम् (१५४-१५५)।

कुब्जावाक्येन कैकेय्या मतिविभ्रम, तस्या कुब्जाप्रशसापूर्वक 'भरते राजनि तुभ्यं ग्रामाणां शतं दास्यामी'त्युक्त्वा कोपभवनप्रवेश. (१५६-१५७)।

## तृतीयाध्यायस्य [ १५८—१७१ ]

रामाभ्युदयार्थमादिष्टप्रकृतेर्दशरथस्य स्वभवनप्रवेश (१५८)। तत्र कैकेयीमदृष्ट्वा दासीमुखेन तस्याः कोपभवनप्रवेश विज्ञाय भयसन्त्रस्तस्य तस्य कोपभवनप्रवेशः (१५९)। कैकेयीं कोपपरवशां भूषणादिविहीनाञ्च दृष्ट्वा दशरथस्य तत्सन्तोषसम्पादनप्रयत्न. (१५९-१६०)। कैकेय्या रामनिर्वासनस्य भरताभिषेचनस्य च प्रार्थनम् (१६०-१६१)। वरद्वयश्रवणेन राज्ञो भूमौ पतनम्,

प्रलापः, तथाविधवरग्रहणव्यवसायात् कैकेयीं निवर्तयितुं प्रार्थना, दृढव्यवसायां तां ज्ञात्वा मूर्च्छा च (१६१-१६३)। प्रभाते अभिषेकदर्शनेच्छूनां पौराणामौत्सुक्यवर्णनम् (१६३-१६४)। राज्ञोऽदर्शनेनोत्कण्ठितस्य सुमन्त्रस्य राजभवनद्वारगमनम्, तत्र राज्ञोऽवस्था-विपर्ययमवलोक्य कैकेयीं प्रति तत्कारणजिज्ञासा (१६४)। दशरथस्य सुमन्त्रं प्रति रामानयनादेशः (१६५)। सुमन्त्रवाक्येण रामस्य पितृसन्निधावागमनं पितृचरणवन्दनञ्च (१६५)। राजयोषितां रोदनं श्रुत्वा वशिष्ठस्यापि तत्राऽऽगमनम् (१६६)। राजा-वस्थादर्शनेन परितप्तचित्ते रामे 'राजाज्ञया राज्यमपि त्यक्ष्यामी'ति प्रतिज्ञातवति कैकेय्या-स्तत्सकाशे दशरथविवक्षिततत्त्वेन रामवनवासस्य भरताभिषेकस्य च प्रकटनम् (१६६-१६८)। दशरथस्य विलापः (१६९)। रामेण पितुः सान्त्वना स्वस्वस्त्ययनार्थं देवार्चनपरायाः ब्राह्मणेभ्यो धनानि ददत्याः मातुः सन्निधौ गमनञ्च (१७०-१७१)।

## चतुर्थाध्यायस्य [ १७२—१९२ ]

रामस्य मात्रे वनगमनसंवादप्रदानम् (१७२-१७३)। तच्छ्रवणेन कौशल्याविलापः, लक्ष्मण-विकत्थनञ्च (१७३-१७५)। रामेण ससारस्य शरीरस्य चानित्यत्वख्यापनम्, लक्ष्मणप्रतिबोधनम् (१७५-१८४)। मातुः कौशल्यायाः रामप्रस्थानमाङ्गलिकानुष्ठानम् (१८४-१८५)। अनुगमन-प्रार्थिने लक्ष्मणाय रामस्यानुगमनादेशः (१८५)। रामस्य सीतासन्निधावागमनम्, दण्डकारण्य-गमनविनिवेदनञ्च (१८५-१८६)। रामेण सह वनं गन्तुं सीतायाः प्रार्थना (१८७), तत्प्रतिषेध-मुखेन रामकर्तृकं वनस्य दोषादिकीर्त्तनम्, जानक्या वनगमनाय रामस्यानुनयः (१८९-१९०)। रामस्य सीतायै वनगमनाय अनुमतिप्रदानम् (१९१)। ब्राह्मणादिभ्यो धनादिदानम् (१९१-१९२)।

## पञ्चमाध्यायस्य [ १९३—२१२ ]

पथि गच्छन्तं ससीतं सलक्ष्मणञ्च राममवलोक्य नागरजनानां दशरथाद्युपालम्भः (१९३-१९४)। वामदेवस्य रामादीनां प्रकृततत्त्वख्यापनेन रामस्य मत्स्याद्यवतारवर्णनेन च नागराणा-मनुशोचनाविनिवारणम् (१९५-२०३)। रामस्य कैकेयीगृहप्रवेशः (२०३)। कैकेय्या सीतारामलक्ष्मणेभ्यश्चीरदानम्, रामलक्ष्मणयोस्तत्परिधानञ्च (२०४)। सीतां वल्कलं वसानां दृष्ट्वा वशिष्ठेन कैकेय्यास्तिरस्कारः (२०४-२०५)। दशरथाज्ञया सुमन्त्रेण रथानयनं रथारोहणेन त्रयाणां सीतारामसौमित्रीणां वनाय प्रस्थानम् (२०५-२०७)। दशरथस्य कौशल्यागृहगमनम्, तत्र तस्य मूर्च्छा प्रलापादिकञ्च (२०८)। रामस्य तमसातीरे यामिनीयापनसङ्कल्पः पौराणां वञ्चनार्थं रात्रावेव ततः प्रस्थानञ्च (२०८-२०९)। पौराणां विनिवर्त्तनम् (२१०)। सुमन्त्र-चालितेन रथेन रामादीनां शृङ्गबेरपुरादनतिदूरे गमनम्, तत्र शिंशपावृक्षमूले अवस्थानञ्च (२१०)। रामागमनवार्ताश्रवणेन गुहस्याऽऽगमनम् (२१०)। गुहेन स्वराज्ये राज्यकरणाय उपानयन-

ग्रहणाय च रामं प्रत्यनुनय, रामेण विनिवारणम् (२११)। वटक्षीरेण रामलक्ष्मणयोर्जटाबन्धनम्, कुशशय्यायां रात्र्यतिवाहनञ्च (२१२)।

षष्ठाध्यायस्य [ २१३—२३३ ]

रामावस्थादर्शनेन गुहस्य खेदः। लक्ष्मणेन सुखदु:खादीनामनित्यत्वकर्माधीनत्वयो· सङ्कीर्त्तनम्, तेन च गुहस्याऽऽश्वासनम् (२१३-२१८)। प्रभातायां रजन्यां गङ्गोत्तरणार्थं रामादीनां गुहानीतनाव्यारोहणम् (२१९)। भागीरथीमध्यगताया· सीताया भागीरथीसविधे प्रार्थना, रामादीनां परपारगमनञ्च (२१९)। गुहस्य प्रत्यावर्त्तनम् (२२०)। रामादीना भरद्वाजाश्रमप्राप्तिः, वटुना मुनिसन्निधौ स्वागमनसंवादप्रेषणञ्च (२२० २२१)। शिष्यमुखाद् रामागमन श्रुत्वा भरद्वाजस्य रामसकाशगमनम्, मुनिना सह तेषामाश्रमप्रवेशश्च (२२१)। भरद्वाजेन कृतातिथ्यानां रामादीना परेद्युश्चित्रकूटाद्रौ वाल्मीक्याश्रमसप्राप्ति, वाल्मीके पादाभिवादनञ्च (२२३)। रामस्य स्ववासस्थानसम्बन्धिनी पृच्छा (२२३)। तदुत्तरव्याजेन वाल्मीके रामस्तुति, स्वपूर्ववृत्तवर्णन रामावासस्थलनिरूपणञ्च (२२३-२३३)।

सप्तमाध्यायस्य [ २३४—२५७ ]

रामसकाशात् प्रतिनिवृत्तस्य सुमन्त्रस्यायोध्याप्रवेश, दशरथाभिवादनञ्च (२३४)। तस्य दर्शनेन दशरथस्य शोकोच्छ्वास (२३४-२३५)। सुमन्त्रस्य रामकृतजटाधारण-विनिवेदनादि-वेदनम् (२३५ २३७)। राजानं प्रति कौशल्याधिक्षेप (२३७)। अधिक्षेपक्षतचित्तस्य दशरथस्य कोशल्यासकाशे शब्दभेदबाणेन मुनिकुमारविनाशस्य 'पुत्रशोकेन तव मरण भविष्यती'ति मुनि-शापवृत्तान्तस्य च वर्णनम् (२३८-२४३)। विलपतो दशरथस्य मरणम् (२४३)। राजयोषितामुप-क्रोश। (२४३) वशिष्ठादिभिर्मृतदेहस्य तैलद्रोण्यां स्थापन भरतानयनाय दूतप्रेषणञ्च (२४३-२४४)। दूतमुखाद् वशिष्ठादेशमाकर्णयत· सशत्रुघ्नस्य भरतस्यायोध्यायां प्रत्यावर्त्तनम् (२४४)। प्राप्तस्य भरतस्य सकाशे कैकेय्या स्वपितु कुशलवार्त्ताजिज्ञासा (२४५)। कैकेयीमुखाद् भरतेन दशरथविनाशरामनिर्वासनादिवार्त्तानां श्रवणम् (२४६ २४७)। श्रुतवृत्तान्तस्य तस्य विनष्टसंज्ञत्वम् (२४७)। लब्धसञ्ज्ञस्य तस्याधिक्षेपपूर्वक मातृभवन परित्यज्य कौशल्याभवनगमनम् (२४८)। भरतदर्शनेन प्रवृद्धशोकाया· कौशल्याया विलाप (२४९)। भरतेन पुन पुन प्रतिज्ञापूर्वकं कौशल्यासकाशे कैकेयीकृतेषु रामवनवासादिकार्येषु स्वदोषहीनत्वोपपादनम् (२४९)। वशिष्ठेनाऽऽत्मतत्त्वादिव्यापनपूर्वं भरतसान्त्वनम् (२४९-२५४)। भरतस्य पितुरौर्द्ध्व-दैहिकक्रिया गवादिदानञ्च (२५४-२५७)।

अष्टमाध्यायस्य [ २५८ २६६ ]

वशिष्ठेन भरताय राज्यदानप्रस्ताव· (२५७-२५९)। राज्यग्रहणे असम्मतिज्ञापनपूर्वकं भरतस्य वनगमनप्रतिज्ञा (२५९-२६०)। कौशल्यादिसहितस्य ससैन्यस्य भरतस्य रामानयनाय

वनप्रयाणम् (२६०)। ससैन्यं तमागत श्रुत्वा गुहस्य रामानिष्टाशङ्का (२६१), भरतचित्तवृत्ति-परिज्ञानञ्च (२६२)। सीतारामयो· शयनस्थलीदर्शनेन भरतस्य खेद· (२६३)। गुहानीतया नावा भरतादीनां भागीरथ्युत्तरणम्, भरद्वाजाश्रमगमनञ्च (२६४-२६५)। भरतभरद्वाजसंवाद (२६५-२६६)। भरद्वाजस्य भरतादीनामातिथ्यविधानम् (२६६-२६७)। भरतस्य चित्रकूटाद्रौ गमनम् (२६८-२६९ )।



---

## अरण्यकाण्डे

—*—

रामस्तुतिश्च (३०७-३१२)। सुतीक्ष्णेन सह रामादीनां सुतीक्ष्णगुरोरगस्त्यस्याऽऽश्रमं प्रति प्रस्थानम् (३१३)।

तृतीयाध्यायस्य [ ३१४—३२८ ]

रामादीनामगस्त्यभ्रातुरग्निजिह्वस्याऽऽश्रमप्राप्तिः (३१४), परेद्युः प्रातरगस्त्याश्रम-संप्राप्तिश्च (३१४ ३१५)। अगस्त्येन रामस्य सत्कारः, तत्परब्रह्मत्वप्रतिपादनमुखेन स्तुतिश्च (३१६-३२७)। अगस्त्येन रामाय महेन्द्रदत्तचापतूणीरखड्गादीनां प्रदानम्, पञ्चवटीवासस्योपदेशश्च (३२७-३२८)। रामादीनामगस्त्याश्रमात् प्रयाणम् (३२८)।

चतुर्थाध्यायस्य [ ३२९—३४५ ]

रामादीनां जटायुषा सङ्गतिः (३२९)। ततः पञ्चवट्यां गौतमीतीरे गमनम् (३२९-३३१)। लक्ष्मणेन मन्दिरस्य निर्माणम् (३३१)। तत्र रामादीनां सुखवासः, कदाचित्तु लक्ष्मणपृष्टस्य रामचन्द्रस्य लक्ष्मणसकाशे ज्ञानविज्ञानादिसहितमोक्षगतिनिरूपणम् (३३१-३४४)। ततो भक्तियोगस्य श्रैष्ठ्यप्रतिपादनं भक्तिलाभोपायकीर्त्तनञ्च (३४४-३४६)।

पञ्चमाध्यायस्य [ ३४७—३५९ ]

रावणस्वसुः शूर्पणखाया राघवाश्रमप्राप्तिः (३४७)। रामसकाशे स्वपरिचयप्रदानपुरःसरं तस्या 'मया सह रमस्वे'ति प्रार्थना (३४८-३४९)। रामेण विनिवारितायास्तस्या वैदेहीविनाशाय धावन्त्या लक्ष्मणखड्गेन कर्णनासाच्छेदः (३५०-३५१)। राक्षस्याः खराख्यस्वसोदर्यसकाशगमनं रामादीनां वार्त्तावर्णनञ्च (३५१-३५२)। शूर्पणखावाक्यपरिणोदितस्य चतुर्दशसहस्रसेना-परिवृतस्य सदूषणस्य खरस्य रामविनाशार्थं प्रयाणम् (३५२)। रामकर्तृकश्चतुर्दशराक्षससहित-खरादिवधः (३५२-३५३)। खरादीनां नाशेन भृशं क्रुद्धाया शूर्पणखाया लङ्कायां रावणसभाप्राप्तिः (३५४)। खरादिवधविनिवेदनञ्च (३५४-३५५)। रावणपृष्टायास्तस्या रामादीनां परिचय-प्रदानावसरे सीताहरणानुरोधः (३५५-३५७)। रामवृत्तान्तश्रवणेन रावणस्य तत्त्वज्ञानोदयः, ततश्च रामहस्ते निधनं कामयमानस्य तस्य रामेण वैरविधानसङ्कल्पः (३५८-३५९)।

षष्ठाध्यायस्य [ ३६०—३६९ ]

रावणस्य समुद्रस्य परे तीरे मारीचाश्रमगमनम् (३६०-३६३)। 'कथमागतवानसी'ति मारीचप्रश्ने रावणस्य रामादीनां वृत्तान्तप्रकाशपुरःसरं सीताहरणाभिलाषप्रकटनम्, मारीचसाहाय्य-प्रार्थनञ्च (३६०-३६२)। ज्ञातवृत्तस्य मारीचस्य भीतिः, रामपराक्रमवर्णनमुखेन पुरा रामकृतस्य स्वव्यसनस्य प्राप्तिवर्णनम्, रामभयेनैव स्वस्य प्रव्रज्यावलम्बनमित्यस्य कथनम् (३६२-३६५), रामस्वरूपवर्णनम् (३६५-३६७), तथाविधाद्दुर्व्यवसायान्निवृत्त्यर्थं रावणानुनयश्च (३६७)। रावणस्य सीताहरणनिर्बन्धः, मृगरूपधारणाय मारीचानुरोधः, मदाज्ञाऽपालने तवानिष्टं भावीति भीतिप्रदर्शनञ्च (३६८), मारीचस्य स्वीकृतिः, उभयो रथेन रामाश्रमगमनम्, मृगरूपस्य मारीचस्य रामाश्रमसविधे विचित्रभङ्ग्या विचरणञ्च (३६९)।

सप्तमाध्यायस्य [ ३७०—३८४ ]

सर्वज्ञस्य रामस्य सीताया अग्निवासानुरोध छायाकृतिग्रहणानुरोधश्च ( ३७० )। सीतायाश्छायाकृतिग्रहण मायानिर्मितमृग दृष्ट्वा रामसकाशे क्रीडनकार्थं तदानयनप्रार्थना (३७१)। सीतारक्षणाय लक्ष्मणं स्थापयित्वा मृगग्रहणार्थं रामस्य यात्रा (३७१-३७२)। रामेण मारीचस्य हननम्, आसन्नविनाशस्य मारीचस्य रामसदृशस्वरेण हा लक्ष्मणेत्यादिना उच्चैराक्रोशनम् (३७२-३७४)। मृतस्य मारीचस्य तेजसो रामशरीरे प्रवेशः (३७५)। देवाना राम-विभूति-वर्णनम् (३७५-३७६)। मारीचाक्रन्दन श्रुत्वा भीताया· सीताया लक्ष्मणं प्रति रामसाहाय्यकानुरोध , लक्ष्मणेन 'नायं रामकण्ठस्वर , राक्षसस्यैव कस्यचिदय स्वर ' इत्याद्युक्त्वा गमनेऽनभिलाष , सीताया· कोपो लक्ष्मणभर्त्सनञ्च (३७६-३७७)। रामसाहाय्याय लक्ष्मणगमनम् (३७७)। अन्तरमासाद्य भिक्षुवेशधारिणो रावणस्य सीतासकाशसम्प्राप्ति (३७७)। सीता-रावणसवाद (३७८-३७९)। सीताया परुषवाक्येण क्रुद्धस्य रावणस्य स्वरूपप्रदर्शनम्, सीतां स्यन्दनोपरि सस्थाप्य आकाशमार्गेण प्रयाणारम्भश्च (३७९-३८०)। सीताया आक्रन्दनम् (३८०)। सीताक्रन्दनश्रवणेन जटायुषो रावणप्रतिरोध (३८१)। जटायुषा रावणस्य युद्धम् (३८१) जटायुषो भङ्ग (३८२)। सीताया क्रन्दनम् (३८२)। सीतामादाय रावणस्य प्रस्थानम् (३८२)। पर्वताग्रस्थितान् वानरान् दृष्ट्वा सीताया उत्तरीयाभरणादिनिक्षेप (३८३)। समुद्र-मुल्लङ्घ्य ससीतस्य दशाननस्य लङ्काप्राप्ति , अशोकवनिकायां सीतानिक्षेपश्च (३८३)।

अष्टमाध्यायस्य [ ३८५—३९७ ]

मायाविमारीचवधानन्तरम् आश्रम प्रति प्रस्थितस्य रामस्य लक्ष्मणेन समागम (३८५-३८६)। रामकर्तृकलक्ष्मणतिरस्कार (३८६-३८७)। रामलक्ष्मणयोराश्रमप्राप्ति सीताऽदर्शनेन रामस्य विलापस्तयो सीतान्वेषणञ्च (३८७-३८९)। रामलक्ष्मणयोर्जटायुषा साक्षात्कार (३९०)। जटायुष 'रावणेन सीता हृते'ति वार्त्ताविज्ञापनम् (३९०)। जटायुषो मृत्यु , रामलक्ष्मणाभ्यां तस्य दाह (३९१)। जटायुषो दिव्यरूपधारण रामस्तुति रामवरेण तस्य विष्णुसायुज्य-प्राप्तिश्च (३९२-३९७)।

नवमाध्यायस्य [ ३९८—४१३ ]

रामलक्ष्मणयो कबन्धसमागम (३९८)। ताभ्या कबन्धस्य बाहुच्छेद (४००)। रामेण स्वपरिचये प्रदत्ते कबन्धेनापि आत्मपरिचयप्रदानावसरे अष्टावक्रेन्द्रादिकृतवृत्तान्तवर्णनम् (४००-४०४)। कबन्धवाक्येन रामलक्ष्मणयोस्तस्य दाह कबन्धस्य दिव्याकारपरिग्रहो रामस्तुतिश्च (४०४-४१३)।

दशमाध्यायस्य [ ४१४—४२४ ]

स्वर्गं गच्छत कबन्धस्य शवरीसकाशगमनानुरोध (४१४)। कबन्धस्य विष्णु-पदगमनम् (४१५)। सलक्ष्मणस्य रामस्य शवर्याश्रमसप्राप्ति (४१५)। शवर्या रामलक्ष्मणयो

सपर्या, स्ववृत्तान्तवर्णनञ्च (४१९-४१७)। शवरीसंवादक्रमेण रामस्य भक्तिसाधनप्रकारवर्णनं सीतासंवादजिज्ञासनञ्च (४१७-४२०)। शवर्या ऋष्यमूके पम्पासर समीपे सुग्रीवादिभिर्मेलनेन सीतारहस्योद्घाटन भविष्यतीत्युक्त्वा हुताशनप्रवेश (४२० ४२४)।

———

# [ किष्किन्ध्याकाण्डे ]

—*—

## प्रथमाध्यायस्य [ ४२५—४४५ ]

सलक्ष्मणस्य रामस्य पम्पातीरगमनम् (४२९), पम्पाशोभादर्शनञ्च (४२६)। गच्छतो-स्तयो सुग्रीवेणावलोकनम्, तस्य भीतिश्च (४२६-४२७)। सुग्रीवेण रामलक्ष्मणसविधे तयोर्वृत्तविज्ञानाय हनूमत· प्रेषणम् (४२७)। हनूमता रामलक्ष्मणयो सवाद (४२८-४३०)। हनूमत्स्कन्धारोहणेन तयो सुग्रीवसकाशगमनम् (४३१-४३२)। रामलक्ष्मणसुग्रीवादीनाम् अन्योऽन्य सवादविनिमय , सुग्रीवेण सीताभरणादिप्रदर्शनञ्च (४३२ ४३३)। तद्दर्शनेन रामस्य विलाप (४३३)। लक्ष्मणसुग्रीवाभ्यां तस्याऽऽश्वास· (४३३-४३४)। अग्नि साक्षिण कृत्वा रामसुग्रीवयोर्मैत्र्यम् (४३४)। सुग्रीवस्य स्ववृत्तान्तवर्णनमुखेन दुन्दुभिवालियुद्धविनिवेदनम् (४३४-४३७)। 'ऋषेर्मतङ्गस्य शापभयेन बालिनोऽत्र ऋष्यमूके गमनागमन नास्तीति मयाऽत्र स्थीयते' इति विनिवेदनम् (४३७-४३८)। पादाङ्गुष्ठेन रामस्य दुन्दुभे शिर क्षेप· (४३९), सप्ततालवृक्षभेदनञ्च (४४०)। सुग्रीवेण रामस्य परमात्मत्वकीर्त्तनम्, तत्पादे आत्मसमर्पणञ्च (४४०-४४९)।

## द्वितीयाध्यायस्य [ ४४६—४६० ]

रामवाक्यप्रेरितेन सुग्रीवेण युद्धाय बालिन आह्वानम् (४४६-४४७)। बालिसुग्रीवयोर्युद्धम् (४४७ ४४८)। सुग्रीवपराजय , सुग्रीवस्य पलायनम्, तस्य क्षोभश्च (४४८)। 'भ्रातरौ युवामेकरूपौ इत्यतो विवेक्तुमसमर्थेन मया न बालिनि शरक्षेप· कृत ' इत्युक्त्या रामेण सुग्रीवस्य सान्त्वनम् (४४९)। रामादेशात् लक्ष्मणेन सुग्रीवग्रीवायां विशेषद्योतक पुष्पमाल्यबन्धनम् (४५०)। सुग्रीवेण पुनर्गर्जनम्, तच्छ्रुत्वा बालिनो युद्धाय प्रस्थानोद्योग , प्रयान्तं भर्त्तार प्रति ताराया उपदेशश्च (४५०)। तस्या रामसुग्रीवमेलनरूपवृत्तवर्णनपुर सरं सुग्रीवाय राज्यदानप्रार्थना 'रामं शरण गच्छे'ति प्रार्थना च (४५१-४५२)। तारां सान्त्वयित्वा बालिनो युद्धाय गमनम् (४५४-४५५)। बालिसुग्रीवयुद्धम् (४५४)। बालिन प्रति रामस्य शरनिपातनम् (४५४-४५५)। बालिनो रामाधिक्षेप (४५५-४५६)। रामेण बालिवधकारणवाचनम् (४५८)। बालिना रामस्तुति· (४५८-४५९)। बालिनो जीवनपरित्याग· (४६०)।

## तृतीयाध्यायस्य [ ४६१—४७६ ]

बालिविनाशश्रवणेन ताराविलाप (४६१-४६३)। रामस्य देहदेहिभेदविचारपूर्वकं ताराया सान्त्वनप्रारम्भ (४६३-४६४)। ताराया सुखदु.खादिसम्बन्धिनी जिज्ञासा (४६९)। रामस्य उत्तरम् (४६९-४७१)। रामोपदेशेन ताराया. सुग्रीवस्य च अज्ञानतिरोधानम् (४७२)। रामाज्ञया वालिन सत्कार (४७२-४७३)। सुग्रीवादीनां किष्किन्ध्यागमनम् (४७४-४७९)। रामलक्ष्मणयो. प्रवर्षणगिरौ गह्वरे वास (४७९-४७६)।

## चतुर्थाध्यायस्य [ ४७७ — ४८७ ]

प्रवर्षणगिरौ स्थितस्य रामस्य सकाशे जिज्ञासुना लक्ष्मणेन क्रियामार्गाराधनप्रकार-प्रश्न (४७७-४७८)। रामकर्तृकस्तत्प्रकारविनिर्णय (४७८-४८९)। अत्रान्तरे किष्किन्ध्यायां हनूमत्सुग्रीवसवाद (४८९-४८६)। हनूमद्वचनप्रतिबुद्धस्य सुग्रीवस्य वानराणामानयना-देश (४८६-४८७), हनूमतो वानरप्रेरणम् (४८७)।

## पञ्चमाध्यायस्य [ ४८८—४९८ ]

रामस्य परिदेवनम्, सुग्रीवं प्रत्यधिक्षेपश्च (४८८-४८९)। रामप्रेषितस्य लक्ष्मणस्य किष्किन्ध्याप्रयाणम् (४९०-४९१)। लोकशिक्षणाय प्राकृतवद् रामस्य परिदेवनादिकम् (४९१-४९३)। किष्किन्ध्यां गतस्य लक्ष्मणस्य आगमननिवेदनायाङ्गद प्रत्यादेश. (४९४)। अङ्गदस्य सुग्रीवाय लक्ष्मणप्राप्तिनिवेदनम् (४९४)। तच्छ्रवणेन भीतस्य सुग्रीवस्य लक्ष्मणसान्त्वनाय ताराया हनूमतश्च सम्प्रेषणम् (४९४-४९९)। तारया लक्ष्मणस्यानयनम् (४९९)। लक्ष्मणतारा-सवाद (४९६-४९७)। लक्ष्मणस्य अन्त पुरप्रवेश , सुग्रीवभर्त्सनञ्च (४९७ ४९८ । हनूमता लक्ष्मणस्य समाश्वासनम्, सुग्रीवेण तत्पूजनम् (४९८)। लक्ष्मणवाक्येन सुग्रीवादीनां राम-सन्निधानगमनम् (४९८)।

## षष्ठाध्यायस्य [ ४९९—५१८ ]

रामसकाशे सुग्रीवादीनामागमनम् (४९९)। सुग्रीवेण वानरसैन्यानामागमनं विनिवेद्य तेषां पराक्रमादीना वर्णनम् (५००-५०२)। रामाज्ञया सुग्रीवेण दिक्षु वानराणां प्रेषणम् (५०२-५०३)। सीतान्वेषणाय गच्छते हनूमते रामस्याङ्गुरीयकाभिज्ञानप्रतिपादनम् (५०४)। सीतामन्विष्यतां हनूमत्प्रमुखाणां विन्ध्यारण्ये भीषणाकारेण केनचिद्राक्षसेन सह युद्धम्, ततश्च तेषां वनान्तरगमनम् (१०९-१०६)। वन वन भ्रमतां तेषां जलाभावेन तृषाधिक्यात् जलार्थं बिलप्रवेश (५०६-५०७)। तत्र तै कस्याश्चिद्दिव्यरूपाया अङ्गनाया दर्शनञ्च (५०८)। तया पृष्टानाञ्च तेषां स्वपरिचयप्रदानम् (५०९)। स्वयंप्रभाभिधया तया स्वाभिज्ञानप्रदानव्याजेन बिलस्थपुरीनिर्माणवृत्तस्य स्वस्यास्तत्र वासवृत्तस्य च वर्णनम् (५०९-५१०)। तया सह वानराणां बिलाद्बिनिर्गमनम्, स्वयंप्रभाया रामसन्निधिगमनम् (५११)। रामस्य स्वरूपवर्णनात्मकस्तवनञ्च

(५११—५१७)। रामोपदेशेन स्वयंप्रभाया बदरीवनगमनम्, बदरीवने कलेवरपरित्यागपूर्वक परमपदलाभश्च (५१७ ५१८)।

सप्तमाध्यायस्य [ ५१६—५३० ]

सीतामनधिगच्छतां वानराणां विमर्श (५१९), अङ्गदस्याधिक्षेप· (५१९—५२१)। वानराणां वैक्लव्य पुनर्बिलप्रवेशपरामर्श· (५२१), तेषां सान्त्वनमुखेन हनूमता सीतारामादीनाम् अप्राकृतत्वम्, रावणविनाशार्थमुत्पत्ति, स्वेषां रामपाददर्शनार्थं रामसाहाय्यार्थञ्चोत्पत्ति, रामसेवनेन पुनर्वैकुण्ठलोकप्राप्तिश्चेत्यादीना वृत्ताना वर्णनम् (५२१-५२४)। वानराणा पुन सीतान्वेषणम्, अकृतार्थानां तेषां समुद्रतीरेऽवस्थानम्, प्रायोपवेशारम्भश्च (५२४-५२५), प्रायोपवेशार्थं कृतसङ्कल्पेषु वानरेषु सम्पातिनाम्नो गृध्रस्य सप्राप्ति· (२२५)। गृध्रवाक्येण वानराणां भीति जटायुषो गुणकीर्त्तनञ्च (५२६)। जटायोराख्यानश्रवणेन तद्भ्रातु सम्पातेर्वानर-समाश्वासपूर्वक वृत्तवर्णनप्रश्न (५२६-५२७), अङ्गदेन वृत्तवृत्तवर्णनम्, सीताधिगमप्रश्नश्च (५२७ ५२८)। भ्रातु· सलिलदानाय सम्पाते समुद्रगमनम्, पुन स्वस्थानमासाद्य तेन 'चित्रकूटाद्रौ लङ्का नाम पुर्यस्ति तत्र रावणस्य वास सीताऽपि तत्राऽऽस्ते इत्युक्त्वा शतयोजनविस्तीर्णसमुद्रलङ्घने वानराणां विनियोजनम् (५२८-५३०)।

अष्टमाध्यायस्य [ ५३१—५४५ ]

सम्पाते· पक्षच्छेदवृत्तान्तकथनम्, चन्द्रा नाम मुनेरुपाख्यानकथनम्, तदुपाख्यानकथनक्रमेण तेनोक्तानां जन्मादिरहस्यानां विवृतिश्च (५३१-५४३)। सम्पाते पक्षोद्गम· (५४४), तस्य विहायसा गमनम् (५४५)।

नवमाध्यायस्य [ ५४६—५५४ ]

गते सम्पातौ सीतावार्त्ताधिगमाद् वानराणां हर्ष (५४६)। अङ्गदस्य समुद्रलङ्घने क· शक्त इति पृच्छा (५४७), अङ्गदेन तेषा बलजिज्ञासा च (५४८)। क्रमेण तेषां समुद्रलङ्घनासामर्थ्यविनिवेदनम् (५४८-५४९)। अङ्गदस्य नैराश्यम् (५५०)। जाम्बवता हनूमद्बलकीर्त्तनम् (५५०-५५२)। हनूमत आस्फालनम् (५५२-५५४)।

## [ सुन्दरकाण्डे ]

—— ० ——

### प्रथमाध्यायस्य [ ५५५—५६८ ]

राममाहात्म्यकीर्त्तनपुर सर हनूमतो महेन्द्राख्यपर्वतात् लङ्काप्राप्त्यर्थमुत्प्लवनम् (५५५-५५६)। हनूमतो बलजिज्ञासार्थं देवैर्नागमातु सुरसाया प्रेषणम् (५५७)। सुरसावाक्येन हनूमत आकारवृद्धिस्तद्दर्शनेन तस्या वक्त्रस्यापि आकारविवृद्धीकरणम् (५५८-५६०), अङ्गुष्ठाकारेण हनूमत सुरसोदरे प्रवेशस्तस्मान्निर्गमश्च (५६०)। सागरवचनेन मैनाकस्य हनूमते विश्रामदानार्थं ततसमीपगमनम् (५६०-५६२), अभ्यर्थनाभङ्गभयात् कराग्रेण स्पृष्टतच्छिखरस्य हनूमत· प्रस्थानम् (५६२)। छायाग्रह्या हनूमतो ग्रहणम् (५६३)। पद्भ्यां तस्या हननं पुनर्दक्षिणाशाभिगमनम् (५६३-५६४)। हनूमतो लङ्कादर्शन तत्र प्रवेशप्रकारचिन्ता मूर्त्तिमत्या लङ्कानगर्या सह तस्य युद्धञ्च (५६४-५६६)। हनूमत्पराजितायास्तस्या सीतासंवादविनिवेदनम् (५६७)। हनमता लङ्घितेऽब्धौ सीताया वामाङ्गस्फुरणम्, दशाननस्य दक्षाङ्गस्फुरणम् (५६८)।

### द्वितीयाध्यायस्य [ ५६९—५८५ ]

सूक्ष्मतनोर्हनूमतो लङ्काप्रवेश, तत्र सीताया अदर्शनम्, ततो लङ्कावचनस्मरणेन अशोकवनिकागमनम् (५६९-५७०)। तत्र शिंशपावृक्षमूले जानक्या दर्शनम् (५७१)। रावणागमनम् (५७२-५७३)। रावणस्य रामजुगुप्सापूर्वक सीताया स्वभार्यात्वसम्पादनप्रयत्न (२७३-२७७)। सीताया· रावणं प्रत्यधिक्षेप (५७८-५७९)। रावणस्य सीताविनाशोद्यमः मन्दोदर्या विनिवारणम् (५७९-५८१)। रावणोपदेशेन राक्षसीना सीतां प्रति प्रलोभनप्रदर्शन भीतिप्रदर्शनञ्च (५८२-५८२)। त्रिजटया तासां विनिवारण स्वस्वप्नवृत्तान्तकथनञ्च (५८३-५८५)।

### तृतीयाध्यायस्य [ ५८६—६०६ ]

राक्षसीतर्जिताया जानक्या उद्बन्धनादिना शरीरपरित्यागसङ्कल्प (५८६)। स्वपरिचयप्रदानार्थम् अलक्ष्यस्थानस्थितेन सूक्ष्मबुद्धिना हनूमता सीतारामादीनामतीतवृत्तस्य वर्णनम्, स्वस्य जानकीदर्शनार्थमागमनमित्यस्य विनिवेदनञ्च (५८६-५८९)। तच्छ्रुत्वा सीताया विस्मय वक्तुरात्मप्रकाशायानुरोधश्च (५९०), हनूमत आत्मप्रकाश सीताप्रणतिश्च (४९०)। हनूमन्तं दृष्ट्वा सन्देहाकुलितायाः सीताया· प्रश्ने हनूमतो रामसुग्रीवसम्मेलनवृत्तान्तवर्णनम्, बालिवधवानरप्रैषादीनाञ्च कथनम् (५९१-५९२) सीतायै अभिज्ञानरूपेण रामस्याङ्गुरीयप्रदानम् (५९२)। सीताहनूमत्संवाद (५९२-५९४)। रामप्रत्ययार्थं सीताया प्रत्यभिज्ञानरूपचूडामणे प्रदानम्, रामसविधे कथनाय ऐन्द्रकाकवृत्तकथनञ्च (५९४-५९७)। पुन सीताहनूमत्संवाद (५९७ ५९८)। हनूमतः अशोकवनिकोत्पाटनम् (६०१)। किङ्कराणां पञ्चसेनानायकाना विनिपातनम् (६०१-६०२)। रावणप्रेषिताना मन्त्रिसुताना कुमारस्याक्षस्य मारणम् इन्द्रजित्कर्त्तृकग्रहणञ्च (६०२-६०६)।

### चतुर्थाध्यायस्य [ ६०७—६२५ ]

हनूमतो रावणसदसि समानयनम् (६०६-६०७)। प्रहस्तपरिपृष्टस्य हनूमतो रामगुणवर्णनमुखेन तत्त्वव्याख्याक्रमेण च रामशरणाय रावण प्रत्युपदेश (६०७-६१८)। हनूमद्रावणसवाद (६१९)। हनूमल्लाङ्गूलदीपनम् (६२१-६२२), हनूमतो लङ्कादाह (६२२-६२९)।

### पञ्चमाध्यायस्य [ ६२६—६३४ ]

सीताहनूमत्सवाद (६२६-६२७)। लङ्काया हनूमत प्रतिप्रयाणम् (६२८)। वानराणां सकाशे हनूमत सीतासन्देशकथनम् (६२८)। वानराणां रामान्तिकगमनाय प्रयाणम्, पथि मधुवनभङ्ग दधिमुखादिभिर्युद्धम् (६२८-६२९)। दधिमुखेन सुग्रीवाय मधुवनभङ्गसवाददानम् (६३०)। सुग्रीवाज्ञया दधिमुखस्य प्रतिप्रयाणं हनूमदन्तिके त्वरया गमनाज्ञाघोषणञ्च (६३०)। वानराणां रामादिसन्निधावागमनम्, हनूमत सीतासन्देशविनिवेदनम् अशोकवनिकादिनाशविवरणविवृतिश्च (६३१-६३३)। रामेण हनूमत आलिङ्गनम् (६३३)।

---

## [ लङ्काकाण्डे ]

### प्रथमाध्यायस्य [ ६३५—६४८ ]

रामस्य हनूमत्प्रशंसा नक्राद्याकीर्णसमुद्रलङ्घनचिन्ता च (६३५—६३७)। सुग्रीवाश्वासनम् (६३७-६३८)। रामजिज्ञासाक्रमेण हनूमतो लङ्कास्वरूपवर्णनम् (६३८—६४०)। रामस्य समुद्रगमनोद्योगाय सुग्रीव प्रत्यादेश· सर्वेषां यात्रा च (६४०—६४२)। समुद्रतीरसप्राप्ति (६४२-६४३)। तत्र सेनाविनिवेशनम् (६४३)। समुद्रदर्शने तदुत्तरणासमर्थानां वानरसेनानामवसाद (६४४)। जानकीनिमित्त रामस्य विलाप (६४५)। रामस्वरूपवर्णनम् (६४५—६४८)।

### द्वितीयाध्यायस्य [ ६४९—६६१ ]

लङ्कायां हनूमत्कृतकार्यदर्शनेन लज्जितस्य रावणस्य सचिवान् प्रति कर्तव्यपृच्छा (६४९)। सचिवानामास्फालनम् (६५०-६५१)। कुम्भकर्णस्य रावणतिरस्कारपूर्वक सीतारामयो· स्वरूपवर्णनम् (६५१-६५२)। इन्द्रजितो वीरायितम् (६५३)। विभीषणस्य रावणमुद्दिश्य हितोपदेशदानम् (६५३—६५५)। रावणेन तिरस्कृतस्य विभीषणस्य तत्सभाया उत्पतनम् (६५५-६५६)। सीतारामयो स्वरूपवर्णनपुरःसरं तद्वैरेण राक्षसानां विनाशोऽवश्यम्भावीति वदतो विभीषणस्य रामसकाशगमनाय प्रयाणम् (५५६—६६१)।

## तृतीयाध्यायस्य [ ६६२—६८१ ]

रामस्य सविधे विभीषणागमनम् (६६२-६६३)। सुग्रीवस्य विभीषणसाधुतायां सन्देहः रामसमीपे तद्विनाशाज्ञाप्रार्थना च (६६३–६६४)। रामाज्ञया सुग्रीवेण विभीषणस्याऽऽनयनम् (६६४-३६९)। विभीषणकर्त्तृका रामस्तुतिः (६६९-६७०)। रामविभीषणसवाद (६७१-६७२)। विभीषणस्य लङ्काराज्येऽभिषेकः (६७२)। विभीषणसुग्रीवसंलापः (६७२-६७३)। दशग्रीवेण प्रेरितस्य दूतस्य शुकस्य रामबलदर्शनार्थमागमनम् (६७३)। वानरै शुकनिर्यातनम्, रामादेशेन तस्य मुक्तिः (६७३-६७४)। सुग्रीवशुकसवादः (६७५)। शार्दूलेन रावणसकाशे रामबलवर्णनम् (६७५)। रामागमनेनानन्दमप्रकटयन्त सागरमनागत दृष्ट्वा रामस्य क्रोधः (६७५-६७७)। सागरागमनम्, सागरस्य रामस्तुति, लङ्कामार्गप्रदानप्रतिश्रुतिश्च ( ६७७ ६८० )। सागरवाक्येण रामस्य द्रुमकुल्यप्रदेश आभीराणां नाशाय बाणपरित्यागः ( ६८५ )। सागरकर्त्तृको नलेन सेतुबन्धनोपदेशः (६८०-६८१)।

## चतुर्थाध्यायस्य [ ६८२—६९४ ]

सेतुप्रारम्भे रामेश्वरशिवस्थापनम् (६८२) नलेन सेतोर्विनिर्माणम् (६८३)। रामादीना समुद्रोत्तरणं लङ्कादर्शन रावणदर्शनञ्च (६८४-६८५)। शुकेन रावणसकाशे रामबलविनिवेदनम्, सीतारामयोः स्वरूपवर्णनं शरीरस्य क्षणभङ्गुरत्ववर्णनञ्च (६८५-६९४)।

## पञ्चमाध्यायस्य [ ६९५—७११ ]

रावणेन शुकस्य भर्त्सनम्, शुकस्य स्वगृहगमनम् (६९५)। शुकस्य पूर्ववृत्तान्तवर्णन-मुखेन राक्षसदेहधारणकारणवर्णनम्, तस्य पूर्वरूपप्राप्तिवर्णनञ्च (६९६—६९८)। माल्यवत प्रवेश माल्यवता रावणायोपदेश (६९८—७०२)। रावणेन माल्यवतस्तिरस्करणम् (७०२-७०३)। रामेण प्रासादाग्रस्थितस्य रावणस्य श्वेतच्छत्रादीना छेदनम् (७०३ ७०४)। राक्षस-वानराणां युद्धम् (७०४—७०७)। इन्द्रजितो रामबलावमर्दन (७०७ ७०८)। हनूमतः क्षीरनिधौ गमनम्, तस्माद् द्रोणगिरेरानयनम्, वानराणां पुनर्जीवनम्, द्रोणगिरेश्च पूर्वस्थानस्थापनम् (७०९-७१०)। रावणाज्ञया राक्षसानां युद्धप्रयाणम्, राक्षसवानराणां पुनर्युद्धम्, अतिकायादि-राक्षससूनूनां विनाशश्च ( ७०९—७११)।

## षष्ठाध्यायस्य [ ७१२—७२६ ]

अतिकायादीनां निधनवार्त्ताश्रवणेन दु खसन्तप्तस्य रावणस्य युद्धाभियानम् (७१२-७१३)। तेन सुग्रीवादीनां वानराणां हननं विभीषणमुद्दिश्य मयदत्तायाः शक्ते क्षेपश्च (७१३-७१४)। विभीषण रिरक्षयिषोर्लक्ष्मणस्य शरीरे तस्या शक्तेः प्रवेश तेन तस्य मूर्च्छा (७१४-७१५)। मूर्च्छितं भूमौ पतितं लक्ष्मणमादातुं रावणस्य यत्नस्तत्र असामर्थ्यञ्च (७१२—७१६)। हनूमतो रावणोरसि मुष्ट्याघातः तेनाऽऽघातेन रुधिरमुद्वमतो रावणस्य रथोपरि पतनम्, हनूमता

## सप्तमाध्यायस्य [ ७३०—७४३ ]



## अष्टमाध्यायस्य [ ७४४—७६१ ]



## नवमाध्यायस्य [ ७६२—७७४ ]

(७७२)। सचिवस्य सुपार्श्वस्य तस्माद्विनिवारणम् (७७२-७७३)। रावणस्य प्रथमं स्वगृहे पश्चात् सभागृहे प्रवेशः (७७४)।

## दशमाध्यायस्य [ ७७५—७८५ ]

अवशिष्टैर्बलैः सह रावणस्य युद्धगमनम्, तत्र वक्षसि ताडितस्य तस्य शुक्रान्तिकगमनम् (७७५)। शुक्रस्य होमार्थं रावणं प्रत्यादेश (७७५-७७६)। रावणस्य होमारम्भः (७७६)। विभीषणमन्त्रणेन होमविघ्नार्थं सुग्रीवादीनां प्रेषणम् (७७६-७७७)। तेषां रावणमन्दिर-गमनम्, रक्षकविनाशनञ्च (७७७)। सरमायास्तेभ्यो होमस्थानप्रदर्शनम् (७७७)। होमस्थाने तेषां प्रवेश, अङ्गदेन मन्दोदर्या निर्यातनम् (७७७-७७८)। मन्दोदरीरोदनेन रावण-स्योत्थानम्, अङ्गदस्य कव्यामाघातश्च (७७८-७७९)। वानराणां रामान्तिकगमनम् (७८०)। अज्ञानप्रभवाणां शोकादीनां तुच्छत्वं प्रतिपादयता रावणेन मन्दोदर्या सान्त्वनम् (७८०-७८१)। रामस्य परब्रह्मत्वख्यापनमुखेन मन्दोदर्या कूर्माद्यवतारवर्णनम्, रावण समरात् प्रतिनिवर्तयितुं प्रयत्नश्च (७८२ ७८३)। रावणस्य रामरूपब्रह्मणो हस्ते निधनेन विष्णुलोकगमनमवश्यम्भावीति मन्दोदरीप्रबोधनम् (७८४-७८५)।

## एकादशाध्यायस्य [ ७८६—८०२ ]

रावणस्य युद्धार्थं निर्याणम् (७८६)। हनुमत्प्रभृतिभिर्हरिभि सार्धं रावणस्य युद्धम् (७८७ ७८८)। रामरावणयोर्युद्धोपक्रम (७८८)। विरथं राम रथस्थञ्च रावण दृष्ट्वा देवेन्द्रेण ससारथे रथस्य प्रेषणम् (७८८-७८९)। सरथस्य मातले रामान्तिकागमनम्, मातलेर्वाक्यञ्च (७८९-७९०)। रामस्य रथारोहणम् (७९०)। रामरावणयोर्युद्धम् (७९१—७९५)। रावण-नाशार्थं ब्रह्मास्त्रेण तन्नाभिशोषणाय विभीषणस्य राम प्रत्युपदेश (७९६), ब्रह्मास्त्रेण नाभिशोषणम् (७९६), पुनरुभयोर्घोरतरं युद्धम् (७९७)। मातलिकृतोपदेशेन रामेण रावणस्य मर्मघातनम् (७९८ ७९९)। रावणपतनम् (७९९)। रावणदेहोत्थितस्य तेजसो रामे प्रवेश (८००)। रावणस्य विष्णुसायुज्यसमवलोकनेन देवानां तदद्दृष्टप्रशंसा (८००)। नारदेन देवानुद्दिश्य धर्मतत्त्वस्य व्याख्यानम् (८००—८०२)।

## द्वादशाध्यायस्य [ ८०३—८२८ ]

रामवाक्यम् (८०३)। मन्दोदर्यादीनां रणभूमावागमनं रावणकृते शोकश्च (८०४)। विभीषणस्यापि शोक (८०५)। रामोपदेशाद् जीवस्य नित्यानित्यत्वविचारात्मकेन प्रबन्धेन लक्ष्मणकर्तृकं विभीषणादीनां सान्त्वनम्, रावणसत्कारे विनियोजनञ्च (८०५—८१४)। रामा-दिष्टेन विभीषणेन मन्दोदर्यादीनां सान्त्वनम् (८१६), रावणस्य सत्कारश्च (८१६-८१७)। सरथस्य मातले प्रतिगमनम् (८१८)। रामादेशेन लक्ष्मणादीनां लङ्कापुर्यां प्रयाणम्, तत्र विभीषणाभिषेक· (८१८-८१९)। रामप्रेरितस्य हनुमतो सीतासकाशगमनम् (८२०)।

हनूमत्सीतासंवाद (८२०—८२२)। प्रतिनिवृत्तस्य हनुमतो रामान्तिके सीताप्रवृत्तिविनिवेदनम् (८२३)। रामाज्ञया विभीषणेन सीताया आनयनम् (८२३—८२५)। रामान्तिके सीतोपस्थिति, रामेण सीतां प्रति अवाच्यवादानां व्याहार (८२५)। मायासीताया दहनप्रवेश· (८२६—८२८)।

## त्रयोदशाध्यायस्य [ ८२९—८४९ ]

शक्रादीनां रामान्तिकागमनम् (८२९) रामतत्त्वविनिवेदनमुखेन तेषां तत्स्तुति (८२९—८३१)। ब्रह्मणो रामस्तव सीताप्रतिपादनञ्च (८३२—८३८)। इन्द्रकृतो रामस्तव· (८३८—८४३)। रामेण विमानस्थस्य दशरथस्यावलोकनम् (८४३-८४४)। रामाज्ञया देवराजेन रणे मृतानां वानराणां जीवनम् (८४५)। विभीषणेन स्वर्णरत्नाम्बरादिभि सुग्रीवादीनां सैनिकानां पूजनम् (८४६)। पुष्पकारोहणेन राक्षसवानरसहिताना रामादीनाम् अयोध्यां प्रति प्रयाणम् (८४७—८४९)।

## चतुर्दशाध्यायस्य [ ८५०—८७२ ]

विमानस्थितेन रामेण सीतायै युद्धस्थानाद्ययोध्यान्तानां स्थानानां प्रदर्शनम् (८५०—८५२)। रामादीनां भरद्वाजाश्रमप्राप्ति (८५२)। रामभरद्वाजसंवादक्रमेण भरद्वाजस्य रामस्तुति, आतिथ्यार्थं प्रार्थना च (८५२—८६३) रामेण भरतान्तिके हनूमतः प्रेरणम् (८६५)। तस्य शृङ्गवेरपुरप्राप्ति, गुहेन संवादश्च (८६५)। हनूमतो नन्दिग्रामप्राप्ति· (८६६)। हनूमद-भरतसंवाद (८६६—८६८)। भरताज्ञया शत्रुघ्नेन अयोध्यापूर्यलङ्करणम् (८६८-८६९)। रामाभ्यर्थनार्थम् अयोध्यावासिनां प्रत्युद्गमनम् (८६९-८७०)। रामादीनां नन्दिग्रामप्राप्ति (८७०-८७२)।

## पञ्चदशाध्यायस्य [ ८७३—८९३ ]

रामेण भरतप्रदत्तराज्यस्य ग्रहणम् (८७३—८७५)। रामस्य जटाविमोचनं स्नानादि च (८७५)। रामादीनां प्रतिकर्म (८७६)। तेषाम् अयोध्यागमनम् (८७६—८८०)। रामनिदेशेन भरतस्य सुग्रीवादीना वासस्थानविनिर्देश· (८८०)। रामाभिषेकायोजनम् (८८०-८८१)। रामाभिषेचनम् (८८१—८८४)। शङ्करेण रामस्य स्तुति (८८४—८९०)। रामं प्रति इन्द्रादीनां वाक्यम् (८९१—८९३)।

## षोडशाध्यायस्य [ ८९४—९०३ ]

अभिषिक्ते रामे पृथिव्या सौभाग्यवर्णनम् (८९४)। रामेण पारितोषिकादिवितरणम् (८९४) रामप्रदत्तस्य हारस्य सीतया हनूमते प्रदानम् (८९५)। रामसीतयोर्हनूमते वरदानम् (८९५—८९७)। हनूमतो हिमवद्गमनम् (८९७)। रामेणानुज्ञातस्य रत्नादिभिरभ्यर्हितस्य गुहस्य स्वपुरं प्रति प्रयाणम् (८९८)। रामप्रदत्तोपहारपरितुष्ट-

स्वान्तानां विभीषणसुग्रीवादीनाम् अन्येषाञ्च वानरर्क्षप्रभृतीनां स्वस्वावासं प्रति प्रयाणम् ( ८९८ )। रामेण लक्ष्मणस्य यौवराज्याभिषेक ( ८९८ )। रामस्य राज्यपालनम् अश्वमेधादि-यज्ञश्च (८९८—९०१)। अध्यात्मरामायणस्य पठनपाठनश्रवणप्रभृतीनां फलम् (९०१—९०३), अध्यात्मरामायणस्य स्वय महेश्वरभाषितत्वकथनम् ( ९०३ )।

---

## उत्तरकाण्डे

—: ० :—

### प्रथमाध्यायस्य [ ९०४—९२० ]

प्राप्तराज्ये रामचन्द्रे विश्वामित्रादीनां रामाभिनन्दनार्थमागमनम् (९०४—९०७)। मुनीनां रामप्रशंसा (९०७), मुनिमुखाद् रावणे प्रकर्षमाकर्ण्य कथं कुम्भकर्णदशाननादीन् विहाय रावणिं प्रशंसथ इति मुनीन् प्रति रामस्य प्रश्न (९०७-९०८)। तदुत्तरद्वारेण कुम्भयोनेरगस्त्यस्य रावणादीनां जन्मवृत्तान्तवर्णनम् (९०९)। तत्राऽऽदौ तपस्तप्तुं मेरो पार्श्वं गतस्य पुलस्त्यस्याभिशापेन तृणबिन्दु-कन्याया दोहदधारणवृत्तवर्णनम् (९०९-९१०)। तृणबिन्दो पुलस्त्याय कन्याप्रतिपादनम् (९११)। तस्या गर्भे विश्रवस उत्पत्ति ( ९११ )। भरद्वाजपुत्र्या विश्रवसोरुपयम ( ९११ )। पौल-स्त्यस्योद्भव· (९११)। तपसा परितुष्टेन ब्रह्मणा पौलस्त्याय अखण्डस्य धनेशत्वस्य प्रति-पादनम् (९११)। पितुरुपदेशेन पौलस्त्यस्य स्ववासार्थं लङ्कायानम् (९१२)। सुमालिनाम-राक्षसेन धनदस्य समागम ( ९१५ )। तेन कन्यां नैकषी प्रति धनदवरणायाऽऽदेश ( ९१५ )। तस्या धनेशस्याऽऽश्रम गत्वा तत्सकाशेऽवस्थानम् (९१५-९१६)। धनेशस्य तत्परिचयजिज्ञासा ( ९१६ )। नैकषीवाक्येण धनेशस्य ध्यानयोगेन तत्परिचयादिपरिज्ञानम् ( ९१६ )। धनेशस्य दारुणायां वेलायामागतायास्तस्या दारुणौ पुत्रौ भविष्यत इत्युक्ति (९१६)। तच्छ्रुत्वा नैकष्या वाक्यम् ( ९१७ )। ततो धनेशस्य 'पश्चिमस्ते पुत्रो महामतिर्भविष्यती'त्युक्ति· (९१७)। नैकष्या गर्भे रावण-कुम्भकर्ण-सूर्पणखा विभीषणादीनामुत्पत्ति ( ९१७-९१८ )। अगस्त्यस्य रामस्तव· ( ९१८—९२० )।

### द्वितीयाध्यायस्य [ ९२१—९४१ ]

नैकष्या वाक्येनोत्तेजितानां विभीषणादीनां तपस्यार्थं गोकर्णगमनम्, कठोर तपश्च ( ९२१-९२३ )। तेभ्यो ब्रह्मणो वरदानम् (९२३—९२६)। सुमालिन प्रहस्तस्य च वाक्येन दशाननस्य लङ्काधिकार ,धनदस्य च कैलासे अलकानगर्यामवस्थानम् (९२६—९२९)। सूर्पणख्या विद्युज्जिह्वाय प्रदानम् (९३०)। मयेन रावणाय स्वसुताया मन्दोदर्या शक्तेश्च दानम् (९३०)। वृत्रज्वालानाम्न्या वैरोचनदौहित्र्या· कुम्भकर्णेनोपयम· ( ९३० )। सरमाया विभीषणेन परिणय·

(९३०)। मन्दोदर्यां मेघनादस्य जन्म, तस्य नामकरणम् ( ९३१ ) कुम्भकर्णस्य निद्रार्थं रावणाज्ञया गृहनिर्माणम्, तत्र कुम्भकर्णस्य निद्रा च (९३१)। रावणेन लोकविद्रावणम्, धनदात् पुष्पकापहरणञ्च (९३२)। यमवरुणयो रावणहस्ते पराजय ( ९३२ )। इन्द्रेण रावणबन्धनम् (९३३), मेघनादेन पितुर्मोचनम्, इन्द्रस्य बन्धनम्, तेन सह लङ्काप्रयाणञ्च (९३३)। मेघनादाय वरं दत्त्वा ब्रह्मणा इन्द्रस्य मोचनम्, ब्रह्मण स्वलोकगमनञ्च (९३३)। कैलासजयेच्छया गत रावणं प्रति नन्दिकेश्वरस्य अभिशाप (९३४-९३५)। कार्त्तवीर्यार्जुनेन रावणस्य युद्धम् पराभव, बन्धनम्, पुलस्त्यानुरोधेन मोक्षश्च (९३५)। रावणस्य बालिसकाशगमनम्, बालिना तस्य चतु:समुद्रभ्रामणम्, सख्यञ्च (९३५-९३६)। अगस्त्येन स्तुतिद्वारेण रामस्य स्वरूपमाहात्म्ययो कीर्त्तनम् (९३७ ९४१)।

## तृतीयाध्यायस्य [ ९४२—९५४ ]

अगस्त्य प्रति रामस्य बालिसुग्रीवजन्मविषयक प्रश्न (९४२)। अगस्त्येन तस्य कीर्त्तनम् ( ९४२—९४६ )। ब्रह्मणा बालिसुग्रीवयो स्थापनम् ( ९४७ )। अगस्त्यस्य पुना रामस्तव ( ९४८ )। अगस्त्यस्य रामसकाशे सीताहरणकारणवर्णनद्वारेण सनत्कुमाररावणसवाद-वर्णनम् ( ९४८—९५४ )।

## चतुर्थाध्यायस्य [ ९५५—९६८ ]

रावणनारदसवाद ( ९५५ )। नारदवाक्येन रावणस्य युद्धार्थं श्वेतद्वीपगमनम् (९५५-९५६)। श्वेतद्वीपवासिनीभिर्योषिद्भिर्भी रावणस्य निग्रह ( ९५६ )। अगस्त्यस्य रामस्तुति, स्वाश्रमगमनञ्च ( ९५७-९५८ )। पुष्पकस्य रामान्तिकागमनम् ( ९५८-९५९ )। राम-राज्यावस्थावर्णनम् (९५९-९६०)। अकालमृतस्य ब्राह्मणपुत्रस्य जीवनाय रामस्य शूद्रकहननम्, ब्राह्मणबालकस्य जीवनदानञ्च (९६०)। रामस्य राज्यकरण सीतयाऽवस्थानादिकञ्च (९६०—९६२ )। देववाक्यपरिणोदितया सीतया रामस्य वैकुण्ठगमनप्रेरणा ( ९६२-९६३ )। रामेण सीतासकाशे भविष्यत्कार्याणा वर्णनम् ( ९६३-९६४ )। रामप्रश्ने विजयनामकस्य चरस्य सीतापवादकीर्त्तनम् (९६४-९६५)। रामेण सीतात्यागाय लक्ष्मणस्य नियोग (९६६)। लक्ष्मणेन सीताया निर्वासनम् (९६७)। सीताविलाप, वाल्मीकिना मुनियोषित्सु सीताया प्रतिपादनम् (९६७)। रामस्य मुनिव्रतावलम्बनम् ( ९६८ )।

## पञ्चमाध्यायस्य [ ९६९—१००१ ]

सौमित्रिपृष्टेन रामेण नृगचरितादिपुरातनकथाकथनम् ( ९६९-९७० )। सौमित्रिणा पृष्टेन रामेण अज्ञाननाशोपायानां कीर्त्तनम् ( ९७०—१००१ )।

## षष्ठाध्यायस्य [ १००२—१०१७ ]

लवणभयेन भीतानां मुनीनां रामान्तिकागमनम् (१००२-१००३)। मुनीनां लवण-वृत्तान्तवर्णनम् (१००३-१००४)। रामेण लवणवधस्याङ्गीकार (१००५)। मथुराराज्ये शत्रुघ्न-

स्याभिषेचनम् (१००६)। रामेण शत्रुघ्नाय दिव्यस्य शरस्य प्रदानम्, लवणवधोपायोपदेशश्च (१००७-१००८)। शत्रुघ्नेन लवणस्य हननम्, मथुरानगर्या प्रतिष्ठा च (१००८)। वाल्मीकेराश्रमे निर्वासिताया· सीताया पुत्रद्वयप्रसव , मुनिना वाल्मीकिना ज्येष्ठस्य कुश इति कनिष्ठस्य च लव इति नामकरणम्, तेनैव तयो सावित्रीदीक्षया दीक्षणम्, वेदाध्यापनम्, वेदोपबृंहणार्थं कृत्स्नस्य रामायणस्य कथनञ्च (१००९)। स्वरसम्पन्नाभ्यां ताभ्यां कुशलवाभ्यां गीयमान तद्रामायणम् अभूतपूर्वाश्रुतपूर्वमिवाऽऽकलय्य उपान्तवर्त्तिभिर्मुनिभिस्तयोरुच्चैर्वाद· ( १०१० )। स्वर्णमयीं सीताप्रतिकृतिं विधाय सीताविरहतप्तस्य रामस्य अश्वमेधयज्ञोपक्रम (१०१०)। क्रियमाणे अश्वमेधाख्ये यागे राजर्षीणां ब्राह्मणक्षत्रियवैश्यानामागमनम् (१०११)। गायद्भ्यां कुशलवाभ्यां सह वाल्मीकेरपि तत्राऽऽगमनाय प्रयाणम् (१०११)। पथि कथं देहिनां संसृतेर्बन्ध उत्पद्यते कथ वा निवर्तते इत्येव पृच्छते कुशाय वाल्मीकिना सस्वरूपयो ससाधनयोश्च बन्धमोक्षयोर्निरूपणम् (१०११—१०१७)।

## सप्तमाध्यायस्य [ १०१८—१०४० ]

वाल्मीकिना प्रतिबोधितस्य कुशस्य श्रमापगम (१०१९)। 'रामो यदि रामायण शुश्रूषुर्भवेत्तदा तस्याग्रेऽपि रामायण गातव्यम्, नतु तस्माद् दीयमानमपि किञ्चिद् ग्रहीतव्यमि'ति कुशलवौ प्रति वाल्मीकेरुपदेश (१०१९)। पूर्वतनानां चित्रचरित्रवृत्तसम्वलित गीयमानममृततुल्य तद्गानमितस्तत श्रुत्वा जातकौतूहलेन रामेण समयोचितान् पण्डितनैगमपौराणिकच्छन्द·शास्त्रपण्डितानां समाजमाहूय गानार्थं तत्र तयो· कुशलवयोराह्वानम् (१०२०)। एकत्र रामं दारकद्वयञ्चावलोक्य समागतानां विस्मयो मिथस्तत्सम्बन्धि भाषणञ्च (१०२०)। एवं मिथ सलपतां तेषां पुरत पूर्वाधीतस्य रामचरितस्य ताभ्यां गानम् (१०२१)। मधुर तद्गानं श्रुत्वा भरतं प्रति ताभ्यां दशसहस्रसुवर्णदानानुज्ञप्ती रामस्य (१०२१)। वन्यभोजित्वात् सुवर्णेनानेनास्माकं नास्ति प्रयोजनमिति तयोस्तत्प्रत्याख्यानम्, मुनेराश्रमगमनञ्च (१०२१)। तच् श्रुत्वा रामस्य विस्मय· (१०२१)। सीताकुमारौ ताविति विदितवृत्तेन तेन शत्रुघ्नप्रभृतीन् प्रति ससीतस्य वाल्मीकेरानयनाज्ञा, सीताया· प्रत्ययप्रतिपादनार्थमुपदेशश्च (१०२१-१०२२)। तेषां मुखत· सर्वं विदित्वा श्व· सीता शपथ करिष्यतीति वाल्मीकेरुक्ति· (१०२२)। रामसविधे मुनेर्वचनविनिवेदनम् (१०२२)। सीताशपथश्रवणलुब्धमानसाना कौतूहलाक्रान्तस्वान्तानां ब्राह्मणक्षत्रियवैश्यशूद्राणां महर्षीणां वानराणाञ्च रामसभागमनम् (१०२३)। वाल्मीकिपुरस्कृताया· सीताया यज्ञभूमिप्रवेश (१०२३)। तद्दर्शनप्रीतानां सभासदां साधुवाद· (१०२३)। वाल्मीके प्रतिज्ञापूर्वकं सीताया· शुद्धत्वख्यापनम्, कुशलवयो रामतनयत्वख्यापनञ्च (१०२३-१०२४)। रामस्य वाल्मीकिवाक्याङ्गीकार· (१०२४-१०२५)। रामाभिप्रायवेदिनां ब्रह्मादिदेवानां तत्राऽऽगमनम् (१०२५)। सीताया· शपथ· (१०२६)।

भूतलाद् दिव्यसिंहासनस्योद्भव (१०२६)। भूदेव्या दोर्भ्यां जानकीग्रहणम्, जानक्या सह रसातलप्रवेशश्च (१०२६-१०२७)। जानक्युपरि पुष्पवृष्टिपात, जानकीं रसातले प्रविशन्तीमालोक्य वानराणां दैन्यम् (१०२७)। रामपरिदेवनम् (१०२७)। ब्राह्मणानाम् ऋषीणाञ्च रामसान्त्वनम्, सान्त्वितस्य तस्य ऋत्विग्भूतानाम् ऋषीणां विसर्जनम्, कुमाराभ्यां कुशलवाभ्यां सहायोध्यागमनञ्च (१०२८)। रामस्य निस्पृहत्वम्, एकान्तावस्थानञ्च (१०२८-१०२९)। एकान्तावस्थितस्य रामस्य सविधे कौशल्याया आगमनम्, प्रणतायास्तस्या ज्ञानलाभप्रार्थना (१०२९-१०३०)। रामेण मोक्षसाधकानां मार्गाणां कथनम्, तेषु भक्तिमार्गस्य श्रेष्ठत्वकीर्तनञ्च (१०३१)। भक्तीना भक्तानाञ्च भेदकथनम्, स्वसारूप्यलाभोपायकीर्तनञ्च (१०३१—१०३९)। कौशल्याकैकेयीसुमित्रादीनां परमगतिलाभ (१०३९-१०४०)।

## अष्टमाध्यायस्य [ १०४१—१०६१ ]

मातुलेन युधाजिताहूतस्य भरतस्य रामाज्ञया गन्धर्वविनाशार्थं गमनम्, तत्र गन्धर्वनायकान् हत्वा पुष्करनामान पुत्र पुष्करावत्याम्, तक्षनामानञ्च पुत्र तक्षशिलायां सस्थाप्य पुन पुरमागत्य रामसेवनम् (१०४१)। रामादेशेन लक्ष्मणस्य पश्चिमदिग्गमनम्, तत्र भिल्लाना विनाशनम्, राज्यस्थापनम्, राज्ये अङ्गदस्य चित्रकेतोश्चाभिषेचनम्, पुनर्नगरप्रवेशो रामसेवनञ्च (१०४२-१०४३)। कालागमनम् (१०४४)। कालस्य लक्ष्मणेन रामसविधे स्वागमनसन्देशप्रेरणम् (१०४४)। लक्ष्मणमुखाच् श्रुतकालागमनवृत्तस्य रामस्य मुनेस्त्वरितप्रवेशनार्थमादेश (१०४४)। कालस्य प्रवेश, रामस्य तत्पूजनम्, आगमनकारणजिज्ञासा च (१०४५)। पृष्टस्य कालस्य मदुक्त नान्येन श्रोतव्यम्, शृण्वश्च भवता वर्जनीयो भविष्यतीति वचनम् (१०४६)। कालवचन श्रुत्वा रामस्य द्वाररक्षार्थं लक्ष्मणायोपदेश (१०४६)। कालेन स्वागमनकारणवर्णनप्रसङ्गेन स्वकीयजन्मादिवृत्तस्य, पृथिवीसृष्टिक्रमस्य रामादीनां जन्मवृत्तान्तस्य च वर्णनम्, 'अङ्गीकृत समयो गत' इत्युक्त्वा 'यदीच्छसि तदा स्वर्गलोकागमनेन देवान् सनाथान् कुरु' इत्यादिप्रार्थना च (१०४६—१०५४)। रामेण शीघ्रमेव देवलोकं गमिष्यामीति आश्वास, एतदन्तरा च राजद्वारि दुर्वासस आगमनम् (१०५४-१०५५)। तस्य रामदर्शनप्रार्थना (१०५५)। लक्ष्मणेन मुहूर्त्तमात्र प्रतीक्षाप्रार्थना (१०५५)। दुर्वासस· क्रोधः, वशनाशभीतस्य लक्ष्मणस्य रामसकाशगमनम्, दुर्वासस आगमनवृत्तविनिवेदनञ्च (१०५६)। रामेण कालस्य विसर्जनम्, दुर्वासस· सन्दर्शनम्, अभिवादनपुर सरम् आगमनकारणविषयिणी जिज्ञासा च (१०५६)। दुर्वाससो भोज्यप्रार्थना, रामस्य तस्मै भोज्यदानम्, मुने· स्वाश्रमगमनञ्च (१०५७)। कालवाक्यस्मरणेन रामस्य लक्ष्मणार्थं दौर्मनस्यम्, लक्ष्मणवाक्यञ्च (१०५७-१०५८)। सौमित्रिवाक्येण मन्त्रिणामाह्वानं तेषां सविधे कालसवादवर्णनञ्च (१०५८)। सपुरोहिताना मन्त्रिणां धर्मरक्षार्थं लक्ष्मणत्यागायोपदेश·, रामेण लक्ष्मणस्य विसर्जनम्, लक्ष्मणस्य

## नवमाध्यायस्य [ १०६२—१०८० ]



**सूचीपत्रं समाप्तम्।**

---

# अध्यात्मरामायणम्

## आदिकाण्डम्

## प्रथमोऽध्यायः

जयति रघुवंशतिलकः कौशल्यानन्दिवर्धनो रामः ।
दशवदननिधनकारी दाशरथिः पुण्डरीकाक्षः ॥ १ ॥

---

नरोत्तमकृतटीका

१ । ॐ नमो गणेशाय ।

नवदूर्वादलश्यामं रामं नत्वा नरोत्तमः ।
विदधात्यल्पमध्यात्मरामायणविवेचनम् ॥

विघ्नविध्वंसाय कृतं मङ्गलमादौ शिष्यशिक्षायै निबध्नाति—जयतीति । जयति उत्कर्षाश्रयः । उत्कर्षाश्रयत्वसाधनानि अन्यविलक्षणानि विशेषणान्याह—रघुवंशतिलको रघुवंशश्रेष्ठः, एतेन श्रीरामस्य रघुवंशनिष्ठवीर्यशौर्यादिविलक्षणवीर्यशौर्यादिगुणवत्त्वं सूचितम् । कौशल्याया नन्दि-

---

१ । अस्मदधिगतेषु क-ख-घ-चिह्नितेषु मुद्रितपुस्तकेषु अस्य श्लोकस्य स्थाने—

अप्रमेयत्रयातीतनिर्मलज्ञानचक्षुषे ।
मनोगिरां विदूराय दक्षिणामूर्त्तये नमः ॥

अयं श्लोको दृश्यते । रामवर्मणाऽपि स्वटीकायाम् अस्यैव व्याख्या कृता । आदर्शार्थं गृहीतेषु हस्तलिखितेषु ग-च-छ-पुस्तकेषु न दृश्यते अनयोरेकोऽपि । तत्र ग-पुस्तके—

ॐ परमात्मने श्रीरामचन्द्राय नमः ।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥
अथ रामं शिवारामं चिदानन्दं मनोरमम् ।
प्रणम्याध्यात्मसंयुक्तं रामायणमुदीरयेत् ॥

वर्धनः पुत्रः । तथा च—'स्यान्नन्दिवर्धनः पुत्र.' इति कोषान्तरम् । श्रीरामस्य मातृसम्बन्धेन कोमलस्वभावत्वसूचनार्थं कौशल्यानन्दिवर्धन इत्युक्तम् । यद्वा कौशल्यानन्दवृद्धिजनकस्तदर्थं । दशवदनस्य रावणस्य यन्निधन मरणं तत्कारी, एतेन श्रीरामस्य दुर्जयजेयत्वं सूचितम् । दशरथस्यापत्यं दाशरथि' । एतेन पितृसम्बन्धेन श्रीरामस्य वीरत्व सूचितम् । अत्रार्थ (?) व्यङ्ग्यनिष्ठत्वान्न पौनरुक्त्यदोषस्वीकार' । पुण्डरीके इवाक्षिणी यस्य स. । पुण्डरीक पद्मम् । एतेनास्यानन्यसाधारणनयनत्वं सूचितम् ।

---

कल्याणानां निदान कलिमलमथन जीवन सज्जनानां
पाथेयं यन्मुमुक्षो· सपदि परपदप्राप्तये प्रस्थितस्य ।
विश्रामस्थानमेकं कविवरवचसां पावन पावनानां
बीज धर्मद्रुमाणां प्रभवतु भवतां भूतये रामनाम ॥
नीलेन्दीवरनीलनिर्मलवपु पद्मायतोद्वीक्षणो
धन्वी बाहुबलावलीप्रदलितप्रख्यातलङ्केश्वर ।
क्षीरोदार्णवमन्थमन्दरकरस्तीक्ष्णाशुवशोद्भवो
वैदेहीवदनारविन्दमधुप· श्रीराधव' पातु व ॥
रामं चिन्तय चित्तवर्वर चिरं चिन्ताशतै किं फलं
किं मिथ्याशतजल्पनेन सततं रे वक्त्र राम वद ।
कर्ण त्व शृणु रामचन्द्रचरित किं गीतवाद्यादिभि-
श्चक्षू राममय निरीक्ष्य सकल रामात् पर त्यज्यताम् ॥
जयति पराशरसूनु सत्यवतीहृदयनन्दनो व्यास ।
यस्याऽऽस्यकमलगलितं वाङ्मयममृतं जगत् पिबति ॥
नैमिषे स्वागतं सत्रमृषय· शौनकादय ।
रामतत्त्वं विजानन्त सूतं पप्रच्छुरादरात् ॥

इत्येते मङ्गलाचरणश्लोका दृश्यन्ते । च-पुस्तके 'ॐ नम श्रीरामचन्द्राय । ॐ नारायण नमस्कृत्य' इत्यादिरेक एव श्लोको दृश्यते। छ-पुस्तके 'ॐ रामचन्द्राय नम.' इत्येतन्मात्रम्। केवलं ङ-पुस्तके 'जयती'ति मूले गृहीत श्लोको दृश्यते। टीकाकृता नरोत्तमेनाप्ययमेव श्लोको व्याख्यात । गोपालचक्रवर्त्तिकृतटीकाप्रारम्भे पुनर्ग्रन्थकर्तृनमस्कारत्वेन न कस्यापि श्लोकस्याऽऽभास । एवमत्र नमस्कारात्मक क श्लोको वेदव्यासविरचित इति समुत्पन्ने महति सन्देहे यद्यपि सुधिय एव सन्देहहर्त्तारस्तथाऽपि स्वच्छन्द रामस्य पूर्णब्रह्मत्वमुद्घाटयत सकलभक्तजनवरेण्यस्य वेदव्यासस्य तच्चरितप्रकाशावसरे तस्यैव नमस्कार सम्भवतीति बुद्ध्या अप्रकाशितनरोत्तमकृतटीकाप्रकाशे बद्धादरतया च तट्टीकानुगत एव श्लोको मूले सन्निवेशित । एवं सर्वत्रैव यथाशक्ति नरोत्तमधृत पाठ एवास्माभिरनुसरणीय इत्यलं विस्तरेण ।

*श्रीसूत उवाच—

कदाचिन्नारदो योगी [1]लोकानुग्रहवाञ्छया ।
पर्यटन् [2]सकलॉल्लोकान् [3]सत्यलोकमुपागमत् ॥ २ ॥
तत्र दृष्ट्वा मूर्त्तिमद्भिश्छन्दोभिः परिवेष्टितम् ।
बालार्कप्रभया सम्यग् भासयन्तं सभागृहम् ॥ ३ ॥
मार्कण्डेयादिमुनिभि' स्तूयमान [4]मुहुर्मुहुः ।
[5]सर्वार्थगोचरज्ञानं सरस्वत्या समन्वितम् ॥ ४ ॥

---

२ । नरो० । कदाचिदिति । योगश्चित्तवृत्तिनिरोध , स यस्यास्ति स योगी , लोकानुग्रहवाञ्छयेति, नारदस्य युक्तत्वात् सर्वलोकदर्शनेच्छया पर्यटनं नास्तीति भाव । लोकान् भुवनानि ।

३ । नरो० । स्तोतव्यत्वसाधकान्यन्यविलक्षणविशेषणान्याह—तत्रेति । मूर्त्तिमद्भि शरीरिभि । छन्दोभिर्वेदै । बालार्कप्रभया प्रभातसूर्यस्येव प्रभयेत्यर्थ ।

४ । नरो० । सर्वार्था गोचरा विषया यस्य तादृशं ज्ञान यस्य तम् ।

---

* लोके परब्रह्मण. श्रीरामस्य तत्त्वं प्रकटयितुकामो महर्षिर्नारद सन्दिहान इव जिज्ञासुरिव च कलिकालजनिताशेषकलुषनाशोपाय स्वलोकावस्थितं प्रजापतिं पप्रच्छ । सोऽपि—

'य. श्रद्धया पठति वा शृणुयात् स मर्त्य
प्राप्नोति विष्णुपदवीं सुरपूज्यमान ॥ १।१।२१।

इत्यादिना विष्णुसायुज्यसाधक सकलमलहर श्रीपार्वतीशङ्करसंवादरूपं श्रीरामचरितं तस्मै प्राह । वेदव्यासमुनिनिबद्धब्रह्माण्डपुराणान्तर्गतमध्यात्मरामायण नाम तदेव चरित वेदव्यासशिष्य सूतो नैमिषारण्ये तत्रत्यैर्मुमुक्षुभिर्मुनिभि· पृष्टस्तेभ्य कथयामासेत्याह—सूत उवाचेति ।

२ । योगी योगपक्वकषायतया विदितवेदितव्य । तादृशस्य पर्यटनं निरर्थकमित्याह—लोकेति । तत्तल्लोकवास्तव्यानां धर्मज्ञानाद्युपदेशादिना योऽनुग्रहस्तदर्थमित्यर्थ । सत्यलोक ब्रह्मलोकम् । यथाह विष्णुपुराणे—

षड्गुणेन तपोलोकात् सत्यलोको विराजते ।
अपुनर्मारको यत्र ब्रह्मलोको हि स स्मृतः ॥ २।७।१९। इति ।

३ । छन्दोभिर्ऋग्यजु सामाथर्वात्मकेन वेदचतुष्टयेन । परिवेष्टितं तत्तद्वेदाध्येतृमुखसंमुखे स्वस्वमूर्त्याऽवस्थानात् सर्वतो व्याप्तमित्यर्थ. । [ बालार्कप्रभयेति रजोगुणस्योक्तत्वात् । गो० ]

४ । सर्वार्थगोचरज्ञानं सर्वे अर्था अतीतानागतवर्त्तमानरूपा' गोचरा विषया यस्य

---

1. क 'परानु-' । 2 ग 'विविधाॅ-' । 3. च 'ब्रह्म-' । 4 क 'प्रजापतिम्' । 5 क 'सर्वात्म-' ।

चतुर्मुखं जगन्नाथं भक्ताभीष्ट[1]फलप्रदम् ।
प्रणम्य दण्डवद् भक्त्या तुष्टाव मुनिपुङ्गवः ॥ ५ ॥
सन्तुष्टस्तु मुनिं प्राह स्वयम्भूर्वैष्णवोत्तमम् ।
किं प्रष्टुकामस्त्वमसि तद् वदिष्यामि ते मुने ॥ ६ ॥
इत्याकर्ण्य [2]वचस्तस्य मुनिर्ब्रह्माणमब्रवीत् ॥ ७ ॥

श्रीनारद उवाच—

त्वत्तः श्रुतं मया [3]सर्वं पूर्वमेव शुभाशुभम् ।
[4]इदानीमेकमेवास्ति श्रोतव्यं सुरसत्तम ॥ ८ ॥
तद्रहस्य[5]मपि ब्रूहि यदि तेऽनुग्रहो मयि ॥ ९ ॥

---

तादृशज्ञानयुक्तम् । 'गोचरा इन्द्रियार्थाश्च' इत्यमरः । सरस्वत्या तत्तज्ज्ञानयुक्तया स्वशक्त्या 'प्रजापतिः स्वां दुहितरमभ्यधावत्' इति श्रुतेः,

'गृहाणेमां विधे शक्तिं सुरूपां चारुहासिनीम् ।
महासरस्वती नाम्ना रजोगुणयुतां वराम् ॥
श्वेताम्बरधरां दिव्यां दिव्याभरणभूषिताम् ।
वरासनसमारूढां क्रीडार्थं सहचारिणीम् ॥' ३।६

इति देवीभागवतोक्तेश्च, वाण्या इत्यर्थः ।

[ सर्वार्थगोचरज्ञानमिति सर्वे अर्था धर्मकाममोक्षा गोचरा विषया यस्य । यद्वा सर्वे अर्थाः स्थूलसूक्ष्मा भूतभविष्यद्वर्त्तमाना वा । गो० ]

५ । भक्ताभीष्टफलत्वेन प्रश्नयोग्यत्वसूचनम् । रा० ।

६ । स्वयम्भूरित्यनेन अनावृतज्ञानत्वं सूचितम् । वैष्णवोत्तमम्—

सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥

इत्युक्तलक्षणम् । तत् पृष्टं वस्त्वित्यर्थः । रा० ।

९ । पुण्यहीनानां परलोकप्राप्त्युपायरूपं तद्रहस्यमपि मत्पृष्टं ब्रूहि । अनुग्रहः परोपकारकरणजपुण्येनाय पूज्यतामित्येवरूपा दया यदि मयीत्यर्थः । रा० ।

रहस्यं गोप्यमपि । रहस्यं कथं त्वत्सकाशे वक्तव्यमित्याह—अनुग्रह इति । यदि मयि तेऽनुग्रहोऽनुकम्पा तदा त्वदनुग्राह्यत्वाद् गोप्यमपि त्वत्तः श्रोतुमर्हामीति शेषः । अनुग्राह्येषु महानुभावानां तादृशामनुग्राहकाणां किमपि गोपनीयं न भवतीति भावः ।

---

1 च टि 'प्रदायकम्' । 2 क 'मुनिश्रेष्ठो वाक्यं ब्रह्मा-', ग 'मुनिस्तस्य वाक्यं ब्रह्मा-' । 3 ग च 'पूर्वं सर्वमेव' । 4 क 'इदानीं श्रोतुमिच्छामि' । 5 ङ '-मिह' ।

प्राप्ते कलियुगे घोरे नरा॰ पुण्यविवर्जिता॰ ।
दुराचाररता॰ सर्वे सत्यवार्त्तापराङ्मुखाः ॥ १० ॥
परापवादनिरता॰ परद्रव्याभि[1]लाषिणः ।
परस्त्रीसक्तमनस॰ परहिंसापरायणाः ॥ ११ ॥
देहात्म[2]दृष्टयो मूढा नास्तिकाः पशुबुद्धय॰ ।
[3]मातापितृकृतद्वेषा॰ स्त्रीदेवा कामकिङ्करा ॥ १२ ॥
विप्रा लोभ[4]ग्रहग्रस्ता वेदविक्रयजीविनः ।
धनार्जनार्थमभ्यस्तविद्या मदविमोहिता॰ ।
त्यक्तस्वजातिकर्माण॰ प्रायश परवञ्चका॰ ॥ १३ ॥

---

१० । नरो० । प्राप्ते इति । घोरे भयानके । पुण्यवर्जितत्वे हेतवो दुराचाररता इत्यादय ।

१२ । नरो० । देहात्मदृष्टय इति । यतो मूढा विवेकशून्या अतो देहे आत्मदृष्टिरात्मबुद्धिर्येषां तादृशा । यत पशुबुद्धयोऽनो नास्तिका नास्ति परलोक इति निश्चयवन्त , नास्ति परमात्मेति निश्चयवन्तो वा । पशोरिव बुद्धिर्येषां ते तथा, पशोर्यथा भक्षणादावेव इष्टसाधनताज्ञान तथा तेषामपीत्यर्थ॰ । यत स्त्रीदेवा अतो मातापित्रोर्मातापितृभ्यां वा कृतो द्वेषो यैस्तादृशा । यत कामकिङ्करा कन्दर्पदासा कन्दर्पाधीना इति यावत्, अत स्त्रीदेवा ।

१३ । नरो० । वेदस्य वेदविद्याया यो विक्रयस्तेन जीवितु शीलं येषां ते वेदविक्रयजीविन॰ । मदेन दर्पेण विमोहिता कर्त्तव्याकर्त्तव्यविवेकशून्यीकृता ।

---

१० । स्ववक्तव्यमाह—दुराचाररता इति, निषिद्धकर्मनिरता इत्यर्थ । सत्यवार्त्तापराङ्मुखा मिथ्याप्रवृत्तिपरायणा , 'नानृत वदेदि'ति विधिवाक्यमनादृत्य निषिद्धभाषणशीला वा ।

[ सत्यवार्त्तापराङ्मुखा इति यथार्थभाषणरहिता । यद्वा सर्वेषां मिथ्यात्वात् सत्य॰ श्रीनारायणस्तस्य कथापराङ्मुखा । गो० ]

११ । परापवादनिरता परेषामपवादे निन्दादौ निरता व्यासक्ता ।

१२ । सर्वपापस्य मूलकारणमाह—देहात्मदृष्टय इति । देहे एवाऽऽत्मदृष्टिर्येषा ते इत्यर्थ । एवञ्च देहनाशेनात्मनाशात् पापपुण्यफलोपभोक्तुरभावात्तथादृष्टीनां विहिताकरणनिषिद्धकरणयो प्रवृत्तिरिति भाव । 'स्थूलोऽह' 'गौरोऽहमि'ति प्रतीतिस्तु शुक्तौ रजतप्रतीतिवद् भ्रम इति तत्त्वम् । देहस्य परिणामित्व तु प्रतिक्षणोपचयापचयाभ्यां प्रत्यक्षसिद्धम् , आत्मनोऽविनाशित्व तु 'अविनाशी वा अरेऽयमात्मा' ( बृह० ४।५।१४ ) इति श्रुतिसिद्धम् । रा० ।

१३ । [ धनार्जनार्थं धनार्जनमेव प्रयोजनं यथा स्यान्न तु तत्त्वज्ञानार्थम् अभ्यस्ताभिर्विद्याभिर्यो मदो गर्व॰ पण्डितम्मन्यता तेन विमोहिता । गो० ]

---

1 च-छ '-लासिन' । 2 छ '-वादिनो' । 3 क-ख ग-ड छ 'मातृपितृ-' । 4 क-ग '-भय-' , ड '-भयव-' च-छ '-मद-' ।

क्षत्रियाश्च तथा वैश्याः स्वधर्मत्यागशीलिनः ।
तद्वच्छूद्राश्च ये केचिद् ब्राह्मणाचारतत्पराः ॥ १४ ॥
स्त्रियश्च प्रायशो भ्रष्टा भर्त्रवज्ञान[1]निर्भराः ।
श्वशुरद्रोहकारिण्यो भविष्यन्ति न संशयः ॥ १५ ॥
एतेषां नष्टबुद्धीनां परलोकः कथं भवेत् ।
इति चिन्ताकुलं चित्तं जायते मम सन्ततम् ॥ १६ ॥
लघूपायेन [2]येनैषां परलोकगतिर्भवेत् ।
तमुपायमुपाख्याहि सर्वं वेत्ति यतो भवान् ।
इत्यृषेर्वाक्यमाकर्ण्य प्रत्युवाचाम्बुजासनः ॥ १७ ॥

---

१४ । नरो० । तद्वत् क्षत्रियादिवत् ।

१५ । नरो० । यतो भर्त्रवज्ञाननिर्भरा अतो भ्रष्टा पतिव्रताधर्मच्युता । भर्त्रवज्ञाननिर्भरा पत्यनादरातिशया । यद्वा भ्रष्टा व्यभिचारिता भर्त्रवज्ञाननिर्भराश्च भविष्यन्तीति ।

१६ । नरो० । नष्टबुद्धीनां ध्वस्तपरलोकेष्टसाधनानाम् ।

१७ । नरो० । लघूपायेनाल्पकारणेन ।

---

लोभग्रहग्रस्ता लोभ एव ग्रहा भूतादयः, तैराक्रान्ताः । वेदविक्रयजीविनः भृतकाध्यापकाः । अर्थोपार्जनाय अभ्यस्ता या विद्या तस्या मदेन गर्वेण उद्धता इत्यर्थः ।

यद्वा अभ्यस्तविद्या इति पदच्छेदः । अभ्यस्ता विद्या यैस्ते, तथा मदविमोहिताः । त्यक्तं स्वजातिकर्म ब्राह्मणजात्युचितपठनपाठनादि यैः ।

[ प्रायशः परवञ्चका इति, क्वचित् कस्यापि तथात्वाभावात् 'प्रायशः' पदम् । परप्रतारकास्तदर्थं स्वधर्मत्यागशीलिनः । गो० ]

१४-१५ । ब्राह्मणाचारतत्परा इत्यनेन धर्मसङ्करो दर्शितः । स्त्रियश्च इत्यनेन वर्णसङ्करो दर्शितः । रा० । श्वशुरद्रोहकारिण्यः स्त्रिय इति शेषः ।

[ भर्त्रवज्ञाननिर्भरा भर्तुरवज्ञाने कृताभिनिवेशा । गो० ]

१६ । परलोकः परः श्रेष्ठो लोकः सद्गतिरित्यर्थः ।

१७ । परलोकगतिर्भूर्लोकगतिः । भूर्लोकोर्द्ध्वम्, भुवर्लोकान्तगमनम् । तच्च दुराचारादिजानर्थनिवृत्तिं विना चित्तशोधकसकलधर्मं विना च दुष्प्रापमिति भावः । रा० । लघूपायेन क्षुद्रया चेष्टया सामान्येनायासेनेत्यर्थः । ननु कथं तादृशोपायज्ञानमस्माकमित्याह—यतो भवान्

---

1. ख ङ च '-निर्भया' । 2 ग च 'चैतेषां', छ 'वैतेषां' ।

ब्रह्मोवाच—

साधु पृष्टं त्वया साधो वक्ष्ये तच्छृणु सादरम् ।
पुरा त्रिपुरहन्तारं पार्वती भक्तवत्स[1]लम् ॥ १८ ॥
श्रीरामतत्त्वं जिज्ञासु: पप्रच्छ विनयान्विता ।
प्रियायै गिरिश[2]स्तस्यै गूढं व्याख्यातवान् स्वयम् ॥ १९ ॥
पुराणोत्तममध्यात्मरामायणमिति स्मृतम् ।
तत् पार्वती जगद्धात्री पूजयित्वा दिवानिशम् ।
[3]आलोचयन्ती स्वानन्दमग्ना तिष्ठति साम्प्रतम् ॥ २० ॥

---

१८ । नरो० । साधु शोभनम् । त्रिपुरहन्तारं महादेवम् । भक्तवत्सलं भक्तविषयक-स्नेहविशिष्टम् ।

१९ । नरो० । श्रीरामतत्त्वमिति श्रीरामस्य स्वरूपमित्यर्थ । गूढमसर्वजनवेद्यं यथा स्यात् । यद्वा गूढमिति रामतत्त्वमित्यस्य विशेषणम् ।

---

सर्वं वेत्तीति । सर्वज्ञो भवान् वर्त्तमानातीतभविष्यद्वृत्तजातं करबदरवत् पश्यति, ऋषयो वयं लौकिकार्थमात्रद्रष्टारो न तत्र प्रभवाम इति भवानेवास्मत्पृच्छाविषय । अम्बुजासनो ब्रह्मा ।

[ अब्जवाहन इति अब्ज लोकात्मकपद्म वाहन यस्य तत्रैव स्थितत्वात् । यद्वा अपसु जायते सतत प्रादुर्भवति अब्जो हस, स वाहन यस्य । 'अम्बुवाहन' इति पाठे अम्बु कारणोदक वाहनं यस्य ब्रह्माण्डशरीरस्य ब्रह्मणस्तत्र स्थितत्वादिति । गो० ]

१८ । साधु सर्वजनहित यत पृष्टम् अत सादर वक्ष्ये तदुत्तरमिति शेष, तच्छृणु । तदेवाह—त्रिपुरहन्तार शिवम् । भक्तवत्सलेत्यनेन पार्वतीप्रश्नोऽपि स्वभक्तसकलजनकरुणया तदुद्धारार्थमिति सूचितम् । रा० ।

१९ । श्रीरामतत्त्वमिति । तथा च रामतापनीयोपनिषदि—

'रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि ।
इति रामपदेनासौ पर ब्रह्माभिधीयते ॥ ६

तेन राम परं ब्रह्म, तस्य तत्त्व याथार्थ्यम्, 'तत्त्व ब्रह्मणि याथार्थ्ये' इति कोषात् । यद्वा रामो रमयतां वर, यद्वा रमन्तेऽस्मिन् सर्वे जना दयादाक्षिण्यादिभिरिति राम सर्वजनहृद्य, तस्य तत्त्वम् ।

२० । तत् किं तत्राऽऽह—पुराणोत्तममिति । पुराणमनादि तच्च तदुत्तमं च, श्रवणेन सर्व-धर्मजनकत्वाच्चित्तशुद्धिद्वारा तत्त्वज्ञानकरत्वाच्चेति भाव । अध्यात्मरामायणमित्यन्वर्थ ग्रन्थनाम, आत्मनि अधि अध्यात्मम् । आत्मनि चित्तेऽन्तर्यामितया वर्त्तमानो यो रामो रमन्ते योगिनोऽत्रेति

---

1 ख घ -ला' । 2 क-ख '-स्तस्' । 3 च 'आलोकयन्ती' ।

प्रचरिष्यति तल्लोके प्राण्यदृष्टवशा[1]द् यदि ।
तस्याध्ययनमात्रेण जना यास्यन्ति सद्गतिम् ॥ २१ ॥
तावद् [2]विजृम्भते पाप ब्रह्महत्यापुरःसरम् ।
यावज्जगति नाध्यात्मरामायणमुदेष्यति[3] ॥ २२ ॥

---

२१ । नरो० । प्राण्यदृष्टवशात् प्राणिभाग्यायत्तत्वात् । सतां साधूनां गतिर्यत्र परलोके त यास्यन्ति गमिष्यन्ति । यद्वा सदगतिं प्रशस्तज्ञानं यास्यन्ति प्राप्स्यन्ति । यद्वा सतां गतिर्येन मार्गेण तं सदगतिम् । यद्वा सद्गतिं मोक्षम् ।

२२ । नरो० । विजृम्भते वर्द्धते । ब्रह्महत्यापुरःसरं ब्रह्महत्यादिकमित्यर्थः । उदेष्यति अवतरिष्यति सञ्चरिष्यति वा ।

---

व्युत्पत्त्याऽन्तर्यामी तस्यायन चित्तशुद्धिद्वारा प्रापकं तत्प्रतिपादकत्वादिति तदध्यात्मरामायणम् । स्वानन्दमग्ना स्वस्वरूपानन्दमग्ना तिष्ठति यत्तत् साम्प्रतं युक्तम् । एतदालोचनेन स्वस्वरूपानन्दस्य जगदन्तर्यामिरूपस्य सम्यग् भानादिति भाव । रा० ।

पुराणोत्तमम् इति—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चैव पुराण पञ्चलक्षणम् ॥ मत्स्यपु० ५३अ० ६४ श्लो० ।

इति लक्षणलक्षितब्रह्माण्डपुराणान्तर्भूतत्वेनास्य पुराणत्वम् । यच्च रामवर्मणा पुराणमनादीत्युक्तं वेदव्यासप्रणीतत्वात तत कथ तत्तु सुधीभिर्विभाव्यम् ।

[ स्वानन्दमग्ना स्वमात्मा चासावानन्दश्चेति तदानन्दमग्नेवेत्यर्थ । यद्वा स्वोऽसाधारणोऽखण्ड इत्यर्थ , य आनन्दस्तत्र मग्ना । गो० ]

२२ । प्राण्यदृष्टवशाज्जीवसौभाग्याद् यदि तदध्यात्मरामायणम्—

अध्यात्मके तिष्ठति य परात्मा रामोऽध्यते यत्र हि तत्त्वविज्ञै ।
अतोऽभिधान कथितं भवान्या अध्यात्मरामायणमस्य मेन ॥

इत्युक्तलक्षणं प्रचरिष्यति तदा जनास्तदाश्रयेण सद्गतिं यास्यन्ति । 'मेन' भवेन ।

---

1 ख-घ 'द् यदा', छ '-द् मुदा' । 2 छ 'विवर्द्धते' । 3 अत पर ख-च-पुस्तकयो 'तावत कलिर्महोतसाहो नि शङ्क मप्रवर्त्तते । यावज्जगति नाध्यात्मरामायणमुदेष्यति ॥ तावद् यमभटा शूरा सञ्चरिष्यन्ति निर्भया । यावज्जगति नाध्यात्मरामायणमुदेष्यति ॥ इति, ग ड-पुस्तकयो 'तावत कलिर्महोतसाह सञ्चरिष्यति निर्भय ।' इति, च पुस्तके 'तावत कलिर्महोतसाहा सञ्चरिष्यन्ति निर्भया । यावज्जगति नाध्यात्मरामायणमुदेष्यति ॥ तावद् यमभटा क्रूरा सञ्चरिष्यन्ति निर्भया ।' इति, छ पुस्तके 'तावत कलिर्महोतसाह सञ्चरिष्यति निर्भय । यावज्जगति नाध्यात्मरामायणमुदेष्यति ॥ तावत स्वरूप रामस्य दुर्बोध महतामपि । यावज्जगति नाध्यात्मरामायणमुदेष्यति ॥ तावत सर्वपुराणानि प्रवर्त्तन्ते महीतले । यावज्जगति नाध्यात्मरामायणमुदेष्यति ॥ इति चाधिकम् ।

तावत् [1]सर्वाणि शास्त्राणि [2]विवदन्ते परस्परम् ।
[3]यावज्जगति नाध्यात्मरामायणमुदेष्यति ॥ २३ ॥
तावत् स्वरूप रामस्य दुर्बोधं महतामपि ।
यावज्जगति नाध्यात्मरामायणमुदेष्यति ॥ २४ ॥
[4]तावत् सर्वपुराणानि प्रवर्त्तन्ते महीतले ।
यावज्जगति नाध्यात्मरामायणमुदेष्यति[5] ॥ २५ ॥

---

२३ । नरो० । तावत् सर्वाणि शास्त्राणीत्यादि । किञ्चिच्छास्त्रमिन्द्रस्य प्राधान्यं वदति, किञ्चिच्छास्त्र सूर्यस्य प्राधान्य वदति, किञ्चिच्छास्त्रं प्रकृते प्राधान्यं वदतीति शास्त्राणां परस्परविवाद । यद्वाऽहमेव सारमिति किञ्चिच्छास्त्रं वदति, अहमेव सारमिति तदन्यद् इत्यादि शास्त्राणां परस्परविवाद । यद्वा जना दृष्ट्वेति पूरणीयम् । अथ वा विवदन्ते इत्यस्यान्तर्भाविण्यर्थत्व बोध्यम्, जगत्यस्यावतारे कस्याप्यादरो न भविष्यतीति भाव ।

२५ । नरो० । तावत् सर्वपुराणानि प्रवर्तन्ते महीतले स्वस्वप्रतिपादितेषु कर्मसु

---

२३ । शास्त्राणि न्यायादीनि, विवदन्ते विवाद कुर्वते आत्मविषय इत्यर्थ । कर्त्ता भोक्ता ज्ञानाश्रय आत्मा परस्परं भिन्न इति काणादा गौतमाश्च षोडशादिपदार्थानां परस्परमात्मनि भेदज्ञानान्मुक्तिरित्यादि च, ज्ञानस्वरूपा अनेके जीवास्तेषां प्रकृत्यादिभ्यो भेदज्ञानान्मोक्ष इति सांख्यादय, एक एव चेतन उपाधिभेदान्नानात्वं प्राप्तस्तत्त्वमस्यादिवाक्यजश्रवण-मनन-निदिध्यासनैर्ब्रह्मैवाहमिति ज्ञानादुपाधिविलये स्वस्वरूपेणावस्थानमेव मोक्ष इत्युपनिषत्-सिद्धान्तोऽध्यात्मरामायणोदये स्फुटो भविष्यतीति तत्तच्छास्त्रवासनाजन्यो वादो लयमेष्यतीति भाव । रा० ।

विवदन्ते इति । शास्त्राणि परस्पर विवादं कुर्वन्ति, यद्वा जना शास्त्राणि दृष्ट्वा तेषां प्रामाण्याप्रामाण्यविषयक विवाद कुर्वन्ति, यद्वा विवदन्ते इत्यस्यान्तर्भाविण्यर्थत्वेन शास्त्राणि जनान् विवादयन्तीत्यर्थ ।

२४ । रामस्य स्वरूप सच्चिदानन्दाद्वयब्रह्मस्वरूप महतां योगपक्वकषायाणा मुनीनां तथा शास्त्रज्ञाननिर्मलमनसां सुधियामपि दुर्बोध भवतीति भाव ।

२५ । न उदेष्यति न प्रचरिष्यति । तावत् पुराणानि पाद्मादीनि प्रवर्त्तन्ते प्रभवन्ति ।

---

1 च 'शास्त्राणि सर्वाणि' । 2 च 'प्रवर्त्तन्ते महीतले' । 3 क-घपुस्तकयोरिदमर्द्ध नास्ति । 4 घ च-पुस्तकयोरित आरभ्य सप्तविंशश्लोकान्तोऽशो न दृश्यते । 5 अत पर क ख-ग च-ङ-पुस्तकेषु 'तावत् कलिर्महोत्साह सञ्चरिष्यति निर्भय' । इदमर्द्धमधिकम् ।

अध्यात्मरामायणसङ्कीर्त्तनश्रवणादिजम् ।
फलं वक्तुं न शक्नोमि कार्त्स्न्येन मुनिसत्तम ॥ २६ ॥
तथाऽपि तस्य माहात्म्यं वक्ष्ये किञ्चित्तवानघ ।
शृणु चित्तं समाधाय शिवेनोक्तं पुरा मम ॥ २७ ॥
अध्यात्मरामायणतः [1]श्लोकं श्लोकार्द्धमेव वा ।
यः पठेद् भक्तिसंयुक्तः स पापान्मुच्यते क्षणात् ॥ २८ ॥
यस्तु प्रत्यहमध्यात्मरामायणमनन्यधीः ।
यथाशक्ति [2]पठेद् भक्त्या स [3]जीवन्मुच्यते नरः ॥ २९ ॥

---

प्रवृत्तिं जनयन्तीत्यर्थः । श्रीभागवतेन सहास्यैकप्रतिपादकत्वान्नास्ति विरोधः । यद्वा श्रवण-कीर्त्तनकर्माणि सन्तीति शेषः । पृथिव्यामस्यावतारे पुराणानि केनापि न श्रोष्यन्ते केनापि न कीर्त्तयिष्यन्ते इति भावः ।

२६ । नरो० । कार्त्स्न्येन साकल्येन । मुनिसत्तम मुनिश्रेष्ठ ।

२८ । नरो० । अध्यात्मरामायणतः अध्यात्मरामायणस्य । अथ वा अध्यात्मरामायणत इत्यत्र उद्धृत्येति पूरणीयम् । मुच्यते इति कर्मकर्त्तरि प्रयोगः ।

२९ । नरो० । अनन्यधीस्तन्मात्रबुद्धिरन्यस्मान्निवर्त्तितचेता इति यावत् । यथाशक्ति शक्त्यनतिक्रमेण ।

---

तावदेव तेषां प्राधान्यम्, तावदेव तेषामध्ययनाध्यापनप्रवृत्तिपरायणा लोकास्तत्तद्विधिनिषेधा-नुसारेण नियन्त्रिता भवन्ति, न तस्य प्रचारानन्तरमपीत्यर्थः ।

२७ । हे अनघ निष्पाप, तव सकाशे इति शेषः । त्वं चित्तं समाधाय एकाग्रमवहितं कृत्वेति यावत् । अनवहितस्य तादृशवस्तुमाहात्म्यश्रवणं निरर्थकमिति भावः ।

२९ । जीवन्मुच्यते जीवन्मुक्तो भवति—जीवन्नेव बन्धरहितो भवतीत्यर्थः । जीवन्मुक्त इति । तल्लक्षणञ्च—

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥२।५६॥

इत्यादिना गीतायाम् । उक्तञ्च वाशिष्ठेऽपि—

निद्रादौ जागरस्थाने यो भाव उपजायते ।
तं भावं भावयन् राम जीवन्मुक्तः सदा भवेत् ॥ इति रा० ।

---

1 क-च छ 'श्लोकार्द्धं श्लोकमेव वा' । 2 ख-घ च छ 'वदेद्' । 3 ख घ ङ-च-छ 'जीवन्मुक्त उच्यते' ।

यो भक्त्याऽर्चयतेऽध्यात्मरामायणमतन्द्रितः ।
दिने दिनेऽश्वमेधस्य [1]फलं तस्य भवेन्मुने ॥ ३० ॥
यदृच्छयाऽपि योऽध्यात्मरामायणमनादरात् ।
अन्यत श्रृणुयान्मर्त्य· सोऽपि मुच्येत पातकात् ॥ ३१ ॥
नमस्करोति योऽध्यात्मरामायण[2]मदूरत' ।
सर्व[3]देवार्चनफलं [4]स प्राप्नोति न संशय' ॥ ३२ ॥
लिखित्वा पुस्तकेऽध्यात्मरामायणमशेषत' ।
यो दद्याद्रामभक्तेभ्यस्तस्य पुण्यफल श्रृणु ॥ ३३ ॥
अधीतेषु च वेदेषु शास्त्रेषु [5]व्याकृतेषु च ।
यत् फल दुर्लभ लोके तत् फल तस्य सम्भवेत् ॥ ३४ ॥
एकादशीदिनेऽध्यात्मरामायणमुपोषित ।
यो राम[6]भक्तसदसि व्याकरोति नरोत्तम' ॥ ३५ ॥
तस्य पुण्यफलं वक्ष्ये श्रृणु वैष्णवसत्तम ।
प्रत्यक्षरन्तु गायत्रीपुरश्चर्याफल लभेत् ॥ ३६ ॥

---

३० । नरो० । अतन्द्रितोऽनलस ।

३१ । नरो० । यदृच्छयाऽपि अयत्नेनापि । श्रद्धा चेत् का चिन्ता इति चेत्तत्राऽऽह—अनादरादिति ।

३२ । नरो० । अदूरत समीपे ।

३४ । नरो० । व्याकृतेषु व्याख्यातेषु ।

३५ । नरो० । रामभक्तसदसि रामभक्तसभायाम् ।

---

३१ । [ अन्यत इति । श्रवणमन्यस्मादेव भवति, तथाऽपि यदन्यत इति तेनायमर्थ — अन्य· कश्चिद रामायण श्रृणोति तत्र यदृच्छया कश्चिद् यद्यनादरेण कर्णसात् करोति सोऽपि पातकान्मुच्यते किं पुन श्रद्धया । गो० ]

३५ । [ 'यो रामभक्तसदसी'ति ऐकपद्ये रामभक्तसभायामित्यर्थ । सविसर्गपाठे यो रामभक्त· सदसि ब्राह्मणगोष्ठ्याम् । गो० ]

---

1 च 'पुण्य' । 2 ग '-मतन्द्रित' । 3 ख 'वेदा-' । 4 ख 'सम्प्रा' । 5 क-ग-ङ-चं 'व्याहृते' । 6 'भक्तां सद-' ।

उपवासव्रतं कृत्वा श्रीरामनवमीदिने ।
रात्रौ जागरितोऽध्यात्मरामायणमनन्यधीः ।
यः पठेच्छृणुयाद्वाऽपि तस्य पुण्यं वदाम्यहम् ॥ ३७ ॥
कुरुक्षेत्रादिनिखिलपुण्यतीर्थेष्वनेकशः ।
आत्म[1]तुल्यं धनं सूर्यग्रहणे सर्वतोमुखे ॥ ३८ ॥
विप्रेभ्यो व्यास[2]मुख्येभ्यो दत्त्वा यत् फलमश्नुते ।
तत् फलं सम्भवेत्तस्य सत्यं सत्यं न संशयः ॥ ३९ ॥

---

३८। नरो०। अल्पग्रासे अर्थाद्दानादेः फलापेक्षया सर्वग्रासे फलाधिक्यमिति सूचनाय सर्वतोमुखे इत्युक्तम्। सर्वतो मुखं यस्य तस्मिन् तथा। अधिकधनदाने फलाधिक्यमिति सूचनाय आत्मतुल्यमित्युक्तम्। उच्चत्वमत्र साधर्म्यम्, आत्मपरिमितमित्यर्थः। सूर्यग्रहणे इत्यत्र उपलक्षणया चन्द्रस्यापि ग्रहणम्, अन्यतरत्वमत्र लक्ष्यतावच्छेदकम्, स्वपरप्रकाशकत्वमत्र सम्बन्ध[ ] प्रकृष्टप्रकाशकत्वं वा। यद्वा फलाधिक्यसूचनार्थं सूर्यग्रहण इत्युक्तम्।

३९। नरो०। अत्यन्तसगुणाय धनदानमतिशयितफलजनकमिति सूचनाय विप्रेभ्यो व्यासमुख्येभ्य इत्युक्तम्।

---

३७। श्रीरामनवम्यां राममुद्दिश्य कृतस्य कार्यजातस्य फलमाह अगस्त्यसंहितायाम् अष्टाविंशाध्याये—

चैत्रे मासि नवम्यान्तु जातो रामः स्वयं हरिः ।
पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्वकामदा ।
श्रीरामनवमी प्रोक्ता कोटिसूर्यग्रहाधिका ॥
तस्मिन् दिने महापुण्ये राममुद्दिश्य भक्तितः ।
यत् किञ्चित् क्रियते कर्म तद् भवक्षयकारकम् ।
उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम् ॥

३८। आत्मतुल्यम् अतिप्रियं वस्त्वित्यर्थः। सर्वतोमुखे जले स्थित इति शेषः। 'पुष्करं सर्वतोमुखम्' इति जलपर्यायेष्वभिधानात्। रा०।

[ सर्वतोमुखे सर्वतोग्रासे। यद्वा सूर्यग्रहणे कीदृशे ? सर्वतोमुखे सर्वेभ्यः पुण्यकालेभ्यः प्रधाने। तदुक्तम्—

सूर्यग्रहणकालस्य समानो नास्ति कश्चन। (अगस्त्यस १७।१४) इति। गो० ]

३९। व्यासतुल्येभ्य इत्यनेन देशप्रदेयवस्तु-काल-संप्रदान-विशेषाणां पुण्यातिशयजनकत्वं सूचितम्। रा०।

---

1 क 'तुल्यधन'। 2 ख-ग 'तुल्येभ्यो'।

यो गाय[1]ते मुदाऽध्यात्मरामायणमहर्निशम् ।
आज्ञां तस्य प्रतीक्षन्ते देवा इन्द्रपुरोगमा: ॥ ४० ॥
पठन् प्रत्यहमध्यात्मरामायणम[2]नुव्रत: ।
[3]यद् यत् करोति तत् कर्म [4]कोटिकोटिगुणं भवेत् ॥ ४१ ॥
[5]तत्र श्रीरामहृदयं य: पठेत् सुसमाहित: ।
स ब्रह्मघ्नोऽपि पूतात्मा त्रिभिरेव दिनैर्भवेत् ॥ ४२ ॥
श्रीरामहृदयं यस्तु हनूमत्प्रतिमान्तिके ।
त्रि: पठेत् प्रत्यहं [6]मौनी स सर्वेप्सितभाग् भवेत् ॥ ४३ ॥
पठन् श्रीरामहृदयं तुलस्यश्वत्थयोर्यदि ।
[7]प्रदक्षिणं प्रकुर्वीत ब्रह्महृ[8]त्या निवर्त्तते ॥ ४४ ॥
श्रीरामगीतामाहात्म्यं [9]कृत्स्नं जानाति शङ्कर: ।
तदर्द्धं गिरिजा वेत्ति तदर्द्धं वेद्म्यहं मुने ॥ ४५ ॥

---

४१ । नरो० । व्रतमनुगतोऽनुव्रत: । व्रतं नियम: । कोटि: कोटिर्गुणा यस्य तत् कोटिकोटिगुणं कोटिकोट्यावृत्तिकमित्यर्थ: ।

४३ । नरो० । मौनी पाठसमये अन्योच्चारणरहित: ।

---

४० । आज्ञां तस्य प्रतीक्षन्ते देवा इन्द्रपुरोगमा:, इन्द्रप्रभृतयो देवास्तदाज्ञापालनरूप-पुण्यार्जनाय उन्मुखा जायन्ते, अथ वा तदाज्ञावशवर्त्तिनो भवन्तीत्यर्थ: ।

४२ । सुसमाहितस्तद्गतचित्त: । ब्रह्मघ्नोऽपि ब्रह्महत्याजनितमहापातकयुक्तोऽपि त्रिभि-र्दिनैरेव, न त्वधिकदिनापेक्षेत्यर्थ: । पूतात्मा पातकहीनो भवेत् ।

४३ । हनूमत्प्रतिमान्तिके । हनूमन्नामनिर्वचनमुत्तरकाण्डे वाल्मीकीये—

'मया मुक्तेन वज्रेण यस्मादस्य क्षतो हनु: ।
तस्मादेष कपिर्नाम हनूमान् वै भविष्यति ॥ ३६।११ । इति ।

तस्य प्रतिमा मृत्तिकादिनिर्मितप्रतिकृति:, तस्या अन्तिके सन्निधौ ।

४४ । यस्तुलस्यश्वत्थयो: सन्निधौ रामहृदयं पठन् तौ प्रदक्षिणं प्रकुर्वीत तस्य ब्रह्महत्या तज्जनितमहापातकं निवर्त्तते अपगतं भवति ।

४५ । श्रीरामगीता लक्ष्मणसकाशे रामेणोक्ता, सा चास्यैवोत्तरकाण्डीयपञ्चमसर्गात्मिका ।

---

1 ग-च '-ति' । 2 क-छ '-तन्द्रित' । 3 च 'स यत्' । 4 क-ग-ङ 'तत्त्वको-', ख-ग 'तत. कोटि-', च 'सर्व कोटि-', छ 'तस्य कोटि' । 5 छ-पुस्तके अय श्लोको नास्ति । 6 च 'योगी' । 7 ख घ 'प्रत्यहर' । 8 ख घ 'त्य. निवर्त्तयेत' । 9 क-च 'सर्वं' ।

तत्ते किञ्चित् प्रवक्ष्यामि कृत्स्नं वक्तुं न शक्यते ।
[1]यज् ज्ञात्वा तत्क्षणा[2]ल्लोकश्चित्तशुद्धिमवाप्नुयात् ॥ ४६ ॥
श्रीरामगीता यत् पापं न नाशयति नारद[3] ।
तन्न पश्याम्यहं लोके मार्गमाणोऽपि सर्वदा ॥ ४७ ॥
रामेणोपनिषत्सिन्धुमुन्मथ्योत्पादितां [4]पुरा ।
[5]लक्ष्मणायार्पितां गीतासुधां पीत्वाऽमरो भवेत् ॥ ४८ ॥
जमदग्निसुतः पूर्वं कार्तवीर्यवधेच्छया ।
धनुर्विद्यामभ्यसितुं महेशस्यान्तिके वसन् ॥ ४९ ॥
अधीयमानां पार्वत्या रामगीतां प्रयत्नतः ।
श्रुत्वा गृहीत्वा[6] [7]सुपठन् नारायणकलामगात् ॥ ५० ॥
ब्रह्महत्यादिपापानां निष्कृतिं यदि वाञ्छति ।
रामगीतां मासमात्रं पठित्वा मुच्यते नरः ॥ ५१ ॥

---

४८ । नरो० । उपनिषदेव वेदान्त एव सिन्धुः समुद्रस्तम् । सुधां पीत्वाऽमरो भवेदिति अन्य आत्मिकी सुधां सुधां [ अन्यात्मिकां सुधां ] पीत्वा मरणरहितो भवेदिमां सुधां पीत्वाऽपि मुक्तत्वाद् मरणरहितो भवेदिति भावः । तथा च मुक्तस्य जन्ममरणं नास्तीति ।

४९ । नरो० । जमदग्निसुतः परशुरामः ।

५० । नरो० । नारायणकलां नारायणांशत्वम् ।

---

४७ । पठ्यमाना श्रीरामगीता यत् पापं न नाशयति, तादृशं पापं मार्गमाणोऽन्विष्यन्नपि न पश्यामि । रामगीतेयमशेषदुष्कृतिं नाशयतीत्यर्थः ।

४८ । सुधां पीत्वेति । अन्यात्मिकां रामगीतासुधेतरां सुधाममृतं पीत्वेत्यर्थः । 'अन्य आत्मिकीं सुधां सुधां' इति नरोत्तमधृतः पाठः प्रामादिक इव प्रतिभाति ।

४९ । जमदग्निसुतः परशुरामः, महेशस्य शिवस्य, अन्तिके सन्निधौ । तथा च महाभारते शान्तिपर्वण्यष्टचत्वारिंशाध्याये—

तोषयित्वा महादेवं पर्वते गन्धमादने ।
अस्त्राणि वरयामास परशुं चातितेजसम् ॥ २३ । इति ।

५१ । ब्रह्महत्यादिपापानामिति । अत्रादिपदेन सुरापान-स्तेय-गुर्वङ्गनागमनजनितमहापातकानां परिग्रहः ।

---

1 ङ 'यच्छ्रुत्वा'। 2 ङ 'न्मर्त्त्यः-', च छ 'ल्लोकैः चित्त-'। 3 अत परं ख-घ-पुस्तकयोः 'तन्न नश्यति तीर्थादौ लोके क्वापि कदाचन' इत्यधिकम। 4 ख घ 'मुदा', च 'मुने'। 5 क ङ 'रामलक्ष्मणयोर्गीतासुधा', च छ 'लक्ष्मणायार्पिता गीता सुधा'। 6 ख '-सु प-'। 7 ङ 'प्रप-'।

[1]दुष्प्रतिग्रहदु[2]र्भोज्यदुरालापादिसम्भवम् ।
पापं [3]सकृत्कीर्त्तनेन रामगीता विनाशयेत् ॥ ५२ ॥
शालग्रामशिलाग्रे च तुलस्यश्वत्थसन्निधौ ।
यतीनां पुरतस्तद्वद् रामगीतां पठेत्तु यः ।
स तत् फलमवाप्नोति यद् वाचोऽपि न गोचरम् ॥ ५३ ॥
रामगीतां पठन् भक्त्या यः श्राद्धे भोजयेद् द्विजान् ।
तस्य ते पितरः सर्वे यान्ति विष्णोः परं पदम् ॥ ५४ ॥
एकादश्यां निराहारो नियतो द्वादशीदिने ।
स्थित्वाऽगस्त्यतरोर्मूले रामगीतां पठेत्तु यः ।
स एव राघवः साक्षात् सर्वदेवैश्च पूज्यते ॥ ५५ ॥
विना [4]दानं विना ध्यानं विना तीर्थावगाहनम् ।
रामगीतां नरोऽधीत्य तदनन्तफलं लभेत् ॥ ५६ ॥
बहुना किमिहोक्तेन शृणु नारद तत्त्वतः ।
श्रुतिस्मृतिपुराणेतिहासागमशतानि च ।
अर्हन्ति नाल्पामध्यात्मरामायणकलामपि ॥ ५७ ॥

---

५३ । नरो० । स तदिति । यद्वाचोऽपि गोचरं न तत् फलमवाप्नोति अनन्तफलमवाप्नोतीत्यर्थः ।

५५ । नरो० । साक्षादिति । 'साक्षात् प्रत्यक्षतुल्ययो'रित्यमरः ।

५७ । नरो० । श्रुतयश्च स्मृतयश्च पुराणानि च इतिहासाश्च आगमशतानि च तानि तथा ।

---

५२ । दुष्प्रतिग्रहेति । दुष्प्रतिग्रहाः —

'तिलधेनुर्गजो वाजीप्रेतान्नमजिनं मणिः ।
सुरभिः सूयमाना च घोराः सप्त प्रतिग्रहाः' ॥ इत्यादिस्मृत्युक्ताः ।

मणिः शालग्रामः । सूयमाना सुरभिः उभयतोमुखी । रा० ।

५५ । नियतः संयतः । अगस्त्यतरुर्वकवृक्षः, तस्य मूले । स साक्षाद् राघवः रामसायुज्यलाभेन तत्तुल्यः, अत एव परब्रह्मात्मकः स सर्वदेवैरिन्द्रादिभिः पूज्यते ।

५६ । तदिति । तत्तेभ्यः दान-ध्यान-तीर्थावगाहनादिभ्यः अनन्तमन्तहीनमधिकमित्यर्थः ।

५७ । आगमाः पञ्चरात्रादयः अध्यात्मरामायणस्य तदध्ययनस्य कलां षोडशांशमपि

---

1. छ 'अप्रति-' । 2 ङ '-र्भच्यसुरापानादि-' । 3 ख-घ-च 'यत्तत् की-', छ 'यत कीर्त्तनेनैषा' ।
4 घ 'ध्यान विना दान' ।

अध्यात्मरामचरितस्य मुनीश्वराय माहात्म्यमेतदुदितं कमलासनेन ।
य श्रद्धया पठति वा शृणुयात् स मर्त्य प्राप्नोति विष्णुपदवीं सुरपूज्यमान [1] ॥५८॥
य पृथ्वीभरवारणाय दिविजैः सम्प्रार्थितश्चिन्मय
[2]सञ्जात पृथिवीतले रविकुले मायामनुष्योऽव्यय ।
निश्चक्र हतराक्षस पुनरगाद् ब्रह्मत्व[3]माद्य स्थिरां
कीर्त्तिं पापहरां विधाय जगतां त जानकीशं भजे ॥ ५९ ॥

---

श्रुतयो वेदा, स्मृतयो धर्मसंहिता, पुराणानि मात्स्यादीनि प्रसिद्धानि, इतिहासा भारताद्य ।

५९ । नरो० । अध्यात्मरामायणतदन्तर्भूतरामहृदयरामगीतादीनाम् आदरादिना पाठादीनां फलतारतम्यमुक्त्वा प्रकृत वक्तुकाम श्रीसूतो ग्रन्थप्रतिपाद्य श्रीराम नमस्करोति—य इति द्वाभ्याम् । योऽव्ययश्चिन्मय दिविजै प्रार्थित सन् पृथ्वीभरवारणाय पृथिवीतले रविकुले सञ्जात सन् निश्चक्र हतराक्षस सन् जगतां पापहरा स्थिरां कीर्त्तिं विधाय आद्य ब्रह्मत्वं पुनरगात्, त जानकीशं भजे इत्यन्वय । दिविजैर्देवै, चिन्मयो ज्ञानस्वरूप । 'विज्ञानमानन्द ब्रह्म' (बृ० ३।९।२८) 'सत्य ज्ञानमनन्त ब्रह्मे'त्यादि (तैत्ति० उ० २।१।१) श्रुते । अव्ययोऽपक्षयशून्यो नित्यो वा । अव्यर्थ-चक्रास्त्रेण राक्षसहनन कथ तादृशकीर्त्तिजनकमिति चेत्तत्राह—निश्चक्र हतराक्षस इति । कीर्त्तें

---

नार्हन्ति तदध्ययनानीत्यर्थ । सर्वाध्ययनफलत्वादस्येति भाव । रा० । इह अस्मिन् रामगीता-रामहृदयादिविषये । तत्त्वत परमार्थत ।

५८ । अध्यात्मरामचरितस्येति सूतोक्ति । कमलासनेन ब्रह्मणा मुनीश्वराय नारदाय अध्यात्मरामचरितस्य आत्मन्यधि वर्त्तमानमध्यात्ममात्मज्ञानप्रकाशकम् । तच्च तद्रामचरितञ्चेति । उदित कीर्त्तितम्, एतन्माहात्म्यं य श्रद्धया पठतीत्यादि ।

५९ । शिवपार्वतीसंवादरूपमध्यात्मरामायणं वक्तुं भगवान् व्यासो निर्विघ्नार्थं भगवत्-स्मरणरूपमङ्गलमाचरति—य इति । पृथ्व्या यो दुष्टराक्षसजनितो भरो भारस्तस्य वारणायेत्यर्थ ।

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ (४।८)

इति भगवदुक्ते । दिविजैर्देवै रावणपीडितै सम्प्रार्थित सन् चिन्मयोऽपि चिद्रूपोऽपि अव्ययोऽपि पृथ्वीतले रविकुले मायामनुष्य सञ्जात । अव्ययस्य चिन्मयस्य कथ जन्म, जातस्य च कथम-

---

1 अत पर ङ-ञ-पुस्तकयो 'सूत उवाच' इत्यधिकम् । 2 क-ञ 'हत्वा राक्षसपुङ्ग०' । 3 च '-माद्या' ।

स्वर्गजनकत्वात्तत्र कथं परमेश्वरस्य कामनेति चेत्तत्राऽऽह—जगतां पापहरामिति। ननु तर्हि तदानीन्तनजनानामेव पापं हरत्विति स्थिरामिति, आकल्पस्थायिनीमित्यर्थः। इन्द्रादिलोकस्थिता यद्यत्राऽऽगत्य पापं कुर्वन्ति तदा तेषामपि गीता श्रुता कीर्त्तिता वेय पापं हरतीति सूचनाय जगतामित्युक्तम्। यद्वा जगत्पदमत्र पृथिवीपरम्, बहुवचनोपादानमशेषजनग्रहणाय। लोककीर्त्तिः स्वर्गं जनयति, परमेश्वरकीर्त्तिस्तु लोकपाप हरतीति प्रसिद्धमेव। ननु जीवोऽप्यविद्यानिवृत्तौ ब्रह्मैव भवतीति किमर्थमुक्तं ब्रह्मत्वमगादित्यत आह—आद्यमिति।

---

व्ययत्वम्, उत्पन्नभावस्य नाशावश्यम्भावात्; अत उक्तम्—मायेति। माया नाम सत्त्वासत्त्वाभ्यामनिर्वाच्या सत्त्वरजस्तमोगुणघटितघटनासामर्थ्यवती काचिदीश्वरशक्तिः, 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' (श्वेताश्व०१।३१) इति श्रुतेः। 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' (७।१४) इति गीतोक्तेश्च। एव चिन्मयस्याघटितोऽपि मनुष्यभावो जन्मव्यवहारश्च मायाकृत इति भावः। तदुक्त रामतापनीयोपनिषदि—

चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना॥ १।७। इति।

निश्चक्रं निरवशेष यथा तथा हतराक्षसः जगतां पापहरां कीर्तिं विधाय लोके स्थापयित्वा पुनराद्य ब्रह्मत्वं निरुपाधिब्रह्मरूपमगात्। रा०।

दिविजैः सम्प्रार्थित इति। एतत्तु स्पष्ट वाल्मीकीये आदिकाण्डे चतुर्दशसर्गे। विस्तृतिभिया न तत्रत्यास्ते श्लोका अस्माभिरत्र समुद्धृताः। रविकुले सूर्यवंशे, 'विवस्वान् कश्यपाज्जज्ञे मनुर्वैवस्वतः स्मृतः।' (१।७०।२०) इत्यादिवाल्मीकीयात् सूर्यवंशप्रभवत्वमेषां रामादीनां प्रसिद्धमेव। पुनरगादिति—

ततः प्रतिष्ठितो विष्णुः स्वर्गलोके यथा पुरा।
येन व्याप्तमिदं सर्वं त्रैलोक्य सचराचरम्॥

('वङ्गवासी'मुद्रितवाल्मीकिरामायणे ७।१२४।२)

अस्योत्तरकाण्डे नवमाध्याये पुनः—

पितामहप्रार्थनया स रामः पश्यत्सु देवेषु महाप्रकाशः।
मुष्णंश्च चक्षूंषि दिवौकसां तदा बभूव चक्रादियुतश्चतुर्भुजः॥
शेषो बभूवेश्वरतल्पभूतः सौमित्रिरत्यद्भुतभोगधारी।
बभूवतुश्चक्रधरौ च दिव्यौ कैकेयिसूनुर्लवणान्तकश्च॥
सीता च लक्ष्मीरभवत् पुरव रामो हि विष्णुः पुरुषः पुराणः।
सहानुजः पूर्वशरीरकेण बभूव तेजोमयदिव्यमूर्त्तिः॥ इति

विश्वोद्भवस्थितिलयादिषु हेतुमेकं मायाश्रयं विगतमायमचिन्त्यमूर्त्तिम् ।
आनन्दसान्द्रममलं निजबोधरूपं सीतापतिं विदिततत्त्वमहं [1]नमामि ॥ ६० ॥

६० । नरो० । नमस्कार्यत्वसाधकं सर्वोत्कृष्टत्वम्, सर्वोत्कृष्टत्वन्तु ब्रह्मण एवेति हृदि निधाय सीतापतेः स्वरूपलक्षणतटस्थलक्षणाभ्यां ब्रह्मत्वं प्रतिपादयितुमाह—विश्वोद्भवस्थितिलयादिष्वित्यादि । स्वरूपलक्षणं यथा—तदभिन्नत्वे सति तद्बोधकम् । प्रकृते आनन्दसान्द्रमित्यादि । ननु सम्बन्धवृत्तित्वाभावे कथं लक्षणत्वमिति चेन्न, स्वस्यैव स्वापेक्षया धर्मधर्मिभावकल्पनया लक्षणत्वसम्भवात् । तटस्थलक्षणं नाम यावल्लक्ष्यकालमनवस्थितत्वे सति यद् व्यावर्त्तकं तदेव । यथा गन्धवत्त्वं पृथिवीलक्षणम्, महाप्रलये परमाणुषु, उत्पत्तिकाले घटादिषु च गन्धाभावात् । प्रकृते च विश्वोद्भवादिहेतुत्वम् । हेतुं कारणम्, एकमसहायं सहकारिकारणरहितमिति यावत्, यद्वा एकमद्वितीयम्, मायाश्रयं मायाधारम् । विगता विशेषेण नष्टा माया यस्य यस्माद्वा तम् । तथा अचिन्त्या मनसोऽपि अगोचरा मूर्त्तिर्यस्य तम् । आनन्दसान्द्रम् आनन्दघनम्, 'विज्ञानमानन्दं ब्रह्म' ( बृह० ३।९।२८ ) इत्यादिश्रुतेः । अमलमकल्मषम्, 'य आत्मा अपहतपाप्मा' ( छान्दो० ८।१।५ ) इति श्रुतेः । अथ वा अमलं रागादिदोषरहितम् । निजबोधरूपं नित्यबोधस्वरूपम्, 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तैत्ति० २।१।१ ) इत्यादिश्रुतेः । अत एव विदितं तत्त्वं यस्य तं तथा ।

६० । रामस्योक्तं ब्रह्मत्वं लक्षणैर्द्रढयति—विश्वेति । विश्वस्य संसारस्योत्पत्तिलयादिषु एकं हेतुम्, 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति' ( तैत्ति० ३।१।१ ) इति श्रुतेः । प्रयन्ति यत्र लीनानि भवन्तीत्यर्थः । अनेन निमित्तकारणत्वसमानाधिकरणं जगदुपादानकारणत्वं ब्रह्मलक्षणं सूचितम् । एकमित्यसहायार्थकम्, तेन निमित्तकारणाभेदः सूचितः । ननु मिथ्याभूतकार्यनिरूपितकारणत्वस्यापि मिथ्यात्वाद् ब्रह्मणा सम्बन्धाभावात् कथमस्य लक्षणमत आह—मायाश्रयमिति । मायाश्रयत्वात् तत्कृतमिदमस्य कारणत्वमित्यर्थः । मायिकेन कारणत्वेन मायिक एव ब्रह्मणः सम्बन्ध इति भावः । तदुक्तं श्रुतौ—'मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्' ( श्वेताश्व० ४।१० ) इति । ननु मायाश्रयत्वे जीवं प्रति स्वस्वरूपमिव स्वं प्रत्यपि एनं माया आवृणुयात्तत्राऽऽह—विगतमायमिति । विगता माया आवरणशक्तिरूपा यस्मात् तम्, एनं प्रति स्वस्वरूपावरणशक्तिरहिता सतीत्यर्थः । अचिन्त्यमूर्त्तिं 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' ( तैत्ति० आरण्य० ८।४।१) इति श्रुतेः । एवं जगदुत्पत्त्यादिकारणस्वरूपं तटस्थलक्षणमुक्तम् तेन रूपेणाज्ञेयत्वात् । अथ स्वरूपलक्षणमाह—अमलं निजबोधरूपमिति, 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति ( तैत्ति० २।१।१ ) श्रुतेः ।

1 च 'भजामि' ।

पठन्ति ये नित्यमनन्यचेतस श्रृण्वन्ति [1]चाध्यात्मकसं[2]ज्ञितं शुभम् ।
रामायण सर्वपुराणसम्मत [3]विधूतपापा हरिमेव यान्ति ते ॥ ६१ ॥
अध्यात्मरामायणमेव नित्य पठेद् यदीच्छेद्भवबन्ध[4]मुक्तिम् ।
गवां सहस्रायुतकोटि[5]दानफल लभेद् य श्रृणु[6]यात् स नित्यम् ॥ ६२ ॥
पुरा[7]रिगिरिसम्भूता श्रीरामार्णव[8]सङ्गता ।
अध्यात्म[9]रामगङ्गेय पुनाति भुवनत्रयम् ॥ ६३ ॥

---

६२ । नरो० । भवो जन्म, तद्रूपो बन्धो भवबन्ध , तस्य या मुक्तिर्निवृत्तिस्ताम् । यद्वा भव ससारस्तद्रूपो बन्धस्तस्मान्मुक्तिस्ताम् । सहस्रेणाधिकमयुत तेनाधिका कोटि , तस्या यद्दान तत्फलम् ।

६३ । नरो० । पुरारि शिव , स एव गिरि पर्वत , तस्मात् सम्भूता प्रभूता । श्रीराम एव अर्णव समुद्रस्ततत्सङ्गता । अध्यात्मरामोऽध्यात्मरामायणम् , यथा भीमो भीमसेन , स एव गङ्गा, अन्याऽपि गङ्गा हिमालयगिरे सम्भूता समुद्रसंगता ।

---

इदमेव रूपममलम् उपाधिकृतदोषरहितम् । जीवस्तूपाधिकृतकर्तृत्वाद्यभिमानवान् तथा नेश्वर इति भाव. । निजं स्वाभाविक बोधरूपमेव [रूप] यस्य तम् । अनेन रूपान्तर सर्वं मायिकमिति सूचितम् । विदित तत्त्व ज्ञान स्वस्य बोधस्वरूपत्व येन तम् । तेन रामावतारे शोकक्रोधादि-नटवन्नाटनमात्रमिति सूचितम् । रा० ।

[ विश्वेत्यादि । विश्वस्य जन्मपालनादिषु हेतुं निमित्तम् । ननु [ ते ? तत्र ] ब्रह्मादयः प्रसिद्धास्तत्राऽऽह—एकमद्वितीयम्, तेषामपि तद्रूपत्वात् । तन्वेकस्य कथ तथात्वम् , तत्राऽऽह—मायाश्रयम् । ननु तर्हि मायित्वात् किं जीव ? न, विगतमायम् , विगता दूरादेव स्वय निरस्ता माया यस्मिन् तम् । 'माया परैत्यभिमुखे च विलज्जमाना' (२।७।४७) इति श्रीभागवतोक्ते । ननु मायाश्रयत्व विगतमायत्वञ्च कथमेकस्यास्तु तत्राऽऽह—अचिन्त्यमूर्त्तिमज्ञेयस्वरूपम् । गो० ]

६१ । सर्वपुराणसम्मत सर्वपुराणश्रेष्ठम्, श्रेष्ठत्वमस्य विष्णुसायुज्यसाधकत्वेन । विधूतपापा अपगतकलुषास्ते हरिमेव यान्ति, एवेति निश्चयार्थे, निश्चितमेव विष्णुसायुज्यरूपमोक्षं गच्छन्तीत्यर्थ. ।

६२ । य श्रृणुयात् स सहस्रगुणितायुततद्गुणितकोटिसंख्यगोदानादधिकफलं लभेदित्य-न्वय । रा० ।

६३ । पुरारिगिरीति रामार्णवेति च रूपके, अध्यात्मरामगङ्गेति अध्यात्मरामशब्दोऽध्यात्म-

---

1 ख-घ-ङ-च-छ 'चाऽऽध्यात्मिक-' । 2 ङ '-ह्नित' । 3 ख घ-ङ 'निर्धूत' । 4 च '-मोचम्' । 5 क ग-ङ '-दानज', ख-घ च छ '-दानात' । 6 छ '-याच्च' । 7. ङ 'गिरिशसम्भूता' । 8. ङ 'गामिनी' । 9. ग '-नाम-' ।

कैलासाग्रे कदाचिद्रविशतविमले मन्दिरे रत्नपीठे
संविष्टं ध्याननिष्ठं त्रिनयनमभयं सेवितं सिद्धसङ्घैः ।
देवी [1]वामाङ्कसंस्था गिरिवरतनया पार्वती भक्तिनम्रा
प्राहेदं देवमीशं सकलमलहरं वाक्यमानन्दकन्दम् ॥ ६४ ॥

श्रीपार्वत्युवाच—

नमोऽस्तु ते देव जगन्निवास [2]सर्वार्थदृक् त्वं परमेश्वरोऽसि ।
पृच्छामि [3]तत्त्वं पुरुषोत्तमस्य [4]सनातनं त्वञ्च सनातनोऽसि ॥ ६५ ॥

---

६४ । नरो० । रविशतविमले सूर्यशतोज्ज्वले । गिरिवरतनया पर्वतश्रेष्ठदुहिता । सकलमलहरम् आनन्दकन्दम् आनन्दमूलम् ।

६५ । नरो० । नमोऽस्त्विति । हे देव, जगन्निवास । रामस्य तत्त्वं कथमहं वेद्मीति चेत्तत्राऽऽह—सर्वार्थदृगिति । सर्वार्थद्रष्टेत्यर्थः । कथमहं सर्वार्थदृगिति चेत्तत्राऽऽह—परमेश्वरोऽसीति । तत्त्वं स्वरूपं याथार्थ्यं वा । सनातनं नित्यम्, अनित्यस्य नित्यज्ञानं कथं स्यादिति चेत्तत्राऽऽह—सनातनोऽसीति ।

---

रामायणपरस्तदेव गङ्गेति । अनेन रूपकेण सर्वमहापातकादीनामपि नाश इति सूचितम्, गङ्गायास्तन्नाशकत्वस्य सर्वश्रुतिस्मृतिसिद्धत्वात् । रा० ।

६४ । सकलमलहरवस्तुविषयत्वाद्वाक्यस्य सकलमलहरत्वम् । आनन्दकन्दमितीशविशेषणम् । 'एतस्यैवाऽऽनन्दस्य मात्रामुपजीवन्ति' ( बृह० ४।३।३२ ) इति श्रुतेरस्य सर्वानन्दमूलत्वेनाऽऽनन्दकन्दत्वम् । रा० ।

रविशतविमले अगणितरविरश्मिप्रतिभासिते । रत्नपीठे रत्ननिर्मितासने । सिद्धसङ्घैः सिद्धा देवयोनिविशेषा मन्त्रादिसाधनेन सिद्धिविशिष्टाश्च, तेषां सङ्घैः समूहैः । वामाङ्कसंस्था शङ्करस्येति शेषः । सकलमलहरं निखिलपापनिर्मुक्तिकारकम् ।

६५ । देवो द्योतनात् । जगन्निवसत्यस्मिन् जगति निवसतीति वा जगन्निवासस्तत्सम्बुद्धिः, ते तुभ्यं नमोऽस्तु । यतस्त्वं सर्वात्मदृक् सर्वस्वरूप आत्मा ब्रह्म । 'सर्वं खल्विदं ब्रह्म' ( छान्दो० ३।१४।१ ) इति श्रुतेः । तमनिशमात्मरूपतया पश्यतीति सर्वात्मदृक् अत एव परमेश्वरोऽसि अतः पुरुषोत्तमस्य सर्वेभ्यः पुरुषेभ्य उत्तमस्य तस्यैव ब्रह्मणः सनातनमुपाधिरहितं सोपाधेः रूपस्य ज्ञानोत्तरं नाशान्न सनातनत्वम्, तत्त्वं पृच्छामि । ननु असनातनेन मया कथं तद्वक्तुं शक्यमत आह—त्वञ्च सनातनोऽसि, त्वमपि स एवासीति त्वदज्ञातं न किञ्चिदिति भावः । रा० ।

---

1 ख घ 'वामाङ्क-', ग 'वामाङ्गे-' । 2 क-ख-ग-घ-ङ छ- 'सर्वात्मदृक्' । 3 ङ 'तत्त्वा' । 4 क 'सनातनस्त्वं', ख-छ 'सनातनं त्वं' ।

गोप्यं यदत्यन्तमनन्यवाच्यं वदन्ति भक्तेषु महानुभावाः ।
यद्प्यहोऽहं तव देव भक्ता प्रियोऽसि मे त्वं वद यत्तु पृष्टम् ॥ ६६ ॥
ज्ञानं सविज्ञानमथानुभक्ति वैराग्ययुक्त[1]ञ्च मितं विभास्वत् ।
जानाम्यहं योषिदपि त्वदुक्तं यथा तथा ब्रूहि तरन्ति येन ॥ ६७ ॥
पृच्छामि [2]नान्यच्च परं रहस्यं तदेव [3]चाग्रे वद वारिजाक्ष ।
श्रीरामचन्द्रेऽखिल[4]तत्त्वसारे भक्तिर्दृढा [5]नौर्भवति प्रसिद्धा ॥ ६८ ॥

---

६६ । नरो० । अत्यन्त गोप्यं त्वं कथं वक्ष्यसीति चेत्तत्राऽऽह—गोप्यमिति । अनन्यवाच्यत्वाद् यदत्यन्तं गोप्यं तदपि महानुभावा भक्तेषु वदन्ति । अहो हे ।

६७ । नरो० । विज्ञायतेऽनेनेति विज्ञानमुपदेशस्तेन सह वर्त्तमानम् । यद्वा ज्ञानमात्मविषयम्, विज्ञानं शास्त्रीयम् । यद्वा शास्त्राचार्योपदेशक [ देशजं ] ज्ञानम्, विज्ञानं निदिध्यासनम् । 'विज्ञाय प्रज्ञां कुरु' ( बृह० ४।४।२१ ) इति श्रुतेः ।

६८ । नरो० । हे वारिजाक्ष, नान्यच्च पृच्छामि, येन तरन्ति तदेव परं रहस्यम् अग्रे वदेत्यन्वयः । अखिलतत्त्वसारे चतुर्विंशतितत्त्वेभ्यः श्रेष्ठे इत्यर्थः । दृढा निश्चला ।

---

६६ । अत्यन्तगोप्यम् 'इदं तु ते गुह्यतम'मिति ( ९।१ ) गीतोक्तेः । अनन्यवाच्यं भक्तान्येषु वक्तुमयोग्यम्, अहो तदपि भक्तेषु वदन्ति, अतो मे पृष्टं यत् तत् तु निश्चयेन वद । हे देव, यतोऽहं तव भक्ता । ननु मद्भक्ता त्वं कुतस्तत्राऽऽह—यतस्त्वं मे प्रियोऽसि । रा० ।

६७ । येन ज्ञानेन जनास्तरन्ति पुनर्जन्मादि संसारं न प्राप्नुवन्ति, तत् सविज्ञानं ज्ञानं ब्रूहि । विज्ञानं निदिध्यासनपरिपाकजमपरोक्षज्ञानं तत्सहितं तत्फलकमिति यावत्, ज्ञानं श्रवणमननजं परोक्षम्, 'ब्रह्मैव सर्वम्' 'ब्रह्मैवाह'मिति च, 'तरति शोकमात्मविदि'ति ( छान्दो० ७।१।३ ) श्रुतेः । तद् ब्रूहि तज्जनकवाक्यं ब्रूहीत्यर्थः । तज्ज्ञानं न च वैराग्यं विना, वैराग्यञ्च न भक्तिं विनेत्यत आह—अनुभक्ति वैराग्ययुक्तं चेति । भक्तेः पश्चादनुभक्ति, जायमानं यद्वैराग्यं तद्युक्तं तदुपायबोधकवाक्ययुक्तं वैराग्ययुक्तञ्चेत्यर्थः । तथा च पातञ्जलसूत्रम्—'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्' (१।१९) इति । अनुश्रवो वेदस्तद्बोधित स्वर्गादिरानुश्रविकः, भक्तिरीश्वरानुरागः, तथा मितं मितशब्दवत्, विभास्वद् विशेषेण भास्वत् । श्रुतिमात्रेण झटित्यर्थप्रत्यायकशब्दबोधजनकवाक्ययुक्तं ब्रूहि, यथा योषिदप्यहं त्वदुक्तं जानामि । रा० ।

[ ज्ञानमित्यादि । ज्ञानं शास्त्रोक्तम्, विज्ञानमपरोक्षम् । अनु अनन्तरम् । विभास्वत् स्वप्रकाशः ( ? ) । गो० ]

६८ । अग्रे प्रथमतः । दृढा भक्तिः प्रसिद्धा नौर्भवति भवसागरतरणायेति शेषः । रा० ।

---

1 ग '-ञ्चरितं विभास्वत्', च '-ञ्चरितं सुभास्वत' । 2. क ख-ग घ-ङ च छ 'चान्यच्च' । 3 छ '-मग्रे' । 4 ख-च '-लोक-' । 5 च 'मे भ-' ।

भक्तिः प्रसिद्धा [1]भवबन्धमोक्षणा [2]नान्यत् ततः साधनमस्ति किञ्चित् ।
तथाऽपि हृत्संशयबन्धनं मे विभेत्तुमर्हस्यमलोक्तिभिस्त्वम् ॥ ६९ ॥
वदन्ति रामं परमेकमाद्यं निरस्त[3]मायागुणसम्प्रवाहम् ।
भजन्ति चाहर्निशमप्रमत्ताः परं पदं यान्ति तथैव सिद्धाः ॥ ७० ॥

---

६९ । नरो० । भवबन्धस्य मोक्षणं यस्याः सा भवबन्धमोक्षणा, ततो भक्तेः, साधनं कारणम्, भक्तिरेवोपादेया । तस्यां सत्यां तत्त्वजिज्ञासा विफलेति चेत्तत्राऽऽह—तथाऽपीति ।

७० । नरो० । कथं तव हृत्संशयबन्धनमिति चेत्तत्राऽऽह—वदन्तीत्यादि । आद्यं कारणम्, आद्यत्वे हेतुरेकमद्वितीयमित्यर्थः । परमुत्कृष्टम्, परत्वे हेतुः निरस्तमायागुणसप्रवाहमिति । निरस्तो निराकृतो मायागुणानां सत्त्वरजस्तमसां सप्रवाहो येन तम् । एतेन सर्वज्ञत्वादि-विशिष्टत्वं सूचितम्, तेन च श्रीरामस्य जीवत्वं निरस्तम्, परं पदमुत्कृष्टं पदं मोक्षमिति यावत् । श कल्याणम् (?) । अप्रमत्ता मदौद्धत्यशून्याः प्रमादशून्या वा । यद्वा शमे श्रवणादि-व्यतिरिक्तविषये मनसो निग्राहे समत्ता (?) ।

---

अन्यत् प्रष्टव्यं वस्तु न पृच्छामि, तत्रेदानीं मम स्पृहा नास्तीत्यर्थः । येन जनास्तरन्ति भवसागरमिति शेषः, तदेव तमुपायमेव अग्रे वद । अखिलतत्त्वसारे क्षित्यप्तेजोमरुद्व्योम-गन्धरूपरसस्पर्शशब्दनेत्रहस्तपादमुखनासिकाजिह्वाकर्णत्वकपायूपस्थप्रकृतिमनोबुद्ध्यहङ्कारेभ्यश्चतु-र्विंशतितत्त्वेभ्यः सारे श्रेष्ठे ।

६९ । तदेवाह—भक्तिरिति । ततोऽन्यत् साधनं नास्ति अन्यद् धर्मादि तत्साधनं भवमोक्षजनकत्वज्ञानसाधनं नास्तीत्यर्थः, 'सा मुख्येतरापेक्षितत्वात्' ( १।२।२० ) । 'सा भक्तिः परानुरक्तिरीश्वरे' ( १।२ ) इति भक्तिमीमांसाकृच्छाण्डिल्यसूत्राभ्याम् । 'इतरेण ज्ञानेन स्वसाधन-तयाऽपेक्षितत्वात् सा भक्तिर्मुख्या' इत्याद्यसूत्रार्थः । भक्तिलक्षणपरं च द्वितीयसूत्रम् । हृत्-संशयबन्धनं हृद्गतसंशयविषयं रामस्य अनीश्वरत्वम् । रा० ।

भवबन्धमोक्षणा भक्तिस्तु तवास्ति, ततोऽन्यत् साधनं श्रेष्ठसाधनं नास्ति इत्यपि तव विदितमेव, तत् कथं ज्ञानविषयेयं पृच्छेत्याह—तथाऽपीति । त्वममलोक्तिभिर्योषिद्बोधयोग्य-निर्मलवचोभिर्मे हृत्संशयबन्धनम् अज्ञानोत्थसंशयबन्धनम् ।

७० । निरस्तस्त्यक्तो मायागुणकृतो रागद्वेषादिसप्रवाहो येन तम् । अप्रमत्ताः प्रमादोऽ-ज्ञानं तद्रहिताः, 'प्रमादं वै मृत्युमहं ब्रवीमि' इति सनत्सुजातीयोक्तेः (२।४) । तत्र हि 'मृत्युर्वै तमः' ( बृह० १।३।२८ ) इति श्रुतेर्मृत्युपदेनाज्ञानमिति बोध्यम् । तथैव तेन प्रकारेण भजनेनैव सिद्धास्तत्त्वज्ञाः सन्तः परं पदं मोक्षं यान्तीत्यर्थः । रा० ।

अत्रत्यो नरोत्तमसम्मतः पाठः सुधीभिरनुसन्धेयः ।

---

1 क ख ग घ-ङ च छ 'भवमोचणाय' । 2 ग 'नात परं' । 3 ग 'मायो गुण-' ।

वदन्ति केचित् परमोऽपि रामः स्वाविद्यया संवृतमा[1]नसः स्वम् ।
जानाति नात्मान[2]मतः परेण सम्बोधितो वेद परात्मतत्त्वम् ॥ ७१ ॥
यदि [3]स्म जानाति कुतो विलापः सीता[4]कृतेऽनेन कृतः परेण ।
जानाति नैव यदि केन सेव्यः समो हि सर्वैरपि जीवजातैः ॥ ७२ ॥

---

७१ । नरो० । स्वस्य या अविद्या माया तया संवृतं मानसं यस्य सः । स्वं स्वीयम्, आत्मानं स्वरूपम्, परेण अन्येन, परात्मतत्त्वं परमात्मतत्त्वम् ।

७२ । नरो० । सीताकृते सीतानिमित्तम्, परेण परमेश्वर[रेण] । समस्तुल्यः । जीवनानात्ववादिमतमालम्ब्य जीवजातैरित्युक्तम् । जीवजातैर्जीवसमूहैः ।

---

७१ । परमोऽपि रामः स्वाविद्यया मायया संवृतमावृतमात्मसंज्ञं ब्रह्मसंज्ञम् आत्मानं स्वरूपं न जानाति । अतः परेण ब्रह्मणा सम्बोधितः ईश्वरस्तद्रूपं स्वं तत्त्वं वेद जानातीति । तथा च वाल्मीकीये रावणवधादनन्तरं ब्रह्मवाक्यम्—

'तमुवाच ततो देवः स्वयम्भूरमरद्युतिः ।
प्रगृह्य रुचिरं बाहुं स्मारयन् पूर्वदैहिकम् ॥
भवान् नारायणः साक्षाद्देवश्चक्रायुधः प्रभुः ।' इत्यादि ।

उपदेशसाहस्र्यां भगवत्पादैरप्युक्तम्—

'ब्रह्मा दाशरथेर्यद्वदुक्त्यैवापानुदत्तमः ।
तस्य विष्णुत्वसम्बोधे न यत्नान्तरमास्थितः ॥' (तत्त्वमसिप्र० १००)इति । रा० ।

रामवर्मणा ब्रह्मवाक्यत्वेन यदुद्धृतं रामायणीयं तत्र—

इति ब्रुवाणं काकुत्स्थं स्वयम्भूरमरद्युतिः ।
अब्रवीच्छृणु काकुत्स्थ सत्यं सत्यपराक्रम ॥
भवान् नारायणः श्रीमान् देवश्चक्रायुधः प्रभुः ॥

इति प्राच्ये 'गोरेसियो' सम्पादिते रामायणे लङ्काकाण्डे द्व्यधिकशततमे सर्गे ११श १२श-श्लोकयोः

'इति ब्रुवाणं काकुत्स्थं ब्रह्मा ब्रह्मविदां वरः ।
अब्रवीच्छृणु मे वाक्यं सत्यं सत्यपराक्रम ॥
भवान् नारायणो देवः श्रीमांश्चक्रायुधः प्रभुः ' ॥

इति पाश्चात्ये 'वङ्गवासी'मुद्रिते लङ्काकाण्डे एकोनविंशत्यधिकशततमे सर्गे १२श-१३श-श्लोकयोः पाठो दृश्यते, न तु कुत्रापि रामवर्मधृतस्तादृशः पाठ इति सुधीभिर्विवेचयितव्यम् ।

७२ । यदि आत्मानम् आत्मनो निरुपाधिब्रह्मत्वं जानाति स्म, तदा परेण परमेश्वरेण कुतः

---

1 क-ख-घ '-त्मसञ्ज्ञम्' । 2 ग 'मतोऽपरेण' । 3 ङ 'प्रजा-' । 4 ग छ 'क्लते तेन', ङ 'क्लते नेन सुहृत्परेण' ।

अत्रोत्तरं किं विदितं भवद्भिस्तद् [1]ब्रूहि मे संशय[2]भेदवाक्यम् ॥ ७३ ॥

[3]श्रीमहादेव उवाच—

धन्याऽसि भक्ताऽसि परात्मनस्त्वं यज्ज्ञातु[4]मीहा तव रामतत्त्वम् ।
पुरा न के[5]नाप्यभि[6]चोदितोऽहं वक्तुं रहस्यं परमं निगूढम् ॥ ७४ ॥
त्वयाऽद्य भक्त्या परि[7]णोदितोऽहं वक्ष्ये नमस्कृत्य रघूत्तमं ते ॥ ७५ ॥
रामः परात्मा प्रकृतेरनादिरानन्द एकः पुरुषोत्तमो हि ।
स्वमायया कृत्स्नमिदं हि सृष्ट्वा नभोवदन्तर्बहिरास्थितो यः ॥ ७६ ॥

---

७३ । नरो० । संशयं भिनत्तीति संशयभेदम्, तच्च तद्वाक्यञ्चेति तत्तथा ।

७४ । नरो० । धन्याऽसीति । परमात्मनस्त्वं भक्ताऽसि यद् यस्मात्तव रामतत्त्वं ज्ञातुमीहेति सम्बन्धः । अभिचोदितः प्रेरितः ।

७६-७८ । नरो० । परो भिन्न आत्मा स्वरूपं यस्य सः । प्रकृतिभिन्नत्वे किं चिन्न-मित्यत आह—अनादिरिति । पुराण इत्यर्थः । अनादित्वे हेतुः—एक इति । अद्वितीय

---

कथं विलापः । मानुषोचितं तादृशमनुशोचनं किंकारणमित्यर्थः । सीतानिमित्तं भूयो भूयो रामविलापादिकं वाल्मीकीयरामायणे अरण्यकिष्किन्ध्याकाण्डयोर्दृश्यते, ग्रन्थविस्तृतिभिया तन्नात्रोद्धृतम् । यदि न जानाति तदा जीवजातैः समः स कथं सेव्यः, अज्ञत्वाज्जीववदसेव्यत्वमेव तस्य, इत्यत्र महान् विकल्पो मे समुपस्थितः । सर्वज्ञः सर्वदर्शी त्वं तत्त्वोपदेशेन तं नाशयेत्यर्थः ।

[ तत्र विप्रतिपत्तिमाह—यदि स्मेति । परेण परमेश्वरेण तेन, ईश्वरस्य मोहादेरभावात् । गो० ]

७४ । यत् त्वं परात्मनो रामस्य भक्ता यतश्च तव रामतत्त्वं ज्ञातुमीहा, अतस्त्वं धन्याऽसीति शेषः । परमं निगूढम् अतिशयगोप्यं रहस्यं रामस्य तात्पर्यं याथार्थ्यमिति यावत् । यद्वा परममिति रहस्यमित्यस्य विशेषणम्, रहस्यं किम्भूतं परममुत्कृष्टमित्यर्थः ।

७५ । भक्त्या अनुरागेणेत्यर्थः । परिणोदितः प्रेरितः । रघूत्तमं नमस्कृत्य ते सकाशे तद्रहस्यं वक्ष्ये ।

७६ । एवं पार्वत्या पृष्टः शिवो रामस्वरूपमाह—राम इति । रामः परात्मा ब्रह्मैवेत्यर्थः । प्रकृतेरित्यस्यान्य इति असंसर्गीति च शेषः । प्रकृतितत्कार्येभ्योऽन्यत्वात्तैरसंसर्गाच्च रामः परमेश्वर एवेत्यर्थः । जीवस्तु तैरुपाधिभिः संसृष्टस्तद्धर्मकर्तृत्वाद्यभिमानवानिति भावः । अत एव अनादिरेक आनन्दः । कार्यानन्दव्यावृत्तये अनादिरिति । एवञ्च 'आनन्दं ब्रह्म' ( तैत्ति० ३।६।१ ) 'एकमेवाद्वितीयं ब्रह्म' ( छान्दो० ६।२।१ ) इति श्रुतिसिद्धं ब्रह्मेत्यर्थः । रा० ।

---

1 ख-घ 'ब्रूत' । 2 '-भेदि' इत्यादर्शेषु पाठः । 3 ग-ङ च 'श्रीमहेश्वर उवाच' । 4 ख-घ-च '-मिच्छा' । 5 च छ '-नापि निवेदितोऽ-' । 6 क-ग-ङ '-नोदि-' । 7 च छ 'परिचो-' ।

सर्वान्तरस्थो[1]ऽपि निगूढ आत्मा स्वमायया सृष्टमिदं विचष्टे।
जगन्ति नित्यं परितो भ्रमन्ति यत्सन्निधौ चुम्बकलोहवद्धि ॥ ७७ ॥

इत्यर्थः। तर्हि किमाकार इत्यत आह—आनन्द इति। तर्हि जीवित्यत [ जीव इत्यत ] आह—पुरुषोत्तमो हीति। अत्र 'धने कशेरुकादयः संज्ञाया'मिति तत्पुरुषः। पुरुषोत्तमत्वन्तु सर्वज्ञत्वादिना, तत्तु जीवस्य नास्तीति। यद्वा रामः पुरुषोत्तमः, हि यतः परात्मा परमात्मा। परमात्मत्वं कुत इत्यत आह—प्रकृतेरनादिरिति। प्रकृतेरपि पुराण इत्यर्थः। तत् कुत इत्यत आह—एक इति। एकोऽद्वितीय इत्यर्थः। नन्वस्य भजने को लाभ इति चेत्तत्राऽऽह—आनन्द इति। आनन्दरूपत्वात्तस्य प्राप्तिरेव जीवस्य परमपुरुषार्थ इति भावः। पुरुषेभ्यो हिरण्यगर्भादिभ्य उत्तमः पुरुषोत्तमः। ननु विश्वमिदं दृश्यते कथमस्याद्वितीयत्वमित्यत आह—स्वमाययेति। कृत्स्नं सकलम्। नभोवदिति। आकाशं यथा चतुर्विधशरीरघटादीनां बहिर्मध्ये तावत्तिष्ठते तथाऽयमित्यर्थः। तथा च श्रुतिः—'आकाशवत् सर्वगतो नित्य' इति।

ननु तर्हि ज्ञानादिना दुर्लभत्वं कथमिति चेत् तत्राऽऽह—सर्वान्तरस्थोऽपीति। निगूढो

नन्वीदृशस्य मनुष्यादिदेहधारणं कथमत आह—स्वमाययेति। अघटितघटनाशक्तिरूपा माया 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' ( श्वेताश्व० ४।१० ) इति श्रुतिसिद्धान्ततया इदं कृत्स्नं दृश्यं सृष्ट्वा अन्तर्बहिरास्थितो यः, 'तत् सृष्ट्वा तदेवानुप्राविशत्' ( तैत्ति० २।६।१ ) इति श्रुतेः। तादृशस्य मनुष्यशरीरपरिग्रहो नाऽऽश्चर्याय। तदुक्तं गीताभाष्ये 'भूतानामीश्वरो नित्यशुद्धबुद्धस्वभावोऽपि स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन् लक्ष्यते स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया' ( ४।६ ) इति। रा०।

[ राम इति। प्रकृतेः परश्चासावात्मा चेति। एतेन सर्वकारणत्वमुक्तम्। यद्वा परस्य प्रकृत्यधिष्ठातृपुरुषस्याऽऽदिकारणम्—

'तन्मायाफलरूपेण द्विधा समभवद् बृहत्'

इति स्मृतेः। आनन्द आनन्दस्वरूपः। 'विज्ञानमानन्दं ब्रह्म' ( बृह० ३।९।२८) इति श्रुतेः। एकः सजातीयविजातीयभेदरहितः। हि यतः पुरुषोत्तमः क्षराक्षराभ्यां परः। तदुक्तं गीतासु—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
॥
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ ( १९ अ०, १६-१७-१८ श्लो० )
इति। गो० ]

७७। नन्वेवं सर्वगतत्वे सर्वज्ञेयः किं नेत्यत आह—सर्वान्तरस्थोऽपि निगूढ आत्मेति।

1 क-घ-च '-स्थो हि'।

मनसोऽप्यगोचरः। निगूढत्वे हेतुरात्मेति। ननु मायाया एव सृष्टिकर्तृत्वरूपं तटस्थलक्षणमस्तु किमीश्वरस्य तल्लक्षणस्वीकारेणेति चेत्तत्राऽऽह—स्वमायया सृष्टमिदं विचष्टे इति। विचष्टे प्रकाशयति। परमेश्वरस्यैव विश्वसम्बन्धमायाकार्यभासकत्वाज्जगदुपादानत्वमिति भावः। ननु ब्रह्मणस्तथात्वे उपादानोपादेययोरभेदादुपादेयसाक्षात्कार एव ब्रह्मसाक्षात्कार, कथमुक्तं निगूढ इति चेत्तत्राऽऽह— जगन्तीति। यत्सन्निधौ प्रकृताविति शेषः। चुम्बकलोहवत् चुम्बकस्यायस्कान्तस्य मणिविशेषस्य समीपस्थलोह इवेत्यर्थ.। चिद्रूपेण ब्रह्मणा उज्ज्वलिताया जगदाकारेण परिणम्यमानाया मायाया भ्रमणमेव जगद्भ्रमणम्। यद्वा जगत्पद चिदाभासोज्ज्वलितपूर्वपूर्वसंस्कारा-जीवकर्मप्रयुक्तमायासृष्टचतुर्विधशरीराश्रितजीवजातानि बोधयति। भ्रमन्ति मृत्युयुक्तसंसारवर्त्मनीति शेष.। सृष्टेरनन्तत्वान्नित्यमित्युक्तम्। यत्सन्निधावित्यनेनाधिष्ठातृत्वमात्रमुक्तम्, जगदाकारेण परिणममानमायाधिष्ठानत्वं जगदुपादानत्वमिति नास्तु विशेष.।

नन्वेवं तद्विषयकज्ञानासम्भवात् कस्यापि परमपुरुषार्थप्राप्तिर्न स्यादिति चेत्तत्राऽऽह— एतमिति (९)। विवेकिनां तज्ज्ञानात् परमपुरुषार्थप्राप्तिर्भवत्येवेति भाव। यद्वा नन्वेवमपि 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ती'त्यादिभि ( तैत्ति० ३।१।१ ) श्रुतिभि प्रतिपादित जगत्सृष्टिकर्तृत्वं विना परमेश्वरत्वं न सम्भवतीति चेत्तत्राऽऽह—स्वमायया कृत्स्नमिदं हि सृष्ट्वेति। माययेति स्वाधीनया माययेत्यर्थ। इदं जगत्। ननु किञ्चिज् जगत् स्रष्टुमन्येनापि शक्यते, किं तत्र चित्रमिति चेत्तत्राऽऽह—कृत्स्नमिति। सकलजगत्सृष्टिकर्तृत्वेन सृष्टे पूर्वमपि विद्यमानत्व सूचितम्। ननु अव्याप्यवृत्तित्वे तथात्वमपि न सर्वोत्कर्षाश्रयत्व-

---

'य. पृथिव्यां तिष्ठन् पृथिव्या अन्तर' ( बृह० ३।७।३ ) इत्यादिश्रुत्या सर्वान्तरस्थत्वेनोक्तोऽपि निगूढ.।

एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते।
दृश्यते त्वग्रयया बुद्धया सूक्ष्मया सूक्ष्मदर्शिभि ॥ ( कठो० ३।१२ )

इति श्रुते। तादृशस्य सत्त्वे व्यवहारकालिकमपि मानमाह—स्वमाययेति। स्वाज्ञानकल्पितया माययेत्यर्थ। अयं भाव.—नित्यशुद्धादिरूपेश्वरस्वरूपाज्ञानेन तस्याघटितघटनासामर्थ्यापरपर्याया मायाख्या त्रिगुणा शक्तिरुपाधिकल्पितावच्छेदैस्तत्स्वरूपैर्जीवै कल्पिता, सा च स्वजातीयमेव ससारमुच्चावचं प्रसूते, अत एव तत्स्वरूपज्ञाने सकार्यायास्तस्या नाश.। रज्जुज्ञानेनेव रज्जुकल्पितभुजङ्गस्य भयकम्पादिकार्यसहितस्य। न च जीवैस्तत्कल्पना तत्सृष्टोपाधिभिश्च जीवतेत्यन्योन्याश्रय, अनादित्वेनापि परीहारात्। नन्वेकस्य तत्त्वज्ञानेन तन्नाशे संसारोच्छेदापत्ति., एकरज्जौ युगपद् दशानां सर्पभ्रमे एकस्य रज्जुज्ञानेन तस्य सर्पभ्रमकार्ये भयकम्पादौ निवृत्तेऽप्यन्येषां तद्दर्शनेन तदनिवृत्तिवदुपपत्तेरिति। तया सृष्टमिदं विचष्टे पश्यति, एवञ्च द्रष्टृत्वेन तत्सिद्धि. 'नान्योऽतोऽस्ति द्रष्टा' ( बृह० ३।७।२३ ) इति श्रुते.। एकेनैवाकाशेनोपाधिभेदाद् घटाकाशादिव्यवहारवदेकेनैव चेतनोपाधिभेदादनेकजीवव्यवहारोपपत्तौ चेतनानेकत्वे माना-

एतन्न जानन्ति विमूढचित्ताः [1]स्वाविद्यया संवृतमान[2]सा ये ।
स्वाज्ञानमप्यात्मनि शुद्ध[3]बोधे स्वारोपयन्तीह निरस्तमाये ॥ ७८ ॥

---

साधकमिति चेत्तत्राऽऽह—नभोवदन्तर्बहिरास्थितो य इति । आकाशमिव जगतो मध्ये बहिश्च य आस्थित इत्यर्थ । यद्वा नन्वेवमपि जगतो बहिरन्त स्थितत्वाभावाद् रामस्य कुत परमात्मत्वमित्यत आह—नभोवदिति । ननु तर्हि ज्ञानादिनाऽतिसुलभत्वमिति चेत्तत्राऽऽह—सर्वान्तरस्थोऽपीति । निगूढो मनसोऽप्यगोचर । निगूढत्वे हेतुरात्मेति । नन्वेवमपि जगद्भासकत्वाभावात् कुतो रामस्य परमात्मत्वमित्यत आह—स्वमायया सृष्टमिदं विचष्ट इति । विचष्टे प्रकाशयति । तथा च हस्तामलकभाष्यम्—

'यथाऽनेकचक्षु प्रकाशो रविर्न क्रमेण प्रकाशीकरोति प्रकाश्यम् ।
अनेका धियो यस्तथैकप्रबोध स नित्योपलब्धिस्वरूपोऽहमात्मा ॥' (७म श्लोक ) इति ।

अस्यार्थ —यथा येन प्रकाशकत्वप्रकारेण रविरादित्य एक एवानेकेषां चक्षुषां प्रकाशको युगपदनेकानि चक्षूंषि अधितिष्ठति न क्रमेण एकैकस्मै चक्षुषे प्रकाश्य प्रकाशीकरोति तथा तेनैव प्रकारेण एकप्रकारोऽधिष्ठितोऽनेका धियो युगपदधितिष्ठति न क्रमेण एकैकस्यै धिये प्रकाश्य प्रकाशीकरोति सोऽहमात्मा इति । नन्वेव तस्य कर्मबन्ध कथ न स्यात् कथं वा क्लेशश्च न स्यादित्यत आह—जगन्तीति ।

यद्वा इदमाश्चर्यं पश्येत्युक्त्वाह—स्वमायया इति । एकेन सृष्टपदार्थस्य बहिरन्तर्यत् स्थीयते तच्चित्रम् । अपरं चित्रमाह—सर्वान्तरस्थोऽपीति । अपिशब्दोऽत्र विस्मये । सर्वान्तरस्थस्य

---

भावाद् द्रष्टृत्वेन तत्सिद्धिरिति भाव । न च तत्तदज्ञानरूपोपाधिविशिष्टस्यैव जीवत्वे जीवस्याज्ञानमिति व्यवहारानापत्ति, भार्याविशिष्टस्यैव गृहस्थत्वेऽपि गृहस्थभार्येतिवदुपपत्तेरिति दिक् ।

चेतनस्वीकारे मानान्तरमाह—जगन्तीति । जगन्ति जगदन्त करणानि यत्सन्निधौ नित्यं परितो भ्रमन्ति स्वस्वचेष्टां कुर्वन्ति, अन्यथा सर्वस्य जडत्वाच्चेतनाभावे जगदान्ध्यप्रसङ्ग इति भाव । ननु 'निष्कलं निष्क्रियं शान्तम्' (श्वेताश्व० ६।१९) इति श्रुतेस्तस्य निष्क्रियतया कथं तेनान्येषां व्यापारसम्पादनमत आह—चुम्बकलोहवद्वीति । यथा निष्क्रियोऽपि चुम्बकमणिर्लोहं शक्तिविशेषात् सन्निधिमात्रेण चालयति, तथा चेतनो निष्क्रियोऽपि स्वमायया वैचित्र्यादेव तानि सन्निधिमात्राद्व्यापारयतीत्यर्थ । तदुक्तमाचार्यै—

'अनापन्नविकार सन्नयस्कान्तवदेव य ।
बुद्ध्यादींश्चालयेत् प्रत्यक् सोऽहमित्यवधारयेत् ॥ (वाक्यवृ० १९) इति । रा० ।

७८ । एतन्मायागुणास्पृष्टत्वादिरूपं रामस्वरूपं ये जीवा न जानन्ति । अज्ञाने हेतु—विमूढचेतस । विमूढचेतस्त्वे हेतु—स्वाविद्यया संवृतमानसा इति । स्वोपाधिभूतया अविद्यया

---

1. क 'अवि-' । 2 ग-ङ-च क 'सास्ते' । 3. ग-घ '-बुद्धे' ।

संसारमेवानुसरन्ति [1]ते वै पुत्रादिसक्ताः पुरुकर्मयुक्ताः ।
जानन्ति नैवं हृदय[2]स्थितं वै चामीकरं कण्ठगतं यथाऽज्ञाः ॥ ७९ ॥

---

यन्मनोऽगोचरत्वं तच्चित्रम् । अपराश्चर्यमाह—स्वमायया सृष्टमिति । अङ्गस्य ( अनङ्गस्य ) नीरूपस्य यन्निखिलजगद्भासकत्वं तच्चित्रमिति । अपराश्चर्यमाह—जगन्तीति । कटाक्षमात्रेणाखिलजगद् यत् सृज्यते तच्चित्रमिति ।

७८ । नरो० । ननु तर्हि परमेश्वरस्य स्वरूपनिरूपणं व्यर्थम्, जीवानां तत्साक्षात्कारासम्भवात् परमपुरुषार्थप्राप्तेरित्यत आह—एतमिति । एतं श्रीरामं ते विमूढचित्ता न जानन्तीत्यन्वयः । विमूढं विवेकशून्यं चित्तं येषां ते तथा । विमूढचित्तत्वे हेतुः स्वाविद्ययेति । संवृतमाच्छादितं मानसं येषां ते । ते के ? ये इह निरस्तमाये शुद्धबोधे आत्मनि स्वाज्ञानमपि स्वारोपयन्ति ।

७९ । नरो० । पुत्रादिसक्ताः पुरुकर्मयुक्ताः सन्तः संसारमेवानुसरन्तीति । निरस्तमाये पराभूतमाये, अत एव नित्यबोधे अन्तःकरणाद्युपाधिशून्यबोधे ब्रह्मणि स्वाज्ञानारोपणम् अहमज्ञ इत्यनुभवात् । पुत्रादिसक्ताः पुत्रादिरूपफलसङ्गसहिता इत्यर्थः । तथा च गीता—

'तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ इति । ( ३।१९ )

अल्पकर्मक्षयस्तावत् केनापि प्रकारेण स्यादित्यभिप्रेत्याऽऽह—पुर्विति । अज्ञानवजानन्नुपसंहरति—जानन्तीत्यादिना । अज्ञाः कण्ठगतं चामीकरमिव एवं हृदयस्थितमात्मानं न जानन्तीत्यन्वयः । अत्रीति [ कण्ठेति ] सन्निहितत्वांशे दृष्टान्तः ।

---

विद्याविरोधिभावदार्ढ्यरूपया संवृतान्तःकरणाः । अतस्ते जीवाः शुद्धबुद्धे शुद्धत्वं मायादोषानाक्रान्तत्वेन । बुद्धे ज्ञानस्वरूपे निरस्तमाये स्वज्ञानवतां निरस्ता माया येन तादृशे । 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' ( ७।१४ ) इति गीतोक्तेः । ईदृशे रामे स्वाज्ञानं सुतरामारोपयन्ति । स्वस्याज्ञत्वाद्राममज्ञमिति जानन्तीत्याशयः । रा० ।

[ एतन्न जानन्तीत्यादि । स्वाविद्यया संवृतमानसा इति स्वस्याऽऽत्मनोऽविद्यया । स्वाज्ञानमिति । यथा स्वयमज्ञानं तथा तस्मिन्नप्यज्ञानमारोपयन्ति । गो० ]

७९ । ते पुरुकर्मयुक्ता भूरियज्ञादिकर्मनिरताः 'पुरुहं पुरु भूयिष्ठं स्फिरं भूयश्च भूरि च' इत्यमरः । संसारमेवानुसरन्ति । अज्ञा भ्रान्ता यथा कण्ठगतं चामीकरं स्वर्णं 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । चामीकरम्' इत्यमरः, स्वर्णालङ्कारमिति यावत् न जानन्ति भ्रमवशादेव प्रस्मरन्तीत्यर्थः, तथा तेऽपि हृदयस्थितं सर्वव्यापित्वेन हृदयेऽपि वसन्तं परमात्मस्वरूपं रामं न जानन्तीत्यर्थः ।

---

1. ग-च-छ 'ये' । 2. ख-ग-घ-ङ-च '-ये स्थितं' ।

[1]यथा प्रकाशो न [2]तु विद्यते रवौ [3]ज्योतिःस्वभा[4]वात् परमेश्वरे तथा।
विशुद्धविज्ञानघने रघूत्त[5]मे विद्या कथं स्यात् [6]परतः परात्मनि ॥ ८० ॥
यथा हि [7]चाक्ष्णोर्भ्रमतोगृहादिक विनष्ट[8]दृष्टेर्भ्रमतीव दृश्यते।
तथैव देहेन्द्रियकर्त्तुरात्मनः [9]कृत परे[10]ऽध्यस्य जनो विमुह्यति ॥ ८१ ॥

---

८०। नरो०। स्वरूपलक्षणतटस्थलक्षणाभ्यां श्रीरामं लक्षयित्वा तद्विमुखानवज्ञाय इदानीं श्रीपार्वत्या संशयं निराकरोति—तथेति [यथेति] चतुर्भिः। ज्योति स्वभावात् प्रकाशस्वरूपात् परमेश्वरे परमनियन्तरि परमाधिष्ठातरीति यावत्, 'धियो यो न प्रचोदयात्' ( बृह० ६।३।६ ) इति श्रुते। परमेश्वरे इति रवावित्यस्य विशेषण वा। विशुद्धविज्ञानघने अन्त करणाद्युपाधिशून्यचिन्मूर्त्तौ विद्या ज्ञानं कथ स्यात् तिष्ठेदित्यर्थ। परत इति सप्तम्यास्तसि। मूलकारणे इत्यर्थ। परात्मनि परमात्मनि। यथा प्रकाशकत्वकत्वात् [प्रकाशात्मकत्वात्] सूर्यस्य प्रकाशाधारता न सम्भवति तथा विद्यात्मकत्वाच् श्रीरामस्य विद्याधारता न सम्भवति, आधाराधेययो स्वभावतो भेदादिति भाव।

८१। नरो०। 'यदि स्म जानाति कुतो विलापः सीताकृते तेन कृत' परेणे'ति (१।७२ श्लो०)

---

८०। किञ्च परमात्मन्यज्ञानासम्भव इति दृष्टान्तेनाऽऽह—यथेति। अप्रकाशस्तमो यथा रवौ ज्योतिःस्वभावे ज्योति स्वरूपे न विद्यते, तथा विशुद्धविज्ञानेन निर्विशेषापरोक्षज्ञानेन घने निविडे परतः परात्मनि उत्कृष्टेभ्योऽप्युत्कृष्टे रामे अविद्या कथं स्यात्, तादृशे वस्तुन्यविद्यानवकाशादिति भावः। तदुक्तमाचार्यैं —

अप्रकाशो यथादित्ये नास्ति ज्योति स्वभावतः।
नित्यबोधस्वरूपत्वान्नाज्ञानं तद्वदात्मनि ॥ इति।

( उपदेशसा० पार्थिवप्रकरणम् १६।३७ ) रा०।

[ रवौ यथा अप्रकाशोऽन्धकारो न विद्यते ज्योतीरूपत्वात्। अविद्या अज्ञानम्। यद्वा अविद्या पञ्चपर्वा। तदुक्तं श्रीभागवते—

ससर्जाग्रेऽन्धतामिस्रमथ तामिस्रमादिकृत्।
महामोहञ्च मोहञ्च तमश्चाज्ञानवृत्तय ॥ ३।१२।२ इति।

पातञ्जले—

अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशा ( सा० पा० ३ ) इति।

विष्णुपुराणे च—

अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः। (१।५।५) इति। गो० ]

८१। ननु स्वाज्ञानेन राममज्ञं व्यवहरति जन इत्युक्तमसङ्गतम्, अन्यगतस्यान्यत्राऽऽरोपा-

---

1 क-ख-ग घ ङ च-छ 'यथाऽप्रका-'। 2 ग 'हि', च 'च'। 3 ङ 'द्योति-'। 4 ख घ '-वे'। 5 क-ख-ग घ-ङ-च छ '-मेऽविद्या'। 6 च 'परमे'। 7 क-ख-घ-छ 'चाक्षा भ्रमता गृहा'। 8 क-ख-ग-घ-ङ-च-छ '-दृष्टे-'। 9 छ 'कथ'। 10 च 'परेभ्यस', छ 'परे ह्यस'।

[1]नाहो न रात्रिः सवितुर्यथा भवेत् प्रकाश[2]रूपाव्यभिचारतः क्वचित् ।
ज्ञानं तथाऽज्ञानमिदं द्वयं हरौ रामे कथं स्थास्यति शुद्धचिद्घने ॥ ८२ ॥
तस्मात् परानन्दमये रघूत्तमे विज्ञानरूपे न हि विद्यते तमः ।
अज्ञानसाक्षिण्यरविन्दलोचने मायाश्रयत्वान्न [3]विमोहकारणम् ॥ ८३ ॥

यदुक्तं तत्राऽऽह—यथा हीत्यादि । अक्ष्णोश्चक्षुषोर्भ्रमतो सतो विनष्टं दृष्टम् अभ्रमचक्षुःसयोगकालीनं ज्ञानं येषां तैस्तथा, भ्रमतीव भ्रमणाश्रय इव । देहेन्द्रियकर्त्तुरात्मन इति आभासीभूताज्ञान-तादात्म्यापन्नचैतन्यस्येत्यर्थः, 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति (तैत्ति० ३।१।१) इत्यादिश्रुतेः । अत्राविवक्षितकर्तृत्वेन सम्बन्धविवक्षायां षष्ठी, आर्षो वा तत्प्रयोगः । परे ब्रह्मणि अध्यस्य आरोप्य मुह्यति आभासीभूताज्ञानतादात्म्यापन्नचैतन्येनैवैतत् कृतं न तु साक्षीभूतचैतन्येनेति विवेचनशून्यताश्रयः । यथाऽभ्रमदपि भ्रमचक्षुःसन्निहितं गृहादिकं भ्रमदिव लक्ष्यते, तथा कर्म अकुर्वदपि कर्म कुर्वदाभासीभूताज्ञानतादात्म्यापन्नचैतन्य-सन्निहितं साक्षीभूतचैतन्यं कर्म कुर्वदिव लक्ष्यते इत्यभिप्रायः ।

८२ । नरो० । 'जानाति नैव यदि केन सेव्यः समो हि सर्वैरपि जीवजातैः' इति (१।७२ श्लो०) यदुक्तं तत्राऽऽह—नाहो न रात्रिरित्यादि । अत्राह पदं प्रकाशपरम्, रात्रिपदमप्रकाशपरम् । प्रकाशरूपाव्यभिचारत इति प्रकाशरूपाभावविरहादित्यर्थः । 'ज्ञानं तथाऽज्ञानमिदं द्वयं हरौ रामे कथं स्थास्यति शुद्धचिद्घने' इति । अज्ञानमविद्या कथं स्थास्यति ( विमोहकारणत्वेन ? ) नास्तीत्यर्थः, विमोहकारणत्वेनेति शेषः । शुद्धचिद्घने अन्तःकरणाद्युपाधिशून्यचिद्रूपे ।

८३ । नरो० । उपसहरति—तस्मादिति । परश्चासौ आनन्दमयश्चेति तस्मिन्, विज्ञान-

सम्भवादित्याशङ्क्य सदृष्टान्ततया मोहं जीवे उपपादयति । यथा विनष्टदृष्टेर्दोषयुक्तदृष्टेः पुरुषस्य भ्रमताऽक्ष्णा गृहादिकं भ्रमतीव उत्प्रेक्षेयम्, भ्रमतीवेति गृह्यते, तेनैव नष्टदृष्टिना पुरुषेणेति शेषः । तथैव देहेन्द्रियावच्छिन्नस्य कर्त्तुरात्मनोऽन्तःकरणस्याहङ्कारस्य कृतं परे सर्वधर्मालिप्ते तदवच्छिन्ने चेतने-ऽध्यस्य जनो जीवो मुह्यति अहं कर्त्तेति मोहं प्राप्नोति, एवञ्च यथाऽक्षिगतभ्रमणस्य गृहादावारोपः, यथा चान्तःकरणधर्मस्य कर्तृत्वादेरात्मन्यारोपस्तथा स्वाज्ञानस्य रामे आरोप इत्याशयः । रा० ।

८२ । भगवति रामे स्वतो ज्ञानमज्ञानं वा न सम्भवतीति पुनरपि दार्ढ्यायोक्तं युक्तमेवाऽऽह—नाह इति । सूर्यं प्रति रात्रिदिवसविभागाभावे हेतुः प्रकाशरूपाव्यभिचारतः । क्वचित् क्वापीत्यर्थः । ज्ञानाज्ञानयोर्भगवत्यनवस्थितौ हेतुः शुद्धचिद्घनत्वम् । रा० ।

८३ । परानन्दमये सर्वभूतैरेतदानन्दमात्रया उपजीवनाद् विज्ञानरूपे निर्विकल्पकज्ञान-रूपे तमोऽज्ञानरूपम् । तमसो सम्बन्धे हेतुद्वयम् । अज्ञानसाक्षित्वं मायाधिष्ठातृत्वरूपं मायाश्रयत्वञ्च

1 घ 'नाहनं' । 2 च '-रूपोऽव्यभि' । 3 ख-ग-च-छ 'हि मो-' ।

[1]तत्र ते कथयिष्यामि रहस्य[2]मपि दुर्लभम् ।
सीतारामरुत्सूनुसवादं मोक्ष[3]साधनम् ॥ ८४ ॥
पुरा रामायणे रामो रावण देवकण्टकम् ।
हत्वा रणे रणश्लाघी सपुत्रबलवाहनम् ॥ ८५ ॥
सीतया सह सुग्रीवलक्ष्मणाभ्यां समन्वित ।
अयोध्यामगमद्रामो हनूमत्प्रमुखैर्वृत ॥ ८६ ॥
अभिषिक्त परिवृतो वशिष्ठाद्यैर्महात्मभिः ।
सिंहासने समासीनः कोटि[4]सूर्यसमप्रभः ॥ ८७ ॥

---

रूपे चिद्रूपे तमोऽज्ञानम्, तत्साक्षिणि तद्द्रष्टरि । एतेन सर्वव्यापकत्वं सूचितम् । आश्रयत्वान्माया न विमोहकारणमित्यन्वय । एतेन मायाया श्रीरामाधीनत्वं सूचितम् ।

८४ । नरो० । अत्र रामायणे सीतारामरुत्सूनुसवादं ते तव तुभ्यं वा कथयिष्यामीत्यन्वय ।

८५ । नरो० । देवानां कण्टको देवकण्टकस्तम् । कण्टक शत्रु । यद्वा देव कण्टको यस्य तं देवकण्टकम् ।

---

मोहकारणं तमोऽज्ञानम्, यो यन्मायाधिष्ठाता स तद्विषयाज्ञानहीन इति लोके दर्शनादिति भाव । नन्वेव सति 'ब्रह्मा दाशरथेर्यद्वदुक्त्यैवापानुदत्तम' ( उपदेशसा० १८।१०० ) इत्याद्याचार्याद्युक्ते का गतिरिति चेत् शृणु रावणवधार्थं मनुष्यत्वनाटनाय भगवता सङ्कल्पपूर्वं कृतस्य स्वमाहात्म्याच्छादनस्य तत्र तम शब्देनोक्तेरदोषात् । उक्त हि सङ्क्षेपशारीरके—

'सङ्कल्पपूर्वकमभूद्रघुनन्दनस्य नाह विदान इति कञ्चन कालमेतत् ।
ब्रह्मोपदेशमुपलभ्य निमित्तमात्र तच्चोत्ससर्ज स कृते सति देवकार्ये ॥ (२।१८२)

इति । भागवतेऽप्युक्तम्—'स्त्रीसङ्गिनां गतिरिति प्रथयश्चकार' इति । रा० ।

८५ । रामेण रावणवधोऽस्यैव युद्धकाण्डे त्रयोदशसर्गे—

'स निमग्नो महाघोर शरीरान्तकर शर ।
विभेद हृदयं तूर्णं रावणस्य महात्मन ॥
रावणस्याहरत् प्राणान् विवेश धरणीतले ॥

इति श्लोकयो । तस्य पुत्रसैन्यवाहनादिविनाशो युद्धकाण्डस्य प्राय सर्वत्र ।

८६ । रामस्य लङ्कातोऽयोध्याप्रयाणप्रारम्भो युद्धकाण्डे त्रयोदशसर्गे रामस्याभिषेको युद्धकाण्डे पञ्चदशसर्गे ।

---

1 ख-ग-घ-च 'अव' । 2 घ '-मति-' । 3 च '-कारणम्' । 4 छ 'सूर्य इवांशुमान्' ।

दृष्ट्वा तदा हनूमन्तं प्राञ्जलिं पुरतः स्थितम् ।
कृतकार्यं निराकाङ्क्षं ज्ञानापेक्षं महा[1]मतिम् ॥ ८८ ॥
रामः सीतामुवाचेदं ब्रूहि तत्त्वं हनूमते ।
निष्कल्मषोऽयं ज्ञानस्य पात्रं नौ नित्यभक्तिमान् ॥ ८९ ॥
तथेति जानकी प्राह तत्त्वं [2]रामविनिश्चितम् ।
हनूमते प्रपन्नाय सीता लोकविमोहिनी ॥ ९० ॥

श्रीसीतोवाच—

रामं विद्धि परं ब्रह्म सच्चिदानन्द[3]मद्वयम् ।
सर्वोपाधिविनिर्मुक्तं सत्तामात्रमगोचरम् ॥ ९१ ॥

---

८८ । नरो० । प्राञ्जलित्वेन प्रभुभक्तत्वं सूचितम् । उपकर्तुरुपकारः कर्तुं युज्यत एवेत्यभिप्रेत्याऽऽह—कृतकार्यमिति । अमूल्यधनदानेऽप्यस्य सन्तोषो न भविष्यतीत्यभिप्रेत्याऽऽह—निराकाङ्क्षमिति । तस्मादीश्वरविषयज्ञानमेवापेक्षते इत्यभिप्रेत्याऽऽह—ज्ञानापेक्षमिति । तत्र योग्यता चास्य विद्यते इत्यभिप्रेत्याऽऽह—महामतिमिति । स्थिरमतिमित्यर्थः ।

८९-९० । नरो० । ज्ञानपात्रत्वे हेतुर्निष्पापत्वम् । नौ आवयोः । प्रपन्नाय शरणागताय । लोकविमोहिनीत्यनेन मायारूपत्वमुक्तम् ।

९१-९२ । नरो० । राममिति । रामं सच्चिदानन्दम् अद्वयं ब्रह्म विद्धीत्यन्वयः । यद्वा रामं ब्रह्म विद्धीत्यन्वयः । किन्तावद् ब्रह्मस्वरूपमित्यपेक्षायामाह—सच्चिदानन्दमद्वयमिति ।

---

८८ । पुरतः स्थितमित्यनेन गुरूपसदनं दर्शितम्, निराकाङ्क्षमित्यनेन ज्ञानेतरधनादिनिरपेक्षत्वं सूचितम् । रा० ।

८९ । तत्त्वं मम तव च याथार्थ्यम्, मम परब्रह्मत्वं तव परमप्रकृतित्वमित्यर्थः । यतोऽयं नौ आवयोः नित्यभक्तिमान् सततानुरागवान् ततोऽयं निष्कल्मषः निष्पापः, यतो निष्कल्मषस्ततो ज्ञानस्य ब्रह्मनिष्ठपरात्मतत्त्वस्य पात्रं भाजनम् । विधेयप्राधान्यात् क्लीबत्वम् । रा० ।

९० । लोकविमोहिनी 'मायां तु प्रकृतिं विद्धी'त्यादिना मायारूपत्वात् । रामविनिश्चितं रामैकनिष्ठं तत्त्वं रामस्य ब्रह्मत्वं प्रपन्नाय शरणागताय ज्ञानलाभार्थमित्यर्थः ।

९१ । जानकी प्राहेत्युक्तम्, तदाह—राममिति । रामं परं ब्रह्म विद्धि ।

रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि ।
इति रामपदेनासौ परं ब्रह्माभिधीयते ॥ ६ ।

इति तापनीये पाद्मे चोक्ते । सत् बाधहीनम्—

---

1 ङ-च '-मति' । 2 ख-घ-ङ-छ 'रामस्य निश्चितम्' । 3 च '-मव्ययम्' ।

आनन्द निर्मल शान्त निर्विकारं निरञ्जनम् ।
सर्वव्यापिनमात्मान स्वप्रकाशमकल्मषम् ॥ ९२ ॥

सच्चादश्चिच्च आनन्दश्चेति कर्मधारय । अद्वयमद्वैतमित्यर्थ । तर्हि जीवत्व कथं न स्यादित्यत आह—परमिति । उत्कृष्टमित्यर्थ । परत्वे हेतु सर्वोपाधिविनिर्मुक्तमिति । अन्त करणाद्युपाधिशून्यमित्यर्थ । ननु तर्हि अस्य दर्शनादेव ब्रह्मज्ञान जातमिति [जायतामिति] चेत्तत्राऽऽह—अगोचरमिति । यद्वा ननु तर्हि साकारत्वादस्य ज्ञानमनायाससाध्यमिति चेत्तत्राऽऽह—अगोचरमिति, अविषयमित्यर्थ, ज्ञानादेरिति शेष॰ । ननु देशकालपरिच्छिन्नत्वादस्य व्यक्तत्वं भविष्यतीति कथमुक्तमगोचरमिति चेत्तत्राऽऽह—सर्वव्यापिनमिति । सर्वव्यापित्वेन देशकालाद्यपरिच्छिन्नत्व सूचितम् । मलदूरीकरणेन व्यक्तत्व भविष्यतीति चेत्तत्राऽऽह—निर्मलं निरञ्जनमिति । एकार्थपदद्वयोपादानं निर्मलत्वातिशयसूचनार्थम् । ननु जन्मादिना व्यक्तत्वं भविष्यतीति चेत्तत्राऽऽह—निर्विकारमिति, जन्ममरणादिरूपविकाररहितमित्यर्थ । निर्विकारत्वे हेतु —अकल्मषमिति । पापसत्त्वे मायावृतत्वाद् विकारित्वं स्यादिति भाव । ननु क्रियया व्यक्तत्वं भविष्यतीति चेत्तत्राऽऽह—शान्तमिति, निरीहमित्यर्थ । यद्वा रागादिना व्यक्तत्वं नास्तीति सूचनाय

---

सत्यत्वं बाधराहित्य जगद्बाधैकसाक्षिण ।
बाध॰ किंसाक्षिको ब्रूहि न त्वसाक्षिक इष्यते ॥

इत्युक्ते॰ । चिद् ज्ञानस्वरूपम् आनन्द तद्रूपमद्वयम् । 'एकमेवाद्वितीय ब्रह्म' ( छान्दो० ६।२।१ ) इति श्रुते॰ । सर्वोपाधिविनिर्मुक्तं स्थूलसूक्ष्मसकलोपाधिनिर्मुक्तम्—

विराड् हिरण्यगर्भश्च कारणं चेत्युपाधय ।
ईशस्य यत्त्रिभिर्हीनं तुरीय तत्पदं विदु ॥

इति वार्त्तिकम् । किञ्च सर्वोपाधिभिर्धर्मैर्विनिर्मुक्तमस्पृष्टमित्यर्थ । सत्तामात्रं वस्तुमात्रे सदिति व्यवहारनियामकमित्यर्थ । एतत्सम्बन्धादेव सर्वत्र सदिति व्यवहार इति भाव । अगोचरं मनोवचसोरप्यविषयमित्यर्थ, 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' ( तैत्ति० ८।४।१ ) इति श्रुते । रा० ।

[ सर्वोपाधिविनिर्मुक्तमिति सर्वैरुपाधिभिर्मायाकार्याविद्याभी रहितम् । सत्तामात्रं सत्तारूपं नित्यसिद्धत्वात्, अतोऽगोचरं निर्विशेषत्वादानन्दस्वरूपम् । गो० ]

९२ । आनन्दं तत्त्वेन विपुलत्वमुपलक्ष्यते, 'यो वै भूमा तत् सुखं नाल्पे सुखमस्ति' ( छान्दो० ७।२३।१ ) इति श्रुते । निर्मलं रजोहीनम् । शान्त प्रपञ्चोपशमत्वात्, 'प्रपञ्चोपशमं शान्तं शिवम्' ( माण्डू० १२ ) इति श्रुते । निर्विकारं जायतेऽस्ति वर्धते विपरिणमते अपक्षीयते नश्यतीति षड्भावविकारहीनम्, 'न जायते म्रियते वा' ( २।२० ) इति गीतोक्तेः । अनेनापरिणामित्वं सूचितम् । निरञ्जनम् अविद्यातत्कार्यरूपतमोहीनम्, 'आदित्यवर्णं तमस॰

मां विद्धि मूलप्रकृतिं सर्गस्थित्यन्तकारिणीम् ।
तस्य सन्निधिमात्रेण सृजामीदमतन्द्रिता ॥ ६३ ॥
तत्सान्निध्यान्मया सृष्टं तस्मिन्नारोप्यतेऽबुधैः ॥ ६४ ॥
अयोध्यानगरे जन्म रघुवंशेऽतिनिर्मले ।
विश्वामित्रसहायत्वं मखसंरक्षणं ततः ॥ ६५ ॥
अहल्याशापशमनं चापभङ्गो महेशितुः ।
मत्पाणिग्रहणं पश्चाद् भार्गवस्य मदक्षयः ॥ ६६ ॥

---

शान्तमित्युक्तम् । शान्तं रागादिरहितमित्यर्थः । सत्तामात्रमित्यनेन विशेषेण व्यक्तत्वं नास्तीति सूचितम् । ननु तर्हि स क्व मृग्य इति चेत्तत्राऽऽह—आत्मानमिति, भूतानामिति शेषः । ननु चेदनुस्यूतत्वात् सर्वान्तरस्थत्वेऽपि न गोचरत्वं तर्ह्यस्य रूपनिरूपणं किमर्थमिति चेत्तत्राऽऽह—स्वप्रकाशमिति, तत्त्वविद्यया अविद्यानिवृत्तौ स्वयमेव प्रकाशमानमित्यर्थः । नन्वेवमपि अविद्या-निवृत्तौ कथं यतेय ? अस्य चिद्रूपसद्रूपान्यतरेण प्रकाशमानत्वादिति चेत्तत्राऽऽह—आनन्दमिति । अविद्यानिवृत्तौ स्वयमेवायं परमानन्दरूपेणैव प्रकाशमानो भविष्यतीति भावः ।

९३ । नरो० । मां विद्धीति । सर्गस्थित्यन्तकारिणीमिति, सर्गः सृष्टिः, स्थितिः पालनम्, अन्तो नाशः । तस्य श्रीरामस्य सन्निधिमात्रेण सामीप्यमात्रेण इदं जगदतन्द्रिता क्षोभ-रहिता अनलसा वा । मयि चिदाभासमारोप्यैव तिष्ठति न तु किञ्चिदपि करोतीति भावः ।

९४ । नरो० । ननु तर्हि ईश्वर एवेदं जगदिति कथमुच्यते जनैरिति चेत्तत्राऽऽह—तत्-सान्निध्यादिति । अबुधैरज्ञैरित्यर्थः ।

९६ । नरो० । महेशितुर्महेशस्येत्यर्थः ।

---

परस्तात्' ( श्वेता० ३।८ ) इत्युक्ते । सर्वव्यापित्वादेवाऽऽत्मानम् अतति व्याप्नोतीत्यात्मा, 'सर्वव्यापी सर्वभूतान्तरात्मा' ( श्वेता० ६।११ ) इति श्रुतेः । स्वप्रकाशम्, 'अत्रायं पुरुषः स्वयञ्ज्योतिः' (बृह० ४।३।९) इति 'तस्य भासा सर्वमिदं विभाति' (श्वेता० ६।१४) इति श्रुतेः । अकल्मषम् 'आत्माऽपहतपाप्मा' इति श्रुतेः । रा० ।

९३ । नन्वेवंविधो रामश्चेत्, जगत्कारणत्वाद्यसम्भवस्तस्मिन्निति कुतो जगदुत्पत्त्यादि इत्यत आह—मामिति । मूलप्रकृतिं सर्वजगदुपादानकारणमित्यर्थः ।

९५ । जन्म आदिकाण्डे तृतीयाध्याये । विश्वामित्रसहायत्वम् आदिकाण्डे चतुर्थेऽध्याये । मखसंरक्षणं विश्वामित्रस्य यज्ञविघ्नभूतयोर्मारीचसुबाहुनामराक्षसयोर्निराकरणेन, तच्च आदिकाण्डे पञ्चमाध्याये ।

९६ । अहल्याशापशमनम् इति । अहल्येति नामनिर्वचनं वाल्मीकीये उत्तरकाण्डे पञ्चत्रिंशसर्गे—

अयोध्यानगरे वासो मया द्वादशवार्षिक ।
दण्डकारण्यगमन विराधवध एव च ॥ ९७ ॥
मायामारीचमरण [1]छायासीताहृतिस्तथा ।
जटायुषो मोक्षलाभ कबन्धस्य तथैव च ॥ ९८ ॥

---

'ततो मया रूपगुणैरहल्या स्त्री विनिर्मिता ।
हल नामेह वैरूप्य हल्य तत्प्रभव भवेत् ॥ २२ ॥
यस्य न विद्यते हल्य तेनाहल्येति विश्रुता ।
अहल्येत्येव च मया तस्या नाम प्रकीर्त्तितम् ॥ २३ ॥

तस्या शापशमनम्, शाप पूर्वं गौतमेन प्रदत्त, स तु रामदर्शनेनापगत । वृत्तमिदम् आदिकाण्डे पञ्चमाध्याये दृश्यते । महेशितु शङ्करस्य चापभङ्ग । पूर्वं जनकयज्ञारम्भे शङ्करेण जनकाय धनुरेकं न्यासरूपेण प्रदत्तम् । तथा च वाल्मीकीये अरण्यकाण्डे सीतावाक्यम्—

यज्ञे हि यजत पूर्वं शङ्करेण महात्मना ।
न्यासो मम पितुर्दत्त धनुस्तूणौ तथाऽक्षयौ ॥ ४।२९

तच्च धनुर्जनकेन दुहितृशुल्करूपेण स्थापितम्, तस्य भङ्गो रामेण, तद्विवरणमादिकाण्डे षष्ठाध्याये । मत्पाणिग्रहण रामेण सह मम विवाह, आदिकाण्डे षष्ठाध्याये । भार्गवस्य भृगोरपत्य भार्गव परशुराम, तस्य यो मद क्षत्रियविनाशोत्थो गर्व, तस्य क्षयो नाशो रामेण, आदिकाण्डे सप्तमाध्याये ।

९७ । अयोध्यानगरे वासो मया द्वादशवार्षिक । मयेति स्वस्वामिसौभाग्यसूचनाय, परमार्थतः सर्वैं परिजनै सहैव वास । स त्वयोध्याकाण्डस्य प्रथमद्वितीयसर्गयो । दण्डकारण्यगमनम्, अत्रापि मयेत्यूहनीयम् । तच्चायोध्याकाण्डे षष्ठाध्याये । विराधवधोऽरण्यकाण्डे प्रथमाध्याये ।

९८ । मायामारीचमरण मायया गृहीतमृगरूपस्य मारीचस्य मरणं रामप्रयुक्तम्, तच्चारण्यकाण्डे सप्तमाध्याये । छायासीताहृति । छायासीताया मायासीताया वाऽवताररूपो नवीनः कल्पस्तत्रभवतो वेदव्यासस्य, नायं कल्पो वाल्मीकीयेऽवलोक्यते । मन्ये सकलभक्तजनशिरोमणिः सीतायां शिशाविव स्नेहसौहार्दवान् कविस्तस्या राक्षसपीडनाद्यसहमान एव नवीनमिमं पन्थानमाससाद । तथा च तदुत्पत्तिमवलम्ब्यारण्यकाण्डे सप्तमाध्याये—

'अथ रामोऽपि तत् सर्वं ज्ञात्वा रावणचेष्टितम् ।
उवाच सीतामेकान्ते श्रृणु जानकि मे वच ॥ १ ॥
रावणो भिक्षुरूपेण आगमिष्यति तेऽन्तिकम् ।
त्वं तु च्छायां त्वदाकारां स्थापयित्वोटजे विश ॥ २ ॥

---

1 ख-ग 'माया-' ।

अग्नावदृश्यरूपेण वर्षं तिष्ठ ममाऽऽज्ञया ।
रावणस्य वधान्ते मां पूर्ववत् प्राप्स्यसे शुभे ॥ ३ ॥
श्रुत्वा रामोदित वाक्य साऽपि तत्र तथाऽकरोत् ।
मायासीतां बहि स्थाप्य स्वयमन्तर्दधेऽनले ॥ ४ ॥

इति। वृत्तान्तोऽय कथञ्चित् सवदति कूर्मपुराणीयवृत्तान्तेन। तथा च तस्योत्तरखण्डे त्रयस्त्रिंशाध्याये—

रामस्य सुभगां भार्या रावणो राक्षसेश्वर ।
सीतां विशालनयनां चकमे कालनोदित ॥ ११५ ॥
गृहीत्वा मायया वेश चरन्ती विजने वने ।
समाहर्तुं मतिञ्चक्रे तापस किल भाविनीम् ॥ ११६ ॥
विज्ञाय सा च तद्भाव स्मृत्वा दाशरथिं पतिम् ।
जगाम शरण वह्निमावसथ्य शुचिस्मिता ॥ ११७ ॥
प्रपद्ये पावक देवं साक्षिण विश्वतोमुखम् ।
आत्मान दीप्तवपुष सर्वभूतहृदि स्थितम् ॥ ११८ ॥
अथाऽऽवसथ्याद् भगवान् हव्यवाहो महेश्वर ।
आविरासीत् सुदीप्तात्मा तेजसा निर्दहन्निव ॥ १२८ ॥
सृष्ट्वा मायामयी सीतां स रावणवधेच्छया ।
सीतामादाय रामेष्टां पावकोऽन्तरधीयत ॥ १२९ ॥
कृत्वाऽथ रावणवधं रामो लक्ष्मणसयुत ।
समादायाभवत् सीतां शङ्काकुलितमानस ॥ १३१ ॥
सा प्रत्ययाय भूतानां सीता मायामयी पुन ।
विवेश पावक दीप्त ददाह ज्वलनोऽपि ताम् ॥ १३२ ॥
दग्ध्वा मायामयी सीतां भगवानुग्रदीधिति ।
रामायादर्शयत् सीतां पावकोऽभूत् सुरप्रिय ॥ १३३ ॥ इति ।

यद्यप्यनयोरेव कथञ्चित् सवादो दृश्यते तथाऽपि कविनाऽत्र भङ्ग्यन्तरमास्थितमित्यत्र न सन्देहावसर.। अलमत्र प्रपञ्चेन, पश्यामस्तावत् तत्रभवता आविर्भूतशब्दब्रह्मणा वाल्मीकिनाऽत्र कीदृशी सरणि समास्थितेति ।

वाल्मीकीये छायामय्या मायामय्या वा नोत्पत्तिर्न वा हरण न चाग्निप्रवेश, सर्वमेव विदेहतनयाया सीताया । तथा च तस्या हरणप्रसङ्गे—

'वदेही रावण. क्रुद्धो निर्दहन्निव राक्षस ।
सव्येन सीतां पद्माक्षी मूर्धजेषु करेण स. ॥

[1]शवर्या पूजनं पश्चात् सुग्रीवेण समागमः ।
बालिनश्च वधः पश्चात् सीतान्वेषणमेव च ॥ ९९ ॥
सेतुबन्धश्च जलधौ लङ्कायाश्च निरोधनम् ।
रावणस्य वधो युद्धे सपुत्रस्य दुरात्मनः ॥ १०० ॥
विभीषणे राज्यदानं पुष्पकेण मया सह ।
अयोध्यागमनं पश्चाद् राज्ये रामाभिषेचनम् ॥ १०१ ॥
एवमादीनि [2]कर्माणि मयैवाऽऽचरितान्यपि ।
आरोपयन्ति रामेऽस्मिन् निर्विकारेऽखिलात्मनि ॥ १०२ ॥

१०२ । नरो० । निर्विकारे जन्ममरणादिरहिते शरीरेन्द्रियादिरहिते वा ।

ऊर्वोस्तु दक्षिणेनैनामग्रहीत् पाणिना शुभाम् ॥ ( ३।९९।२६-२७ )

इति दृश्यते । एवं सर्वत्र ।

छायासीताहृतिररण्यकाण्डे सप्तमाध्याये । जटायुषो मोक्षलाभो विष्णुसायुज्यप्राप्तिः परमात्मनो रामस्य स्पर्शादिना, स त्वरण्यकाण्डेऽष्टमाध्याये—

मत्सारूप्यं भजस्वाद्य सर्वलोकस्य पश्यतः ।
उवाच गच्छ भद्रन्ते मम विष्णोः परं पदम् ।

इत्यादिना वर्णितः । कबन्धस्य मोक्षलाभस्तत्रैव नवमाध्याये—

'याहि मे परमं स्थानं योगिगम्यं सनातनम् ।'

इत्यादिना विवृतः ।

९९ । शवरी प्रतिलोमस्त्रियम् । वैश्यतो क्षत्रियकन्यायामुत्पन्नः शवरः । तथा च नारदीये—

'नृपायां वैश्यतो जातः शवरः परिकीर्त्तितः ।
मधूनि वृक्षादानीय विक्रीणीते स्ववृत्तये ॥ इति ।

तस्याः पूजनं रामलक्ष्मणयोरिति शेषः । तच्चारण्यकाण्डे दशमाध्याये । सुग्रीवेण बालिकनिष्ठेन वानरश्रेष्ठेन समागमो मेलनम्, स च किष्किन्ध्याकाण्डे प्रथमाध्याये । बालिनो वधः किष्किन्ध्याकाण्डे द्वितीयाध्याये । सीतान्वेषणमिति, तत्र सीतान्वेषणाय प्रेरणम् तत्रैव पञ्चमाध्याये, तस्या अन्वेषणं तस्यैव षष्ठसप्तमाध्याययोः । जलधौ समुद्रे सेतुबन्धो नलेन, स च युद्धकाण्डे तृतीयाध्याये । लङ्कायाः रोधनम्, तस्यैव चतुर्थसर्गे । सपुत्ररावणवधः पुरैव परिकीर्त्तितः । ततः परं विभीषणस्य लङ्काराज्येऽभिषेकः, स च युद्धकाण्डे द्वादशाध्याये ।

१०२ । एवमादीनि ब्राह्मणेभ्यो दानादीन्यादिशब्दात् ग्राह्याणि । निर्विकारे जन्मादिरहिते आरोपयन्ति । एवं जगत्कर्तृत्वादिकमपि मन्निष्ठमेव रामे आरोपयन्तीत्यर्थः । रा० ।

1 ग 'सव-' । 2 क 'चान्यानि' ।

श्रीमहादेव उवाच—

ततो राम स्वय प्राह हनूमन्तमुपस्थितम् ।
शृणु तत्त्व प्रवक्ष्यामि [1]ह्यात्मनात्मपरात्मन ॥ १०४ ॥
आकाशस्य यथा भेदस्त्रिविधो दृश्यते महान् ।
जलाशये [2]महाकाशस्तदवच्छिन्न एव हि ।
प्रतिबिम्बाख्यमपर [3]दृश्यते त्रिविध नभ ॥ १०५ ॥
[4]बुद्ध्यवच्छिन्नचैतन्यमेक पूर्ण[5] तथाऽपरम् ।
आभासस्त्वपर बिम्ब[6]भूतमेवं त्रिधा[7] चिति ॥ १०६ ॥

---

१०४। नरो०। शृणु तत्त्वमिति। आत्मना स्वयम्। आत्मा चासौ परात्मा चेति तस्य परमात्मन । आत्मा स्वभिन्नभिन्न परात्मा परमात्मा।

१०५। नरो०। सदृष्टान्तमात्मनस्त्रिविध स्वरूप वक्तुं प्रक्रमते—आकाशस्येत्यादिना। जलाशये महाकाश इत्यनेन महाकाशो जलाशये ततोऽन्यत्रापि विद्यते इत्युक्तम्। जलाशये एव तदवच्छिन्नोऽपर इत्यन्वय । तदवच्छिन्नो जलाशयावच्छिन्न , अपर इति शेष । जलाशयेऽपर प्रतिबिम्बाख्यमित्यन्वय । जलस्य स्वच्छत्वात्तत्र समस्तमाकाश व्यक्तमिति भाव । तदेवाऽऽह—दृश्यते त्रिविध नभ इति।

१०६। नरो०। बुद्ध्यवच्छिन्नचैतन्यमेक पूर्णमिति। बुद्ध्याऽन्त करणेनावच्छिन्नम् अशकलितम्, तच्च तत् चैतन्यञ्चेति तत्, बुद्धौ अन्यत्र च यच्चैतन्यं वर्त्तते तदेकं पूर्णमखण्डमिति

---

पूर्णस्य शोकाकाङ्क्षयोरभावात्। न त्यजति अवस्थान्तर न गृह्णाति बाल्यं त्यक्त्वा यौवनादिकमिव। किमपि न करोति च। तथा शोकादिकर्त्तेव। गो० ]

१०४। आत्मा ईश्वर , अनात्मा चिदाभासो जीव , परमात्मा शुद्धचैतन्यम्। रा०।

१०५। तेषां तत्त्वमेव सदृष्टान्तमाह—आकाशस्येति। एकस्याकाशस्य त्रिविधो भेद —महाकाशो जलाशयावच्छिन्न आकाश प्रतिबिम्बाकाशश्चेति। तदेवाऽऽह—महानिति। महाकाश इत्यर्थ । स एव महाकाशो जलाशये तदवच्छिन्न एव भवति, तत्रैव जलाशये परं प्रतिबिम्बाख्यं दृश्यते, एवं नभस्त्रिविधमित्यर्थ ।

१०६। एव दृष्टान्तमुपपाद्य दार्ष्टान्तिकमाह—बुद्धीति। सर्वबुद्धिसाक्षितया बुद्ध्युपहित चैतन्य पूर्णमुपाधिमण्डलस्य विभुत्वाद् विभुसकलबुद्धिसमष्टिरेव मायेति तदवच्छिन्नचैतन्यमीश्वर इत्यर्थ । अथापरम् आभासस्तत्तद्बुद्धिप्रतिबिम्बभूतो जीव इत्यर्थ । अपर बिम्बभूतम् एव चितिस्त्रिधा इत्यर्थ । रा०।

---

1 क ख-ग-घ-ङ-च-छ 'ह्यात्मानात्मपरात्मनाम'। 2 ङ 'यथाकाश-'। 3 ग 'त्रिविध दृश्यते'। 4 च 'बुद्ध्यवस्थित-'। 5 ख घ '-र्णमथा-'। 6 ङ 'विश्वभ्र'। 7 च 'त्रिधोच्यते', छ 'तथा चिति'।

[1]आभासबुद्धेः कर्तृत्वमविच्छिन्नेऽविकारिणि ।
साक्षिण्यारोप्यते भ्रान्त्या जीवत्वञ्च तथाऽबुधैः ॥ १०७॥
आभासस्तु मृषा बुद्धिरविद्याकार्यमुच्यते ॥ १०८ ॥

---

फलितार्थः । तथा परमाभासस्त्विवति । तथा आभासोऽपरम् इत्यन्वयः । आभासो द्विविधः — आभासीभूताविद्यातादात्म्यापन्नचैतन्यम् आभासीभूतान्तःकरणतादात्म्यापन्नचैतन्यञ्चेति । एवं बिम्बभूतमपरमित्यन्वयः । बिम्बभूतं प्रतिबिम्बभूतं तच्च द्विविधम् उपाधिभेदात् । तथा च अविद्यायां प्रतिबिम्बं चैतन्यमीश्वरः, अन्तःकरणेषु प्रतिबिम्बं चैतन्यं जीवः । 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।' इति स्मृतेः । तदेवाऽऽह—एवं त्रिधा चितिरिति । चितिश्चैतन्यमित्यर्थः ।

१०७ । नरो० । ननु तर्हि अहं कर्त्ता भोक्ता इत्यादिप्रतीतिः कथमुत्पद्यते इति चेत्तत्राऽऽह—आभासबुद्धेरित्यादि । आभासीभूतान्तःकरणस्येत्यर्थः । कर्तृत्वमित्युपलक्षणम् । अविच्छिन्ने विच्छेदरहिते अखण्डैकरूपे इति यावत् । अत एवाविकारिणि जन्ममरणादिरहिते शरीरेन्द्रियादिरहिते वा साक्षिणि साक्षीभूते चैतन्ये अबुधैः परमेश्वरादन्यदन्तःकरणं तदेव कर्तृ भोक्तृ, जीवोऽपि परमेश्वराद् भिन्न इति विवेकशून्यैः ।

१०८ । नरो० । ननु आभासीभूतान्तःकरणस्य कर्तृत्वादिकमङ्गीकृतं तदा तत्पूर्वं स्थितत्वात्तस्यानादित्वम् आयातम् । तस्मिन् सति तदवच्छिन्नस्य जीवस्य कस्याप्यनर्थनिवृत्तिर्न स्यादिति चेत्तत्राऽऽह—आभासस्त्विवति । आभासः आभासीभूता बुद्धिरन्तःकरणम् । मृषा मिथ्या । तर्हि कस्य कार्यमित्यपेक्षायामाह—अविद्याकार्यमिति । यद्वा तर्हि चैतन्यवद् आभासबुद्धेरपि सत्यत्वं स्यादिति चेत्तत्राऽऽह—आभासस्त्वित्यादि । आभासस्तु मृषा मिथ्या जडाजडविलक्षणत्वात्, बुद्धिरन्तःकरणम्, अविद्याकार्यं मायाकार्यविशेषः । तथा च सिद्धान्तबिन्दुः—'एवमत्र प्रक्रिया—शरीरमध्यस्थितः सर्वशरीरव्यापकः सत्त्वप्राधान्येन सूक्ष्मपञ्चभूतारब्धोऽविद्याविवर्त्तो दर्पणादिवदतिस्वच्छः' [ प्रक्रियावर्णने ९६ पृ० ] इत्यादि ।

---

१०७ । नन्वेवं शुद्धचैतन्ये साक्षीति व्यवहारानुपपत्तिः, साक्षाद् द्रष्टा हि साक्षी, न च शुद्धचैतन्ये द्रष्टृत्वमित्यत आह—साभासेति । आभासेन चेतनप्रतिबिम्बेन सहिताया बुद्धेरन्तःकरणस्येत्यर्थः । तद्गतं कर्तृत्वमबुधैः साक्षिणि आरोप्यते, तेनायं साक्षिपदवाच्य इत्यर्थः । अयमाशयः—जानातीत्यादावन्तःकरणवृत्तिविशेषरूपा क्रिया ज्ञाधातुवाच्या, आभासविशिष्टश्च तिङर्थ आश्रयः परस्पराध्यासेनाऽऽभासबुद्ध्योर्विवेकाग्रहात् । तदुक्तमाचार्यैः —

आत्माभासस्तु तिङ्वाच्यो धात्वर्थश्च धियः क्रिया ।
उभयञ्चाविवेकेन जानातीत्युच्यते मृषा ॥

---

1. क 'साभास' ग 'आभासबुद्धि' ङ 'आभासि-', च 'आभासबुद्धे-' ।

अविच्छिन्नन्तु तद् ब्रह्म विच्छेदस्तु विक[1]ल्पितः ।
[2]अविच्छिन्नस्य पूर्णेन एकत्वं प्रति[3]पाद्यते ॥ १०९ ॥
तत्त्वमस्यादिवाक्यैश्च साभास[4]स्याहमस्तथा ।
ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चात्मनो ॥ ११० ॥

---

१०९-११० । नरो० । अविच्छिन्नमखण्डैकरूपं तत् चैतन्यम् । विच्छेद अविद्या तद्व्याप्यतत्कार्यात्मक• प्रपञ्च इत्यर्थ• । विकल्पित• पाक्षिक इत्यर्थ• । अविच्छिन्नस्य यथाऽज्ञानतादात्म्यापन्नस्वचिदाभासविवेकात् पूर्णेन साक्षीभूतचैतन्येनैकत्व प्रतिपाद्यते, तथा तत्त्वमस्यादिवाक्यैर्महावाक्येन च साभासस्य अहम आत्मन ऐक्यज्ञान यदोत्पन्न तदाऽस्य कार्यै• सहाविद्या नश्यत्येवेति सम्बन्ध । महावाक्येन चेति । परस्परसापेक्षवाक्यसमूहत्व महावाक्यत्वम् । साभासस्याभासीभूतान्त करणतादात्म्यापन्नस्यात्मन आभासीभूताज्ञानतादात्म्यापन्नचैतन्यस्य जहल्लक्षणया तत्पदार्थम् आभासीभूताज्ञानतादात्म्यापन्नचैतन्यम्, आभासीभूतान्त करणतादात्म्यापन्नचैतन्यं त्वं-पदार्थं विहाय तत्त्वमिति पदद्वयेन साक्षीभूतचैतन्यस्योपस्थापनादैक्यज्ञानम् । उक्तञ्च संक्षेपशारीरके—

'साभासाऽज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तथाऽहं-
शब्दोऽहङ्कारवाची भवति तु जहती लक्षणा तत्र पक्षे ।'

यद्वा, जहदजहल्लक्षणया तत्पदार्थैकदेशसाभासीभूताज्ञानं त्वंपदार्थैकदेशमाभासीभूतान्त'करणं विहाय तत्त्वमिति पदद्वयेन केवलचैतन्यस्योपस्थापनादैक्यज्ञानम्, तच्च शाब्दमपि प्रत्यक्षात्मकम् । ननु इन्द्रियजन्यत्वाभावाच्छाब्दज्ञानस्य कथ प्रत्यक्षत्वमिति चेन्न, न हि इन्द्रियजन्यत्वं प्रत्यक्षत्वे

---

बुद्धे कर्तृत्वमध्यस्य जानातीति ज्ञ उच्यते ।
तथा चैतन्यमध्यस्य ज्ञत्व बुद्धिरिहोच्यते ॥

( 'उपदेशसा० तत्त्वमसिप्र० ९३।६९ ) इति आत्माभास इति बहुव्रीहि । धियोऽन्त'करणस्य, तदेवाह—उभयञ्चेति । मृषेति । आभासबुद्धितत्क्रियाणां मिथ्यात्वाद् अयं व्यवहारोऽपि मिथ्येत्यर्थः ।

१०९-११० । ननूक्त त्रैविध्यं किं चितेर्वास्तवं नेत्याह—अविच्छिन्न विच्छेदो भेदस्तद्रहितम् । नन्वेव त्रिधा चितिरित्यसङ्गत तत्राऽऽह—विच्छेद इति । भेद इत्यर्थ । विकल्पत उपाध्यध्यासकृत इत्यर्थ । एवं जीवानां परस्पर भेदोऽप्यध्यासकृत एवेति बोध्यम् ।

कल्पितभेदसत्त्वे प्रमाणमाह—अवच्छिन्नस्येति । अवच्छेदो भेदस्तद्वत आध्यासिकभेदवत साभासस्याहमस्तत्त्वमस्यादिवाक्यै पूर्णेनेश्वरेणैकत्व प्रतिपाद्यते, तथा सति कल्पितभेदे सति उपपद्यत इति शेष । सर्वथा भेदाभावे तदानर्थक्यं वास्तवेऽपि भेदे तदानर्थक्यम् । वास्तवस्य

---

1 ख-घ '-ल्पत' । 2 ङ 'अवच्छिन्नेन' ग-च 'अवच्छिन्नस्तु' । 3 ग-ङ-च '-पद्यते' । 4 ग-छ '-स्यात्मनस्तथा' ।

तन्नम्, किन्तु वर्त्तमानयोग्यवस्तुविषयकत्वे सति विषयचैतन्यप्रमाणचैतन्याभिन्नत्वमिति। अन्यथा मनोऽनिन्द्रियत्वात्तज्जन्यसुखादिज्ञानस्य प्रत्यक्षत्व न स्यात्। तस्य इन्द्रियत्वस्वीकारे चानुमित्यादेरपि तज्जन्यत्वात् प्रत्यक्षत्वं स्यादिति प्रपञ्चभिया सङ्क्षेपेणोक्तम्। यत्र शक्यमनन्तर्भाव्यार्थान्तरस्य प्रतीतिस्तत्र जहल्लक्षणा, यत्र विशिष्टवाचकशब्द एवैकदेश विहाय एकदेशे वर्त्तते, तत्र जहदजहल्लक्षणा। अविद्या अज्ञानम्, स्वकार्यैरात्मकार्यैरन्त करणादिभिराचार्येण अध्यारोपापवादपुरस्कारेण तत्त्व पदार्थौ शोधयित्वा वाक्येनाखण्डार्थेऽवबोधितेऽधिकारिणोऽहं नित्यशुद्धबुद्धमुक्तस्वभावपरमानन्दानन्ताव्ययाद्वयं ब्रह्मास्मीत्यखण्डाकाराकारितचित्तवृत्तिरुदेति, सा तु चिदाभाससहिता सती प्रत्यगभिन्नमज्ञात परं ब्रह्म विषयीकृत्य तद्गताज्ञानमेव बाधते, तदा पटकारणतन्तुदाहे पटदाहवदखिलकारणेऽज्ञाने बाधिते सति तत्कार्यस्याखिलस्य बाधितत्वात् तदन्तर्भूताखण्डाकाराकारिता चित्तवृत्तिरपि बाधिता भवति, ततश्च तद्गचिदाभासोऽपि यथा प्रदीपप्रभा आदित्यप्रभाऽवभासनासमर्था सती तयाऽभिभूता भवति, तथा स्वय प्रकाशमान प्रत्यगभिन्नपरब्रह्मावभासनानर्हतया तेनाभिभूत सन् स्वोपाधिभूताखण्डवृत्तेर्बाधितत्वाद् दर्पणाभावे मुखप्रतिबिम्बमुखमात्रत्ववत् प्रत्यगभिन्नपरब्रह्ममात्रं भवतीत्यहं ब्रह्मास्मीत्यनुभववाक्यार्थः। 'अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेनाऽऽपाततोऽधिगताखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुर सरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्त साधनचतुष्टयसम्पन्न प्रमाता। काम्यानि ज्योतिष्टोमादीनि स्वर्गादीष्टसाधनानि। निषिद्धानि नरकाद्यनिष्टसाधनानि ब्रह्महननादीनि। नित्यान्यकरणे प्रत्यवायसाधनानि सन्ध्यावन्दनादीनि। नैमित्तिकानि पुत्रजन्माद्यनुबन्धीनि जातेष्ट्यादीनि। प्रायश्चित्तानि पापक्षयमात्रसाधनानि चान्द्रायणादीनि। उपासनानि सगुणब्रह्मविषयकमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि। एतेषां नित्यादीनां बुद्धिशुद्धि परं प्रयोजनम्, उपासनानान्तु चित्तैकाग्र म्, 'विविदिषन्ति यज्ञेने'त्यादिश्रुते 'तपसा कल्मषं हन्ती'त्यादिस्मृतेश्च। नित्यनैमित्तकयोरुपासनानाञ्चावान्तरफलं पितृलोक-सत्यलोकप्राप्ति, 'कर्मणा पितृलोको विद्यया देवलोक' इति श्रुते। साधनानि नित्यानित्यवस्तुविवेकेहामुत्रफलभोगविरागशमादिषट्कसम्पन्मुमुक्षुत्वानि। नित्यानित्यवस्तुविवेकस्तावद् 'ब्रह्मैव नित्य वस्तु ततोऽन्यदखिलमनित्यमिति विवेचनम्। ऐहिकानां स्रक्चन्दनादिविषयभोगाणां कर्मजन्यतया तेभ्यो नितरामामुष्मिकाणामप्यमृतादिविषयभोगाणामनित्यतया तेभ्यो नितरां विरतिरिहामुत्रफलभोगविराग। शमादय शम-दमोपरति-तितिक्षा-समाधान-श्रद्धा।

---

वचनशतेनाप्यनिवृत्तिरिति भाव। अत्रावच्छिन्नस्य साभासस्याहम इत्यनेन त्वपदार्थो दर्शित, पूर्णेत्यनेन तत्पदार्थो दर्शित।

एतदेव ध्वनयन् तदुपदेशफलमाह—ऐक्येति। आत्मनोर्जीवेश्वरयो, ऐक्यज्ञानमहं ब्रह्मेति ज्ञानम्। यदेति कर्मानुष्ठानात् पापक्षये समुत्पन्ने,—

तदाऽविद्या स्वकार्यैश्च नश्यत्येव न संशयः।
[1]एवं विज्ञाय मद्भक्तो मद्भावायोपपद्यते ॥ १११ ॥

---

शमस्तावच्छ्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रह, दमो बाह्येन्द्रियाणां तद्व्यतिरिक्त-विषयेभ्यो निवर्त्तनम्। निवर्त्तितानां तेषा तद्व्यतिरिक्तविषयेभ्य उपरमणमुपरति·, अथ वा विहितानां कर्मणां विधिना परित्याग। तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता। निगृहीतस्य मनस श्रवणादौ तदनुगुणविषये समाधानं समाधि। गुरुवेदादिवाक्येषु विश्वास· श्रद्धा। मुमुक्षुत्व मोक्षेच्छुत्वम् [ वे० सार० ], इत्यल विस्तरेण।

१११। नरो०। मद्भावाय मत्त्वाय ब्रह्मत्वाय वा। उपपद्यते कल्पते।

---

'कषाये कर्मभि पक्के ततो ज्ञान प्रवर्तते।

इति स्मृते। अयं भाव —जीवेश्वरयोरुपाधिभिन्नयोरैक्यश्रुत्योच्यमान बाधितं सत् तत्त्वं-पदयो-रुपाधिरहिते लक्षणया बिम्बभूतं शुद्धब्रह्मैक्यपरतया पर्यवस्यतीति बोध्यम्। रा०।

१११। ब्रह्मैक्यज्ञानफलमाह—तदेति। तादृशज्ञाने सति निर्धर्मकत्वेन चिन्मात्रतया स्वरूपज्ञानात् तत्स्वरूपाज्ञानरूपाऽविद्या स्वकार्यैं प्रपञ्चै सह नश्यत्येव न संशय, एतेन भृष्टबीज-वत् कार्यजननासामर्थ्यमेव तस्याज्ञानेन क्रियत इति पक्षोऽपास्त। तदुक्तमाचार्यै·—

'सोऽयमित्यादिवाक्येषु विरोधात् तदिदन्तयो।
त्यागेन भागयोरेक आश्रयो लक्ष्यते यथा॥
मायाविद्ये विहायैवमुपाधी परजीवयो।
अखण्डं सच्चिदानन्द परं ब्रह्मैव लक्ष्यते॥

यथा सोऽय देवदत्त इत्यादौ पूर्वानुभूतत्वरूपतत्ताया इदानीमनुभूयमानत्वरूपेदन्तायाश्च त्यागेन देवदत्तस्वरूपमात्र लक्ष्यते मायाबुद्धिसमष्टिरविद्या व्यष्टिरूपेति बोध्यम्। अपरोक्षज्ञानं मननादिसंस्कृतान्त करणादेव। 'दृश्यते त्वग्र्यया बुद्ध्या' ( कठ० ३।१२ ) इति श्रुते। अग्र्या मननादिसंस्कृतया 'शास्त्राचार्योपदेशशमदमादिसंस्कृत मन आत्मदर्शने कारणम्' इति गीता-भाष्योक्तेश्चेति दिक्। उक्तञ्च नारदीये—

'तत्त्वमस्यादिवाक्योत्थज्ञान मोक्षस्य साधनम्'

इति। श्रुतिरपि 'तमेव विदित्वाऽतिमृत्युमेति नान्य· पन्था विद्यतेऽयनाय।' ( श्वेताश्व० ३।८ ) इति। रा०।

[ मद्भावाय मया सह ऐक्याय—गो० ]

---

1 ख-घ 'एतद्'।

मद्भक्तिविमुखानां हि शास्त्र[1]मात्रेषु मुह्यताम् ।
[2]न ज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपि ॥ ११२ ॥
इदं रहस्यं हृदयं ममात्मनो मयैव साक्षात् कथितं तवा[3]नघे ।
मद्भक्तिहीनाय शठाय न त्वया दातव्यमैन्द्रादपि राज्यतोऽधिकम् ॥११३॥

श्रीमहादेव उवाच—

एतत्तेऽभिहितं देवि श्रीरामहृदयं मया ।
अतिगुह्यतमं हृद्यं पवित्रं पाप[4]शोधनम् ॥ ११४ ॥
साक्षाद्रामेण कथितं सर्व[5]वेदान्तसंग्रहम् ।
यः पठेत् सततं भक्त्या स मुक्तो नात्र संशयः ॥ ११५ ॥
ब्रह्महत्यादिपापानि बहुजन्मार्जितान्यपि ।
नश्यन्त्येव न सन्देहो रामस्य वचनं यथा ॥ ११६ ॥
[6]जातिभ्रष्टोऽतिपापी परधनपरदारेषु नित्योद्यतो वा
स्तेयी ब्रह्मघ्नमातापितृवधनिरतो योगिवृन्दापकारी ।
यः संपूज्याभिरामं पठति च हृदयं रामचन्द्रस्य भक्त्या
योगीन्द्रैरप्यलभ्यं पदमिह लभते सर्वदेवैः स [7]पूज्यः ॥ ११७ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे आदिकाण्डे
प्रथमोऽध्यायः ॥ १ ॥

---

११२ । नरो० । मद्भक्तिविमुखानां मद्भक्तिविहीनानाम्, मुह्यतां मोहं प्राप्नुवताम्, ज्ञानं तत्त्वज्ञानम्, जन्मशतैर्बहुशतजन्मभिः ।

[ प्रथमाध्यायव्याख्या समाप्ता ]

---

११२ । शास्त्रमात्रेषु शास्त्रप्रतिबोधितक्रियाकलापेषु ।

११३ । आत्मनः परमात्मनो मम हृदयं चेतःस्वरूपमिदं रहस्यमतिगोप्यम् । हे अनघे पापरहिते तव पापरहितायाः सकाश इत्यर्थः । एतेन पापरहितानां श्रवणयोग्यता वर्त्तते इति ध्वनितम् । साक्षात् स्वयं मया कथितम् । साक्षान्मयेति पदेन ब्रह्मवाक्यत्वेनास्यानन्यसुलभत्वं गोप्यत्वं परमपुरुषार्थप्रापकत्वञ्च । मद्भक्तिहीनाय शठाय च ऐन्द्रम् इन्द्रस्येदमैन्द्रं तस्माद् राज्याद् अधिकं श्रेष्ठमिदं त्वया न दातव्यं प्रकाशनीयमित्यर्थः ।

---

1 ख-घ-च-छ 'गर्त्तेषु'। 2 ङ 'अज्ञान'। 3 ख-घ-ङ-च '-नघ', ग '-नघ'। 4 क '-शातनम्', छ 'नाशनम्'। 5 ङ '-देवात्तविग्रहम्'। 6. ख-घ 'योऽति'। 7. ख घ 'पूज्यम्'।

# द्वितीयोऽध्यायः

श्रीपार्वत्युवाच—

धन्याऽस्म्यनुगृहीताऽस्मि कृतार्थाऽस्मि जगत्[1]प्रभो ।
विच्छिन्नो मेऽतिसन्देहग्रन्थिर्भवदनुग्रहात् ।
त्वन्मुखाद् [2]गलित रामतत्त्वामृतरसायनम् ।
पिबन्त्या मे मनो देव न तृप्यति भवापहम् ॥ २ ॥
श्रीरामस्य [3]कथातत्त्वं श्रुतं सङ्क्षेपतो मया ।
इदानीं श्रोतुमिच्छामि विस्तरेण स्फुटाक्षरम् ॥ ३ ॥

---

२ । नरो० । रामतत्त्वामृतरसायन रामतत्त्वमेवामृतद्रवस्वरूपमित्यर्थ ।

३ । नरो० । कथातत्त्व कथायाथार्थ्यम् ।

---

१ । जगत्प्रभो जगतो निग्रहानुग्रहसमर्थ, अथ वा जगद्बीजस्वरूप । अतिसन्देहग्रन्थि. रामस्य चेत् परब्रह्मत्वं तदा कुतो मानुषोचित शोकमोहादिकम्, कथ वा प्रकृतिरूपाया सीताया. क्षणिकविच्छेदेन विरहविधुरस्येव सन्तापप्रलापादिकम्, यदि शोकसन्तापमयजीवत्व तदा वा कथमुपास्यत्वमिति मे महान् सन्देह , स एव ग्रन्थिर्बन्धो भवदनुग्रहाद् विच्छिन्नो विनष्ट इत्यहं धन्या कृतार्था कृतकृत्या अनुगृहीता चास्मि ।

२ । त्वन्मुखाद् गलितं क्षरितं बहिर्भूतमित्यर्थ । रामतत्त्वामृतरसायनं रामस्य तत्त्वमेवामृतं तदेव रसायन श्रोत्रयो रसायनस्वरूपं तत् पिबन्त्या शृण्वत्या इति भाव. । मे मनो न तृप्यति न निवृत्त भवतीति पुनरपि स्फुटाक्षर श्रोतु मे बलवती स्पृहेत्यर्थ । कुतस्तव तादृशी स्पृहेत्याह—भवापहमिति । लौकिकरसायनन्तु 'यज्जराव्याधिविध्वंसि भेषज तद्रसायन-'मित्युक्तरीत्या जराव्याधिमात्रविनाशनम्, रामतत्त्वरसायनन्तु जराव्याधिमूलीभूतभवनाशनम् जन्मबन्धादिविनाशनमित्यर्थ । अतस्तत्र तादृशी स्पृहेति भावः ।

३ । श्रीरामस्य मानुषरूपपरिग्रहकारिणो परब्रह्मण कथातत्त्व वाग्याथार्थ्यम् । 'कथा त्वत्त. श्रुते'ति पाठे परब्रह्मविषयिणी वाक् त्वत्तो भवतः श्रुता । स्फुटाक्षर यथा स्यात्तथा, विस्तरेणेत्यर्थ. ।

---

1 च '-पते' । 2. छ 'गदितं' । 3. ग-घ 'कथा त्वत्त. श्रुता' ।

श्रीमहादेव उवाच—

श्रृणु देवि प्रवक्ष्यामि गुह्याद् गुह्यतरं महत् ।
अध्यात्मरामचरितं रामेणोक्तं पुरा मम ॥ ४ ॥
[1]तदद्य कथयिष्यामि श्रृणु तापत्रयापहम् ।
यच्छ्रुत्वा मुच्यते जन्तुर[2]ज्ञानोत्थमहाभवात् ।
प्राप्नोति परमामृद्धिं दीर्घायुः पुत्रसन्ततिम् ॥ ५ ॥
भूमिर्भारेण मग्ना दशवदनमुखाशेषरक्षोगणानां
धृत्वा गोरूपमाद्यौ दिविजमुनि[3]जनैः साकमब्जासनस्य ।
गत्वा लोकं रुदन्ती व्यसनमुपगतं ब्रह्मणे[4]ऽप्याह सर्वं
ब्रह्मा ध्यात्वा मुहूर्तं सकलमपि हृदावे[5]दशेषात्मतत्त्वम् ॥ ६ ॥
तस्मात् क्षीरसमुद्रतीरमगमद् ब्रह्माऽथ [6]देवैर्वृतो
देव्या चाखिललोकहृत्स्थमजरं सर्वज्ञमीशं हरिम् ।

---

४ । नरो० । आत्मानं शरीरं कार्यकारणसंघातमधिकृत्य वर्त्तमानमध्यात्मम्, तच्च रामश्चेति तस्य चरितम् अध्यात्मरामचरितम् ।

५ । नरो० । तापत्रयापहम् आध्यात्मिकादितापत्रयविनाशकमित्यर्थः । अज्ञानोत्थमहाभवाद् अविद्याजन्ममहासंसारात् ।

६ । नरो० । गोरूपं गोमूर्त्तिम् । दिविजमुनिजनैर्देवमुनिजनैः । अब्जासनस्य ब्रह्मणः । व्यसनं दुःखम् । अवेत् ज्ञातवान् । अशेषात्मतत्त्वं सकलपरमात्मस्वरूपं सकलजीवतत्त्वं वा ।

---

५ । तापत्रयम् आध्यात्मिकाधिभौतिकाधिदैविकाख्यदुःखत्रयम् । तत्राद्यं रोगादिजं कामक्रोधादिजञ्च, द्वितीयं चोरादिनिमित्तम्, तृतीयं ग्रहाद्यावेशनिमित्तम् । रा० ।

अज्ञानोत्थमहाभवात् अज्ञानमविद्याजन्याविवेकः, तस्मादुत्थो यो महान् भवः संसारो वासनेत्यर्थः, तस्मात् । परमां श्रेष्ठाम् । ऋद्धिं सम्पदम् ।

६ । कथां प्रस्तौति—भूमिरिति । रक्षोगणानां भारेण मग्ना स्वाधारजले इति शेषः । गोरूपं धृत्वा देवादिभिः सहाब्जासनस्य ब्रह्मणो लोकं गत्वा ब्रह्मणे उपगतं स्वयं प्राप्तं सर्वं व्यसनं प्राह । स च मुहूर्तं ध्यात्वा सकलं दुःखकारणं तन्निवृत्तिकारणञ्च हृदा अवेत् अजानात् । तत्र हेतुः—अशेषात्मकत्वात् सर्वस्वसृज्यसमष्टिरूपत्वादित्यर्थः । रा० ।

---

1 क 'तत सर्वं' । 2 । क '-ज्ञानाद्वा महाभयात्', ख 'ज्ञानोत्थमहाभयात्', ङ '-ज्ञानाम्बु-महाभवात्', च 'ज्ञानाख्यमहाभयात्', छ 'ज्ञानाम्बमहार्णवात्' । 3 क ग ङ-च छ '-गणैः' । 4 ख ग-घ-च-छ 'प्राह' । 5 क ख छ 'वेद शेषात्मकत्वात्', ग 'वेत्यशेषात्मकत्वात', च 'वेद्यशेषात्मकत्वात', । 6. ङ 'वेदादिवान्' ।

अस्तौषीच्छ्रुति[1]सिद्धनिर्मलपदैः स्तोत्रैः पुराणोद्भवै-
र्भक्त्या गद्गदया गिराऽतिविमलैरानन्द[2]बाष्पैर्वृतः ॥ ७ ॥
ततः स्फुरत्सहस्रांशुसहस्रसदृशप्रभः ।
आविरासीद्धरिः प्राच्यां [3]दिशां व्यपनयस्तमः ॥ ८ ॥

---

७। नरो०। अथ पृथिवीनिवेदनानन्तरं देव्या भूम्या यतोऽखिललोकहृत्स्थमतः सर्वज्ञमखिललोकहृत्स्थं सर्वान्तर्यामिणमित्यर्थः। अत्र हेतुः—अजरं जरारहितं सदैकरूपमिति यावत्, तथात्वे किं चित्रमिति चेत्तत्राऽऽह—ईशमिति। ईशं सर्वनियन्तारम्। श्रुतिसिद्धनिर्मलपदैर्वेदसिद्धच्युतसंस्कृतित्वादिदोषरहितपदैरित्यर्थः। गद्गदयेत्यत्र 'अर्श आदेरदि'त्यत्। गद्गदः कण्ठकम्पः। अतिविमलैरित्यनेन ब्रह्मणश्चक्षुषामतिनिर्मलत्वं सूचितम्, तेन कथाशुद्धिः सूचिता। आनन्दबाष्पैर्हर्षाश्रुभिः।

८। नरो०। ततो ब्रह्मस्तुत्यनन्तरम्। सहस्रांशुसहस्रसदृशः सूर्यसहस्रतुल्यः। व्यपनयन्निराकुर्वन्।

---

७। तस्मादिति अनन्तरमिति शेषः। तदनन्तरं ध्यानानन्तरमित्यर्थः। देव्या च भूम्या च सहित इति शेषः। अखिललोकहृत्स्थं सर्वान्तर्यामिणमित्यर्थः। 'स वा एष आत्मा हृदि' (छान्दो० ८।६।३) इति श्रुतेः। अजरम् 'एष महानात्मा अजरः' ( बृ० ४।४।२९ ) इति श्रुतेः। सर्वज्ञं 'यः सर्वज्ञः सर्ववित्' ( माण्डू० १।१।९ ) इति श्रुतेः। ईशम् 'एष सर्वेश्वरः' ( बृ० ४।४।२२ ) इति श्रुतेः। हरिम्—

हराम्यघं हि स्मर्तॄणां हविर्भागं क्रतौ तथा।
वर्णश्च मे हरिर्यस्मात्तस्माद्धरिरिह स्मृतः ॥

इति स्मृतेः। श्रुतिसिद्धनिर्मलहरिविष्णुप्रभृतिपदयुक्तैः पुराणोद्भवैः स्तोत्रैरित्यर्थः। भक्तिमूलिकैव च गद्गदवाणी भक्तिजत्वादेवाऽऽनन्दबाष्पाणां विमलत्वम्। रा०।

अथानन्तरं ब्रह्मणो ध्यानानन्तरमित्यर्थः। देवैः स्वसकाशं प्राप्तैरित्यर्थः। वृतः परिवृतः सन् तस्मात् स्वस्थानात् ब्रह्मलोकादित्यर्थः। क्षीरसमुद्रतीरं विष्णुसकाशमगमत्। अस्तौषीत्तत्र गत्वेति शेषः। ननु कथं स्तवमात्रेणैव भगवतोऽनुग्रह इत्याह—भक्त्येति। भगवतो भक्तेषु पारवश्यं प्रसिद्धमेव। आनन्दबाष्पैः सकलभक्तजनसङ्कल्पसाधकस्य विष्णोः सकाशागमनेन समुपस्थितव्यसनविनाशाशया समुत्पन्नो य आनन्दस्तज्जैर्बाष्पैर्वृतः। आनन्दातिशयाद् वाचो गद्गदत्वमिति।

८। स्फुरन् स्वदीप्त्या एव समुज्ज्वलो यः सहस्रांशुः सविता तस्य सहस्रं तेन सदृशी

---

1 क-ग-च-ङ- '-शुद्ध-'। 2. च '-वाक्यै-'। 3 ग 'दिशो'।

कथञ्चिद् दृष्टवान् ब्रह्मा दुर्दर्शमकृतात्मनाम् ।
इन्द्रनीलप्रतीकाशं स्मितास्यं पद्मलोचनम् ॥ ९ ॥
किरीटहारकेयूरकुण्डलैः कटकादिभि ।
[1]विभ्राजमानं श्रीवत्सकौस्तुभप्रभया[2] युतम् ॥ १० ॥
स्तुवद्भि सनकाद्यैश्च पार्षदैः परिवेष्टितम् ।
शङ्खचक्रगदापद्मवनमाला[3]विराजितम् ॥ ११ ॥
स्वर्णयज्ञोपवीतेन स्वर्णवर्णाम्बरेण च
श्रिया [4]भूम्या च सहित गरुडोपरि संस्थितम् ।
हर्षगद्गदया वाचा स्तोतु समुपचक्रमे ॥ १२ ॥

---

९ । नरो० । अकृतात्मनां पुण्यरहितानाम् । इन्द्रनीलप्रतीकाशम् इन्द्रनीलसदृशम् । स्मितास्य स्मितयुक्तमुखमित्यर्थ ।

१० । नरो० । किरीटं मुकुटम् । हार प्रसिद्ध । केयूरं 'टाड' इति ख्यातम् । कटकादिभिर्बलयादिभि श्रीवत्सकौस्तुभप्रभया युतम् । श्रीवत्सश्चिह्नविशेष , कौस्तुभो मणि-विशेष , तयो प्रभायुक्तमित्यर्थ ।

१२ । नरो० । स्वर्णवर्णाम्बरेण स्वर्णवर्णवस्त्रेण ।

---

तुल्या प्रभा दीप्तिर्यस्य स । सहस्रसूर्यसदृशदीप्ति । अत एव दिशां तमोऽन्धकार व्यपनयन् नाशयन् । हरि हरति पापानि स्मरणेन इति हरि । यद्वा, क्रतौ हविर्भागं हरतीति हरि । आविरासीत् प्रादुर्बभूव । समुज्ज्वलमूर्त्तित्वात् स्वप्रभासम्पर्केणैव तमोनाश ।

९ । अकृतात्मनां ज्ञानहीनानाम् । तेजोराशित्वात् कथञ्चिद्दर्शनम् । रा० ।

अकृतात्मनां पापीयसां दुर्दर्श तम् आविर्भूत हरिं ब्रह्मा कथञ्चिद् दृष्टवान् न सम्यगित्यर्थ । तेजोमयत्वाद् युगपत् चक्षुषोराह्लादकत्वेन पीडाप्रदत्वेन च कृतात्मनो ब्रह्मणोऽपि सम्यग्-दर्शनाभाव । किम्भूत तम् इत्याह—इन्द्रनीलप्रतीकाशम् इन्द्रनीलमणिप्रभम् , पुन किम्भूतम् ? स्मितास्यम् ईषद्धास्ययुक्तमुखम् । देवानां राक्षसजनितभयनाशस्यावश्यम्भावित्वसूचनाय स्मितास्यत्वम् ।

१२ । [ श्रिया भूत्या [ मूर्त्या ? ] सम्पदा मूर्त्तिमत्या । भूम्येति पाठे पृथिव्या । तथा च ध्यानम्—'वसुधाशोभिपार्श्वद्वन्द्वम् परात् पर'मिति । गो० ]

---

1 छ 'विराजमान' । 2 ख-घ-च-छ 'यान्वितम्' । 3 च '-विभूषितम्' । 4 ग च । 'भूत्या' ।

ब्रह्मोवाच—

[1]नतोऽस्मि ते पदं [2]देव प्राणबुद्धीन्द्रि[3]यादिभिः ।
[4]यच्चिन्त्यते कर्मपाशाद्धृदि नित्यं मुमुक्षुभिः ॥ १३ ॥
मायया गुणमय्या त्वं सृजस्यवसि [5]लुम्पसि ।
जगत्तेन न ते लेपः [6]स्वानन्दानुभवात्मन ॥ १४ ॥
तथा शुद्धिर्न दुष्टानां दानाध्ययनकर्मभिः ।
शुद्धा[7]त्मनस्ते यशसि सदा भक्तिमतां यथा ॥ १५ ॥
अतस्तवाङ्घ्रिर्मे दृष्टश्चित्तदोषापनुत्तये ।
[8]सद्योऽन्तर्हृदये नित्यं मुनिभिः [9]सात्वतैर्वृतः ॥ १६ ॥

---

१३ । नरो० । प्राणोऽन्तःकरणम्, बुद्धिर्निश्चयात्मिकाऽन्तःकरणवृत्तिः । कर्मैव पाशः कर्मपाशस्तस्मात् । कर्मपाशमुक्तौ ब्रह्मभावाच्चिन्त्यैव नास्तीति भावः ।

१४ । नरो० । गुणमय्या रजःसत्त्वतमोगुणात्मिकया सृजसि, अवसि पालयसि, लुम्पसि संहरसि । ते न जगता लेपः सङ्गः । स्वानन्दानुभवात्मनः स्वानन्दानुभवस्वरूपस्य ।

---

१३ । प्राणः क्रियाशक्तिप्रधानोंऽशः, तेन कर्मेन्द्रियसंग्रहः, बुद्धीन्द्रियाणि श्रोत्रादीनि, आत्मा मनस्तैः कारणभूतैर्नतोऽस्मि । कर्मपाशान्मुमुक्षुभिर्यत् पदं हृदि चिन्त्यते इत्यन्वयः । रा० ।

[ नतोऽस्मि यत्ते पदं कर्मपाशान्मुमुक्षुभिः प्राणादिभिर्हृदि कृत्वा नित्यं चिन्त्यते प्राणायामादिना प्राणनिग्रहात् । 'य' इति पाठे यस्त्वमित्यर्थः । गो० ]

१४ । गुणमय्या मायया जगत् सृजसि । तेन स्रष्टृत्वादिना न ते लेपः स्रष्टेत्याद्यभिमानः । कुत इत्याह—आनन्दानुभवात्मनः आनन्दाभिन्नानुभवरूपः आत्मा यस्य तस्य । एवञ्च स्वस्वरूपापरोक्षेण सर्वत्र मिथ्यादर्शनेन तदभिमानरहित इत्यर्थः । रा० ।

१५ । [ तथा शुद्धिरित्यादि । शुद्धात्मनः शुद्धश्चासावात्मा चेति तस्य मायोपहितत्वाभावात् । गो० ]

दानाध्ययनकर्मभिः—सत्पात्रादौ धनादिवितरणं दानम्, अध्ययनं वेदादीनाम्, कर्म यज्ञादिकं तैः । दुष्टानां दुर्वृत्तानां पापमलिनान्तःकरणानामित्यर्थः, न तथा शुद्धिः पवित्रता, यथा शुद्धात्मनः स्वत एव पवित्रान्तःकरणस्य ते यशसि गुणादिवर्णने भक्तिमताम् अनुरागवताम्, 'पूज्येष्वनुरागो भक्तिरि'त्युक्तेः ।

१६ । सात्वतैर्भक्तवृतोऽन्तर्हृदये सद्यो दृष्टस्तवाङ्घ्रिर्मे चित्तदोषापनुत्तये अस्त्विति शेषः । रा० ।

---

1 घ 'नमोऽस्तु ते महेशाय ब्रह्मणे परमात्मने । 2 ग 'नाथ'। 3 ख 'यात्मभिः । 4 ग 'यच्चि-' । 5 च-छ' हसि च' । 6 खघ 'आनन्दा-' । 7 ख-घ '-त्मता ते' । 8 ग 'आद्योऽ-' । 9 ग 'सव्रतैः' ।

ब्रह्माद्यैः स्वार्थसिद्ध्यर्थमस्माभिः पूर्वसेवितः ।
अपरोक्षानु[1]भूत्यर्थं ज्ञानिभिर्हृदि भावितः ॥ १७ ॥
[2]त्वदङ्घ्रिपूजानिर्माल्यतुलसीमालया विभो ।
स्पर्द्धते वक्षसि पदं लब्ध्वापि श्रीः सपत्निवत् ॥ १८ ॥
अतस्त्वत्पादभक्तेषु तव भक्तिः श्रियोऽधिका ।
भक्तिमेवाभिवाञ्छन्ति त्वद्भक्ताः सारवेदिनः ॥ १९ ॥

---

१७ । नरो० । अपरोक्षानुभूत्यर्थं प्रत्यक्षात्मकज्ञानार्थम् ।

१९ । नरो० । अतस्त्वत्पादभक्तेषु तव श्रियोऽधिका भक्तिरित्यन्वयः । भक्तिरत्र स्नेहरूपा ।

---

सात्वता विष्णुभक्तविशेषाः । काम्यकर्मादीन् परित्यज्य ये एकान्तेन मनसा एकं हरिमेव भजन्ते तादृशा इत्यर्थः । तथा च पाद्मे उत्तरखण्डे—

'सत्वं सत्वाश्रय सत्वगुण सेवेत केशवम् ।
योऽनन्यत्वेन मनसा सात्वत समुदाहृत ॥
विहाय काम्यकर्मादीन् भजेदेकाकिन हरिम् ।
सत्यं सत्वगुणोपेतो भक्त्या तं सात्वत विदु ॥
मुकुन्दपादसेवायां तन्नामश्रवणेऽपि च ।
कीर्त्तने च रतो भक्तो नाम्ना स्यात् स्मरणे हरेः ॥
वन्दनार्चनयोर्भक्तिरनिशं दास्यसख्ययो ।
रतिरात्मार्पणे यस्य दृढाऽनन्तस्य सात्वत ॥

इत्युक्तलक्षणैर्मुनिभिः नित्यं सर्वदैव अन्तर्हृदये चित्तमध्ये वृतश्चिन्तित ध्यायमानो मे मया सद्यो दृष्टः इदानीमेव प्रत्यक्षीकृतस्तवाङ्घ्रिश्चरणारविन्द चित्तदोषापनुत्तये हृन्मालिन्यनाशाय भवतु ।

१७ । किम्भूतोऽङ्घ्रिरित्याह—ब्रह्माद्यैरित्यादि । अस्माभिर्ब्रह्माद्यै स्वार्थसिद्ध्यर्थं स्वप्रयोजनसृष्ट्यादिकर्मसाधनाय ।

१८ । सपत्निवत् आर्षो ह्रस्व , सपत्नीवदित्यर्थः । रा० ।

तव वक्षसि पदं स्थान 'पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमर । लब्ध्वाऽपि श्री लक्ष्मीः परमा प्रकृतिरिति यावत्, त्वदङ्घ्रिपूजानिर्माल्यतुलसीमालया सह स्पर्धते विवदते । तव चरणनिर्माल्यस्य गलधृततुलसीमालायाश्च आत्मन श्रेष्ठत्वमवलोक्य तदसहमानेत्यर्थ ।

१९ । यतस्त्वत्पादभक्तेषु तव चरणसेवकेषु तव श्रियो लक्ष्मीतोऽप्यधिका भक्तिः प्रीति

---

1 ग '-पूर्त्तये', च '-त्प्यर्थं' । 2 ख-घ-ङ 'तवाङ्घ्रि-' ।

अतस्त्वत्पादकमले भक्तिरेव सदाऽस्तु मे ।
ससारा[1]मयतप्तानां भेषजं भक्ति[2]रेव ते ॥ २० ॥
इति [3]ब्रुवाणं ब्रह्माणं बभाषे भगवान् हरि ।
किं करोमीति ते[4] वेधाः प्रत्युवाचातिहर्षित ॥ २१ ॥

ब्रह्मोवाच—

भगवन् रावणो नाम पौलस्त्यतनयो महान् ।
राक्षसानामधिपतिर्मद्दत्त[5]वरदर्पित ॥ २२ ॥

---

२० । नरो० । भक्तिरेवेत्येवकारव्यवच्छेद्य न मुक्तिरिति, ससारामयतप्तानां संसारो जन्ममरणादि स एवाऽऽमयो रोगस्तेन तप्तानामित्यर्थ. ।

२२ । नरो० । मद्दत्तवरदर्पित मया दत्तेन वरेण वीर्यशौर्यातिशयान्वित इत्यर्थ ।

---

अत सारवेदिन. तत्त्वग्राहिणस्त्वद्भक्ता भक्तिमेव अनुरागमेव अभिवाञ्छन्ति, अन्यत् सर्वं सुखसौभाग्यादिकं विहाय केवलं तवानुरक्तिमेव कामयन्ते इत्यर्थ. ।

२० । संसार एव आमयो रोगस्तेन तप्तानां जर्जरितान्त करणानाम् । 'स्त्री रुग् रुजा चोपतापरोगव्याधिगदामया ।' इत्यमर. ।

२२ । रावण इति । रौति रावयति वा रावण । 'रावयामास लोकान् यस्तस्माद्रावण उच्यते' इति भारतोक्ते ।

यस्माल्लोकत्रय चैतद्रावित भयमागतम् ।
तस्मात्त्वं रावणो नाम नाम्ना राजन् भविष्यसि ॥ इति वाल्मीकीयाच्च । ७।१६।३७ ।

मया ब्रह्मणा दत्तेन—

सुपर्णनागयक्षाणां दैत्यदानवरक्षसाम् ।
अवध्य स्यां प्रजाध्यक्ष देवतानाञ्च सर्वश ॥
न हि चिन्ता ममान्येषु प्राणिषु प्रपितामह ।
तृणभूता हि ते सर्वे प्राणिनो मानुषादय ॥
एवमुक्तस्तु धर्मात्मा दशग्रीवेण रक्षसा ।
भविष्यत्येवदेवं वै तव राक्षसपुङ्गव ॥ वाल्मीकीये ७।१० ।

इत्युक्तलक्षणेन वरेण दर्पित ।

---

1 च-छ '-रभय-' । 2 च '-रुच्यते' । 3. ख-ग-घ-च छ 'ब्रुवन्त' । 4 च 'त' । 5 क-ङ '-बलदर्पि-' ।

त्रिलोकीं लोकपालांश्च बाधते विश्वबाधकः ।
मानुषेण मृतिस्तस्य मया [1]कल्याण कल्पिता ।
अतस्त्वं मानुषो भूत्वा जहि देवरिपु [2]विभो ॥ २३ ॥

श्रीभगवानुवाच—

कश्यपस्य वरो दत्तस्तपसा तोषितेन मे ।
याचित पुत्र[3]भावाय तथेत्यङ्गीकृत मया ॥ २४ ॥
स इदानीं दशरथो भूत्वा तिष्ठति भूतले ।
[4]तस्याहं पुत्रतामेत्य कौशल्यायां [5]शुभोदये ।
चतुर्द्धात्मानमेवाह सृजामीतरयो पृथक् ॥ २५ ॥

---

२३ । नरो० । बाधते पीडयति ।
२४ । नरो० । पुत्रभावाय पुत्रत्वाय ।
२५ । नरो० । शुभोदये शुभलग्ने ।

---

२३ । त्रयाणां स्वर्गमर्त्यपातालानां समाहार त्रिलोकी ताम्, लोकपालान् इन्द्रादीन् दिग्रक्षकान् । तथा च ज्योति॰शास्त्रे—

इन्द्रो वह्नि पितृपतिर्नैर्ऋतो वरुणो मरुत् ।
कुबेरो धनदेशानौ ब्रह्मानन्तौ दिगीश्वरा ॥ इति ।

विश्वबाधक पृथिवीपीडक । मृतिर्मरणम् ।

२४ । कश्यपस्य तपसा तोषितेन मे मया तस्मै वरो दत्त इत्यर्थ॰ । कीदृश स वर इत्याह—याचित इति । तेन च पुत्रभावाय पुत्रत्वेन मा प्राप्तुं याचित प्रार्थित । मया तथेति तथैवेति अङ्गीकृत स्वीकृतम् ।

२५ । अहं तस्य पुत्रतामेत्य पुत्रतां प्राप्स्यामीति सङ्कल्प्य कौशल्यायामितरयो सुमित्रा-कैकेय्योरहमेवाऽऽत्मानं चतुर्द्धा चतु॰प्रकारावयवसंस्थानै रामलक्ष्मणभरतशत्रुघ्नेति चतु प्रकार-नामभिश्च सृजामि स्रक्ष्यामि । वर्त्तमानसामीप्ये लट् । रा० ।

[ चतुर्धात्मानमिति । इतरयो सुमित्राकैकेय्यो॰ । भरतशत्रुघ्नयो॰ शङ्खचक्रत्वेऽपि सदात्मत्वमेव स्वस्य विभूतिमयत्वात् । गो० ]

स कश्यप॰ इदानी दशरथो भूत्वा दशरथ इति नाम्ना ख्यातो भूतले पृथिव्याम् अयोध्यानगरे इति शेष॰ ।

---

1. च 'कल्पनकल्पिता' । 2. ख छ 'प्रभो' । 3 ग-छ '॰भावेन' । 4 च 'तस्यैव' । 5 ख घ 'शुभे दिने' ।

योगमायाऽपि सीतेति जनकस्य गृहे तदा ।
उत्पत्स्यते [1]तया सार्द्धं सर्वं सम्पादयाम्यहम् ॥ २६ ॥
इत्युक्त्वाऽन्तर्दधे विष्णुर्ब्रह्मा देवानथाब्रवीत् ॥ २७ ॥

ब्रह्मोवाच—

विष्णुर्मानुषरूपेण भविष्यति रघो' कुले ।
यूय सृजध्व सर्वेऽपि वानरेष्वशसम्भवान् ॥ २८ ॥
विष्णो [2]सहाय कुरुत यावत् स्थास्यति भूतले ।
इति देवान् समादिश्य समाश्वास्य च मेदिनीम् ।
ययौ स्वभवन ब्रह्मा विज्वर सुसमाहित ॥ २९ ॥
देवाश्च सर्वे हरिरूपधारिण स्थिता सहायार्थमितस्ततो हरे' ।
महाबला पर्वतवृक्षयोधिन प्रतीक्षमाणा भगवन्तमीश्वरम् ॥ ३० ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसवादे द्वितीयोऽध्याय ॥ २ ॥

---

२९ । नरो० । सहाय साहाय्यम् । विज्वर सन्तापरहित । हरिरूपधारिण धृतवानररूपा इत्यर्थ ।

३० । नरो० । सहायार्थम् आनुकूल्यार्थम् । [ द्वितीयाध्यायव्याख्या समाप्ता ]

---

२६ । योगमायेति । योगो मत्सङ्कल्पस्तद्वशवर्त्तिनी मायेत्यर्थ । 'नाह प्रकाश. सर्वस्य योगमायासमावृत ' ( ७।२५ ) इति गीतोक्ते । तया सार्द्धं तां सहकारिणीं प्राप्य । रा० ।

२८ । मानुषरूपेणेत्यनेन न तत्त्वतो मानुषस्तद्रूपधारीत्यर्थ । रघो कुले रघुवशे, रघुरस्य प्रपितामह , तत्सम्पर्केणास्य राघव इति नामान्तरम् । वानरेषु इति जात्या पुनिर्देश , वानरीष्वपीत्यर्थ । अपि-शब्दाद् अप्सरोगन्धर्वादीनां परिग्रह । व्यक्तमाह वाल्मीकीये आदिकाण्डे विंशसर्गे—

अप्सर सु च मुख्यासु गन्धर्वाणा वधूषु च ।
ऋक्षपन्नगकन्यासु तथा विद्याधरीषु च ॥ ५ ।
किन्नराणाञ्च योषित्सु वानराणाञ्च सर्वश ।
जनयध्वमपत्यानि हरीन् हरिपराक्रमान् ॥ ६ ॥ इति ।

अ शसम्भवान् स्व. स्वेरशै स्वेषु स्वेषु अ शेषु वा सम्भव उत्पत्ति येषां तान् ।

२९ । मेदिनी राक्षसभयपीडितामित्यर्थ. । स्वभवन ब्रह्मलोकम् ।

३० । हरिरूपधारिणो वानराकृतय. 'कपिर्ना सिह्लके शाखामृगे च मधुसूदने' इति विश्वमेदिन्यौ । पर्वतवृक्षयोधिन पर्वतैर्वृक्षैश्च योद्धुं शीलमेषामिति णिनि । हरे. उत्पत्स्यमानस्य ब्रह्मण इत्यर्थ । इतस्तत' पर्वतवृक्षादिषु । भगवन्तम्—

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशस श्रिय ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥

इत्युक्तषडैश्वर्यशालिनम् ।

---

1. क-ग-ड-च 'मया' । 2 क 'सहाया भवत' ।

# तृतीयोऽध्यायः

[1]सूर्यवंशेऽभवद्राजा [2]दिलीप इति विश्रुत· ।
तस्य पुत्रो रघुर्नाम महाबलपराक्रम· ॥ १ ॥
यश्चक्रे हयमेधानां शतमिन्द्रसमप्रभ· ।
तस्य पुत्रोऽभवन्नाम्ना अज इत्यभिविश्रुत ॥ २ ॥
तस्य पुत्रो दशरथ श्रीमान् सत्यपरा[3]क्रम ।
अयोध्याधिपतिर्वीर सर्वलोकेषु विश्रुत· ॥ ३ ॥
[4]सोऽनपत्यत्वदु खेन पीडितो गुरुमेकदा ।
वशिष्ठ [5]मुनिशार्दूल[6]मभिवाद्येदमब्रवीत् ॥ ४ ॥
[7]स्वामिन् पुत्रा कथ मे स्यु सवलक्षणलक्षिता ।
पुत्रहीनस्य मे राज्य सर्व दु खाय कल्पते ॥ ५ ॥

---

३ । नरो० । सत्यपराक्रम सत्यशौर्य· । विश्रुत ख्यात ।

४ । नरो० । मुनिशार्दूल मुनिश्रेष्ठम् ।

---

२ । इन्द्रसमप्रभ· पुरन्दरसदृशपराक्रमो यो हयमेधानां हयस्य अश्वस्य मेधो वधो यत्र, यद्वा हयेन दत्तो मेध आहुतिर्यत्र तेषाम् । हयमेधे कर्त्तव्ये हय सप्रोक्ष्य तस्य कपाले जयपत्रं बध्वा त त्यजेत्, तस्य रक्षार्थं पुरुषविशेषान् नियोजयेत् । वत्सरान्ते प्रतिनिवृत्ते तस्मिन् हये तद्वपया होम कार्य· । हयमेधोऽश्वमेध· स च राजयज्ञविशेष· । 'राजयज्ञोऽश्वमेध सर्वकामस्य' इति कात्यायनश्रौतसूत्रात् ( २०।१ ) ।

४ । अनपत्यत्वदु·खेन अनपत्यत्व सन्तानराहित्य तदेव दु ख तेन पीडित आर्त्त· स दशरथ· गुरु स्वकुलाचार्यं वशिष्ठम् ।

५ । सर्वं दु खायेति । 'मनुष्यलोक पुत्रेणैव जय्यो नान्येन कर्मणा' ( बृह० १।१६ ) इति श्रुतेः रा० ।

---

1 ग घ-ङ-पुस्तकेषु इत पूर्व 'श्रीमहादेव उवाच' इत्यधिकम् । ख-घ पुस्तकयो प्रथमद्वितीयश्लोकौ न स्त । क पुस्तके प्रथमश्लोकस्य द्वितीयार्द्धमारभ्य तृतीयश्लोकस्य पूर्वार्द्ध यावत 'तस्य पुत्रोऽभवन्नाम्ना अज इत्यभिविश्रुत । तस्य पुत्रो दशरथो महाबलपराक्रम ॥ यश्चक्रे हयमेधाना शतमिन्द्रसमप्रभ । अथ राजा दशरथ श्रीमान् सत्यपराक्रम ॥' इति पाठ. । 2 छ 'दिशा पतिरिति स्मृत' । 3 ख घ '-यश' । 4. ङ-च छ 'अन-' । 5 क ख-घ 'स्वकुलाचार्य-' । 6. ग '-ल प्रणिपत्येद-' । 7. ग 'ब्रह्मन्' ।

[1]नानपत्यस्य लोकोऽस्ति श्रुतिरेषा [2]सनातनी ।
अपुत्रस्य धनं व्यर्थमपुत्रस्याफल कुलम ॥ ६ ॥
अधोगतिरपुत्रस्य भवतीत्यनुशुश्रुम ।
धिग् जन्म तेषां विप्रेन्द्र येषां गेहेऽनपत्यता ॥
निराशा पितरो यान्ति ह्यनपत्यस्य नित्यश ॥ ७ ॥
ततोऽब्रवीद्वशिष्ठस्तं भविष्यन्ति सुतास्तव ।
चत्वारः सत्त्वसम्पन्ना लोकपाला इवापरा [3] ॥ ८ ॥

---

स्वामिन् निग्रहानुग्रहसमर्थ । सर्वलक्षणलक्षिता राजवशोचितसकललक्षणसम्पन्ना· ।

पुत्राश्चास्य भविष्यन्ति चत्वारोऽमिततेजस ।
कुलकीर्त्तियशोमानधर्मसन्तानवर्द्धना ॥ ( वाल्मीकीये १।१०।११ )

इत्युक्तलक्षणलक्षिता वा । कथ केन प्रकारेण प्रयत्नेन वा ।

६ । अनपत्यस्य सन्ततिहीनस्य लोक सद्गतिर्नास्ति 'अनपत्यस्य लोकेषु गति का च न विद्यते ।' इत्यादिस्मृते ।

अपुत्रस्य धनं व्यर्थमिति । पुत्रहीनस्य 'पुत्रेण लोकान् जयति पुत्रेणाऽनन्त्यमश्नुते' इत्युक्ते· पुत्रस्यैव तत्तदिष्टसाधनत्वेन तद्रहितस्य धनादेर्विफलत्वं सुतरामेव । अपुत्रस्य कुल कन्यादिना वशप्रवृत्ति तदपि विफलम्,

'पुन्नाम्नस्त्रायते पुत्रस्तेनासौ पुत्रसंज्ञकः ।

इत्यादिना पुत्रस्यैव नरकोद्धरणादिसामर्थ्यश्रवणात् ।

७ । धिग् जन्म इति । हे विप्रेन्द्र ब्राह्मणश्रेष्ठ, एतेन वशिष्ठस्य तत्तज्ज्ञानविशिष्टत्वं सूच्यते । येषां गेहेऽनपत्यता पुत्रहीनता तेषा जन्म शरीरपरिग्रहं धिक् । कुत इत्याह—अनपत्यस्य इत्यादि ।

पिता पितामहश्चैव तथव प्रपितामह ।
उपासते सुत जातं शकुन्ता इव पिप्पलम् ॥
मधुमांसैश्च शाकैश्च पयसा पायसेन च ।
एष नो दास्यति श्राद्धं वर्षासु च मघासु च ॥

इत्यादिदेवलवचनेन श्राद्धाद्यर्थं सुतमपेक्षमाणा पितरस्तद्भावान्नित्यश प्रतिदिनमेव निराशा भग्नमनोरथा सन्तो यान्ति वैमुख्येन प्रतिनिवर्त्तन्ते इत्यर्थ· ।

८ । सत्त्वसम्पन्ना पराक्रमयुक्ता गुणयुक्ता वा, 'सत्त्व गुणे पिशाचादौ बले द्रव्य-स्वभावयो ' इति मेदिनीदर्शनात् । अपरा लोकपाला इन्द्रादय इव ।

---

1· क-ख-घ-पुस्तकेषु अत आरभ्य सप्तमश्लोकान्तोऽशो नास्ति । 2, च 'पुरातनी' । 3 क '-परे' ।

शान्ता-भर्त्तारमानीय ऋष्यशृङ्गं तपोधनम् ।
अस्माभिः सहितः पुत्रकामेष्टिं शीघ्रमाचर ॥ ९ ॥ *

---

९ । शान्ता-भर्त्तारं शान्ता लोमपाददशरथस्याङ्गपतेरेतद्दशरथमित्रस्य कन्याऽनेन राज्ञा तस्माल्लब्धा स्वदुहितृत्वेन कल्पितेत्याख्यायिका । पुत्रकामस्य कर्तव्येष्टिः पुत्रकामेष्टिः । रा० ।

[ शान्ता-भर्त्तारमिति । शान्ता सुमित्रायां दशरथाज्जाता रोमपादनाम्ने अङ्गराजाय दत्ता, तस्या भर्त्तारम् ऋष्यशृङ्गं विभाण्डकतनयं हरिणीगर्भजं ब्रह्मणोऽशेन एतदर्थं जातमिति पुराणान्तर-कथा । अतस्तमानेतुमादिशदिति, न तु स्वाज्ञानात् । गो० ]

पुत्रकामेष्टिम्—पुत्रः कामोऽभिलाषो यस्यां तादृशीम् इष्टिं यज्ञम् । यद्वा पुत्रेति पदच्छेदः । हे पुत्र, सन्ततिस्वरूप दशरथ, त्व कामेष्टिं कामनानुरूप यज्ञमित्यर्थः ।

---

* अतः परं घ ङ-च छ-पुस्तकेषु वक्ष्यमाणा एकनवति श्लोका दृश्यन्ते, नरोत्तमरामवर्म-गोपालचक्रवर्त्तिप्रभृतिभिरव्याख्यातत्वात् अस्माभिरपीमेऽव्याख्यायैव बन्धनीमध्ये स्थानं लम्भिता । परं बहुषु पुस्तकेषूपलब्धा इति, सख्यागरिष्ठा इति चाक्षरान्तरमप्रापय्य मूलाक्षरैरेवेमे मुद्रापिता ।

[ एकदा स त्वनावृष्टिकारणात् सुमहातपाः ।
आनीतो लोमपादेन अनावृष्टिनिवृत्तये ।
शान्तां कन्यां ददौ तस्मै दक्षिणार्थं महीपतिः[1] ॥ १ ॥
इति श्रुत्वा दशरथः पप्रच्छ मुनिसत्तमम् ।
को वा कस्य सुतः कीदृक् प्रभावस्तस्य तद्वद ॥ २ ॥
इति श्रुत्वा वचस्तस्य मुनिः प्रोवाच सादरम् ।
विभाण्डकस्य [2]विप्रर्षेस्तपसा भावितात्मनः ॥ ३ ॥
अमोघवीर्यस्य सुतः प्रजापतिसमद्युतिः[3] ।
शृणु पुत्रो यथा जातः ऋष्यशृङ्गः प्रतापवान् ॥ ४ ॥
महर्षिः स महातेजा बालः स्थविरसम्मतः[4] ।
महाह्रदं समासाद्य काश्यपस्तपसि स्थितः ॥ ५ ॥
दीर्घकाल[5] परिश्रान्त ऋषिर्देवर्षिसत्तमः ।
तस्य रेतः प्रचस्कन्द दृष्ट्वाऽप्सरसमुर्वशीम् ॥ ६ ॥

---

1 घ पुस्तके इदं पादषट्कं नास्ति । 2 च छ 'ब्रह्मर्षे' । 3 घ पुस्तके अत परम 'एकदे'त्यादि-पादषट्कं दृश्यते । 4 घ 'महार्ह स महातेजा बालस्थविरसम्मत ।' 5 घ-छ 'कालपरि-' ।

[1]अप्सूपस्पृशतो राजन् मृगी तच्चापिबत्तदा ।
सह तोयेन तृषिता [2]गुर्विणी साऽभवत्तत ॥ ७ ॥
सा पुरोक्ता भगवता ब्रह्मणा लोककर्तृणा ।
देवकन्ये मृगी भूत्वा मुनि सूय विमोक्ष्यसे ॥ ८ ॥
[3]अमोघं तदृषेर्वीर्यं भावित्वाद्देवनिर्मितम् ॥ ९ ॥
तस्यां मृग्यां समभवत् तस्य पुत्रो महानृषि ।
ऋष्यशृङ्गस्तपोनिष्ठो वन एवाभ्यवर्द्धत ॥ १० ॥
[4]तस्यर्षे शृङ्ग शिरसि राजन्नासीन्महात्मन ।
तेनर्ष्यशृङ्ग इत्येव [5]तदा [6]स प्रथितोऽभवत् ॥ ११ ॥
[7]न तेन [8]दृष्टपूर्वोऽन्य पितुरन्यत्र मानुष ।
तस्मात्तस्य मनो नित्यं ब्रह्मचर्येऽभवन्नृप ॥ १२ ॥
एतस्मिन्नेव काले तु सखा तव महामते ।
तेन कामात् कृतं मिथ्या ब्राह्मणस्येति नः श्रुतम् ॥ १३ ॥
स ब्राह्मणै परित्यक्तस्तदा वै जगती[9]पतिः ।
पुरोहितापचाराच्च तस्य राज्ञो यदृच्छया ।
न ववर्ष [10]सहस्राक्षस्ततोऽपीड्यन्त तत्प्रजाः ॥ १४ ॥
स ब्राह्मणान् पर्यपृच्छत्तपोयुक्तान् मनीषिणः ।
प्रवर्षणे सुरेन्द्रस्य समर्थान् पृथिवीपते ॥ १५ ॥
कथ प्रवर्षेत् पर्जन्य उपाय परिदृश्यताम् ।
तमूचुश्चोदितास्तेन [11]स्वमतानि मनीषिण ॥ १६ ॥
तत्र त्वेको मुनिवरस्त राजानमुवाच ह ।
कुपितास्तव राजेन्द्र ब्राह्मणा निष्कृतिश्चर ॥ १७ ॥
ऋष्यशृङ्ग मुनिसुतमानयस्व च पार्थिव ।
बालोऽयमनभिज्ञोऽपि नारीणा[12]मार्जवे रत ॥ १८ ॥
स चेदवतरेद्राजन् विषयन्ते महातपाः ।
[13]सद्य प्रवर्षेत् पर्जन्य इति [14]ते नात्र सशय ॥ १९ ॥

1 क 'तस्याप स्प-'। 2 ख 'गर्भिणी'। 3 घ 'अमोघत्वाद्दषेश्चैव भावित्वाद्दैवनिर्मितै'। 4 क 'शृङ्ग शिरसि तस्याथ'। 5 घ 'सदा'। 6 क 'सप्र'। 7 ग-ङ 'तेन न'। 8 घ 'दृष्ट पू-'। 9 च-क 'गत'। 10 ख सहस्राणि ततोऽ-'। 11 घ 'सुकृतानि', ङ 'असदेतत्'। 12 घ '-मार्चवे'। 13 ग-ङ 'सद्यो वर्षति'। 14 क 'मे'।

[1]इति श्रुत्वा वचो राजन् कृत्वा निष्कृतिमात्मन ।
स गत्वा पुनरा[2]गच्छत् [3]प्रसन्नेषु द्विजातिषु ॥ २० ॥
राजानमागत दृष्ट्वा प्रतिसंजहृषुः प्रजा· ।
ततोऽङ्गपतिराहूय सचिवान्मन्त्रकोविदान् ॥ २१ ॥
ऋष्यशृङ्गागमे यत्नमकरो[4]न्मन्त्रिनिश्चयात् ।
[5]सोऽभ्यागमदुपायन्तु तैरमात्यैर्महीपते ।
शास्त्रज्ञैरखिलार्थज्ञैर्नी[6]त्याज्ञ्च परिनिष्ठितै· ॥ २२ ॥
तत्र [7]चाज्ञापयामास वारमुख्या महीपति·[8] ।
ऋष्यशृ[9]ङ्गं मुनेः पुत्रमानयध्वमुपायत· ।
लोभयित्वा समाश्वास्य विषयं मम शोभना ॥ २३ ॥
ता राजभयभीताश्च [10]पापभीताश्च योषित· ।
अशक्यमूचुस्तत् कर्म विवर्णा गतचेतस· ॥ २४ ॥
तत्र त्वेका वारयोषा राजानमिदमब्रवीत् ।
प्रयतिष्ये महाराज तमानेतुं तपोधनम् ॥ २५ ॥
अभिप्रेतांस्तु मे का[11]मांस्त्वमाज्ञातुमिहार्हसि ।
ततः शक्नोम्यानयितुमृष्यशृङ्गमृषे· सुतम् ॥ २६ ॥
तस्या सर्वमभिप्रेत[12]मन्वजानात् स पार्थिव· ।
[13]नावि वृ[14]क्षानथारोप्य फलाकारांश्च मोदकान् ।
सुरसांश्च सुगन्धीनि मधूनि रसवन्ति च ॥ २७ ॥
ततो रूपेण सम्पन्ना वयसा च महीपते ।
स्त्रिय आदाय काश्चित् सा जगाम वनमञ्जसा[15] ॥ २८ ॥
सा तु स्थित्वा कियद्दूर संस्थाप्याऽऽश्रममुत्तमम् ।
सन्देशाच्चैव नृपतेः [16]स्वबुद्ध्या [17]चैव राघव ॥ २९ ॥

1 घ 'एतच्'। 2 घ-च-छ '-गच्छेत'। 3 ग-ङ 'प्रच्छन्नेषु'। 4 घ-छ 'मन्त्र'। 5 घ-छ 'सोऽध्यगच्छदु-' घ 'सोऽध्यागच्छदु-। 6 घ '-र्निल्यश्च'। 7 छ 'आ-', घ 'त्वा-'। 8 घ अत पर 'वेश्या सर्वत्र निष्क्रान्तास्ता उवाच महीपति' छ 'वेश्या सर्वत्र निष्क्रातास्ता उवाच स पार्थिव' इत्यधिकम्। 9 घ-छ '-ङ्गमृषे'। 10 घ 'शाप-'। 11 घ '-समनुज्ञातु-'। 12 घ '-मन्वजानीत'। 13 'नावि वृक्षान्' इत्यादि 'रसवन्ति च' इत्यन्तस्य स्थाने छ-पुस्तके 'धनञ्च प्रददौ भूरि रत्नानि विविधानि च' इति पाठ । 14 घ '-वृक्षमथारोप्य'। 15 घ अत पर 'महेश्वर उवाच' इत्यधिकम्। 16 छ 'सबुद्ध्याभाषत द्विजम्'। 17 ग ङ 'च तपोधनम्'।

नानापुष्पफलैर्वृक्षै कृत्रिमैरुपशोभितम् ।
कृत्वा नाव्याश्रमं रम्यमद्भुतं सौम्यदर्शनम् ॥ ३० ॥
ततो [1]निरुह्य तां नावमदूरे काश्यपाश्रमात् ।
वाहयामास पुरुषैर्विहार तस्य वै मुने· ॥ ३१ ॥
ततो दुहितर वेश्यां [2]समाधायेतिकर्त्तृताम् ।
दृष्ट्वाऽन्तरं काश्यपस्य प्राहिणोद् बुद्धिसम्मताम् ॥३२॥
सा तत्र गत्वा कु [3]शला तपोनिष्ठस्य सन्निधौ ।
आश्रम [4]त समासाद्य ददर्श तमृषे· सुतम् ।
उवाच मधुरं वाक्यं श्लक्ष्णं मधुरया गिरा ॥३३॥
कच्चिन्मुने कुशल तापसानां पिता च ते कच्चिदहीनतेजाः ।
कच्चित् [5]प्रियान् रमते चाऽऽश्रमेऽस्मिंस्त्वां वै द्रष्टुं साम्प्रतञ्चाऽऽगतोऽस्मि ॥३४॥
कच्चित्तपो वर्द्धते तापसानां कच्चित्तरोर्मूलफलं प्रभूतम् ।
कच्चित्त्वया[6]ऽधीयते चैव विप्र कच्चित् स्वाध्याय· क्रियते [7]चर्ष्यश्रृङ्ग ॥३५॥
इति श्रुत्वा वचस्तस्य मुनिवेशधरस्य हि ।
उवाच वाक्यं वाक्य[8]ज्ञां [9]मुनिवेशविधारिणीम् ॥३६॥
ऋद्धया भवान् ज्योतिरिव प्रकाशते मन्ये चाहं त्वामभिवादनीयम् ।
पाद्यं [10]वै ते संप्रदास्यामि कामाद् यथाकामं मूलफलानि चैव ॥३७॥
कौश्यां वृष्यामास्व यथोप[11]योष कृष्णाजि[12]नेनाऽऽवृतायाञ्च भूमौ ।
क चाऽऽश्रमस्तव किं नाम [13]चेद व्रतं वाक्यं भाति तदेव व्यक्तम् ॥३८॥
ततो वेश्या प्रत्युवाच द्विजेन्द्रं शङ्कायुक्ता काश्यपस्याऽऽगमे तु ।
ममाऽऽश्रम· काश्यपपुत्र रम्यस्त्रियोजन शैलमिम परेण ॥३९॥
तत्र स्वधर्मोऽनभिवादन मे न चोदक पाद्यमुपस्पृशामि ॥४०॥
भवता नाभिवाद्योऽहमभिवाद्यो भवान् मया ।
व्रतमेतादृश ब्रह्मन् परिष्वज्यो भवान् मया ॥४१॥
इति श्रुत्वा वचस्तस्य पुनराह तपोधनः ॥४२ ॥

1 घ 'निरूप्य'। 2 घ 'समाधार्येतिकार्यताम्'। 3 घ-छ '-शली'। 4 घ-छ 'तु'। 5 घ 'प्रिया न रम-', छ 'भवान्'। 6 घ 'पीयते'। 7 घ 'वर्ष'। 8 घ '-ज्ञो'। 9 छ 'मुनिस्ता वेश-'। 10 घ 'वै सप्रदास्यामि यथा सिद्धेत कर्मफलानि चैव'। 11. घ '-वेश'। 12 घ '-ने वा कृताया सुखायाम्'। 13 छ '-ध्रेय'।

फलानि पक्वानि ददानि तेऽहं भल्लातकान्यामलकानि चैव ।
करूषकाणीङ्गु[1]दिकानि [2]चैव यथोपयोगं फलमत्र भुङ्क्ष्व ॥४३॥
[3]स तानि सर्वाणि [4]विवर्जयित्वा भक्ष्य महार्हं प्रददौ ततोऽस्य ।
तानृष्यशृङ्गस्य महारसानि भृश [5]स्वरूपाणि रुचिं ददुर्हि ॥४४॥
ददौ च माल्यानि सुगन्धवन्ति चित्राणि वासांसि च भानुमन्ति ।
[6]पानानि चाग्र्याणि ततो गृहीत्वा [7]मुमोद चिक्रीड जहास चोच्चैः ॥४५॥
तदा [8]चुचुम्बावनतस्य गण्ड विलज्जमाना फलिता लतेव ।
गात्रैश्च गात्राणि निषेवमाणा समाश्लिषच्चासकृदृष्यशृङ्गम् ॥४६॥
विलज्जमानेव बलाभिभूता प्रलोभयामास सुत महर्षेः ।
अथर्ष्यशृङ्गं विकृतं निरीक्ष्य पुनः पुन पीड्य च कायमस्य ॥४७॥
अवेक्षमाणा शनकैर्जगाम सा [9]त्वग्निहोत्रस्य तदापदेशम् ।
तस्यां गतायां मदनेन मत्तो[10] विचेतनः [11]प्राभवदृष्यशृङ्गः ॥४८॥
तामेव चित्तेन गतेन शून्यो विनिश्वसन्नार्त्त[12]रूपो बभूव ।
ततो मुहूर्त्तं हरिपिङ्गलाक्षः प्रवेष्टितो रोमभिरानखाग्रम्[13] ॥४९॥
स्वाध्यायवां[14]श्चितसमाधियुक्तो विभाण्डक काश्यपः [15]प्रादुरासीत् ।
सोऽपश्यदासीनमुपेत्य पुत्रं ध्या[16]यन्तमेवं[17] विपरीतचित्तम् ॥५०॥
विनिश्वसन्तं मुहुरूर्द्ध्वदृष्टिं विभाण्डकः पुत्रमुवाच दीनम् ।
न [18]वै यथापूर्वमिवासि पुत्र चिन्तापरश्चापि विचेतनश्च ॥५१॥
दीनोऽतिमात्रं त्वमिहाद्य किन्नु पृच्छामि त्वां क इहाभ्यागतोऽभूत् ।
न कल्प्यन्ते समिधः किन्नु तात कच्चिद्धुतश्चाग्निहोत्र त्वयाऽद्य ॥५२॥
[19]सुनिर्णिक्तं [20]श्रुक्स्रुव [21]होमधेनुः कच्चित् सवत्सा च कृता त्वयाऽद्य ॥५३॥
इति श्रुत्वा वचस्तस्य पितुर्मुग्धाक्षरं [22]परम् ।
उवाच वाक्यं वाक्यज्ञ[23] पितर करुणान्वितम् ॥५४॥

---

1 घ '-द'। 2 घ 'तावद्'। 3 घ 'सा'। 4 घ 'च वर्जयित्वा'। 5 घ 'सुरूपाणि'। 6. ङ 'पानोचिताग्र्याणि'। 7 ङ 'मुमोह'। 8 घ 'चुचुम्बामलगण्डमूले'। 9 घ 'क्रत्वाग्नि'। 10 घ 'चित्त-'। 11 घ 'प्रीतव-'। 12 घ '-वपुर्वै'। 13 घ ङ '-ग्रात'। 14 घ '-वान् हृष्ट-'। 15 घ 'आवि'। 16. घ '-यस्त-'। 17 ङ '-मेक'। 18 घ 'त्व'। 19 ङ 'सुनिर्णियुक्त'। 20 घ 'स्रुकस्रुव'। 21 ङ 'काम-'। 22. ङ 'पुर'। 23. ङ '-ज्ञ'।

इहागता जटिलो ब्रह्मचारी न वै ह्रस्वो [1]नातिदीर्घो मनस्वी ।
सुवर्णवर्ण कमलायताक्ष [2]सुत सुराणामिव [3]शोभमान ॥५५॥
सुस्निग्धरूप सवितेव दीप्त [4]सुशुक्लकृष्णाक्षिरतीव गौर. ।
नीला विविक्ताश्च[5] जटा [6]सुगन्धा हिरण्य[7]रज्जूद्ग्रथिताः सुदीर्घा ॥५६॥
[8]आलोलमाना पुनरस्य कण्ठे विद्योतते विद्युदिवान्तरीक्षे ।
द्वौ मांसपिण्डा[9]वुरसि स्थितौ तावलोमशौ चापि मनोहरौ च ॥५७॥
[10]विशीर्णमध्यश्च स नाभिदेशे कटिश्च तस्या[11]तिबृहत्प्रमाणा ।
[12]तथास्य चीरान्तरतः प्रभाति हिरण्म[13]यी मेखला मे यथेयम् ॥५८॥
अन्यच्च तस्याद्भुतदर्शनीय विकुञ्चित [14]पादयुगे विरौति ।
पाण्योश्च तद्वद्रुचिर निबद्धौ कलाप[15]कावक्षमाला यथेयम् ॥५९॥
विचेष्टमानस्य च [16]नाभिपार्श्वे कूजन्ति हंसा शरदीव मत्ता ।
चीराणि तस्याद्भुतदर्शनानि [17]नेमानि तद्वन्मम रूपवन्ति ॥६०॥
वक्त्रञ्च तस्याद्भुतदर्शनीय [18]प्रव्याहृतं ह्लादयतीव चेतः ।
पुंस्कोकिलस्येव च तस्य वाणी तां शृण्वतो मे व्यथितोऽन्तरात्मा ॥६१॥
स मे समाश्लिष्य पुन शरीर जटासु [19]गृह्याभ्यवनाम्य वक्त्रम् ।
वक्त्रेण वक्त्रं प्रणिधाय शब्द चकार तन्मे जनयेत् प्रहर्षम् ॥६२॥
न चापि पाद्य बहु मन्यतेऽसौ फलानि [20]चेमानि मया हृतानि ।
एवव्रतोऽस्मीति च मामवोचत् फलानि पाद्यानि न [21]चाऽऽददामि ॥६३॥
मयोपभुक्तानि फलानि तस्य नेमानि तुल्यानि रसेन तेषाम् ।
तोयानि चैवातिरसानि मह्य प्रादात् स वै पातुमुदाररूप ॥६४॥
पीत्वैव [22]यान्यत्यधिकप्रहर्षो ममाभवद् भूश्चलितेव चाऽऽसीत् ।
इमानि चित्राणि च गन्धवन्ति माल्यानि तस्योद्ग्रथितानि [23]पट्टै ॥६५॥
[24]यानि प्रकीर्येह गत स्वमेव स आश्रम [25]तपसा द्योतमान ।
गतेन तेनास्मि कृतो विचेता गात्रञ्च मे संपरिदह्यतीव ॥ ६६ ॥

1 ग 'न वै दीर्घो'। 2 घ 'सुत'। 3 घ 'लोभ-'। 4 घ 'सुशुभ्र-'। 5 च '-क्ता च जटा'। 6 व 'सुगन्धिर्हिर-'। 7 क '-रज्जुग्र' घ '-रज्जग्रथिता सुदीर्घा'। 8 घ 'आलम्बमाना'। 9 घ क '-वधरेण कण्ठादलोमशौ चापि'। 10 घ 'विनग्न'। 11 घ-क '-पि'। 12 घ-क 'अ-'। 13 घ '-यीव मम मेखलेयम्'। 14 घ-क '-पादयो. सवि'। 15 घ '-कौरक्ष-'। 16 क 'तस्य पार्श्वे'। घ 'तस्य नाभि'। 17 घ 'लोमानि'। 18 क 'पुरा क्षत'। 19 घ 'गृह्णात्यवनम्य'। 20 घ 'चैतानि'। 21 घ 'चाददन्मे'। 22. घ 'यान्यभ्यधिक प्रहर्षो'। 23 घ 'पट्टे'। 24 घ-पुस्तके अय श्लोको सप्तषष्टिश्लोकपूर्वार्द्धश्च नास्ति। 25 क 'तपसि'।

इच्छामि तस्यान्तिक[1]माशु गन्तुं तञ्चेह नित्य परिवर्त्तमानम् ।
[2]गच्छामि तस्यान्तिकमेव तात का नाम सा व्रतचर्या नु तस्य ॥ ६७ ॥
इच्छाम्यहञ्चरितु तेन सार्द्धं यथा तपः स चरत्युग्रकर्मा ।
[3]इत्येव वाक्य मुनिरात्मजस्य श्रुत्वा महावाक्यविशारदोऽसौ ॥ ६८ ॥
उवाच वाक्य परिसान्त्वयन् [4]वै विभाण्डकस्त[5]पसा ज्ञाततत्त्वः ।
रक्षांसि [6]चैतानि चरन्ति पुत्र रूपेण तेनाद्भुतदर्शनेन ॥ ६९ ॥
अतुल्य[7]वीर्याण्यतिरूपवन्ति विघ्न सदा [8]वै तपसश्चरन्ति ।
न तानि सेवेत मुनिर्यतात्मा [9]सतां लोक प्रार्थयान कदाचित् ॥ ७० ॥
कृत्वा विघ्न तापसानां चरन्ति पापाचारास्तपसां तानवेहि ।
असज्जनेनाचरितानि पुत्र [10]पानानि पेयानि मधूनि तानि ॥ ७१ ॥
माल्यानि चैतानि न वै मुनीनां [11]ग्राह्याणि [12]चित्रोत्पलगन्धवन्ति ।
रक्षांसि तानीति निवार्य पुत्रं विभाण्डकस्तपसे निर्जगाम ॥ ७२ ॥
यदा पुनः काश्यपो निर्जगाम फलानि हर्त्तुं विधिना[13] वनाद्धि ।
तदा पुनर्लोभयितुं जगाम सा वारयोषा मुनिमृष्यशृङ्गम् ॥ ७३ ॥
दृष्ट्वैव तामृष्यशृङ्गः प्रहृष्टः संभ्रान्तरूपो न्यतपत्तदानीम् ।
प्रोवाच चैनां भवदाश्रयाय [14]गच्छाव यावन्न पिता ममैति ॥ ७४ ॥
ततो वेश्याः काश्यपस्यैकपुत्र प्रवेश्य योगेन विमुच्य नावम् ।
[15]प्रवाहयन्त्यो विविधैरुपायैराजग्मुरङ्गा[16]धिपराजधानीम् ॥ ७५ ॥
अन्तःपुरे तन्तु निवेश्य राजा विभाण्डकस्याऽऽत्मजमेकपुत्रम् ।
ददर्श देव सहसा प्रवृष्टमापूर्यमाणञ्च जगज्जलेन ॥ ७६ ॥
स लोमपादः परिपूर्णकाम सुतां ददावृष्यशृङ्गाय शान्ताम् ।
क्रोधप्रतीकारकरञ्च चक्रे गाश्चैव मार्गेषु च [17]कर्षणानि ॥ ७७ ॥
विभाण्डकस्याऽऽव्रजतः स राजा पशून् [18]सभृत्यान् पशुपांश्च वीरान् ।
समादिशत् पुत्र[19]गर्हो महर्षिर्विभाण्डकः परिपृच्छेद् [20]यदा वः ॥ ७८ ॥

1 क '-मेव' । 2 घ 'इच्छामि' । 3 क 'इत्येव श्रुत्वा मुनिरात्मजस्य वाक्य' । 4 घ-क 'हि' । 5 ग-ङ '-पसि' । 6 क 'चैवाच' । 7 घ '-वीराण्यति' । 8 घ 'तपसश्चिन्तयन्ति' । 9 घ-पुस्तके 'सतामि'त्यारभ्य 'पुव' इत्यन्तोंशो नास्ति । 10 घ 'फलानि' । 11 ग-च-क 'त्याज्यानि' 12 घ 'चित्तो-' । 13 क '-नाश्रमाद्धि' । 14 घ-क 'गच्छामि' । 15 घ-क 'प्रमोदयन्त्यो' । 16 क '-धिपने समीपम्' । 17 घ क 'कर्षकाणि' । 18 घ 'प्रभूतान्', क 'महत्यान्' । 19 क '-महो' घ '-मार्गो' । 20 क 'तदा वै' ।

स वक्तव्य' प्राञ्जलिभिर्भवद्भिः पुत्रस्य ते पशवः कर्ष[1]णञ्च ।
अथोप[2]यात स मुनिश्चुकोप स्वमाश्रमं [3]मूलफलं गृहीत्वा ॥ ७९ ॥
अन्वेषमाणश्च [4]न तत्र पुत्रं ददर्श चुक्रोध ततो भृशं स' ।
[5]तत· स कोपेन विदीर्यमाणमाशङ्कमानो नृपतेर्विधानम् ॥ ८० ॥
जगाम चम्पां प्रतिवीक्ष्यमाणस्तमङ्गराजं सपुरं सराष्ट्रम् ।
स वै श्रान्तः क्षुधितः काश्यपस्तान् घोषान् देशान् सादिचरान् समृद्धान् ॥८१॥
गोपैश्च तैर्विधिवत् पूज्यमानो राजेव तां रात्रिमुवास तत्र ।
अवाप सत्कारमतीव [6]तस्य प्रोवाच कस्य प्रहिता स्थ गोपाः ॥ ८२ ॥
ऊचुस्ततस्तेऽभ्युपगम्य सर्वे धनं तवेद विहितं सुतस्य ।
एवं स देशेष्वभिपूज्यमानस्तांश्चैव शृण्वन् [7]मधुरान् प्रलापान् ॥८३॥
प्रशान्तभूयिष्ठरजाः [8]प्रहृष्ट समाससादाङ्गपतिं [9]पुरस्थम् ।
स पूजितस्तेन नरर्षभेण ददर्श [10]देव दिविश [11]यथेन्द्रम् ॥८४॥
शान्तां स्नुषाञ्चैव ददर्श तत्र सौदा[12]मनीमुच्चरतीं [13]तथैव ।
ग्रामांश्च घोषांश्च सुतस्य दृष्ट्वा शान्ताञ्च [14]शान्तोऽस्य पर' स कोप· ॥८५॥
चकार तस्मै च पर प्रसाद विभाण्डको भूमिपतेर्नरेन्द्र ।
स तत्र निक्षिप्य सुत महर्षिरुवाच सूर्याग्निसमप्रभाव' ॥८६॥
जा[15]ते तु पुत्रे वनमाव्रजेथा राज्ञ· प्रियाण्यस्य सर्वाणि कृत्वा ।
स तद्वच कृतवानृष्यश्रृङ्गो ययौ च यत्रास्य पिता बभूव ॥८७॥
शान्ता चैन पर्यचरद् यथा वै खे रोहिणी सोममेव [16]यथा सा ।
अरुन्धती[17]वत् सुभगा वशिष्ठ लोपामुद्रा वाऽपि यथा ह्यगस्त्यम् ॥८८॥
तथा शान्ता ऋष्यश्रृङ्ग वनस्थं प्रीत्या युक्ता पर्यचरन्नरेन्द्र ॥८९॥

इति ते सर्वमाख्यात [18]ऋष्यश्रृङ्गपराक्रम ।
तमानय महाराज [19]यस्ते यज्ञं करिष्यति ॥९०॥
[20]इत्युक्तो गुरुणा तेन पुत्राकाङ्क्षी नरर्षभ' ॥९१॥ ]

1. घ '-कच्च'। 2 घ '-जात'। 3 घ 'फलमूल'। 4 क 'स'। 5 घ 'ततश्च'। 6 क 'तेभ्य'। 7 घ 'मधुर-'। 8 घ 'प्रहृष्ट'। 9 घ 'पुरस्तम्'। 10 घ 'पुत्र दिवि देवमिन्द्रम'। च-क 'पुत्र ।' 11 क 'नरेन्द्रम्'। 12 घ '-मिनी-'। 13 घ-क 'यथैव'। 14 घ 'शान्तश्च'। 15 क '-तेऽव'। 16 घ क 'तथा'। 17 घ '-व'। 18 च-क '-ऋष्यश्रृङ्गपराक्रमम्'। 19 घ 'स ने'। 20 ध-पुस्तके इदमङ्कं नास्ति।

तथेति मुनि[1]मानीय मन्त्रिभिः सहितः शुचिः ।
यज्ञकर्म समारेभे मुनिभिर्वीतकल्मषैः ॥ १० ॥
श्रद्धया हूय[2]मानेऽग्नौ तप्तजाम्बूनदप्रभः ।
पायसं [3]स्वर्णपात्रस्थं गृहीत्वोवाच हव्यवाट् ॥ ११ ॥
गृहाण पायसं दिव्यं [4]पुत्रीयं देवनिर्मितम् ।
लप्स्यसे परमात्मानं पुत्र[5]त्वेन न संशयः ॥ १२ ॥
इत्युक्त्वा पायसं [6]दत्त्वा राज्ञे सोऽन्तर्दधेऽनलः ।
ववन्दे मुनिशार्दूलौ राजा लब्धमनोरथः ॥ १३ ॥
वशिष्ठऋष्यश्रृङ्गाभ्यामनुज्ञातो ददौ हविः ।
कौशल्यायै सकैकय्यै [7]ह्यर्द्धमर्द्धं [8]विभज्य सः ॥ १४ ॥

११ । नरो० । तप्तजाम्बूनदप्रभः द्रुतसुवर्णप्रभः । हव्यवाड् वह्निः ।

१० । तथेति वशिष्ठवचनस्य स्वीकृत्युक्तिरियम्, तथा इत्युक्त्वेत्यर्थः । मुनिम् ऋष्यश्रृङ्गम् आनीय वेश्याभिरानाय्येत्यर्थः, आनयनप्रकारस्तु वाल्मीकीये आदिकाण्डे नवमसर्गे अन्वेष्टव्यः । वीतकल्मषैरपगतपापैः । मुनिभिर्वशिष्ठादिभिः । यज्ञकर्म 'राजयज्ञोऽश्वमेधः सैर्वकामस्य' इति कात्यायनश्रौतसूत्रेण ( २०।१) राजकर्त्तव्यः अश्वमेधः स एव कर्म तत् समारेभे ।

११ । तप्तजाम्बूनदं कृतमलापहरणं स्वर्णम्, तद्वत्कान्तिर्हव्यवाडग्निः । अयमेव 'प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप' इति वाल्मीकीये प्राजापत्यशब्देनोक्तः । रा० ।

हव्यवाट्, हव्यं हवनीयं घृतं वहति देवेभ्यः प्रापयतीति हव्यवाट्, अग्निः । अत्र वाल्मीकेर्भङ्ग्यन्तरम् । तथा च—

'ततास्य यजमानस्य पावकादद्भुतप्रभम् ।
प्रादुर्भूतं महद्भूतं प्रदीप्तानलसन्निभम् ॥
कृष्णाजिनधरं कृष्णं हरिच्छ्मश्रुजटाधरम् ।
पद्मरक्तान्तनयनं मेघदुन्दुभिनिस्वनम् ॥
शुभलक्षणसम्पन्नं दिव्याभरणभूषितम् ।
शैलश्रृङ्गसमुत्सेधं सिंहोदरकटीक्षणम् ॥
काञ्चनीं पिहितां दोर्भ्यां परिगृह्याद्भुतोपमम् ।
दिव्यपायससम्पूर्णां पात्रीं पत्नीमिव प्रियाम् ॥ इति १।१६।३-६

1 च 'मानाय्य' । 2 च 'मानोऽग्नौ' । 3 ग 'पूर्ण-' । 4 क-ङ 'पुत्रार्थं' । 5 च '-त्वे नात्र' । 6 च 'राज्ञे दत्त्वा' । 7 ख-घ 'अर्द्ध-' । 8. ख-ग घ च 'प्रयत्नतः' ।

ततः सुमित्रा [1]सम्प्राता [2]जगृध्नु पौत्रिक चरुम् ॥ १५ ॥
कौशल्या तु स्वभागार्द्धं ददौ तस्यै मुदान्विता ।
कैकेयी च स्वभागार्द्धं ददौ प्रीतिसमन्विता ॥ १६ ॥

---

१५-१६ । जगृध्नु भृशं तदिच्छावती । गृधु अभिकाङ्क्षायामित्यतो यङ्लुगन्तादागमशास्त्रानित्यत्वेन लुगभावे त्रसिगृधिधृषिक्षिपे क्नुरिति क्नौ रूपम् । पौत्रिकं चरुमिति षष्ठ्यभाव आर्ष । पुत्र प्रयोजन यस्य तादृशं चरुमित्यर्थ । स्वभागार्द्धं स्वशब्द आत्मीयवाची स्वीयस्य भागस्तदर्द्धं स्वदत्तस्य चतुर्थांशमित्यर्थ । एवमग्रेऽपि । वाल्मीकीयेऽपि—

'कौशल्यायै नरपति पायसार्द्धं ददौ तदा ।
अर्द्धादर्द्धं ददौ चापि सुमित्रायै नराधिप ॥
कैकेय्यै चावशिष्टार्द्धं ददौ पुत्रार्थकारणात् ।
प्रददौ चावशिष्टार्द्धं पायसस्यामृतोपमम् ॥
अनुचिन्त्य सुमित्रायै पुनरेव महीपति । १।१६।२७-२९

इति ग्रन्थस्यापि कौशल्यायै दत्तार्द्धस्यार्द्धादर्द्धं चतुर्थांशरूप सुमित्रायै ददौ कौशल्यया दापितवानित्यर्थ कार्य । अर्द्धादित्यत्र कस्यार्द्धादित्याकाङ्क्षायामुपस्थितकौशल्यादत्तपायसार्द्धान्वयस्यैवौचित्यात् । अन्तर्भाविण्यर्थत्वे मानञ्चैतदेकवाक्यतैव । एव कैकेय्यै कौशल्यादत्तार्द्धादवशिष्टमर्द्धं ददौ । तत कौशल्यादत्तावशिष्टस्य कैकेय्यै दत्तस्य यदर्द्धं तदर्द्धं विचार्य पुनरपि सुमित्रायै ददौ प्रापयामास इत्यर्थ. । अत्र चार्द्धपदावृत्तिर्बोध्या, एवं हि एतद्ग्रन्थेन तस्यैकवाक्यता भवति । तत्तद्दत्तभागजन्यस्य तत्तत्पुत्राधीनतौचित्येनैवमेवोचितं सेव्यसेवकभावलाभार्थम् । ततस्ततो न्यूनांशत्वस्य लक्ष्मणशत्रुघ्नयोरौचित्याच्चात्रत्यस्वभागार्द्धमिति यथाश्रुत न व्याख्यातम् । कालिदासोऽपि—

'स तेजो वैष्णव पत्न्योर्विभेजे चरुसंज्ञितम् ।
द्यावापृथिव्यो· प्रत्यग्रमहर्पतिरिवातपम् ॥
अर्चिता तस्य कौशल्या प्रिया केकयवंशजा ।
अत सम्भावितां ताभ्यां सुमित्रामैच्छदीश्वर ॥
ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षित· ।
चरोरर्द्धार्द्धभागाभ्यां तामयोजयतामुभे ॥
सा हि प्रणयवत्यासीत् सपत्न्योरुभयोरपि ॥ ( रघु० १०स० ५४-५७ )

इत्याह । चरोरर्द्धार्द्धभागाभ्यामित्यस्य स्वस्वलब्धचरुभागाभ्यामित्यर्थ । एवञ्च रामभरतौ त्रित्र्यंशौ लक्ष्मणशत्रुघ्नावष्टमांशाविति सिद्धम् । वाल्मीकीयव्याख्यातारौ कतकाचार्यश्रीरामाचार्यावप्येवमेवोचतु· । अन्ये तु तद्व्याख्यातार· कौशल्यायै सम्पूर्णं पायसार्द्धं ददौ । तत पात्रस्थादर्द्धादर्द्धं

---

1. च 'सम्प्राप्य, छ 'सम्प्रार्थ्य' । 2 ङ-छ 'जगर्द्ध', च 'ययाचे' ।

सर्वपायसचतुर्थांश सुमित्रायै दत्तवान् स्वयमेव। तत. पात्रेऽवशिष्टस्य चतुर्थांशस्यार्द्धमष्टमांशं कैकेय्यै दत्तवान्। तत पुनरवशिष्टमर्द्धमष्टमांशरूप पुनरपि सुमित्रायै दत्तवानिति यथाश्रुतग्राहिणो व्याचक्षते। तेषामेतद्विरोधो रामलक्ष्मणयोरेव भरतशत्रुघ्नयोरेवैकवाक्यताया बीजालाभश्च। अवशिष्टार्द्धपदे क्वचित् षष्ठीतत्पुरुषः क्वचित् कर्मधारय इति वैषम्यञ्च। रा०।

पायसविभागे भूयान् मतभेदो विभिन्नग्रन्थानां तत्तद्व्याख्यातॄणाञ्च। प्रकृतश्च ग्रन्थांश प्रायेणान्यपुराणविसवादी, केवल पद्मपुराणश्लोकावेव सर्वथा तस्याऽऽनुरूप्य भजेते। तथा च पाद्मे—

'वशिष्ठऋष्यशृङ्गाभ्यामनुज्ञातो ददौ हवि ।
कौशल्यायै स कैकेय्या अर्द्धमर्द्धं प्रयत्नत. ॥
तत. सुमित्रा सम्प्राप्ता जगृध्नु पौत्रिक चरुम्।
कौशल्या तु स्वभागार्द्धं ददौ तस्यै मुदान्विता ॥
कैकेयी च स्वभागार्द्धं ददौ प्रीतिसमन्विता'। इति। ४।१०।१२

ग्रन्थयोरनयोर्यथाश्रुतार्थग्रहणे सर्वेषामेव रामादीनां चतुर्थांशसम्भवत्व जायते। प्रकृतस्यानयो पद्मपुराणश्लोकयोश्च यथाश्रुतोऽर्थोऽयमेव—वशिष्ठऋष्यशृङ्गाभ्याम् अनुज्ञातो दशरथ अर्द्धमर्द्धम् अर्थात् सम भागद्वय कृत्वा एकभागम् अष्टावशान् कौशल्यायै अपर भागमष्टावशान् कैकेय्यै ददौ। तत सुमित्रायां समुपस्थितायां कौशल्या स्वभागार्द्धं प्रकृते चतुर्थांश तस्यै ददौ, कैकेय्यपि स्वभागार्द्धं प्रकृते चतुर्थांश तस्यै ददौ। तेनैकेन चतुर्थांशेन राम, अपरेण भरत इतरेण लक्ष्मणोऽन्येन च शत्रुघ्न समजनीत्यायातम्।

एवञ्च वाल्मीकिरामायणक्षेमेन्द्रादिभिर्महान् विरोधो जायते। तथा च क्षेमेन्द्रेण—

'ततोऽर्द्धं प्राप कौशल्या चतुर्भागञ्च कैकेयी।
चतुर्भाग सुमित्रा च स्वय तेन द्विधा कृतम् ॥

प्राच्ये वाल्मीकीये आदिकाण्डे च—

'इत्युक्त्वा प्रददौ तस्यै हविषोऽर्द्धं नराधिप ।
सममेव समं कृत्वा भागं भागचतुष्टयम् ॥
अर्द्धादर्द्धं ददौ चापि कैकेय्यै स नराधिप ।
चतुर्भाग द्विधा कृत्वा सुमित्रायै ददौ तदा ॥
प्रददौ चावशिष्ट तत् पायस देवनिर्मितम्।
अनुचिन्त्य सुमित्रायै पुनरेव नराधिप'॥ २०—२२ श्लो०।

अयमाशय.—सम भागचतुष्टयं कृत्वाऽर्द्धभाग भागद्वयमित्यर्थ, कौशल्यायै, अर्द्धात् शिष्टाद् भागद्वयादर्द्धं भागमेक कैकेय्यै, चतुर्भाग चतुर्थो भागश्चतुर्भाग, वृत्तिविषये सङ्ख्याशब्दस्य पूरणार्थत्वात्। त शिष्ट भागं द्विधा कृत्वा भागमेक सुमित्रायै ददौ, ततश्च शिष्टं भाग कस्यै ददामीति अनुचिन्त्य पुन. सुमित्रायै एव ददौ।

उप[1]भुज्य चरु सर्वा स्त्रियो गर्भसमन्विता ।
देवता इव [2]ता रेजु स्वभासा राजमन्दिरे ॥ १७ ॥
दशमे मासि कौशल्या सुषुवे पुत्रम[3]द्वयम् ।
[4]मधुमासे सिते पक्षे नवम्यां [5]कर्कटे [6]शुभे ॥ १८ ॥

१८ । नरो० । अद्वयमद्वैतम् । मधुमासे चैत्रमासे । अत्र मासपद मुख्यचान्द्रमासपरम्, अन्यथा 'मेष पूषणि संप्राप्ते' इति विरुद्ध स्यात् । सिते शुक्ले । कर्कटे कर्कटराशौ । शुभे शुभलग्ने ।

अयञ्च चरुविभागो भविष्यतां रामादीनां यो यावता विष्णोरशेन प्रादु ष्यात् तत्तदंशानुसारेणेति ज्ञेयम् । तथा च रामादीनां जन्मावलम्ब्य वाल्मीकीये—

'विष्णोर्वीर्यार्द्धतो यज्ञे रामो राजीवलोचन । (१।१९।१३)
तथा लक्ष्मणशत्रुघ्नौ सुमित्राऽजनयत् सुतौ ॥ (१।१९।१४)
तावप्यास्तां चतुर्भागौ विष्णो सपिण्डितावुभौ ।
एक एव चतुर्भागादपरस्मादजायत ।
भरतो नाम कैकेय्या पुत्र सत्यपराक्रम ॥ १।१९।१९।१७

अनेन विष्णोर्वीर्यरूपस्य पायसस्यार्द्धभक्षणेन कौशल्यातो राम, अर्द्धादर्द्धस्य चतुर्भागैकभागलक्षणस्य भक्षणेन कैकेय्यां भरत, शिष्टार्द्धस्य चतुर्भागैकभागस्यार्द्धभक्षणेन सुमित्रायां लक्ष्मण अपरार्द्धभक्षणेन च शत्रुघ्न समपद्यत इति निर्गलितोऽर्थ ।

श्रीरामोत्तरतापनीयवचनमप्येनमेव पक्षमङ्गीकरोतीति मन्यते । तथा च—

'अकाराक्षरसम्भूत सौमित्रिर्विश्वभावन ।
उकाराक्षरसम्भूत· शत्रुघ्नस्तैजसात्मक ॥
प्रज्ञात्मकस्तु भरतो मकाराक्षरसम्भव ।
अर्द्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रह ॥' (२।१-२)

अस्यार्थ —रामोऽर्द्धमात्रात्मको ब्रह्मरूपस्य प्रणवस्यार्द्धांशत्त, भरतो मकाराक्षर· प्रणवस्य चतुर्थांशस्तस्मात्, सौमित्रिर्लक्ष्मण· अकाराक्षर· प्रणवस्यैकाष्टमांशस्तत, शत्रुघ्न उकाराक्षर प्रणवस्यापराष्टांशस्तत सम्भूत ।

एतावता रामो अर्द्धांश, भरत एकचतुर्थांश, लक्ष्मण-शत्रुघ्नावपरचतुर्थांशावित्येव प्रमाणतया प्रतिभाति । तदस्मिन् प्रकृतेन विरोधे रामवर्मादीनां मतमेवानुसरणीयं न वेति सुधिय एव विभावयन्त्वित्यल बाहुल्येन ।

१७ । गर्भसमन्विता गर्भैर्युक्ता । गर्भान् विशिनष्टि वाल्मीकीये—
हुताशनादित्यसमानतेजस क्रमेण गर्भानुपलेभिरे शुभान् ॥ १।१९।२३
१८ । कर्कटे कर्कटलग्ने । रा० ।

1 ङ 'युज्य, च 'भोज्य' । 2 ख घ 'रेजुस्ता' । 3 क-ङ '-व्ययम्', ख घ '-दद्भुतन्' । 4 क 'चैत्रे मासि', ग-ङ 'मधुमासि' । 5 ङ 'कर्कटोदये' । 6. च 'गुरौ' ।

पुन[1]र्वस्वृक्षसहित उच्चस्थे ग्रहपञ्चके ।
[2]मेष पूषणि सप्राप्ते पुष्पवृष्टिसमाकुले ॥ १६ ॥
आविरासीज्जगन्नाथ' परमात्मा सनातन ।
नीलोत्पलदलश्याम' पीतवासाश्चतुर्भुज ॥ २० ॥
जलजारुणनेत्रान्तः स्फुरत्कुण्डलमण्डित ।
सहस्रार्कप्रतीकाश किरीटी कुञ्चितालकः ॥ २१ ॥

---

१९ । नरो० । उच्चस्थे उच्चराशिस्थे । तथा च—

मेषो वृषो मृग कन्या कर्कमीनतुलाधरा ।
भास्करादेर्भवन्त्युच्चा राशय क्रमशस्त्विमे ॥
त्रिंशद्भागे दिशो रामा अष्टाविंशस्तिथिस्तथा ।
पञ्च वै सप्तविंशाश्च विंशतिश्चोच्चसज्ञका ॥ इति ।
(वङ्गवासीमुद्रितज्योतिस्तत्त्वे राशिनिर्णये २० पृ०)

२० । नरो० । पूर्वं यादृशविशेषणविशिष्ट रूप दृष्ट्वा परमेश्वरो वर याचितस्तादृश-विशेषणविशिष्ट सन् स आविर्भूत इति सूचयन्नाह—आविरासीदित्यादि । जगतां नाथो जगन्नाथ । नाथ ईश्वरो नियन्तेति यावत् । तन्नियन्तृत्वे हेतु —सनातन इति, शाश्वत इत्यर्थ· । नीलोत्पलदलमिव श्यामो नीलोत्पलदलश्याम । पीत वासो यस्य तादृश ।

२१ । नरो० । जलजमिव अरुणो रक्तो नेत्रान्तो यस्य तादृश· । जलजमत्र रक्तपद्मम् । स्फुरती ये कुण्डले ताभ्यां मण्डितो भूषित· स्फुरत्कुण्डलमण्डितः । सहस्रार्कप्रतीकाश सहस्र-सूर्यतुल्य· । किरीटी मुकुटी ।

---

१९ । पुनर्वस्वृक्षसहिते पुनर्वसुनक्षत्रसहिते इति कर्कलग्नविशेषणम् । ग्रहपञ्चके चन्द्र-बुधव्यतिरिक्ते रवि-भौम-गुरु-भृगु-शनिरूपे, तदुच्चस्थानानि च क्रमेण मेषमकरकर्कमीनतुलाख्यानि । सर्वग्रहास्तोदयस्य रव्यधीनत्वात् तदुच्चस्थान स्फुटयति—मेषमिति । तेन सर्वेषाममस्तगत्वं सूचितम् । रा० ।

२१ । जलजारुणनेत्रान्त जलजं पद्ममिव अरुण रक्तवर्णं नेत्रयोरन्तं यस्य स· । कुञ्चितालक· कुञ्चितम् अलक चूर्णकुन्तल यस्य स । 'अलकं चूर्णकुन्तलमि'ति कोषः ।

---

1 ख '-र्वसर्च्च'। 2. च-छ 'मेषे'।

शङ्खचक्रगदापद्मवनमालावि[1]राजित ।
अनुग्रहा[2]ख्यहृत्स्थेन्दु[3]सूचकस्मितचन्द्रिक ॥ २२ ॥
करुणारससम्पू[4]र्णो विशालोत्पललोचन ।
श्रीवत्सहारकेयूरनूपुरादि[5]विभूषण ॥ २३ ॥
दृष्ट्वा त परमात्मान कौशल्या विस्मयाकुला ।
हर्षाश्रुपूर्णनयना नत्वा प्राञ्जलिरब्रवीत् ॥ २४ ॥

कौशल्योवाच—

देवदेव नम[6]स्तुभ्य शङ्खचक्रगदाधर ।
परमात्माऽच्युतोऽनन्त पूर्णस्त्व पुरुषोत्तम ॥ २५ ॥

---

२२ । नरो० । शङ्खश्च चक्रञ्च गदा च पद्मञ्च वनमाला च एताभिर्विराजितो विशेषेण शोभित । अनुग्रहाख्यस्य हृत्स्थेन्दो सूचिका स्मितचन्द्रिका यस्य तादृश ।

२३ । नरो० । यत करुणारससंपूर्णस्ततो विशाले उत्पले इव विशदे लोचने यस्य तादृश । श्रीवत्सश्च हारश्च केयूरे च नूपुरे च एतदादि भूषणं यस्य तादृश ।

२४ । नरो० । विस्मयश्चमत्कारस्तेनाकुला व्याप्ता विस्मयाकुला । हर्षाश्रुणा पूर्णे नयने यस्यास्तादृशी । प्राञ्जलि पुटीकृतकरा ।

२५ । नरो० । नन्वेतच्छरीरपरिच्छिन्न मां कथ परमात्मानं ब्रवीषि तस्य पूर्णत्वात् परिच्छिन्नस्य पूर्णत्वाभावाच्चेत्यत आह—पूर्ण इति । पूर्णत्वे हेतु —अच्युत इति अनन्त इति च । अच्युतोऽक्षर , अपक्षयशून्य इति यावत् । अनन्तोऽवधिशून्योऽपरिच्छिन्न इति यावत् । अत एव पुरुषोत्तम पुरुषेषु उत्कृष्ट इत्यर्थ ।

---

२२ । अनुग्रहाख्येति । भक्तानुग्रहाख्यो यो हृदयस्थ इन्दुस्तस्य सूचिका स्मितरूपा चन्द्रिका यस्य स । स्मितञ्च—

'ईषद्विकसितैर्गल्लै कटाक्षै सौष्ठवान्वितै ।
अलक्षितद्विज धीरमुत्तमानां स्मित भवेत् ॥' इतिलक्षणम् । रा० ।

२५ । परमात्मा शुद्धबुद्धमुक्तस्वभाव , अच्युत स्वस्वरूपात् कदाऽपि न च्युत , 'शाश्वतं शिवमच्युतम्' ( महानारायणोपनिषत् १।३ ) इति श्रुते । अनन्तोऽनन्तगुण , नित्यत्वादन्तरहित इति । पूर्णो देशकालापरिच्छेद्य पुरुषेभ्य उत्तम सर्वाधिष्ठानत्वात् ।

---

1 च '-भूषित' । 2 च-छ '-ख्य' । 3 ख-ग '-सूचित-', च '-सूचक स्मि-' । 4 ख ग-घ-छ '-र्णवि-' । 5 च '-विराजित' । 6 ख-ग-घ छ '-स्तेऽस्तु' ।

वदन्त्यगोचरं वाचां बुद्ध्यादीनामतीन्द्रियम् ।
त्वां वेदवादिनः सत्तामात्रं ज्ञानैकविग्रहम् ॥ २६ ॥
त्वमेव मायया विश्वं सृजस्यवसि हंसि च ।
सत्त्वादिगुणसंयु[1]क्तस्तुर्य एवामलः सदा ॥ २७ ॥

---

२६। नरो०। ननु वेदज्ञा त्वं मां परमात्मानं ब्रवीषि, वेदज्ञाः कथं वक्ष्यन्तीत्यत आह—वदन्तीति। बुद्ध्यादीनां बुद्धिमनश्चित्ताहङ्काराणामन्तरिन्द्रियाणामगोचरत्वे हेतुः—अतीन्द्रियमिति। अतीन्द्रियत्वे हेतुः—ज्ञानैकविग्रहमिति, केवलज्ञानस्वरूपमित्यर्थः।

२७। नरो०। ननु सृष्टिस्थितिप्रलयकर्तृत्वाभावात् कथमहमीश्वर इत्यत आह—त्वमेवेत्यादि। ब्रह्मरूपेण सृजसि, विष्णुरूपेणावसि, रुद्ररूपेण हंसीत्यर्थः। तथा च सिद्धान्तबिन्दुः—

'तत्रेश्वरोऽपि त्रिविधः, स्वोपाधिभूताविद्यागुणत्रयभेदेन विष्णुब्रह्मरूपभेदात्। कारणीभूतसत्त्वगुणावच्छिन्नो विष्णुः पालयिता। कारणीभूतरजउपहितो ब्रह्मा स्रष्टा। कारणीभूततमउपहितो रुद्रः संहर्ता' ( चौखाम्बा संस्कृतसिरिज ८ श्लोकव्याख्या, ) इति। ब्रह्मादयस्तवैवावतारा न तु स्वतन्त्रा इति भावः। ननु तर्हि कर्मबद्धस्य मम परमात्मत्वं कुत इत्यत आह—तुर्य एवेति। साक्षीवेत्यर्थः। अत एवामलः सदा। तथा च श्रुतिः—'शिवमद्वैतं चतुर्थं मन्यन्ते' इत्यादि। श्रीशङ्कराचार्यश्लोकश्च यथा—

'न जाग्रन्न मे स्वप्नको वा सुषुप्तिर्न विश्वो न वा तैजसः प्राज्ञको वा।
अविद्यात्मकत्वात् त्रयाणां तुरीयस्तदेकोऽवशिष्टः शिवः केवलोऽहम्' ॥ इति।

( निर्वाणदशकम् ।६ )

अविद्यान्तःकरणस्थूलशरीरावच्छिन्नो जाग्रदवस्थाभिमानी विश्वः, स एव स्थूलशरीराभिमानरहित उपाधिद्वयोपहितः स्वप्नावस्थाभिमानी तैजसः, शरीरान्तःकरणोपाधिद्वयरहितोऽन्तःकरणसंस्कारावच्छिन्नाविद्यामात्रोपहितः सुषुप्त्यवस्थाभिमानी प्राज्ञः इति।

---

२६। वाचां बुद्ध्यादीनामिन्द्रियाणां चागोचरं वदन्ति, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' (तैत्ति० आरण्य० ८।४।१) इत्यादिश्रुतेः। वागादिसर्वद्रष्टृत्वाच्च न तासां विषयः। न हि घटादिप्रकाशको दीपो घटादिविषयो भवति, अत एव त्वामतीन्द्रियं वेदवादिनो वेदज्ञा वदन्ति। ते त्वां सत्तामात्रं सर्वत्र स्वसम्बन्धवत् सदिति व्यवहारोपपादकम्, 'सर्वाः प्रजाः सदायतनाः' ( छान्दो० ६।८।४ ) इति श्रुतेः। ज्ञानैकविग्रहं 'सत्यं ज्ञानम्' इति श्रुतेः। वदन्ति। रा०।

२७। परमार्थतस्तु निर्गुण एव त्वमित्याह—तुर्य एवेति। तत्तद्गुणसंयुक्तोक्तमूर्तित्रयापेक्षया चतुर्थ इत्यर्थः। यद्वा जाग्रत्स्वप्नसुषुप्त्यवस्थासु विश्वतैजसप्राज्ञेभ्यस्तुर्य इत्यर्थः। 'न बहिः प्रज्ञं नान्तः प्रज्ञं नोभयतः प्रज्ञम्' ( माण्डूक्य० ६ ) इति श्रुतेः। इयं हि क्रमेण जाग्रत्स्वप्नसुषुप्त्यवस्था निषेधति, अत एव सदा अमलो मायागुणास्पृष्टत्वादित्यर्थः। रा०।

---

1. क '-क्तः, सूर्यः'।

करोषीव न कर्त्ता त्वं गच्छसीव न गच्छसि ।
न शृणोषि शृणोषीव पश्यसषीव न पश्यसि ॥ २८ ॥
अप्राणो [1]ह्यमना शुद्ध इत्यादि श्रुतिरब्रवीत् ।
सम सर्वेषु भूतेषु तिष्ठन्नपि न लक्ष्यसे ॥ २९ ॥
अज्ञानध्वान्तचित्तानां व्यक्त एव सुमेधसाम् ।
जठरे तव दृश्यन्ते ब्रह्माण्डाः परमाणवः ॥ ३० ॥

२९। नरो०। ननु कर्तृत्वादिमत्त्वान्मम कथं साक्षीभूतत्वमित्यत आह—अप्राण इति। ननु 'अन्योऽन्तरात्मा मनोमयः' (तैत्ति० २।३।१) इति श्रुतेर्मनस एवात्मत्वं न तु ममेत्यत आह—अमना इति। अनया प्रबलश्रुत्या तयोर्बाधितत्वान्नास्ति विरोधः। अथवा ननु प्राणादिमतो मम कुतो गमनादिकमपलपसीत्यत आह—अप्राण इत्यादि। प्राणादिशून्यः, अत एव शुद्धः शुभो रागादिदोषरहित इत्यर्थः। सम इति शत्रुमित्रविवेकशून्य इत्यर्थः, रागद्वेषरहित इत्यर्थो वा। सर्वेषु भूतेष्विति, उभयत्र योज्यम्। ननु यदि सर्वेषु भूतेष्वहं विद्ये, तर्हि तदभिभावकमाययाऽभिभूतत्वान्मम कथमीश्वरत्वमित्यत आह—न लिप्यसे इति, भूतगतसुखदुःखादिभिरिति शेषः। न लक्ष्यसे इति पाठो वा।

३०। नरो०। ननु यद्यहं परमेश्वरस्तदा तवोदरे कथं सम्भूतश्चेत्याह—जठरे इत्यादि।

२८। अमलत्वं सूचितम्, निर्विकारत्वमेव स्फुटयति—करोषीवेति। मायागतकृतिगत्यादिभिस्तद्वानिव भासि वस्तुतो विकारहीनत्वान्न कर्तेत्यादि।

अकुर्वन् सर्वकृच्छुद्धस्तिष्ठन्नत्येति धावतः।
मायया सर्वशक्तित्वादजः स बहुधा मतः॥

इत्यभियुक्तोक्तेः। रा०।

२९। निर्विकारत्वे हेतुः श्रुतिदर्शित इत्याह—अप्राण इति।

दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः।
अप्राणो ह्यमनाः शुद्धोऽक्षरात् परतः परः ॥ (२।२)

इति मुण्डकश्रुतिः। प्राणाद्युपाधिरहितः, अत एव कृतिगत्यादिरहित इति भावः। रा०।

[ तिष्ठन्नपि न लक्ष्यसे इति तद्दर्शने इन्द्रियस्यासामर्थ्याद् यथा दुग्धस्य शौक्ल्यमेव चक्षुषा गृह्यते न तु माधुर्यम् एवं ज्ञानेन वेद्यस्येन्द्रियैः कुतो ग्रहणम्। गो० ]

३०। [ अज्ञानमेव ध्वान्तं तेनाऽऽवृतं चित्तं येषां तैरित्यर्थः। तृतीयायां षष्ठी। सुमेधसां निर्मलबुद्धीनां व्यक्त एव सर्वत्र ब्रह्मत्वेन स्फुरणात्। तथा च श्रुतिः—'सर्वं खल्विदं ब्रह्म' (छान्दो० ३।१४।१) गो० ]

1 ग-घ '-ह्यमलः शुभः', च 'ह्यमलः'।

त्वं ममोदर[1]सम्भूत इति लोकान् विडम्बसे ।
[2]भक्तेषु पारवश्य ते दृष्ट मेऽद्य [3]रघूत्तम ॥ ३१ ॥
संसारसागरे मग्ना पतिपुत्रधनादिषु ।
भ्रमामि मायया तेऽद्य पादमूलमुपागता ॥ ३२ ॥
देव त्वद्रूपमेतन्मे सदा तिष्ठतु मानसे ।
आवृणोतु न मां माया तव विश्वविमोहिनी ॥ ३३ ॥

---

३१ । नरो० । विडम्बसे वञ्चयसि । ननु यदि मम रूप बुद्ध्यादीनामप्यगोचर तर्हि त्वया कथं दृष्टमित्यत आह—भक्तेषु पारवश्यमिति । अधीनत्वमित्यर्थ ।

३२-३३ । नरो० । ननु मां किमर्थं स्तौषि, तव किं करिष्यामीति चेत्तत्राऽऽह—संसारसागरे मग्नेत्यादि । संसारसागरे मग्ना भ्रमामि पुन पुनर्जन्ममरणादिकं प्राप्नोमीत्यर्थ । हे देव, यतो मायया पतिपुत्रधनादिषु सक्ता ससारसागरे मग्ना भ्रमामि अतस्तेऽद्य पादमूलमुपागता । अत एतद्रूप मे मम मानसे तिष्ठतु । एतद्रूपस्य सदा तव हृदयस्थितौ किं फलमिति चेत्तत्राऽऽह—आवृणोत्विति । तवाऽऽवरणे मायाया कथ शक्तिरिति चेत्तत्राऽऽह—विश्वविमोहिनीति । चेतसा तव निरन्तरैतद्रूपधारणेनाविद्यानिवृत्तौ संसारनिवृत्तिर्भविष्यतीति भाव ।

---

अज्ञानध्वान्तचित्तानाम् अज्ञानान्धकारवच्चित्तैरित्यर्थ । सुमेधसा सुमेधोभिर्ज्ञानप्रदीप्तहृदयैरित्यर्थ , व्यक्त स्फुटीभूत एव लक्ष्यसे त्वमिति भाव । शेषे षष्ठी । मया तु तवैवानुग्रहेणैव तव जठरे ब्रह्माण्डा परमाणव इव दृश्यन्ते ।

३१ । ननु यदि ममोदरे ब्रह्माण्डा दृश्यन्ते तदा कथ मम तवोदरजातत्वमित्यत आह—लोकान् विडम्बसे इति । भक्तेषु पारवश्यमिति । एतत्तु कृष्णावतारादौ भागवतादिषु स्फुटमेव ।

[ननु यदि परब्रह्मैवाहम् इच्छामात्रेण सर्वं कर्त्तुं शक्नोमि तदा किं जठरप्रवेशविडम्बनेनेत्याह—भक्तेष्विति । एतेन भक्तवशतामात्मन ख्यापयितुं तव जन्म । गो० ]

३३ । द्योतनाद्देव दीप्तिमन्, तव एतत् प्रोज्ज्वल रूप मे मानसे हृदि सदा तिष्ठतु । ससारजन्यपापादिना कदाचित् समलेऽपि मानसे तवैतद्रूपस्यासद्भावो मा भवत्वित्याह—सदेति । ननु ममैतद्रूपस्यावस्थानेन किमित्यत आह—आवृणोत्विति । तव विश्वविमोहिनी माया अघटनघटनासामर्थ्यवती प्रकृतिरूपा । 'मायान्तु प्रकृतिं विद्यादि'ति श्रुते । न मामावृणोतु । तवैतद्रूपावस्थानेन मनसस्तद्गतत्वाद् मायाया प्रवेशो न सम्भवतीति भाव ।

'मामेव ये प्रपद्यन्ते मायामेता तरन्ति ते' इत्युक्ते ।

---

1. ग '-सञ्जात' । 2 ङ 'भक्तेषु' । 3. क-ङ 'रघूद्वह' ।

उपसंहर विश्वात्म[1]न्नेतद्रूपमलौकिकम् ।
दर्शयस्व महा[2]नन्द बालभावं सुकोमलम् ।
ललितालिङ्गनालापैस्तरिष्याम्युत्कटं तमः ॥ ३४ ॥

श्रीभगवानुवाच—

यद्द यदिष्टं तवास्त्यम्ब तत्तद्द भवतु नान्यथा ॥३५॥
अहन्तु ब्रह्मणा पूर्वं भूमेर्भा[3]रापनुत्तये ।
प्रार्थितो रावणं हन्तुं मानुषत्वमुपागतः ॥३६॥
त्वया दशरथेनाहं तपसाराधितः पुरा ।
मत्पुत्र[4]त्वाभिकाङ्क्षिण्या तथा कृतमनिन्दिते ॥३७॥
रूपमेतत् त्वया दृष्टं [5]प्राक्तनं तपसः फलम् ।
मद्दर्शनं विमोक्षाय कल्पते ह्यन्यदुर्लभम् ॥३८॥

---

३४। नरो०। मम गृहे बालरूपेणैतस्मिन् परमेश्वरे स्थिते सद्गतिरालिङ्गनचुम्बनादिजन्यसुखं च भविष्यतीति हृदि निधायाऽऽह—उपसंहरेत्यादि। अलौकिकं लोकातीतम्। महान् आनन्दो यस्मात् स चासौ बालभावश्चेति तम्। बालभावो बालस्वभावः। ललितालिङ्गनालापैर्मनोहरालिङ्गनभाषितैः, तमः संसारोऽज्ञानं वा।

३६। नरो०। भारापनुत्तये भारखण्डनाय।

---

३४। निखिलेभ्यो भावेभ्यो बालभावस्य स्वानुभवयोग्यत्वं प्रकटयन्त्याह—उपसंहरेति। हे विश्वात्मन्, अलौकिकं लोकातिगं मानुषस्वभावेनानुभवितुमशक्यमित्यर्थः। सुकोमलम् अनायासेनैवानुभवितुं शक्यमित्यर्थः, बालभावं दर्शयस्व। बालभावदर्शनेन तव किमिष्टं स्यादित्याह—ललितेति। ललितालिङ्गनालापादिभिरुत्कटम् अतिभयङ्करं तमः संसारज्ञानान्धकारं तरिष्यामि।

३७। तर्हि प्रथममेव किं तथा रूपं न कृतमत आह—त्वयेति। अहं पुत्रो यस्यास्तद्भावो मत्पुत्रत्वमतस्तत्प्रकटीकर्तुं तथा कृतमित्यर्थः। रा०।

[ दशरथेन सह। मत्पुत्रत्वाभिकाङ्क्षिण्येति अहमेव पुत्रो यस्याः सा मत्पुत्रा तस्या भावो मत्पुत्रत्वं तदाकाङ्क्षिण्या। गो० ]

३८। अन्यदुर्लभम् अन्यैर्भक्तातिरिक्तैर्जनैर्दुर्लभं दुष्प्रापं मद्दर्शनं मत्कर्तृकं मत्कर्मकं वाऽवलोकनं विमोक्षाय जन्ममृत्युबन्धादिराहित्येन विष्णुसायुज्यलाभाय।

---

1 ख-घ-छ 'न्नदो रूप'। 2 क '-नन्द', ग '-भाग'। 3 ङ '-राव-'। 4 ग '-ताभि-'। 5 च 'प्राप्ता तु'।

संवादमावयोर्यस्तु पठेद्वा श्रृणुयादपि ।
स याति मम सारूप्यं मरणे मत्स्मृतिं लभेत् ॥३९॥
इत्युक्त्वा मातरं रामो बालो भूत्वा रुरोद ह ।
[1]बालत्वेऽपीन्द्रनीलाभो विशालाक्षोऽतिसुन्दरः ॥४०॥
बालारुणप्रतीकाशो लालिताखिललोकपः ॥४१॥
अथ राजा दशरथः श्रुत्वा [2]पुत्रभवोत्सवम् ।
आनन्दार्णवमग्नोऽसावाययौ गुरुणा सह ॥४२॥
रामं राजीवपत्राक्षं दृष्ट्वा हर्षाश्रु[3]सम्प्लुतः ।
गुरुणा जातकर्माणि कर्तव्यानि चकार सः ॥४३॥
कैकेयी चाथ भरतमसूत कमले[4]क्षणम् ।
सुमित्रायां [5]यमौ जातौ पूर्णेन्दुसदृशाननौ ॥४४॥

---

३९ । नरो० । सारूप्यं समानरूपत्वम् । मरणे मरणसमये । पाठफलं सारूप्यप्राप्तिः, श्रवणफलमन्ते स्मरणलाभः ।

४० । नरो० । अन्यबालवैलक्षण्यं सूचयन्नाह—बालत्वेऽपीति । इन्द्रनीलस्येव इन्द्रनीलमणेरिव आभा कान्तिर्यस्य तादृशः । विशाले दीर्घे अक्षिणी यस्य तादृशः । आभ्यामेवातिसुन्दरोऽतिमनोहर इत्यर्थः ।

४१ । नरो० । बालारुणप्रतीकाशो बालसूर्यतुल्यः । लालिता अखिललोकपा येन तादृशः ।

४२ । नरो० । आनन्दार्णवमग्नः प्राप्तानन्दातिशय इति पर्यवसितार्थः ।

४३ । नरो० । राजीवपत्रे इव अक्षिणी यस्य तादृशम् । राजीवं पद्मम् । हर्षाश्रुसंप्लुतो हर्षजन्यधाराधिरूढाश्रुव्याप्त इति पर्यवसितार्थः ।

---

४१ । लालिताखिललोकपः स्वावतरणेन लालितास्तोषिता अखिललोकपा इन्द्रादयो येन । रा० । [ लालिता पालिता अखिललोकपा ब्रह्माद्या येन स सर्वेश्वर इत्यर्थः । गो० ] बालारुणप्रतीकाशो बालसूर्यवन्निर्मलशान्तप्रभः । लालिताखिललोकपः अवतारेणानेन लालिता रावणादिदेवशत्रुविनाशेन तोषिता अखिलाः समग्रा लोकपा लोकपाला इन्द्रादयो येन सः ।

४२ । पुत्रोद्भवः पुत्रोत्पत्तिस्तद्रूपमुत्सवम् । रा० ।

४३ । राजीवं कमलम् । गुरुणेति करणे तृतीया । जातकर्माणि बहुवचनेन नामकरणपर्यन्तकर्तव्यषष्ठीपूजादिसंग्रहः । रा० ।

---

1 ग 'बालो महेन्द्र-', क 'बालत्वे इन्द्र-' । 2 ङ च 'पुत्रोद्भवो-' । 3 च 'सयुत' । 4 ख-घ '-क्षणा' । 5 क-ख 'समौ' ।

तदा ग्रामसहस्राणि ब्राह्मणेभ्यो [1]मुदा ददौ ।
सुवर्णानि च रत्नानि वासांसि सुर[2]भीः शुभाः ॥४५॥
यस्मिन् रमन्ते मुन[3]योऽविद्याज्ञानपरिप्लवे ।
त गुरु' प्राह रामेति रमणाद्राम इत्यपि ॥४६॥
भरणाद् भरतो नाम लक्ष्मण लक्षणान्वितम् ।
शत्रुघ्न शत्रुहन्तारमेव गुरुरभाषत ॥ ४७ ॥
लक्ष्मणो रामचन्द्रेण शत्रुघ्नो भरतेन च ।
द्वन्द्वीभूय चरन्तौ तौ पाय[4]सांशानुसारत' ॥ ४८ ॥
रामस्तु लक्ष्मणेनाथ [5]विचरन् बाललीलया ।
रमयामास पितरौ चेष्टितै[6]र्मुग्धभाषितैः ॥ ४९ ॥

---

४५ । नरो० । सुरभीर्गा· शुभा सुखसन्दोह्या· पयस्विनीर्गा ।

४६ । नरो० । अत्राज्ञानपदेन तत्कार्यसञ्चितकर्मसंशयविपर्ययादयो लक्ष्यन्ते, अविद्या च अज्ञानानि च तेषां परिप्लवे निवृत्तौ, अथवा अविद्याया अज्ञानस्य, परिप्लवो निवृत्तिर्यस्मिन्, अथवा अविद्याया यो ज्ञानरूप परिप्लव परिणामस्तस्मिन्, अथवा अविद्या च अज्ञानञ्च तयो' परिप्लव । राम इत्यत्र ण्यन्त इति डडादित्वान्त· (?) ।

४७ । नरो० । भरत इति भादेरत इत्यतो बहुलवचनाद् गुणे च कृते सिद्धम् । लक्ष्मणमित्यत्र अर्श-आदेरित्यत्प्रत्यय' कार्य· ।

४८ । नरो० । द्वन्द्वीभूय युगलीभूय ।

४९ । नरो० । रमयामास क्रीडयामास प्रीणयामास वा । मुग्धभाषितै सुन्दरालापै· ।

---

४६—४७ । अथ नामकरणे नाम्नामन्वर्थत्व दर्शयति—यस्मिन्निति । विद्यया तत्त्वज्ञानेन अज्ञानविप्लवे अज्ञाननाशे तन्निमित्त यस्मिन् योगिनो रमन्ते इत्येक· । योगान्तरमाह रमणाद् भक्तानां वपु सौन्दर्येण रमणाद्राम इत्यपि योग इति शेष । रमणं राम भावे घञ्, तं करोति रमयतीति णिच्, रमयति राम· णिजन्तादच्, तथा च भक्तान् रमयतीति फलितोऽर्थ· । रा० ।

४८ । पायसांशानुसारत· कौशल्यापायसांशत्वात् लक्ष्मणो रामानुचर', कैकेयीपायसांशत्वाच्च शत्रुघ्नो भरतानुचर इत्यर्थ· । रा० ।

---

1 ग-घ-ङ 'ददौ मुदा' । 2 ङ 'भीस्तदा' । 3 क-ख-ग-घ-ड-च-ङ 'यो विद्ययाऽज्ञानविप्लवे' । 4 ख 'सान्नानु-' । 5 च 'व्यचरद्' । 6 क-ड '-र्म्रदु-' ।

भाले स्वर्णमयाश्वत्थ[1]पर्णमुक्ताफलप्रभम् ।
कण्ठे [2]रत्नमणिव्रा[3]तमध्यद्वीपिनखाञ्चितम् ॥ ५० ॥
कर्णयोः स्वर्णसम्पन्न[4]रत्नार्जुनचलालकम् ।
शिञ्जानमणिमञ्जीरकटिसूत्राङ्गदै[5]र्युतम् ॥ ५१ ॥
स्मित[6]वक्त्राल्पदशनमिन्द्रनील[7]मणिप्रभम् ।
अङ्गने रिङ्गमाणं त तर्णकाननु सर्वत ॥ ५२ ॥

---

५०। नरो०। स्वर्णमय यदश्वत्थपर्णमश्वत्थदलाकारम्, तच्च मुक्ताफलानि च तेषां प्रभा यस्य तादृशम्, स्वर्णमयं स्वर्णविकार·। कण्ठे रत्न मणिव्रातो यस्य तादृशम्। 'रत्न स्वजातिश्रेष्ठेऽपी'त्यमर । व्रात· समूहे । द्वीपिनखाञ्चित व्याघ्रनखाञ्चितम् ।

५१। नरो०। कर्णयो· स्वर्णसम्पन्नानि सुवर्णाढ्यानि यानि रत्नानि मणयस्तैरर्जुना धवलाश्चलाश्चञ्चला अलकाश्चूर्णकुन्तला यस्य तादृशम्। शिञ्जानौ शब्द कुर्वन्तौ मणिखचितौ यौ मञ्जीरौ तौ च कटिसूत्रञ्च अङ्गदञ्च त । कटिसूत्र कट्याभरणविशेष· ।

५२। नरो०। स्मितयुक्त यद् वक्त्र ये चाल्पदशना क्षुद्रदन्तास्तैर्मिश्रा नीलमणिप्रभा यस्य तादृशम्। रिङ्गमाण गच्छन्तम्। तर्णकान् वत्सान् ।

---

५०। रत्नमणिव्रातेत्यादि। रत्नमणीनां व्रात समूहस्तन्मध्ये वर्तमान यद्द्वीपिनख व्याघ्रनखं तेनाञ्चित मण्डितम् ।

व्याघ्रव्यालगजान् सिंहानश्वोष्ट्रमहिषान् वृषम् ।
भूषणेषु त्यजेदष्टौ यदीच्छेच्चिरजीवितम् ॥

इति यदुक्तं तत्तु भूषणेषु व्याघ्राद्याकारचित्रनिषेधपरम्, न तु मुख्यव्याघ्राद्यवयवनिषेधपरम् ।

५१। स्वर्णै सम्पन्नानि घटितानि रत्नानि यस्मिन् तत्, अर्जुनवृक्षस्य शटालकमपक्वफलं तदाकार भूषणं यस्य रत्नार्जुनशलाटुकमिति पाठान्तरम्। अर्थस्तुल्य·। शिञ्जाना शब्दयुक्ता ये मणयस्तद्युक्तैर्मञ्जीरकटिसूत्राङ्गदैर्वृतम्। मञ्जीर· पादभूषणम्, अङ्गदो बाहुभूषणम्। रा०।

५२। स्मितमीषद्धास्ययुक्तं वक्त्रं यस्य स चासावल्पदशनश्चेति तम्। तर्णकान् सद्योजातगोवत्सान् 'सद्योजातस्तु तर्णक·' इत्यमरः। अनु गोवत्सपुच्छधारणपूर्वं रिङ्गमाणं बालविचेष्टितेन क्रीडन्तम् ।

---

1 गं च '-पर्ण मु-'। 2 क 'लग्न- । 3 ग ङ-च छ -त मध्ये द्वीपि-'। 4 क '-रत्नोज्वल-कपोलकम्', ख 'रत्नार्जुनशटाकुलम्', ग 'रत्नार्जुनकपोलकम्', च '-स्थूलमुक्ताफलाकुलम्', छ '-स्थूल-मुक्ताशटाकुलम्'। 5 ग घ 'र्वृतम्'। 6 छ '-मन्दाल्प'। 7 च '-समप्र'।

दृष्ट्वा दशरथो राजा कौशल्या मुमुदे तदा ।
भोक्ष्यमाणो दशरथो [1]राममेहीति चासकृत् ॥ ५३ ॥
आह्वयत्यति[2]हार्देन प्रेम्णा नाऽऽयाति लीलया ।
आनयेति च कौशल्यामाह सा सस्मिता सुतम् ॥ ५४ ॥
धावत्यपि न शक्नोति स्प्रष्टुं योगिम[3]नोऽतिगम् ।
प्रहसन् स्वयमायाति कर्दमाङ्कितपाणिना ॥ ५५ ॥
किञ्चिद् गृहीत्वा कवलं पुनरेव पलायते ।
[4]कौशल्या जननी तस्य मासि मासि प्रकुर्वती ॥ ५६ ॥
वायनानि विचित्राणि समलङ्कृत्य राघवम् ।
अपूपान् मोदकान् कृत्वा कर्णशष्कुलिकास्तथा ॥ ५७ ॥
कर्णपूरांश्च विविधान् वर्षवृद्धौ च वायनम् ।
गृहकृत्यं तया त्यक्त तस्य चापल्यकारणात् ॥ ५८ ॥
एकदा रघुनाथोऽसौ गतो मातरमन्तिके ।
भोजन देहि मे मातर्न श्रुत कार्यसक्तया ॥ ५९ ॥
ततः क्रोधेन भाण्डानि लगुडेनाहनत्तदा ।
शिक्यस्थं पातयामास गव्यञ्च नवनीतकम् ॥ ६० ॥
लक्ष्मणाय ददौ रामो भरताय यथाक्रमम् ।
शत्रुघ्नाय ददौ पश्चाद्दधि दुग्धं तथैव च ॥ ६१ ॥
सूदेन कथित मात्रे हास्यं कृत्वा प्रधावति ।
आगतां तां विलोक्याथ तत सर्वं पलायितम् ॥ ६२ ॥

---

५५ । योगिमनोऽतिगं योगिनां मनांसि अतिक्रम्य गच्छतीति तम्, योगिनो योगबलेनापि यं मनसि विधारयितु न शक्तास्तादृशमित्यर्थः, कर्दमाङ्कितपाणिनेति उपलक्षणे तृतीया ।

५६ । कवलं ग्रासम् ।

५७ । पुत्रादिकल्याणमुद्दिश्य सधवाभ्यो दीयमानभक्ष्यविशेषवायनानि प्रकुर्वती बभूवेति शेषः । कर्णशष्कुलिका कर्णपूरादयो भक्ष्यविशेषाः, वर्षवृद्धिर्वर्षारम्भदिनकर्तव्यं कर्म । रा० ।

६२ । सूदेन सूपकारेण पाचकेनेत्यर्थः ।

---

1. ग 'राम एही' । 2. ख व '-हर्षेण' । 3. ख-व '-नोगतिम्', च '-नोगतम्' । 4 ग-ङ-च-छ-पुस्तकेषु अत आरभ्य द्विषष्टितमश्लोकान्तोऽशो नास्ति ।

कौशल्या धावमानाऽपि प्रस्खलन्ती पदे पदे ।
रघुनाथं करे धृत्वा किञ्चिन्नोवाच भाविनि ॥ ६३ ॥
बालभावं समाश्रित्य मन्दं मन्दं रुरोद ह ।
ते सर्वे लालिता मात्रा गाढमालिङ्ग्य यत्नतः ॥ ६४ ॥
एवमानन्दसन्दोहजगदानन्दकारकः ।
मायाबालवपुर्धृत्वा रमयामास दम्पती ॥ ६५ ॥
अथ कालेन ते सर्वे कौमारं प्रतिपेदिरे ।
उपनीता वशिष्ठेन सर्वविद्याविशारदाः ॥ ६६ ॥
धनुर्वेदे च निरताः सर्व[1]शास्त्रास्त्रवेदिनः ।
बभूवुर्जगतां नाथा लीलया नररूपिणः ॥ ६७ ॥

---

६५ । नरो० । आनन्दानां सन्दोहः समूहो यस्मात्तादृशः ।

६६ । नरो० । कौमारं पञ्चमाब्दान्तम् । उपनीता गायत्रीदानार्थमात्मसमीपं प्रापिता ।

---

६५ । आनन्दानां सन्दोहः समूहस्तेन, जगतां निखिलानां प्राणिनाम् आनन्दकारको हर्षविधायकः स रामो मायया छद्मनेत्यर्थः, बालवपुर्धृत्वा दम्पती कौशल्यादशरथौ रमयामास तोषयामासेत्यर्थः ।

६६ । [ कौमारमिति । तथा च—

कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि ।
कैशोरमापञ्चदशं यौवनन्तु ततः परम् ॥ इति । गो० ]

ते सर्वे रामादयः कालेन कालातिक्रमेण कौमारं पञ्चमाब्दान्तकालं प्रतिपेदिरे प्राप्तवन्तः । अथ अनन्तरं कौमारातिक्रमानन्तरं पौगण्डे प्राप्ते इत्यर्थः, वशिष्ठेन स्वकुलगुरुणा उपनीताः । ननु—

गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥ (२।३६)

इति मानववचनेन पौगण्डात् परमेकादशे वर्षे एव क्षत्रियाणामुपनयनस्य युक्तत्वात् कथमुक्तं कौमारात् परमिति ? सत्यम्—

'ब्रह्मवर्चसकामेन कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥ (२।३७)

इति मनूक्तविशेषवचनेन बलार्थिनां तेषां कौमारात् परं षष्ठे वर्षे उपनयनं युज्यत एव इत्यविरोधः ।

---

1 ख च '-शास्त्रार्थ-' ग 'शास्त्रार्थवादिनः-' ।

लक्ष्मणस्तु [1]सदा राममनुगच्छति [2]सादरम् ।
सेव्यसेवकभावेन शत्रुघ्नो भरतं तथा ॥ ६८ ॥
रामश्चापधरो नित्यं [3]तूणीबाणान्वित: प्रभु: ।
अश्वारूढो वनं याति मृगयायै सलक्ष्मणः ॥ ६९ ॥
हत्वाऽदुष्टमृगान् [4]वन्यान् पित्रे सर्वं न्यवेदयत् ॥ ७० ॥
प्रातरुत्थाय सुस्नात: पितरावभिवाद्य च ।
पौर[5]कार्याणि सर्वाणि करोति विनयान्वितः ॥ ७१ ॥
बन्धुभिः सहितो नित्यं [6]भुक्त्वा मुनिभिरन्वहम् ।
धर्मशास्त्र[7]रहस्यानि शृणोति [8]व्याकरोत्यपि ॥ ७२ ॥
एवं परात्मा मनुजावतारो मनुष्यलोकाननुसृत्य [9]सर्वान् ।
चक्रेऽ[10]विकारी परिणामहीनो विचार्यमाणो न करोति किञ्चित् ॥ ७३ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसवादे आदिकाण्डे
तृतीयोऽध्याय ॥ ३ ॥

---

७३ । नरो० । परिणामित्वरूपजगदुपादानत्वं वारयितुमाह—परिणामहीन इति । तत्राऽऽहु:—अविकारीति विकारशून्य इत्यर्थः ।

[ बालकाण्डे तृतीयाध्यायव्याख्या समाप्ता ॥ ३ ॥ ]

---

७० । [ मेध्यमृगान् कर्मोपयोगिमृगान् । अदुष्टमृगानिति पाठेऽप्ययमर्थ । गो० ]

७३ । न करोतीत्यत्र हेतुरविकारी, परिणामहीन इति अविकारीत्यस्यैव व्याख्यानं परिणामहीन इति । रा० ।

[ एवमित्यादि । मनुष्यलोकाननुस्मृत्य नराकारमनुकृत्य सर्वं चक्रे । विचार्यमाणे तस्य याथार्थ्ये विचार्यमाणे स्वय किञ्चिदपि न करोति । यत परिणामहीन , तत् कुत: ? अविकारी स्वभावतो विकाररहित । तदेव कुत ? यत परात्मा परमात्मा । गो० ]

---

1 च 'तदा' । 2 'सादर' । 3 च 'शरतूणीसमन्वित', क 'तूणीबाणसमन्वित' । 4 ख-च 'सर्वान्', च 'रम्यान्' । 5 क '-कर्माणि' । 6 क 'भक्त्या' । 7. क 'पुराणानि' । 8 ख-घ-क 'व्याकरोति च' । 9 च 'सम्यक्' । 10. च 'विकारान्' ।

# चतुर्थोऽध्यायः

श्रीमहादेव उवाच—

कदाचित् कौशिकोऽ[1]भ्यायादयोध्यां [2]ज्वलनप्रभः।
द्रष्टुं रामं परात्मानं जातं ज्ञात्वा [3]स्वमायया ॥ १ ॥
दृष्ट्वा दशरथो राजा प्रत्युत्थायाचिरेण [4]तु।
वशिष्ठेन समा[5]गम्य पूजयित्वा यथाविधि ॥ २ ॥
[6]प्रत्युवाच मुनिं राजा प्राञ्जलिर्भक्तिनम्रधीः।
कृतार्थोऽस्मि मुनी[7]न्द्राहं त्वदागमनकारणात् ॥ ३ ॥
त्वद्विधा यद् गृहं यान्ति तत्रैवाऽऽयान्ति सम्पदः ॥ ४ ॥

---

१। अथ परमपुरुषदर्शनेनात्मशुद्धिविधानार्थं यज्ञविघ्ननिवारणाय रामनयनार्थञ्च अयोध्यायां कौशिकागमनमाह—कदाचिदिति। कौशिको गाधिपुत्रो विश्वामित्रः। ज्वलनप्रभः उद्दीप्तवह्निप्रतिमः। एतेन तस्य तपःप्रभावोत्पन्नानन्यसाधारणत्वं दुर्द्धर्षत्वञ्च सूचितम्। परमात्मानमिति परमश्चासौ आत्मा चेति तम्।

'रामः परात्मा प्रकृतेरनादिः' इत्युक्तेः।

स्वमाययेति। स्वया मायया, जातमुत्पन्नम्। अव्ययस्य जन्मपरिग्रहो मायामात्रमिति भावः। 'समायये'ति पाठे मायया मूलप्रकृत्या सीतया सहेत्यर्थः। 'मायां तु प्रकृतिं विद्यात्' इत्युक्तेः। वाल्मीकिरामायणे दशरथस्य दर्शनार्थं कौशिकागमनम्, न तु रामस्य दर्शनार्थम्। तथा च—

'एतस्मिन्नेव काले तु विश्वामित्र इति श्रुतः।
महर्षिरभ्ययाद्द्रष्टुमयोध्यायां नराधिपम् ॥ १।१८।३८ इति।

२। अचिरेण शीघ्रं प्रदर्शनाव्यवहितोत्तरकाले प्रत्युत्थाय वशिष्ठेन समागम्य अवहितो भूत्वेति यावत्। पूजने मुनिः कर्म। रा०।

अचिरोत्थानं दशरथस्य स्वकर्तव्येषु स्वावहितत्वं सूचयति। पूजयित्वा मुनिमिति शेषः।

३। नम्रशरीरत्वेन नम्रधीत्वानुमानम्। त्वदागमनरूपात् कारणादित्यर्थः। रा०।

४। तत्रैव तद्गृह एव, भवदाद्यागमनस्य सकलसम्पत्प्रतिबन्धकदुरितनाशकत्वादिति भावः।

---

1 ख-घ-च '-भ्यागा'। 2 ख 'लमल-'। 3 ङ 'समायया'। 4 च 'स'। 5 च '-गत्य'। 6. घ 'अभिवाद्य'। 7 घ छ '-न्द्रोऽह'।

यदर्थमागतोऽसि त्वं ब्रूहि सत्यं करोमि तत् ।
विश्वामित्रोऽपि तं [1]प्रीतः प्रत्युवाच महा[2]मतिः ॥ ५ ॥
अहं पर्वणि संप्राप्ते [3]इष्ट्या यष्टुं सुरान् पितॄन् ।
यदारभे[4] तदा दैत्या विघ्नं कुर्वन्ति नित्यशः ।
मारीचश्च सुबाहुश्च परे चानुचरास्तयोः ॥ ६ ॥
अतस्तयोर्वधार्थाय ज्येष्ठं रामं प्रयच्छ मे ।
लक्ष्मणेन सह भ्रात्रा तव श्रेयो भविष्यति ।
वशिष्ठेन [5]सहाऽऽमन्त्र्य दीयतां यदि रोचते । ७ ॥
पप्रच्छ [6]गुरुमेकान्ते राजा चिन्तापरायणः ।
किं करोमि गुरो रामं त्यक्तुं नोत्सहते मनः ॥ ८ ॥

---

५। तत् करोमि तदर्थं निश्चितमेव साधयामीत्यर्थः ।

६। पर्वणि संप्राप्ते इति। पर्वाण्याह विष्णुपुराणे—

चतुर्दश्यष्टमी चैव अमावस्याऽथ पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥ (तृतीयांशः ११ अ० ११९श्लो०)

इत्युक्तलक्षणे पर्वणि उपस्थिते सतीत्यर्थः ।

नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः ।
चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु ॥
अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम् ।
यः करोति प्रसन्नात्मा तस्य स्यादक्षयञ्च तत् ॥

इत्यादिब्रह्मपुराणवचनात् पर्वादिषु पितृयज्ञादीनामधिकफलश्रवणेन तत्तद्दिन एव विश्वामित्रस्य यागप्रसक्तिः। इष्ट्या यज्ञेन। दैत्या इति। अत्र दैत्यपदेन तादृशक्रूरस्वभावसम्पन्नानामेव ग्रहणम्, तेन मारीचादयो राक्षसा अपि गृह्यन्ते। के ते इत्याह—मारीचश्चेति ।

७। यतो यज्ञविघ्नं कुर्वन्ति, अतोऽस्माद्धेतोरित्यर्थः। लक्ष्मणेन सह भ्रात्रा इत्युक्त्या मारीचसुबाह्वोर्वधार्थं रामं परेषामनुचराणां वधार्थञ्च लक्ष्मणं देहीत्यर्थः प्रतिभाति। तव श्रेयो भविष्यतीति ममाज्ञापरिपालनेन यज्ञविघ्नविध्वंसनजन्यसुकृतेन मत्तो दुरधिगमानामस्त्राणामधिगमेन च रामस्योत्तरकाले शुभसम्पादनं तेन च तव कल्याणं भविष्यतीत्यभिप्रायः। कुलगुरुर्वशिष्ठ एवात्र प्रभवतीत्याह—वशिष्ठेनेति ।

---

1 च 'प्राप प्रीतिमान् सः'। 2 ङ '-मतिम्', च '-द्युतिः'। 3 ख-घ-च-छ 'दृष्ट्वा'। 4 क-ग-व ङ-च '-रेभे'। 5 च 'समा-'। 6 ख 'गुप्त-'।

बहुवर्षसहस्रान्ते कष्टेनोत्पादिताः सुताः ।
च[1]त्वारो मम तुल्यास्ते तेषां [2]रामोऽतिवल्लभः ॥ ९ ॥
[3]रामस्त्वितो गच्छति चेन्न जीवामि [4]कथञ्चन ।
प्रत्याख्यातो यदि मुनिः शाप [5]दास्यत्यसंश[6]यम् ॥ १० ॥
कथं श्रेयो भवेन्मह्यमसत्यञ्चापि न स्पृशेत् ॥ ११ ॥

वशिष्ठ उवाच—

शृणु राजन् देवगुह्यं गोपनीयं प्रयत्नतः ।
रामो न मानुषो जातः परमात्मा सनातनः ॥ १२ ॥

---

९ । नरो० । अतिवल्लभोऽतिप्रियः ।
१० । नरो० । प्रत्याख्यातो निराकृतः ।
११ । नरो० । मह्यं मम ।

---

९ । बहुवर्षसहस्रान्त इति । अत्र तु वर्षसंख्यानमप्रकटम् । प्रकटं पुनर्वाल्मीकीय-रामायणादौ, तदपि प्राच्यपाश्चात्त्यपाठयोर्विरुद्धम् । तथा च पाश्चात्त्ये—

षष्टिवर्षसहस्राणि जातस्य मम कौशिक । १।२०।१०
कृच्छ्रेणोत्पादितश्चायं न रामं नेतुमर्हसि । १।२०।११

प्राच्ये पुनः—

नव वर्षसहस्राणि मम जातस्य साम्प्रतम् । इत्यादि । १।२३।९ ।

इत्यनयोर्विरोधे क्षेमेन्द्रमतमालोचयन्तो वयं तत् प्राच्यरामायणसंवादीति पश्यामः । तथा च—

नव वर्षसहस्राणि व्यतीतानि ममाऽऽयुषः । इत्यादि । रामायणमञ्जरी १।९९

एवमत्र कस्य मतमनुवर्त्तनीयमिति प्रश्ने एतच्चिन्त्यम्—यथा त्रेतायां दशसहस्रवर्षाणि परमायुर्मानवानामिति स्मृत्यादिसिद्धमेव । तथात्वे दशरथस्य षष्टिसहस्रवार्षिकत्वम् असिद्धमिवेति प्राच्य-क्षेमेन्द्रयोर्मतमेव समीचीनमिति दिक् ।

कष्टेनेति । अश्वमेधपुत्रेष्टिप्रभृतिक्रतुसाधनसयमादिभ्यो जनितेन क्लेशेन । चत्वार इति । मम ते रामादयश्चत्वारः पुत्रास्तुल्याः समाः सौजन्यदाक्षिण्यादिभिरिति शेषः । कष्टेनोत्पादितत्वात्तेषामेकमपि न दित्सामि किं पुना राममित्याह—तेषामिति । यद्यपि गुणादिभिस्ते तुल्यास्तथाऽपि रामो ममातिवल्लभो ज्येष्ठत्वादतिप्रियः, अतस्तस्य त्यागे मम मनो नोत्सहत इति भावः ।

१२-१३ । देवगुह्यं देवानामपि अप्रकाश्यमतो गोपनीयमस्माकमपीति शेषः । शृण्विति ।

---

1 ख च '-त्वारोऽमर' । 2 क 'राम प्रियोऽति मे' । 3 ग ङ-च 'रामो यदा', क 'रामो गच्छति चेद् विप्र न' । 4 च 'कदाचन' । 5. क 'दास्यति निश्चितम्' । 6 च '-य' ।

भूमेर्भारावताराय ब्रह्मणा प्रार्थित' पुरा ।
स एव जातो [1]भगवान् कौशल्यायां तवा[2]नघ ॥ १३ ॥
[3]त्वन्तु प्रजापति' [4]पूर्वं कश्यपो ब्रह्मण· सुतः ।
कौशल्या चादि[5]ति पूर्वं देवमाता यशस्विनी ॥ १४ ॥
भवन्तौ तप उग्रं वै तेपा[6]ते बहुवत्सरम् ।
[7]अग्राम्यविषयौ विष्णुपूजाध्यानैकतत्परौ ॥ १५ ॥
तदा प्रसन्नो भगवान् वरदो भक्तवत्सल' ।
वृणीष्व वरमित्यु[8]क्तौ त्वं मे पुत्रो भवा[9]नघ ॥ १६ ॥
इति त्वया याचि[10]तो वै भगवान भूतभावन· ।
तथेत्यु[11]क्त्वाऽद्य पुत्रस्ते जातो राम' स एव हि ॥ १७ ॥

---

१७ । नरो० । भूतानि भावयतीति भूतभावन· ।

---

राम· पूर्वमपि मानुष एवेदानी पुनरपि मानुषो जात इति न, किन्तु सनातनो निर्विकारत्वात् सदैकरूपो य· परमात्मा स एव ब्रह्मणा पुरा प्रार्थित सन् तव भवने जात इत्यन्वय । रा० ।

१३ । भूमेर्भारावताराय इति ।

'परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ ४।८ ।

इति गीतोक्तरीत्या स्वावतरणेन रक्ष कृतपृथिवीविघ्नविध्वसनद्वारेण साधुजनसरक्षणादित्रयकृते पुरा ब्रह्मणा प्रार्थित स भगवानेव स्वांशविशेषेण कौशल्यायां तस्या उदरे इत्यर्थ , तव गृहे जात ।

१४ । [ त्वन्तु प्रजापति पूर्वमिति, कश्यपस्य मरीचिपुत्रत्वेन ब्रह्मण पुत्रत्वमुपचारात् , यद्वा 'नव ब्रह्माण इत्येते पुराणे निश्चय गता·' इति हरिवशाद्युक्तेर्मरीच्यादीनामपि ब्रह्मत्वारोपाद् ब्रह्मण सुत इत्युक्तम् । गो० ]

कथ मम मनुष्यस्य गेहे कौशल्याया उदरे भगवतो जन्मेत्यत आह—त्वमित्यादि ।

१५ । अग्राम्यविषयौ ग्राम्यविषयानासक्तौ, तेन ब्रह्मचर्य सूचितम् । रा० ।

१६-१७ । वरं वृणीष्व इति उक्तौ सत्या हे अनघ, त्वं मे पुत्रो भव इति त्वया याचित· प्रार्थित' ।

[ भूतानि भावयति उत्पादयतीति भूतभावन सर्वेषां जनकोऽपीत्यर्थ । गो० ]

---

1 क-ख घ ङ 'भवने'। 2 क '-मघ'। 3 क 'त्व ह्नि'। 4 ग 'पूर्वे'। 5 ख घ-च-छ '-तिर्देवमाता पूर्व य'। 6 ख-घ-च 'थे'। 7 च 'अजुष्टग्राम्यविषयौ विष्णुध्यानपरायणौ'। 8 ख घ '-क्तस्त्व'। 9. ख घ-च '-मल'। 10 ख-घ '-तोऽसौ'। 11 '-क्त्वा च तु पु'।

शेषस्तु लक्ष्मणो राजन् राममेवान्वपद्यत ।
जातौ भरतशत्रुघ्नौ शङ्ख[1]चक्रे गदाभृत ॥ १८ ॥
योगमा[2]याऽपि सीतेति जाता जनकनन्दिनी ।
विश्वामित्रोऽपि रामाय तां योजयितुमागत ॥ १९ ॥
एतद् गुह्यतम राजन् न वक्तव्य कदाचन ॥ २० ॥
अत प्रीतेन मनसा पूजयित्वा[3]ऽथ कौशिकम् ।
[4]प्रेषयस्व रमानाथं [5]राघव सहलक्ष्मणम् ॥ २१ ॥
वशिष्ठेनैवमुक्तस्तु राजा दशरथस्तदा ।
कृतकृत्यमिवाऽऽत्मानं मेने प्रमुदिता[6]न्तर ॥ २२ ॥
आहूय राम रामेति लक्ष्मणेति च सादरम् ।
आलिङ्ग्य [7]मूर्ध्न्यवघ्राय कौशिकाय सम[8]र्पयत् ॥ २३ ॥
ततोऽतिहृष्टो भगवान् विश्वामित्र प्रतापवान् ।
आशीर्भिरभिनन्द्याथ [9]राजान रामलक्ष्मणौ ।
गृहीत्वा [10]चापतूणीरबाणखड्गधरौ ययौ ॥ २४ ॥

---

आद्यपुत्र आदौ भव आद्य प्रथम पुत्रो रामो जात । अथ वा अद्येति पदच्छेद । स प्रसिद्ध स्वय भगवान् राम अद्य इदानीमित्यर्थ , तत्र पुत्रो जात पुत्रत्वेनोत्पन्न , तत्परतश्च भरतादयो जाता इति भाव । तथा च पाद्मे उत्तरखण्डे द्विचत्वारिंशदधिकद्विशततमाध्याये—

'कैकेय्यां भरतो यज्ञे पाञ्चजन्यांशचोदितः ।
सुमित्रा जनयामास लक्ष्मण शुभलक्षणम् ॥
शत्रुघ्नञ्च महाभागा देवशत्रुप्रतापनम् ।
अनन्तांशेन सम्भूतो लक्ष्मण परवीरहा ॥
सुदर्शनांश शत्रुघ्नो संजज्ञेऽमितविक्रम ।' ९४-९६

१८ । शङ्खचक्रगदाभृत सम्बन्धिनौ चक्रगरुडाविति शेष । तौ भरतशत्रुघ्नौ जातावित्यर्थ । रा० ।

१९ । योजयितुम् अर्पयितुं दातुमित्यर्थ, धातूनामनेकार्थत्वात् ।

२३ । मूर्ध्न्यवघ्रायेति । 'प्रजापतेस्त्वां हिङ्कारेणावजिघ्रामि सहस्रायुषोऽसौ जीव शरद शतम्' इत्यवघ्राणमन्त्रलिङ्गेन तस्य पुत्रायुर्वृद्धिकरत्वात् तत्करणमिति बोध्यम् । रा० ।

---

1. ख-ड '-चक्रगदा' च छ '-चक्रौ गदा-' । 2 ग ड 'या तु' । 3. च 'तु' । 4 क च 'प्रेरयस्व' । 5 ग च-छ 'रामच' । 6. छ 'न्तरम' । 7. च 'मूर्ध्न्युपा' । 8 छ '-र्दयत्' । 9 ख-घ 'आगतौ' । 10. छ 'बाणतूणीरचाप-' ।

[1]कञ्चिद्देशमतिक्रम्य राममाहूय भक्तित ।
ददौ बलाञ्चातिबलां विद्ये द्वे देवनिर्मिते ।
ययोर्ग्रहणमात्रेण [2]क्षुत्क्षामादि न जायते ॥ २५ ॥
तत उत्तीर्य गङ्गां ते [3]ताडकावनमागमन् ।
विश्वामित्र[4]स्तदा प्राह राम सत्यपरा[5]क्रमम् ॥ २६ ॥

---

[ आहूयेत्यादि । समर्पयदित्यडागमाभावश्छान्दस । यमाविति । एकचरुभागजातत्वाद् यमौ । यद्वा यमौ राक्षसान्तकरत्वाद् यमाविव । गो० ]

२५ । बलामिति । बलाविद्या शरीरसामर्थ्यसम्पादनद्वारेणेष्टसाधिका 'बल देहि तनूषु न.' इति मन्त्रलिङ्गात । अतिबला तु सङ्कल्पमात्रादिष्टजनिकेत्याहु । रा० ।

क्षुत्क्षामेति भावप्रधानो निर्देश , क्षुच्च क्षामत्वञ्च । यद्वा क्षुन्निबन्धनं क्षामत्व दौर्बल्य-मित्यर्थ । आदिपदेन जराप्रभृतीनां परिग्रह । व्यक्तमाह वाल्मीकीये—

'गृहाण द्वे इमे विद्ये बलामतिबलां तथा ।
न ते श्रमो जरा वाभ्यां भविता नाङ्गवैकृतम् ॥
न च सुप्त प्रमत्तं वा धर्षयिष्यन्ति नैरृता ।
न च ते सदृशो राम वीर्येणान्यो भविष्यति ॥
सदेवनरनागेषु लोकेष्विह पुमांस्त्रिषु ।
न सौभाग्ये न दाक्षिण्ये न बुद्धिश्रुतिपौरुषे ।
नोत्तरे प्रतिपत्तव्ये तत्तुल्यो वा भविष्यति ॥
एतद् विद्याद्वय प्राप्य यशश्चाप्ययमाप्स्यसि ।
बलामतिबलाञ्चैव ज्ञानविज्ञानमातरौ ॥
क्षुत्पिपासे च ते राम नात्यर्थं पीडयिष्यत ।
जयश्च दुर्गकान्तारप्रदेशेष्वटवीषु च ॥
सारतां त्रिषु लोकेषु गमिष्यसि च राघव ॥ १।२९।१२-१६

२६ । उत्तीर्य गङ्गामिति । वाल्मीकिरामायणे नात्र गङ्गोत्तरणम् । सरय्वा अविदूरे स्थिताया कस्याश्चिदेवनद्या दर्शनमात्रम्, तस्यास्तीरे ऋषीणामाश्रमान् दृष्ट्वा जातकुतूहलयो राम-लक्ष्मणयोस्तेषां तत्त्वजिज्ञासा (१।२६।५-७) । अत्रैव कामाश्रमदर्शनम्, महर्षिणा तस्य याथार्थ्य-वर्णनञ्च ( १।२६।८-१६ ) । तत परञ्च तेषां सरय्वाः परपारगमनम् ।

---

1 ख-घ च छ 'किञ्चि-' । 2 क 'क्षुतपिपासा', ग 'क्षुत्क्लमादि', च 'क्षुत्तृषादि', छ 'क्षुत्क्रमादि' । 3 घ 'ताटका' । 4. ग '-स्तत' । 5 च-छ 'यशम्' ।

अत्रा[1]स्ति [2]ताडका नाम राक्षसी कामरूपिणी ।
बाधते लोकमखिलं जहि [3]तामविचारयन् ॥ २७ ॥
तथेति धनुरादाय सगुण रघुनन्दनः ।
टङ्कारमकरोत्तेन शब्देनाऽऽपूर[4]यन् वनम् ॥ २८ ॥
तच्छ्रुत्वाऽसहमाना सा [5]ताडका घोररूपिणी ।
क्रोधसम्मूर्च्छिता राममभिदुद्राव मेघवत् ॥ २९ ॥
तामेकेन शरे[6]णाशु ताडयामास वक्षसि ।
पपात विपिने [7]घोरा वमन्ती रुधिर [8]मुहु[9] ॥ ३० ॥
ततोऽतिसुन्दरी [10]यक्षी सर्वाभरण[11]भूषिता ।
शापात् पिशाचतां प्राप्ता मुक्ता रामप्रसादत ।
नत्वा राम परिक्रम्य गता रामाज्ञया दिवम् ॥ ३१ ॥

---

२७ । नगे० । कामरूपिणी इच्छया नानारूपधारणक्षमा । बाधते पीडयति । अवध्या स्त्रीति कृत्वा यदि सा न वध्येत, तर्ह्यनर्थताऽवस्थ्यमिति हृदि निधायाऽऽह—अविचारयन्निति ।

२९ । नगे० । क्रोधसमूर्छिता क्रोधेन मोह प्रापितेत्यर्थ ।

३१ । नगे० । परिक्रम्य प्रदक्षिणीकृत्य ।

---

तथा च—

ततार सरित पुण्यां सरयूं विमलोदकाम् । १।२७।४।

अत पर ताडकावध इत्यत्र सर्वमेवान्यादृश वाल्मीकीयात् ।

२७ । [जहि तामविचारयन् कथ स्त्रियं हन्मीति विचारमकुर्वन्, लोकहिंसकत्वात् । गो०]

२८ । शब्देन वनम् आ सम्यक् पूरयन् टङ्कारमकरोत् । ताडका वनस्य यत्र तत्र वाऽस्तु, शब्देन समस्तमेव वनमापूरयन् तामाकर्णयामास इति भाव ।

२९ । तच्छ्रुत्वा तं शब्द श्रुत्वेत्यर्थ । सामान्यत क्लीबत्वम् । असहमाना सोढुमशक्नुवाना । वीरहृदयया तया अन्यस्य वैरायितमसहमिति भाव । क्रोधसम्मूर्च्छिता कोपेन हिताहितज्ञानरहिता । मेघवदिति, अनेन तस्या आकृतेर्घनमेघश्यामत्वमतिविस्तृतत्वञ्च सूचितम् ।

३१ । रामप्रसादतो मुक्ता अतिसुन्दरी यक्षी भूत्वा दिव गतेत्यन्वय ।

---

1 क 'म्ने'। 2 घ 'ताटका'। 3 ग च 'राम विचारयन्'। 4 च-छ '-यह'। 5 घ 'ताटका'। 6 ग छ 'णाय, च' णव'। 7 च 'घोरं'। 8 छ 'बहु'। 9 अत पर ङ पुस्तके 'राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी। गन्धवद्रुधिरचन्दनोक्षिता जीवितेशभवन जगाम सा ॥ यच्चकार विवर शिलाघने ताडकोरसि स रामशायक । अप्रविष्टविषयस्य रक्षसा द्वारतामगमदन्तकस्य तत ॥ इति रघुवशीय( ११श सर्ग २०।१८ ) श्लोकद्वय दृश्यते। 10 ङ 'यक्षा'। 11 '-सयुता'।

ततोऽतिहृष्टः परिरभ्य रामं
[1]मूर्धन्यवघ्राय विचिन्त्य किञ्चित् ।
सर्वास्त्रजालं सरहस्यमन्त्रं
प्रीत्याऽभिरामाय ददौ [2]मुनीन्द्रः ॥ ३२ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे आदिकाण्डे चतुर्थोऽध्यायः ॥ ४ ॥

---

३२ । नरो० । सर्वास्त्रजालं सर्वास्त्रसमूहम् ।

[ आदिकाण्डे चतुर्थाध्यायव्याख्या समाप्ता ॥ ४ ॥ ]

---

३२ । ततस्ताडकावधादतिहृष्टो विश्वामित्र किञ्चिद् विचिन्त्य रामगुरुत्वेन स्वस्यान्तकाले मुक्तिपदप्राप्तियोग्यतालाभं विचार्येत्यर्थः । अभिरामाय रामाय सरहस्यमन्त्रमस्त्रजालं ददावित्यन्वयः । रा० ।

सरहस्यमन्त्रास्त्रजालानामर्पणं प्राच्ये वाल्मीकीये आदिकाण्डे त्रिंशैकत्रिंशसर्गयोर्वर्त्तते ।

---

1 ग ङ-च-छ 'मूर्धानमाघ्राय' । 2 ङ 'प्रहृष्ट', छ 'स हृतनम्' ।

# पञ्चमोऽध्यायः

श्रीमहादेव उवाच—

तत्र कामाश्रमे [1]रम्ये कानने मुनिसङ्कुले ।
उषित्वा रजनीमेकां प्रभाते प्रस्थिताः शनैः ।
सिद्धाश्रमं गताः सर्वे सिद्धचारणसेवितम् ॥ १ ॥
विश्वामित्रेण सन्दिष्टा मुनयस्तन्निवासिनः ।
पूजां[2]श्च महतीं चक्रू रामलक्ष्मणयोर्द्रुतम् ॥ २ ॥
श्रीरामः कौशिकं प्राह मुने [3]दीक्षा प्रदिश्यताम् ।
दर्शयस्व महाभाग [4]कुतस्तौ राक्षसाधमौ ॥ ३ ॥
तथेत्युक्त्वा मुनिर्यष्टुमारेभे मुनिभिः सह ॥ ४ ॥

---

१। तत्र कामाश्रमे ताडकावधस्थानभूते कामाश्रमाख्ये रुद्रेणानङ्गतासम्पादके वने। ताडकाभयादेव मुनिसङ्कुले। रा०।

कामाश्रम इति। ताडकावधस्थानभूते इति रामवर्मा। वाल्मीकीये पुनः कामाश्रम-दर्शनात् परं सरय्वा उत्तरणम्, ततोऽप्यतिक्रान्ते बहुप्रदेशे ताडकावनम्। अन्वेष्टव्यमिदम् आदि-काण्डस्य पञ्चविंशषड्विंशसर्गयोः।

कामाश्रमसम्बन्धिनीयं प्राचीना वार्त्ता। यथा—पुरा मूर्त्तिमान् कन्दर्पोऽत्रैव कानने कृतोद्वाहस्य पशुपतेश्चित्तविकारमुत्पादयितुमचेष्टत। अथ क्रुद्धस्य रुद्रस्य रोषशापाग्निना कामस्य सर्वाण्येवाङ्गानि सद्य एव भस्मसाद् भूतानीति ततः प्रनष्टशरीरः कामोऽनङ्ग इति नाम्नाऽ-भिहितः। तस्यायमाश्रम इत्यस्य कामाश्रम इति प्रसिद्धिः। (वाल्मीकिरा० १।२६।१०-१३)।

सिद्धाश्रमं सिद्धस्य वामनस्याश्रमम्।

'एष पूर्वाश्रमो राम वामनस्य महात्मनः।
सिद्धाश्रम इति ख्यातः सिद्धो यत्र महायशाः॥' (वाल्मीकिरा० १।३२।२)

इत्युक्तेः।

३। दीक्षा प्रदिश्यतां यज्ञ आरभ्यताम्, दीक्षितो भवेत्यर्थः।

---

1 च 'पुण्ये'। 2 च '-न्ते'। 3 ख-ग-ङ-छ 'दीक्षा प्रविश्यताम्', च 'दीक्षा प्रविश्यताम्'। 4 च 'क्व तौ'।

मध्याह्ने ददृशाते तौ राक्षसौ कामरूपिणौ ।
मारीचश्च सुबाहुश्च वर्षन्तौ रुधिरास्थिनी ॥ ५ ॥
रामोऽपि धनुरा[1]नम्य द्वौ बाणौ सन्दधे सुधीः ।
आक[2]र्णान्तं समाकृष्य विससर्ज तयोः पृथक् ॥ ६ ॥
तयो[3]रेकस्तु मारीचं [4]भ्रामयञ्छतयोजनम् ।
पातयामास जलधौ तदद्भुतमिवाभवत् ॥ ७ ॥
द्वितीयोऽग्निमयो बाणः सुबाहुम[5]दहत् क्षणात् ।
अपरे लक्ष्मणेनाऽऽशु हतास्तदनुयायिनः ॥ ८ ॥
[6]पुष्पौघै[7]राकिरन् देवा राघवं सहलक्ष्मणम् ।
[8]देवदुन्दुभयो नेदुस्तुष्टुवुः सिद्धचारणाः ॥ ९ ॥
विश्वामित्रस्तु सम्पूज्य पूजार्हं रघुनन्दनम् ।
अङ्के निवेश्य चाऽऽलिङ्ग्य भक्त्या बाष्पाकुलेक्षणः ॥ १० ॥
भोजयित्वा सह भ्रात्रा रामं पक्वफलादिभिः ।
पुराणवाक्यै[9]र्मधुरैर्निनाय दिवसत्रयम् ॥ ११ ॥
चतुर्थेऽहनि सम्प्राप्ते कौशिको राममब्रवीत् ।
राम राम महायज्ञं [10]द्रष्टुमिच्छामहे वयम् ॥ १२ ॥
विदेहराजनगरे जनकस्य महात्मनः ।
तत्र माहेश्वरं चापमस्ति न्यस्तं पिनाकिना ।
द्रक्ष्य[11]सि त्वं महासत्त्वं पूज्यसे जनकेन च ॥ १३ ॥

---

१० । नरो० । अङ्के क्रोडे । बाष्पेण आकुले व्याप्ते ईक्षणे यस्य तादृशः ।

---

८ । अपरे इति । अत्र तु लक्ष्मणेनापरेषां विनाशः, वाल्मीकीये रामेणैव । तथा च—

'अन्यान्यपि च वायव्यमस्त्रमादाय राघवः ।
निजघान स रक्षांसि मुनीनां वर्द्धयन् मुदम् ॥' इति १।३३।२०

९ । पुष्पौघैः कुसुमचयैः, आकिरन् आच्छादयामासुः ।

---

1 ख-घ च '-दाय' । 2 ङ '-र्णान्त' । 3 च-छ '-रेकेण' । 4 ङ 'भ्रम' । 5 ख-घ 'जयत्' 6 च-छ 'पुष्पौघेना-' । 7 ग '-रकि-' । 8 च 'देवा दु-' । 9 क-छ 'र्विविधै-' । 10 ख घ-च-छ 'द्रष्टुं गच्छा-' । 11 छ '-से' ।

इत्युक्त्वा मुनिभिस्ताभ्यां ययौ गङ्गासमीपगम् ।
[1]गौतमस्याऽऽश्रमं पुण्यं यत्रा[2]हल्या शिलामयी ॥ १४ ॥
दिव्यपुष्पफलो[3]पेतपादपैः परिवेष्टितम् ।
मृगपक्षिगणैर्हीनं नानाजन्तुविवर्जितम् ॥ १५ ॥
दृष्ट्वोवाच मुनिं श्रीमान् रामो राजीवलोचनः ।
कस्यैतदाश्रमपदं [4]तपतां सुखदं महत् ॥ १६ ॥
[5]पत्रपुष्पफलैर्युक्तं जन्तुभिः परिवर्जितम् ।
आह्लादयति मे चेतो भगवन् ब्रूहि तत्त्वतः ॥ १७ ॥

विश्वामित्र उवाच—

शृणु राम पुरावृत्तं [6]गौतमो लोकविश्रुतः ।
सर्वधर्मभृतां श्रेष्ठस्तपसाऽऽरा[7]धयन् हरिम् ॥ १८ ॥
तस्मै ब्रह्मा ददौ कन्यामहल्यां लोकसुन्दरीम् ।
ब्रह्मचर्येण सन्तुष्टः शुश्रूषणपरायणाम् ॥ १९ ॥
तया सार्द्धमिहावात्सीद् [8]गौतमस्तपतां वरः ।
शक्रस्तु तां धर्षयितुमन्तरं प्रेप्सुरन्वहम् ॥ २० ॥

---

२० । नरो० । धर्षयितुमाक्रमितुमभिभवितुं वा । अन्तरमवकाशम्, प्रेप्सुः प्राप्तुमिच्छुः । अन्वहं प्रतिदिनम् ।

---

१४ । गङ्गासमीपगं गङ्गातीरेऽवस्थितम् ।

१५ । नानाजन्तुभिर्नानाप्रकारैः क्षुद्रप्राणिभिरपि हीनं गौतमशापादिति भावः । रा० ।

२० । तस्मै ब्रह्मा ददौ कन्यामिति । तथा च पाश्चात्त्ये वाल्मीकीये उत्तरकाण्डे ब्रह्मवाक्यम्—

सोऽहं तासां विशेषार्थं स्त्रियमेकां विनिर्ममे ।
यद् यत् प्रजानां प्रत्यङ्गं विशिष्टं तत्तदुद्धृतम् ॥
ततो मया रूपगुणैरहल्या स्त्री विनिर्मिता ।
हलं नामेह वैरूप्यं हल्यं तत्प्रभवं भवेत् ॥
यस्या न विद्यते हल्यं तेनाहल्येति विश्रुता ।
अहल्येत्येव च मया तस्या नाम प्रकीर्तितम् ॥

---

1 ग च 'गौत-' । 2 ख ঘ च 'हल्याश्थिता तपः' । 3 ग-घ-ङ क 'पेत पा' । 4 ख 'भाति भास्वच्छुभं महत', ग-च 'भाति भास्वत्तमं महत' । 5 ङ 'यव पु-' । 6 च 'गौत-' । 7 क '-धयद्धरिम्' । 8 च 'गौतमस्तपसा' ।

कदाचिन्मुनि[1]वेशेन [2]निर्गते [3]गौतमे गृहात् ।
[4]तां धर्षयित्वा निरगात् त्वरित मुनि[5]रप्यगात् ॥ २१ ॥
दृष्ट्वा यान्त स्वरूपेण मुनिः परमकोपनः ।
पप्रच्छ कस्त्व [6]दुष्टात्मन् मम रूपधरोऽधम. ॥ २२ ॥
सत्य ब्रूहि न चेद् भस्म करिष्यामि न संशयः ।
सोऽब्रवीद् देवराजोऽहं पाहि मां कामकिङ्करम् ॥ २३ ॥
कृतं जुगुप्सित कर्म मया [7]कुत्सितचेतसा ।
[8]गौतम क्रोधताम्राक्षः शशाप दिविजाधिपम् ॥ २४ ॥

---

२१ । नरो० । धर्षयित्वा आक्रम्य ।

२३ । नरो० । कामकिङ्कर कन्दर्पदासं कन्दर्पाधीनमिति यावत् ।

२४ । नरो० । दिविजाधिप देवाधिपम् ।

---

निर्मितायाञ्च देवेन्द्र तस्यां नार्यां सुरर्षभ ।
भविष्यतीति कस्यैषा मम चिन्ता ततोऽभवत् ॥
त्वन्तु शक्र तदा नारीं जानीस मनसा प्रभो ।
स्थानाधिकतया पत्नी ममैषेति पुरन्दर ॥
सा मया न्यासभूता तु गौतमस्य महात्मन ।
न्यस्ता बहूनि वर्षाणि तेन निर्यातिता च ह ॥२१—२६ श्लो० ।

अहल्यां धर्षयितु बलेनोपभोक्तुम्, अन्वहं प्रतिदिनम्, अन्तरमवकाश गौतमस्यानुपस्थितिरूपमित्यर्थ ।

२१ । मुनिवेशेन मुनेर्गौतमस्य वेशेन । अत्र च धर्षणशब्देन बलात्कार कृतो देवेन्द्रेण इत्यायातम्, वाल्मीकीये पुनर्न बलात्कार, पर परस्परसम्मत्या एव सम्भोग । तथा च—

मुनिवेशधरं शक्र सा ज्ञात्वाऽपि परन्तप ।
मतिञ्चकार दुर्मेधा देवराजकुतूहलात् ॥
अब्रवीच्च सुरश्रेष्ठं कृतार्थं सा वचस्तदा ।
कृतार्थोऽसि सुरश्रेष्ठ गच्छ शीघ्रमलक्षित ।
आत्मानं माञ्च देवेश सर्वथा रक्ष मानद ॥ इति १।४९।१९-२० श्लो० ।

---

1 घ '-वेषेण' । 2 ख-घ-ङ 'गौतमे निर्गते' । 3 च 'गोत' । 4 ख घ 'धर्षयित्वाऽथ' । 5 च '-सप्तमात्' । 6. ग 'मूढा-' । 7 क 'पापेन चेतसा' । 8 च 'गोत-' ।

योनिलम्पट दुष्टात्मन् सहस्रभगवान् भव ।
शप्त्वा त देवराजान प्रविश्य स्वाश्रम द्रुतम् ॥ २५ ॥
दृष्ट्वाऽहल्यां वेपमानां [1]प्राञ्जलि [2]गौतमोऽब्रवीत् ।
[3]दुष्टे त्वं [4]तिष्ठ [5]दुर्वृत्ते शिलायामाश्रमे मम ॥ २६ ॥
निराहारा दिवारात्र तप· परममास्थिता ॥ २७ ॥
आतपानिलवर्षादिसहिष्णु परमेश्वरम् ।
ध्यायन्ती [6]राम रामेति मनसा हृदि [7]संस्थितम् ॥ २८ ॥
नानाजन्तुविहीनोऽयमाश्रमो मे भविष्यति ॥ २९ ॥
एवं वर्षसहस्रेषु [8]ह्यनेकेषु गतेषु च ।
रामो दाशरथि श्रीमानागमिष्यति सानुज' ॥ ३० ॥
यदा [9]त्वदाश्रयशिलां पादाभ्यामाक्रमिष्यति ।
तदैव धूतपापा त्वं राम सम्पूज्य [10]भक्तित ॥ ३१ ॥
परिक्रम्य नमस्कृत्य स्तुत्वा पापाद्विमोक्ष्यसे ।
पूर्ववन्मम शुश्रूषां करिष्यसि यथासुखम् ॥ ३२ ॥

---

२५ । नरो० । योनिलम्पट योनिलुब्ध । दुष्टात्मन् दुष्टमानस ।
२६ । नरो० । प्राञ्जलिं पुटीकृतहस्ताम् । दुर्वृत्ते दुश्चरित्रे ।
२७ । नरो० । आस्थिता आश्रिता ।

---

२५ । [ सहस्रभगवान् सर्वाङ्गेषु योनिसहस्रयुक्त· । कालान्तरे तं प्रसाद्य तान्येव लोचनानि लेभे इति पुराणान्तरम् । गो० ]

अभिशापान्तरं वाल्मीकीये—
मम रूप समास्थाय कृतवानसि दुर्मते ।
अकर्तव्यमिदं यस्मात्तस्मात् त्व विफलो भव ॥ इति १।४९।२६

विफलो वृषणशून्य ।

२६ । [ शिलायां शिलामयी भूत्वेति यावत् । गो० ]

३१ । त्वदाश्रयशिलां तवावासभूतां शिलामित्यर्थ । धूतपापाऽपगतकलुषा ।

---

1 छ 'प्राञ्जली' । 2 च 'गौत-' । 3 च 'पापि' । 4 ग 'गच्छ' । 5 च 'दुश्चित्ते' ।
6 ख व च 'राममेकाग्रमनसा' । 7 ड 'संस्मरन्' । 8 ग छ 'अने', ड 'वनेषूपवनेषु च' ।
9 क छ 'त्वदाश्रम', ग ड च 'तदाश्रम-' । 10 ग 'यवत.' ।

इत्युक्त्वा [1]गौतमः प्रागाद्धिमवन्तं नगोत्तमम् ।
[2]तदाद्यहल्या भूतानामदृश्या स्वाश्र[3]मे शुभे ॥ ३३ ॥
तव पादरजःस्पर्शं [4]काङ्क्षन्ती पापनाशनम्
आस्तेऽद्यापि रघुश्रेष्ठ तपो दुष्कर[5]मास्थिता ॥ ३४ ॥
पावयस्व मुनेर्भार्यामहल्यां ब्रह्मणः सुताम् ॥ ३५ ॥
इत्युक्त्वा राघवं हस्ते गृहीत्वा मुनिपुङ्गवः ।
दर्शयामास चाहल्यामुग्रेण तपसा स्थिताम् ॥ ३६ ॥
रामः शिलां पदा स्पृष्ट्वा तां चापश्यत्तपोधनाम् ।
ननाम राघवोऽहल्यां रामोऽहमिति चाब्रवीत्[6] ॥ ३७ ॥
ततो दृष्ट्वा रघुश्रेष्ठं पीतकौशेयवाससम् ।
धनुर्बाणधरं [7]रामं लक्ष्मणेन समन्वितम् ॥ ३८ ॥
स्मितवक्त्रं पद्मनेत्रं श्रीवत्साङ्कितवक्षसम् ।
नीलमाणिक्यसङ्काशं द्योतयन्तं दिशो दश ॥ ३९ ॥
दृष्ट्वा रामं रमानाथं हर्ष[8]विस्फुरितेक्षणा ।
[9]गौतमस्य वचः स्मृत्वा ज्ञात्वा नारायणं परम् ॥ ४० ॥
सम्पूज्य विधिवद्राममर्घ्यादिभिरनिन्दिता ।
हर्षाश्रुजलनेत्रान्ता दण्डवत् प्रणिपत्य सा ॥ ४१ ॥

---

३६ । नरो० । मुनिपुङ्गवो मुनिश्रेष्ठः ।

३९ । नरो० । श्रीवत्सेनाङ्कितं चिह्नितं वक्षो यस्य तादृशम् ।

४० । नरो० । हर्षेण विस्फुरिते ईषत्कम्पिते ईषद्विकसिते वा ईक्षणे यस्यास्तादृशी ।

४१ । नरो० । हर्षाश्रुजलं नेत्रान्ते यस्यास्तादृशी ।

---

३७ । तां चापश्यत्, पादस्पर्शमात्रेणैव कृतशरीरपरिग्रहां तामहल्यामपश्यदित्यर्थः ।

४१ । हर्षजन्यं यदश्रुरूपं जलं तद्युक्ते नेत्रान्ते यस्याः सा । रा० ।

---

1. च 'गौत-' । 2 च 'तदाऽहल्या हि', छ 'तदा ह्यहल्या' । 3 च '-मेऽभवत्' । 4 ख 'काङ्क्षते', ग-ङ च काङ्क्षती', घ 'काङ्क्षते पापनाशना' 5 च '-माश्रिता' । 6. अत परं ख-घ-पुस्तकयो. 'चतुर्भुजं शङ्खचक्रगदापद्मजधारिणम्' इत्यधिकम् । 7 ग 'श्यामं' । 8 ख घ '-विस्फारि-', 9 च 'गौत-' ।

उत्थाय च पुनर्दृष्ट्वा रामं राजीवलोचनम् ।
पुलका[1]ङ्कितसर्वाङ्गा गिरा गद्[2]गदयैडयत् ॥ ४२ ॥
अहो कृतार्थाऽस्मि जगन्निवास ते [3]पादाब्जसंलग्नरजःकणानहम् ।
स्पृशामि यत् पद्मजशङ्करादिभिर्विमृग्यते [5]रन्धितमानसैः सदा ॥ ४३ ॥
अहो विचित्रं तव राम चेष्टितं मनुष्यभावेन विमो[6]हयज्जगत् ।
चलस्यजस्रं चरणादिवर्जितः सम्पूर्ण आनन्दमयोऽतिमायिकः ॥ ४४ ॥

---

४३ । नरो० । हे जगन्निवास हे जगदाश्रय, ते तव पादाग्रसंलग्नरजःकणानहं स्पृशामि । अहो आश्चर्यम् । कृतार्थाऽस्मि । ननु सुलभस्य मम पादरजसो लाभे कथं तव विस्मय इत्यत आह—यदित्यादि । यत् पादाग्रसंलग्नरजः । पद्मजो ब्रह्मा । तत्र चित्तावेशं विना कथं तल्लाभो भवेदित्यत आह—वन्दितमानसैरिति । वन्दिते वन्दने मानसं येषां तादृशैः । कदाचिदन्वेषणे कथं तल्लाभो भवेदिति चेत्तत्राऽऽह—सदेति । इन्द्रादयो येषां पदरजो वाञ्छन्ति तेऽपि तव पादरजो वाञ्छन्तीति भावः ।

४४ । नरो० । हे राम, तव चेष्टितं विचित्रं नानारूपम् । राजपुत्रोऽहं मृगयार्थे सततमरण्ये भ्रमामि मच्चेष्टा कथं तव विस्मयजनिकेत्यत आह—मनुष्यभावेनेति । मनुष्यभावेन मानुषरूपेण । अजस्रं निरन्तरम् । चरणादिवर्जितत्वे हेतुः—सम्पूर्ण आनन्दमय इति । अखण्डानन्दस्वरूप इत्यर्थः । तर्हि कथमहं साकार इत्यत आह—अतिमायिक इति ।

---

४२ । ऐलत अस्तौषीत् । ईड स्तुतावित्यस्माल्लङि व्यत्ययेन शपो लुगभावः, डलयोरेकश्रुतित्वाल्लकारोच्चारणम् । रा० ।

४३ । कृतार्थाऽस्मि मुक्तशापाऽस्मि । कुत इत्याह—पादाग्रेत्यादि । पद्मजशङ्करादिभिः सदा ये विमृग्यन्ते तानहं स्पृशामि ।

[ अहो इत्यादि । यद् ब्रह्मादिभिः केवलं मृग्यते अहन्तु तत् साक्षात् स्पृशामि अहो भाग्यमित्यर्थः । गो० ]

४४ । अहो इति । आश्चर्यं विचित्रम् । वास्तवस्वरूपाननुगुणं तव चेष्टितम्, यतः 'अपाणिपादो जवनो ग्रहीता' ( श्वेता० ३।१९ ) इति श्रुतेर्वस्तुतश्चरणादिवर्जितोऽपि सन् संपूर्णः सर्वव्याप्तोऽपि सन् आनन्दमयस्तत्स्वरूपोऽपि सन् जगत् आत्मनि मनुष्यबुद्ध्युत्पादनेन मनुष्यभावेन चलसि । क्रियामात्रोपलक्षणमिदम् । विरोधाभासोऽत्र, औपाधिकत्वेन तत्परिहारात् । नन्वीदृशस्य मनुष्यभावः कथं तत्राऽऽह—अतिमायिक इति । सकलमायावद्भ्योऽप्युत्कृष्टः,

---

1 ङ च छ 'ञ्चित'। 2 च छ '-वाङ्गी' 3 ख-घ '-गदयैलत', च छ '-गदयैलयत' 4 क-ख-घ छ 'पादाब्ज', ङ 'पदाब्ज', च 'पदाग्र-'। 5 क ख घ ङ-च छ 'रञ्चित-', ग 'वर्द्धित-'। 6. घ '-हित' ज-।

यत्पादपङ्कज[1]परागपवित्रगात्रा भागीरथी भवविरिञ्चिमुखान् पुनाति ।
साक्षात् स एष मम दृग्वि[2]षये यदास्ते किं वर्ण्यते मम पुराकृतभागधेयम् ॥४५॥
मर्त्यावतारे मनुजाकृतिं हरिं रामाभिधेयं रमणीय[3]देहिनम् ।
धनुर्धरं पद्मविशाललोचनं भजामि [4]नित्यं न परान् भजिष्ये ॥ ४६ ॥
यत्पादपङ्कजरजः श्रुतिभिर्विमृग्यं यन्नाभिपङ्कजभवः कमलासनश्च ।
यन्नामसाररसिको भगवान् पुरारिस्तं रामचन्द्रमनिशं हृदि भावयामि ॥४७॥

---

४५ । नरो० । यद्दर्शनं योगिनामपि दुर्लभं तत् कथं मया मूढया प्राप्तमिति विस्मयान्विता आत्मनः पूर्वकृतकर्मजनितशुभादृष्टस्यान्यशुभादृष्टवैलक्षण्यं मन्यमानाह—यदित्यादि । यस्य पादपङ्कजं पादपद्मं तस्य यः परागो रेणुस्तेन पवित्रं गात्रं यस्यास्तादृशी भागीरथी गङ्गा । भवविरिञ्ची मुखे आदी येषां तान् । भवो रुद्रः, विरिञ्चिर्ब्रह्मा । तस्यांशभूतः कोऽप्यसौ भवेन्नेत्यभिप्रेत्याऽऽह—साक्षात् स एष इति । दृग्विषये मार्गे इति शेषः । यद् यस्मात् । किं कथम् ।

४६ । नरो० । अलौकिकरूपं दृष्ट्वाऽतितोषं प्राप्य तं विभजिष्णुराह—मर्त्यावतारे इत्यादि । मर्त्यरूपेण योऽवतारस्तस्मिन् । यद्वा मर्त्यलोके योऽवतारस्तस्मिन् । सेव्यत्वाश्रयत्वसाधकान्यन्यविलक्षणविशेषणान्याह—मनुजस्येवाऽऽकृतिराकारो यस्य । मनुजाकृतिरिवाकृतिर्यस्येति वा तादृशम्, राम इति अभिधेयं नाम यस्य तादृशम् । पद्मे इव सिते विशाले लोचने यस्य तादृशम् । सिते इति साधर्म्यसूचनार्थमुक्तं न त्वत्रास्तीति दिक् ।

४७ । नरो० । श्रीरामं दिध्यासुरात्मनः कृतार्थत्वं मन्यमानाह—यत्पादेत्यादि । श्रुतिभिर्वेदैः । यस्य नाभिपङ्कजाद् भवो जन्म यस्य तादृशब्रह्मणो नाभिपद्मजत्वकीर्तनेन

---

सकलजगद्रूपेण परिणमनसमर्थो महामायावानित्यर्थः । एवञ्च शुद्धमायिकमेवेदं तव शरीरं चलनादिकञ्च नेतरवदिति भावः । रा० ।

[ चलस्यजस्रमिति । चरणादिवर्जितोऽप्यजस्रं चलसि, चलसीत्युपलक्षणं पश्यसि शृणोषीत्यादि । यतः सम्पूर्णोऽतः आनन्दमयः, तत्र चलनादिकमपि मायिकमेव । तथा च श्रुतिः—'अपाणिपादो यवनो ग्रहीता' ( श्वेता० ३।१९ ) इत्यादि । गो० ]

४५ । यत्पादपङ्कजपवित्रजन्मा 'विष्णोः पादप्रसूते'ति पुराणोक्तेः । भवविरिञ्चिमुखान् शिवब्रह्मप्रभृतीन् पुनाति पवित्रीकरोति । साक्षात् प्रत्यक्षतः शरीरीत्यर्थः । दृग्विषयं दृशोश्चक्षुषोर्विषयं गोचरं यथा स्यात्तथा । अतो मम पुराकृतभागधेयं पूर्वपूर्वजन्मोत्थभाग्यं किं वर्ण्यते, तत्तु वर्णनाऽयोग्यमित्यर्थः ।

४७ । यस्य पादो विश्वं 'पादोऽस्य विश्वा भूतानि' (पुरुषसूक्तम् ३) इति श्रुतेः । तदेव पङ्कजं तस्य रजो रज इव सारांशः । यथा कमले सौगन्ध्यसम्पादकतयाऽन्तर्विद्यमानरज एव सारम्

---

1 क-ख-ग घ-च-छ '-परागपवित्रजन्मा', ङ '-रजःपरिपूतजन्मा' । 2 क-ख ग-घ-च-छ 'षगो' ।
3 ग-च '-देहम्' । 4 ङ 'राम' ।

यस्यावतारचरितानि विरिञ्चिलोके गायन्ति नारदमुखा भवपद्मजाद्याः ।
आनन्दजाश्रुपरिषिक्तकुचाग्रसीमा वागीश्वरी च तमहं शरणं प्रपद्ये ॥ ४८ ॥
[1]सोऽयं परात्मा पुरुषः पुराण एष स्वयंज्योतिरनन्त आद्य. ।
मायातनू लोकविमोहिनीं [2]यो धत्ते [3]परानुग्रह [4]एष रामः ॥ ४९ ॥

---

श्रीरामस्य तत्पूर्वं विद्यमानत्व सूचितम् । यन्नामसाररसिक इति । यान्नाम्न श्रेष्ठ आस्वादनेन (?) स इत्यर्थ । तत्कर्तृकं तदगानं किं न विस्मयजनकम्, विस्मयजनकमेवेति हृदि निधायाऽऽह— भगवानिति ।

उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति ॥
( विष्णुपुराणम्, षष्ठांश', ५अः ७८ )

इत्येवंलक्षण इत्यर्थः ।

४८ । नरो० । श्रीरामपदरज स्पर्शादिना विधूतपापाऽतिनिर्मलस्वान्ता निमीलित-नयना सती स्वान्तरे तं पश्यन्ती विस्मयात् पुन स्तौति—यस्येत्यादिना । अवतारचरितानि अवचेष्टितानि विरिञ्चिलोके ब्रह्मलोके नारदमुखा नारदादय, भवपद्मजाद्या शिवब्रह्माद्या, वागीश्वरी च, यस्यावतारचरितानि गायन्तीति सम्बन्ध । आनन्दाश्रुपरिषिक्ता कुचाग्रसीमा यस्यास्तादृशी । एतेनाश्रुबाहुल्यं सूचितम् । तेन च हर्षातिशय सूचित. ।

४९ । नरो० । चक्षुषी उन्मील्य पुर स्थित श्रीराम दृष्ट्वा विस्मयात् पुन' स्तौति—सोऽय-मित्यादिना । अयं दृग्गोचर । तस्यानन्तत्वात् सर्वान्तर्यामित्वमस्य कथ तदिति नेत्याह—

---

एव विश्वस्य सत्ताभानसम्पादकतया ब्रह्मव मायांशत्वाद्रज , तत् श्रुतिभिर्विमृग्य श्रुतिशिरोरूपोप-निषद्गम्यत्वात्तस्येति भाव । यन्नाम्नां मध्ये सारं नाम रामेति तस्य रसिकस्तद्विषयप्रीतिमान् भगवान् ऐश्वर्यधर्मयशोलक्ष्मीज्ञानवैराग्यवान् । षण्णामेषाम्—

ऐश्वर्यस्य समग्रस्य धर्मस्य यशस. श्रिय ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥ इति भगसंज्ञकत्वोक्ते ।
उत्पत्ति प्रलयञ्चैव भूतानामागति गतिम् ।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति ॥ इत्युक्तो वा । रा० ।

४९ । सोऽय राम परात्मा पर सर्वजीवेभ्य. प्रकृतेश्चाधिक आत्मा पुरुष , पुरि शयनात् पुरुष , पुराण. सर्वदा विद्यमान इत्यर्थ. । एष स्वयज्योति स्वप्रकाश', अनन्तोऽविनाशी, आद्य सर्वकारणं य. परानुग्रहे परेषां मादृशजनानामनुग्रहे कर्त्तव्यतया बुद्धिस्थे सति परम-

---

1. ख-च 'योऽय'। 2. घ 'या'। 3 घ 'पुराऽ-'। 4 च 'एव'।

अयं हि [1]'सृष्टिस्थितिसंयमानामेक' स्वमायागुण[2]बिम्बितो यः ।
विरिञ्चिविष्णवीश्वरनाम[3]भेदान् धत्ते स्वतन्त्र' परिपूर्ण आत्मा ॥ ५० ॥

पुरुष इति अनन्त इति च। सर्वान्तर्यामीत्यर्थ, देशकालवस्त्वपरिच्छिन्न इत्यर्थ॰। तस्यानादित्वादादिकारणत्वम्, अस्य कथं तदिति नेत्याह—आद्य इति, पुराण इति। आदिकारण इत्यर्थ॰, अनादिरित्यर्थ। तस्य स्वप्रकाशितचित्स्वरूपत्वम्, अस्य कथं तदिति नेत्याह—स्वयंज्योतिरिति। तस्याविकारत्वात् तेन सहास्य कथमैक्यमिति नेत्याह—मायातनूमिति। मायया रचितां तनूमित्यर्थ। स्वप्रयोजनाभावात् कथ धत्ते इति नेत्याह—परानुग्रह एवेति परानुग्रहायैवेत्यर्थ॰।

५०। नरो॰। तस्य सृष्टि-स्थिति-प्रलयकर्तृत्वम्, अस्य कथं तदिति नेत्याह—अयं हि सृष्टिस्थितिसंयमानामिति। स्थिति पालनम्, संयमः प्रलय। स्वमायागुणबिम्बित॰ स्वमायागुणोपहित। तर्हि किमस्य मायाधीनत्वमिति नेत्याह—स्वतन्त्र इति। स्वतन्त्रत्वे हेतु —परिपूर्ण आत्मेति। विरिञ्चिविष्णवीश्वरनामभेदान् ब्रह्मविष्णुशिवनामविशेषान्।

सुन्दरत्वादिगुणैर्लोकविमोहिनीं मायातनु' न त्वितरजनवत् पाञ्चभौतिकीं धत्ते स एवैष राम॰, 'उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना' (रामतापनी॰ ७) इति श्रुतेः। रा॰।

[ सोऽयमिति। न त्वं कस्याप्यात्मज॰ किन्तु पुराण पुरुष। आद्य॰ सर्वकारणानाम्, एष मम पुरोवर्त्ती। सोऽयमेव पुरि शरीरे शेते इति पुरुष। तर्हि किं जीव॰? न, परात्मा। ननु जीवोऽपि पर एव 'बुद्धेस्तु पुरुष॰ पर'' इति श्रुतेरित्यत आह—स्वयंज्योति स्वप्रकाश॰। प्रकाशो ज्ञानशक्ति॰, जीवस्य त्वीश्वरप्रसादादेव ज्ञानोदय॰। तदुक्तं जीवस्तुतौ—

'नष्टस्मृति पुनरयं प्रवृणीत लोकं
युक्त्या कया महदनुग्रहमन्तरेण।' (भागव॰ ३।३१।१९) इति।

अनन्त इति देशकालापरिच्छिन्न। आद्यत्वे हेतु पुराण इति। पराननुगृह्णातीति परानुग्रह, लोकानुग्रहार्थमेव मायया नराकार बिभर्षीत्यर्थ। गो॰ ]

५०। अय हीति। विश्वस्य जगत उद्भव उत्पत्ति, संयमो नाश, ताभ्यां पालनमप्युपलक्ष्यते, तेषां स्वतन्त्र कर्त्ता। 'स्वतन्त्र कर्त्ता' इति (१।४।५४) पाणिन्युक्ते। य एक एव परिपूर्णो व्यापक आत्मा स्वमायागुणेषु रज सत्त्वतम सु बिम्बित सन् विरिञ्च्यादिनामभेदान् धत्ते, रजोगुणोपहितचैतन्यमेव ब्रह्मा, सत्त्वगुणोपहितं विष्णु, तमोगुणयुक्तं रुद्र इति भाव। रा॰।

[ स एवायं राम॰ परिपूर्ण आत्मेत्यन्वय। यो विश्वस्य उद्भवसंयमानां जन्मनाशपालनानां कृते बहुवचनेन पालनस्यापि सग्रहाद् एकोऽपि स्वाधीनाया मायाया ये गुणा रज॰सत्त्वतमांसि तेषु बिम्बितो बिम्बमिव स्थित॰ सन् विरिञ्च्यादिनामभेदान् धत्ते। गो॰ ]

1 क-ख-ग-घ-ङ-च-छ 'विश्वोद्भवसंय-'। 2. ङ '-संवितो'। 3 च '-भेदाद', छ '-धेयान्'।

[1]नमोऽस्तु [2]ते राम तवाङ्घ्रिपङ्कजं श्रिया धृतं वक्षसि लालितं [3]प्रियात् ।
आक्रान्तमेकेन जगत्त्रयं पुरा [4]ध्येयं मुनीन्द्रैरभिमानवर्जितैः ॥ ५१ ॥
जगतामादिभूतस्त्वं जगत् त्वं जगदाश्रयः ।
सर्वभू[5]तेषु संसक्त एको भाति भवान् परः ॥ ५२ ॥

---

५१ । नरो० । अतिविस्मयान्नमस्कृत्य सम्बोध्य च पुनः स्तौति—नमोऽस्त्वित्यादिना । हे राम, प्रियात् लालितं तवाङ्घ्रिपङ्कजं श्रिया वक्षसि धृतमित्यन्वयः । लालितमीप्सितं प्रियमिति यावत् । श्रिया लक्ष्म्या । एकेनाङ्घ्रिपङ्कजेन । ध्येयमर्थात्तदङ्घ्रिपङ्कजम् । अभिमानवर्जितैरहङ्कारत्यक्तैः ।

५२ । नरो० । आदिभूत आदिकारणमित्यर्थः । जगत् त्वमित्यनेन त्वदतिरिक्तं किमपि नास्तीति सूचितम् । जगदाश्रय इत्यनेन त्वामेवावलम्ब्य जगद् वर्त्तते इत्युक्तम् । सर्वभूतेषु जरायुजाण्डजोद्भिज्जेषु संसक्तः स्थितः । तर्हि तद्गुणैर्न कथं लिप्येऽहमिति चेत्तत्राऽऽह—पर इति । भिन्न इत्यर्थः । ननु तत्र तिष्ठतो मम परिच्छिन्नत्वं कथं न स्यादिति चेत्तत्राऽऽह—एक इति । अद्वितीय इत्यर्थः ।

---

५१ । हे राम, तव यदङ्घ्रिपङ्कजं चरणसरोजं प्रियाद् अतिहृद्यत्वेनेत्यर्थः । श्रिया वक्षसि धृतं लालितञ्च संवाहनादिना सेवितञ्च । पुरा बलिदर्पविनाशकाले येनैकेन अङ्घ्रिपङ्कजेन जगत्त्रयं भूर्लोकभुवर्लोकस्वर्लोकात्मकम् आक्रान्तम् 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्' इति श्रुतेः,

लब्ध्वा च त्रीन् क्रमान् विष्णुः कृत्वा रूपमथाद्भुतम् ।
त्रिभिः क्रमैस्तदा लोकानाजहार त्रिविक्रमः ॥
एकेन हि पदा कृत्स्नां पृथिवीं सोऽध्यतिष्ठत ।
द्वितीयेनाव्ययं व्योम द्यां तृतीयेन राघव ॥

इति वाल्मीकिरामायणाच्च । १।३२।१३-१४ ।

पुनः किम्भूतं तत् पदमित्याह—ध्येयमिति । तव यच्च पदम् अभिमानवर्जितैर्मुनीन्द्रैर्ध्येयं 'तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः' (कठो० ३।९) इत्युक्त्या, तस्मै मे नमोऽस्तु ।

५२ । जगतामिति । आदिभूतः कारणत्वादिति भावः । जगत् त्वं जगदनुवादेन त्वत्पदोपात्तब्रह्मात्मत्वं विधीयते 'सर्वं खल्विदं ब्रह्म' (छान्दो० ३।१४।१) इति वत् । तत्र जगतो मिथ्याभूतत्वेन ब्रह्मसामानाधिकरण्यानुपपत्तावप्यध्यस्तत्वेन जगदबाधफलकत्वान्न दोषः । एवञ्च जगदारोपाधिष्ठानं त्वमित्यर्थः । तदेवाऽऽह—जगदाश्रय इति । 'इमाः प्रजाः सदायतनाः सत्-

---

1 च 'नमामि हे राम' । 2 ग-छ 'हे' । 3 च छ 'प्रियं' । 4 ङ 'ध्येयं' । 5 क ग-ङ-च-छ '-तेष्वसंयुक्त' ।

ओङ्कारवाच्यस्त्वं राम वाचामविषयः पुमान्।
वाच्यवाचकभेदेन भवानेव जगन्मयः ॥ ५३ ॥

---

५३। नरो०। ब्रह्मादीन् विहाय मां कथं स्तौषीति चेत्तत्राऽऽह—ॐकारवाच्य इति। अकारोकारमकारवाच्यविष्णुशिवब्रह्मात्मक इत्यर्थः। अवतारित्वाद् ब्रह्मादीनामपि त्वं स्तोतव्य इति भावः। तर्हि किं ब्रह्माद्याकारेण परिणममाना प्रकृतिरहमिति चेत्तत्राऽऽह—पुमानिति। ननु यदि ब्रह्माद्यात्मकत्वं तर्हि मद्दर्शनं सुलभमिति चेत्तत्राऽऽह—वाचामविषय इति। वाचामप्यगोचर इत्यर्थः। सामान्येन श्रीरामस्य जगन्मयत्वमुक्त्वा विशिष्य तन्मयत्वं वक्तुं प्रक्रमते—वाच्येत्यादिना। वाच्यं रूपम्, वाचकं नाम।

---

प्रतिष्ठा' (छान्दो० ६।८।४।) इति श्रुतेः। वास्तव आश्रयाश्रयिभावो नास्त्येवेत्याह—सर्वभूतेष्वसंयुक्त इति। एवञ्च श्रुत्युक्तं तदधिष्ठानत्वमध्यारोपितमेवेति भावः। अत एव भवानेकोऽद्वितीयो भाति प्रकाशते। रा०।

[ जगतामिति। जगतामादिभूतं कारणम्, न केवलमेतावदेव, किञ्च त्वं जगच्च, उपादानत्वाद् जगतामाश्रय आधारः, सर्वभूतेषु संसक्तः अन्तर्यामितया स्थितः, एतेभ्यः परश्च एकोऽद्वितीयो भवान् भाति। गो० ]

५३। ओङ्कारवाच्यस्त्वं 'तस्य वाचकः प्रणवः' [समाधिपाद० २७] इति पातञ्जलसूत्रात्। अवतीति ओमिति निरुपाधिकरक्षकत्वगुणेन स तद्वाच्यः। यद्वा अश्च उश्च मश्च ओमिति ब्रह्मविष्णुशिवात्मत्वेन स तद्वाच्यः। तुर्येण नादाख्यध्वनिना च शुद्धं ब्रह्म स्वरूपत एव तत्र निबद्धं पक्षद्वयेऽपि। यदाऽपि सोऽहमिति शब्दे—

'सकारार्णं हकारार्णं लोपयित्वा ततः परम्।
सन्धिं कुर्यात् पूर्वरूपं ततोऽसौ प्रणवो भवेत् ॥

इति रीत्या प्रणवसाधनं तदाऽप्यहमनुवादेन तत्ताविशिष्टान्तर्याम्यभेदप्रतिपादनात् सगुण एव तदर्थः। यद्वा, सकारहकारलोपेन तत्त्वाहन्त्वयोस्त्यागाच्छुद्धमेव ब्रह्म तदर्थः। तर्हि किं सगुण एवाहं नेत्याह—वाचामविषय इति। निर्धर्मकत्वाच्छक्त्याद्यसम्भवेन स्वरूपतस्तज्जन्यबोधविषय इत्यर्थः। नन्वेवं 'तस्य वाचकः प्रणवः' इति पातञ्जलसूत्रासङ्गतिस्तत्राऽऽह—वाच्येति। वाच्यवाचकभेदेन तत्कल्पनया भवानेव मायया जगन्मय इति कल्पितभेदेन कल्पितगुणैश्च तव वाच्यत्वं गृहीत्वा पारमर्षसूत्रोपपत्तिरिति भावः। रा०।

[ ओङ्कारवाच्य इति, प्रणवस्याभिधेयं परं ब्रह्मेत्यर्थः। तथा च नारदीयम्—

'वाच्यन्तु परमं ब्रह्म वाचकः प्रणवः स्मृतः' इति।

वाचामविषयोऽगोचरः पुरुषः, अतो मूक इति नोच्यते वाचकः शब्दोऽपि त्वद्व्यतिरिक्तो

कार्यकारणकर्त्तृत्व[1]फलसाधनभेदतः ।
एको विभासि [3]राम त्वं मायया बहुरूपया ॥ ५४ ॥
त्वन्मायामोहितधियस्त्वां न जानन्ति तत्त्वतः ।
मानुषं त्वाऽभिमन्यन्ते मायिनं परमेश्वरम् ॥ ५५ ॥

---

५४। नरो०। कार्यं सुखदुःखादि, कारणमिन्द्रियम्, फलमदृष्टम्, साधनं कर्म (?)। तर्हि मम बहुत्वं स्यादित्यत्राऽऽह—एक इति। अद्वितीय इत्यर्थः। तर्हि नानापदार्थाः कथं दृश्यन्ते चेत्तत्राऽऽह—मायया बहुरूपयेति। मायैव पूर्वपूर्वसंस्कारजीवकर्मप्रयुक्ता सती जगदाकारेण परिणमते काले निवर्त्तते चेति भावः। जीवकर्मभेदान्माया इति नास्ति विरोधः।

५५। नरो०। तर्हि किं मां सर्वे न नमन्ति, न स्तुवन्ति, न सेवन्ते इति चेत्तत्राऽऽह—त्वन्मायेत्यादि। त्वन्मायया त्वदधीनया मायया मोहिता आत्मानात्मतादात्म्यावगाहने नियुक्ता-त्मत्वेन अनात्मनां देहेन्द्रियमनसामवगाहने कारिता विपरीतीकृतेति वा बुद्धिर्येषां तादृशाः।

---

नास्तीत्याह—वाच्यवाचकभेदेन बोध्यबोधकत्वेन भवानेव प्रतीयते मुनिभिः शब्दब्रह्मात्म-कत्वात्। तथा च भागवतम्—

'शब्दब्रह्म परं ब्रह्म उभे मे शाश्वती तनुः' इति।

अत्र हेतुर्जगन्मयः, व्यतिरेकाभावात्। गो० ]

५४। उक्तं जगन्मयत्वं मायिकमित्याह—कार्येत्यादि। कार्यं महत्तत्त्वादि, कारणं मायारूपा स्थूलप्रकृतिः, कर्तृत्वं तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतित्वम्, फलं स्वर्ग-नरकादिसाधनं क्रत्वादिवेदादि। एतद्भेदत एकोऽपि त्वं बहुरूपया मायया उक्तभेदैर्युक्त इव भासि। उक्तञ्च विष्णुपुराणे—

स एव मूलप्रकृतिर्व्यक्तरूपी जगच्च सः।
तस्मिन्नेव लयं सर्वं याति तत्र च तिष्ठति ॥
कर्त्ता क्रियाणां स च इज्यते क्रतुः स एव तत्कर्मफलञ्च तस्य यत्।
स्रुगादिवत् साधनमप्यशेषतो हरेर्न किञ्चिद् व्यतिरिक्तमस्ति ॥ (२।७।४२-४३ श्लो०) इति।

[ ननु कर्तृकर्मकरणादिभेदेन पृथगेव दृश्यते कथं जगन्मयोऽयं तत्राऽऽह—कार्येति। कार्यं कर्म, कारणमुपादानादि, अधिकरणसम्प्रदानापादानानां ग्रहणम्। कर्त्ता निष्पादकः, फलसाधनं करणम्, एवं भेदेन बहुरूपया मायया एक एव त्वं विभासि। गो० ]

५५। नन्वीदृशो यद्यहं तर्हि लोको मां तथा किमिति न जानातीत्यत्राऽऽह—त्वन्मा-येति। त्वद्विषयया माययेत्यर्थः। तदुक्तं विष्णुपुराणे—

---

1. ङ 'त्तृत्व', च छ 'र्तृत्वात्'। 2 ग '-फलाराधन-'। 3 ङ 'रामस्त्व'।

आकाशवत् त्वं सर्वत्र बहिरन्तर्गतोऽमलः ।
असङ्गो [1]ह्यचलो [2]नित्यः शुद्धो बुद्धः [3]सदाऽद्वयः ॥ ५६ ॥
योषिन्मूढाऽहमज्ञा ते तत्त्वं जाने कथं विभो ।
तस्मात्ते शतशो राम नमस्कुर्यामनन्यधीः ॥ ५७ ॥

---

ननु राजपुत्रोऽसाविति ज्ञानं सर्वेषां विद्यते कथं त्वयोक्तं न जानन्तीति चेत्तत्राऽऽह—तत्त्वत इति । स्वरूपेणेत्यर्थः, याथार्थ्येनेत्यर्थो वा । तर्हि केन रूपेण मां जानन्तीत्यपेक्षायामाह—मानुषमित्यादि । त्वा त्वाम् । मानुषरूपेण कथं मां जानन्तीति चेत्तत्राऽऽह—मायिनमिति । मायया मानुषरूपिणमित्यर्थः ।

५६ । नरो० । तर्हि किं मम स्वरूपमित्यपेक्षायामाह—आकाशवदित्यादि । आकाशवदित्यादिना सर्वव्यापकत्वमुक्तम्, तेन चापरिच्छिन्नत्वं सूचितम् । ननु तर्हि सर्वगुणेषु सक्तस्य मम ब्रह्मत्वं कुत इति चेत्तत्राऽऽह—असङ्ग इति । अत एवामलः । अचलः स्थिरस्वभावः । नित्योऽविनाशी । सदा विद्यमानं द्वयं द्विधाभावो यत्र तादृशः । यद्वा, सदाऽविद्यमानं द्वयं यस्मात् तादृशः । जीवत्ववारणाय शुद्ध इत्युक्तम् । शुद्धत्वन्त्वन्तःकरणाद्युपाधिसम्बन्धशून्यत्वं रागादिशून्यत्वं वा । नित्यशुद्धबुद्धमुक्तानन्ताद्वयस्वभावस्त्वमिति भावः । अत्र तदभिन्नत्वे सति तद्बोधकत्वमिति स्वरूपलक्षणं बोध्यम् ।

५७ । नरो० । ब्रह्मादयोऽप्यस्य तत्त्वं न जानन्ति योषिन्मूढाऽहं कथं जानामीति हृदि निधायाऽऽह—योषिदित्यादि । यतो मूढा विवेकशून्या अतोऽज्ञा परमेश्वरविषयकज्ञानशून्या । हे विभो हे सर्वव्यापिन्, अतः परं किं कार्यमित्यपेक्षायामाह—तस्मादित्यादि । यद्वा, उपसंहरति तस्मादिति । ते इत्यत्र विवक्षितकर्मणि सम्बन्धविवक्षायां षष्ठी ।

---

'योऽहं स त्वं जगच्चेदं सदेवासुरमानुषम् ।
अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः ॥

( ७।३३।४८ श्लो० ) इति । रा० ।

५६ । [ नन्विदंकारास्पदत्वेन परिच्छिन्नस्य कथमीश्वरत्वं तत्राऽऽह—आकाशवदित्यादि । बहिरन्तर्गतत्वेऽप्यनासक्तिमाह—अमल इति, असङ्ग इति । 'असङ्गो ह्ययं पुरुषः' ( बृहदा० ४।३।१५ ) इति श्रुतेः । अचलः स्थाणुः । गो० ]

५७ । मूढा तमोगुणप्रधाना अत एवाज्ञा नमस्कुर्यां तद्रूपज्ञानायेति भावः । रा० ।

[ योषिदिति । यतो योषिदतो मूढा अज्ञाऽहं तव तत्त्वं कथं जाने, तस्मात्तत्त्वज्ञानाग्रहं त्यक्त्वा शतशस्ते तुभ्यं नमस्कुर्याम् । गो० ]

---

1. ग-ङ 'ह्यमलो' । 2. ङ 'नित्यशुद्धबुद्ध.' । 3. क-ख-घ-'सदव्य-', ग-ङ-च 'सदाऽव्य-' ।

देव मे यत्र कुत्रापि स्थिताया अपि सर्वदा ।
[1]त्वत्पादकमले [2]सक्ता भक्तिरेव सदाऽस्तु मे ॥ ५८ ॥
नमस्ते पुरुषाध्यक्ष नमस्ते भक्तवत्सल ।
नमस्तेऽस्तु हृषीकेश नारायण नमोऽस्तु ते ॥ ५९ ॥
भवभयहरमेकं भानुकोटिप्रकाशं करधृतशरचापं [3]कालमेघावकाशम् ।
कनकरुचिरवस्त्रं रत्नवत्कुण्डलाढ्यं कमलविशदनेत्रं सानुजं राममीडे ॥ ६० ॥

---

५८ । नरो० । सक्ता दृढा ।

५९ । नरो० । बहुशतनमस्कारान् प्रतिज्ञायाचलां भक्तिं प्रार्थ्य बहुनमस्कारपूर्वकं स्तौति—नमस्ते इत्यादिना । ते तुभ्यम् । पुरुषाध्यक्ष ब्रह्मादीनां नियन्तः । यद्वा, पुरुष सर्वान्तर्यामिन्, अध्यक्ष सर्वनियन्तः । हृषीकेश इन्द्रियाधिष्ठातः ।

६० । नरो० । भानुकोटेरिव प्रकाशो द्युतिर्यस्य तम् । कराभ्यां धृतौ शरचापौ येन तादृशम् । कोटिर्भूत्वा स्थितस्य तस्य सूर्यकोटिप्रकाशकत्वे किं चित्रमिति चेत्तत्राऽऽह—एकमिति । कालमेघस्येवावकाशः प्रकाशो यस्य तादृशम् । कालोऽत्राऽऽषाढः । कनकमिव रुचिरं मनोहरं वस्त्रं यस्य तादृशम् । रत्नवत्कुण्डलाढ्यं रत्नघटितकुण्डलयुतमित्यर्थः । कमले इव विशदे नेत्रे यस्य तादृशम् ।

---

५८ । [ यत्र कुत्रापीति । स्वर्गे नरके वा स्थिताया मे मम त्वत्पादकमले सक्ता भक्तिरस्तु । यद्वा, मे मया त्वत्पादकमले सक्ता अर्पिता भक्तिः । गो० ]

५९ । पुरुषाध्यक्ष सकलपुरुषसाक्षिन् । हृषीकेश हृषीकाणामिन्द्रियाणामधिष्ठातः, 'हृष्यन्ति विषयै'रिति हृषीकाणि इन्द्रियाणि । 'हृषीकेश भयेषु च' इति विष्णुधर्मोक्तेर्भीतयाऽहल्ययैतन्नाम स्मृतम् । नारः जीवसमूहोऽयनं स्थानं यस्यान्तर्यामित्वात्तत्र स्थितत्वान्नारायणः ।

'नयतीति नरः प्रोक्तः परमात्मा सनातनः ।
नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ॥
तान्येव चायनं तस्य तेन नारायणः स्मृतः ।

इति तु मनुः । आपो नारास्तत्स्थितत्वाद्वा नारायणः । अस्य मन्त्रस्य संसारभयनाशकत्वात् स्मरणम् । तदुक्तं नृसिंहपुराणे—

'नारायणाय नम इत्ययमेव सत्यः
संसारघोरविषसंहरणाय मन्त्रः ।' इति । रा० ।

---

1 ग 'त्वत्पदे कमले' । 2 च छ 'शक्ता' । 3 क ख घ ङ छ 'कालमेघावभासम्', ग-च 'नीलमेघावभासम्' ।

स्तुत्वैवं पुरुषं साक्षाद्राघवं पुरतः स्थितम् ।
परिक्रम्य प्रणम्याऽऽशु साऽनुज्ञाता ययौ [1]पतिम् ॥ ६१ ॥
अहल्यया कृतं स्तोत्रं यः पठेद् भक्तिसंयुतः ।
स मुच्यतेऽखिलैः पापैः परं ब्रह्माधिगच्छति ॥ ६२ ॥
पुत्रा[2]द्यर्थे पठेद् भक्त्या रामं हृदि निधाय च ।
संवत्सरेण लभते [3]बन्ध्यायामपि पुत्रकम् ॥ ६३ ॥
सर्वान् कामानवाप्नोति रामचन्द्रप्रसादतः ॥ ६४ ॥
ब्रह्मघ्नो गुरुतल्पगोऽपि पुरुषः स्तेयी सुरापोऽपि वा
[4]मातृभ्रातृविहिंसकोऽपि सततं भोगैक[5]वाञ्छातुरः ।
नित्यं स्तोत्रमिदं [6]जपन् रघुपतिं भक्त्या हृदिस्थं स्मरन्
ध्यायन् मुक्तिमुपैति किं पुन[7]रसौ स्वाचारयुक्तो [8]नरः ॥ ६५ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे आदिकाण्डे
पञ्चमोऽध्यायः ॥ ५ ॥

---

६१ । नरो० । परिक्रम्य प्रदक्षिणीकृत्य ।

६५ । नरो० । गुरुतल्पगोऽपीति । गुरुः पिता, तल्पं स्त्री विमातेति यावत् । भोगैकवाञ्छातुरो भोगकेवलवाञ्छातुरः भोगकेवलवाञ्छाव्याकुल इत्यर्थः । भोग एव एको मुख्यो यत्र तादृशवाञ्छया व्याकुल इत्यर्थो वा । कदाचिदपि भोगे विरागो नास्तीति सूचनाय एकेत्युक्तम् ।

[ आदिकाण्डे पञ्चमाध्यायव्याख्या समाप्ता ॥ ५ ॥ ]

---

६५ । मातृभ्रात्रित्यत्रानङ्भाव आर्षः । भोगैकबद्ध आतुर इति च्छेदः, सन्धिरार्षः । रा० ।

---

1 ङ 'सती' । 2 च 'द्यर्थं' । 3 ख ग 'वन्ध्या अपि सपुत्रकम' । 4 ग ङ 'मातापितृ...' । 5 क-ख-घ-ङ-च '-बद्धा-', घ '-बद्धाशय' । 6 च 'जपेद्रघु' । 7 च 'भक्तो' । 8 ग 'जन' ।

# षष्ठोऽध्यायः

श्रीमहादेव उवाच—

विश्वामित्रोऽ[1]पि तं प्राह राघवं सहलक्ष्मणम् ।
गच्छामो [2]वत्स मिथिलां जनकेनाभिपालिताम् ॥ १ ॥
दृष्ट्वा क्रतुवरं [3]पश्चादयोध्यां गन्तुमर्हसि ।
इत्युक्त्वा प्रययौ गङ्गा[4]मुत्तीर्य सहराघवः[5] ॥ २ ॥
विदेहस्य पुरं [6]प्रातर्ऋ[7]षि[8]वाटं समाविशत् ।
प्राप्तं कौशिकमाकर्ण्य जनकोऽतिमुदान्वितः ॥ ३ ॥
पूजाद्रव्याणि संगृह्य सोपाध्यायः समाययौ ।
दण्डवत् प्रणिपत्याथ पूजयामास कौशिकम् ॥ ४ ॥
पप्रच्छ राघवौ दृष्ट्वा सर्वलक्षण[9]लक्षितौ ।
द्योतयन्तौ दिशः सर्वाश्चन्द्रसूर्याविवापरौ ॥ ५ ॥
[10]कस्यैतौ नरशार्दूलौ पुत्रौ देवसुतोपमौ ।
मनःप्रीतिकरौ मेऽद्य नरनारायणाविव ॥ ६ ॥

---

५ । नरो० । सर्वलक्षणलक्षिताविति शुभसूचकाशेषचिह्नचिह्निताविर्त्यथः । चन्द्र-सूर्याविवेति इवशब्दोऽत्र उत्प्रेक्षाद्योतकः । तथा च दण्डी—

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥ (काव्या० २प० २३४) इति ।

६ । नरो० । नरशार्दूलौ नरश्रेष्ठौ । देवसुततुल्यत्वान्नरश्रेष्ठत्वम्, नरश्रेष्ठत्वान्मनः-

---

४ । [ दण्डवत् प्रणिपत्याऽऽह इति स्वागतमिति शेषः । गो० ]

६ । नरनारायणौ तन्नामकौ ऋषिविशेषौ । तौ च भगवतश्चतुर्थावतारत्वेन कीर्त्तितौ धर्मपत्न्यां जातौ ।

तुर्ये धर्मकलासर्गे नरनारायणावृषी ।
भूत्वात्मोपशमोपेतमकरोद् दुश्चरं तपः ॥ १।३।९ इति भागवतोक्तेः ।

---

1 ख-ग घ क्ष 'थ'। 2 ङ मिथिलं वत्स'। 3 क्ष 'तत्र त्वयो-'। 4 क-ङ च-क्ष '-मुत्तत्तु'। 5 अतः परं क ख घ-पुस्तकेषु 'तस्मिन् काले नाविकेन निषिद्धो रघुनन्दनः । नाविक उवाच— क्षालयामि तव पादपङ्कजं नाथ दारुदृषदोः किमन्तरम् । मानुषीकरणचूर्णमस्ति ते पादयोरिति कथा प्रथीयसी ॥ पादाम्बुजं ते विमलं हि कृत्वा पश्चात् परं तीरमहं नयामि । नो चेत्तरी सद्युवती मलेन स्याच्चेद् विभो विद्धि कुटुम्बहानिः ॥ इत्युक्त्वा क्षालितौ पादौ परं तीरं ततो गतः । कौशिको रघुनाथेन सहितो मिथिलां ययौ ॥' इत्यधिकम् । 6 च-क्ष 'प्रातः क्र-'। 7 क '-राज', ङ '-राज'। 8 क च '-ऽपि'। 9 ख-च '-संयुतौ'। 10. च-पुस्तके इदमर्द्धं नास्ति ।

प्रत्युवाच मुनिः प्रीतो हर्षयञ्जनकं तदा ।
पुत्रौ दशरथस्यैतौ भ्रातरौ रामलक्ष्मणौ ॥ ७ ॥
मखसंरक्षणार्थाय [1]मयानीतौ पितु: पुरात् ।
आगच्छन् राघवो मार्गे [2]ताडकां विश्वघातिनीम् ॥ ८ ॥
शरेणैकेन हत[3]वांश्चोदि[4]तो मेऽतिविक्रमः ।
ततो ममाऽऽश्रमं गत्वा मम यज्ञविहिंसकान् ॥ ९ ॥
सुबाहुप्रमुखान् हत्वा मारीचं सागरेऽक्षिपत् ।
ततो गङ्गातटे पुण्ये [5]गौतमस्याऽऽश्रमे शुभे ॥ १० ॥
[6]गत्वा तत्र शिलारूपा गौतमस्य वधू· स्थिता ।
पादपङ्कजसंस्पर्शात् कृता मानुषरूपिणी ॥ ११ ॥
दृष्ट्वाऽहल्यां नमस्कृत्य तया सम्यक् प्रपूजितः[7] ।
इदानीं द्रष्टुकामस्ते गृहे माहेश्वरं धनुः ।
पूजित राजभिः सर्वैर्दृष्टमित्यनुशुश्रुम[8] ॥ १२ ॥

---

प्रीतिकरत्वम् । नरनारायणाविवेति कृष्णार्जुनाविवेत्यर्थ· । अत्र उपमायामिव·, मनःप्रीतिकरत्वमत्र साधर्म्यम् ।

७ । नरो० । सहचरत्वसूचनाय भ्रातरावित्युक्तम् ।

८-९ । नरो० । किमर्थमानीताविति प्रश्नं विना मखसंरक्षणार्थायेत्यादि यदुक्तं तद्धनुर्भङ्गसामर्थ्यसूचनाय ।

स्त्रीं कथं हतवानिति चेत्तत्राऽऽह—चोदितो मे इति । मया प्रेरित इत्यर्थ· । अत्र सम्बन्धविवक्षायां षष्ठी आर्षो वा तत्प्रयोग· । स्त्रीवधे कथ त्वया प्रयुक्त इति चेत्तत्राऽऽह—विश्वघातिनीमिति । जनको विस्मय प्राप्नोत्विति हृदि निधायाऽऽह—शरेणैकेनेति । ततस्ताडकावधानन्तरम्, यज्ञविहिंसकान् यज्ञनाशकान् ।

१० । नरो० । पादपङ्कजसंस्पर्शादहल्याया· शापाद्विमोक्षणं श्रुतं सद्द विस्मयातिशयजनकमिति हृदि निधायाह—तत इत्यादि ।

---

१२ । तच्च सर्वं राजभिर्दृष्टमेव न त्वारुढज्यं कृतमित्यनुशुश्रुवे अनेन श्रुतमित्यर्थ· । रा० ।

---

1 छ 'समानीतौ' । 2 । घ 'ताटका' । 3 घ '-वान्नोदितो', च 'वानुदितो ह्यति-' । 4 क-घ-ङ-च-छ '-तोऽमित-' । 5 च 'गौत-' । 6 ग ङ-च-पुस्तकेषु अयं श्लोको नास्ति । 7 अत पर ग-ङ-च-छ-पुस्तकेषु 'पादाम्बुजरजःस्पर्शात् साऽपि शापाद्विमोचिता' इत्यधिकम् । 8 ख-घ-च '-वे' ।

[1]अथो दर्शय राजेन्द्र [2]दैवं चापमनुत्तमम् ।
दृष्ट्वायोध्यां जिगमिषुः पितरं द्रष्टुमिच्छति ॥ १३ ॥
इत्युक्तो मुनिना [3]राजा पूजार्हा[4]विति पूजया ।
पूजयामास धर्मज्ञो विधिदृष्टेन कर्मणा ॥ १४ ॥
ततः संप्रेषयामास मन्त्रिणं बुद्धिमत्तरम् ।
शीघ्रमानय विश्वेशचापं रामाय दर्शय ॥ १५ ॥
ततो गते मन्त्रिवरे राजा कौशिकमब्रवीत् ।
यदि रामो धनुर्धृत्वा कोट्यामारोपयेद् गुणम् ॥ १६ ॥
तदा [5]ममाऽऽत्मजा सीता [6]दीयते राघवाय हि ।
तथेति कौशिकः[7] प्राह [8]राममुद्वीक्ष्य [9]सस्मितम् ॥ १७ ॥
शीघ्रं दर्शय चापाग्र्यं रामायामिततेजसे ।
एवं [10]वदति मौनीशे आगताश्चापवाहकाः ।
चापं गृहीत्वा बलिनः पञ्चसाहस्रसंख्यकाः ॥ १८ ॥

---

१३ । नरो० । अथो अत । दैवं देवसम्बन्धिनम् । कथमस्य दिदृक्षा इति चेत्तत्राऽऽह— अविद्यमान उत्तमो यस्मात् तादृशम् । एतदर्थमागत इति बोधो मा भूदिति हृदि कृत्वाह— दृष्ट्वेत्यादि ।

१५ । नरो० । तत पूजानन्तरम् । बुद्धिमत्तरमतिबुद्धिमन्तमित्यर्थः । एतेनाभिनय-व्यङ्ग्यज्ञत्वं सूचितम् । शीघ्रमित्याद्युक्तेर्जनकस्याऽऽत्मौत्सुक्यं सूचितम् । रामायेति रामं हृदि कृत्वेत्यर्थ [?] ।

१६ । नरो० । ततः प्रेषणानन्तरम् । कोट्यामग्रभागे ।

१७ । नरो० । अतिस्नेहपात्रत्वादात्मजा । आत्मजात्वमध्यस्याऽऽत्मजा इत्युक्तम् । तथेति वाचमित्यर्थ । कौशिको विश्वामित्र । सस्मितवीक्षणेनैतदर्थमत्र त्वमानीत इति सूचितम् ।

१८ । नरो० । चापाग्र्यं चापमुख्यम् । अनायासेन धनुर्भङ्गः कार्य इति सूचनाय अमिततेजस इत्युक्तम् । पञ्च सहस्राणि संख्या येषां तादृशा ।

---

१३ । अयोध्यां जिगमिषुः पितृदर्शनार्थं गन्तुमिच्छू रामः दृष्ट्वा धनुरिति शेष । पितरं द्रष्टुमिच्छति ।

१८ । [ 'मौनीशे' इत्यत्र 'कौलीशे' इति पाठे कुलपतौ मुनौ । शकादेराकृतिगणत्वात्

---

1 क-ख घ-च छ 'अतो' । 2 क ख-ग घ ङ च-छ 'शैवं' । 3 च 'तेन' । 4 गँ-छ '-वति-', ङ '-वभ्यपूजयत्', च '-वभिपू-' । 5. ख-च 'ममा-', छ 'मे आ' । 6 च 'दीयता' । 7 ख-ङ-च छ '-कोऽप्याह' । 8. ख-ग 'राम सवीक्ष्य' । 9 छ 'सुस्मितम्' । 10 ग 'ब्रुवति मौनीन्द्रे', ङ-च 'ब्रुवति' ।

[1]घण्टाशतसमायुक्त [2]स्वर्णपट्टैर्विभूषितम् ।
दर्शयामास रामाय मन्त्री मन्त्र[3]विदां वरः ॥ १९ ॥
दृष्ट्वा राम प्रहृष्टात्मा बद्ध्वा परिकरं दृढम् ।
गृहीत्वा वामहस्तेन लीलया[4] तोलयद्धनु ।
आरोपयामास [5]गुणं पश्यत्स्वखिलराजसु ॥ २० ॥
ईषदाकर्षयामास पाणिना दक्षिणेन स ।
बभञ्जाखिलहृत्सारो दिशः शब्देन पूरयन् ॥ २१ ॥
दिशश्च विदिशश्चैव [6]स्वर्गं मर्त्यं रसातलम् ।
तदद्भुतमभूत्तत्र देवानां दिवि पश्यताम् ॥ २२ ॥

---

१९ । नरो० । विशेषणद्वयविशिष्टचापहारकालीनत्वेन चापस्यातिगुरुत्वं सूचितम् ।

२० । नरो० प्रहृष्टात्मा प्रफुल्लमना , एतेन उत्साह सूचित । परिकरं परिच्छदम् । लीलया अनायासेन । लीलयातोलयद्धनुरित्यनेन श्रीरामस्य सामर्थ्यातिशय सूचित । पश्यत्स्वखिलराजसु इति, पश्यतोऽखिलान् राज्ञोऽनादृत्येत्यर्थ । टजभावश्चात्र समासान्तानामनित्यत्वात् ।

२१ । नरो० । ईषदाकर्षयामासेति चुरादिपाठाण्णिजत्र बोध्यः । अत्रैव पतत्विति हृदि कृत्वा ईषदाकर्षणम् । अखिलहृत्सार सकलमध्यभूतस्थिरांश इत्यर्थ ।

२२ । नरो० । तदिति क्रियाविशेषणम्, यदिति पूर्ववाक्येऽध्याहार्यम् । अद्भुतं विस्मयजनकम् । दिवि आकाशे स्थित्वेति शेष ।

---

अलुक् । पञ्चसाहस्रसंख्यका इति । अत्रैवं दृश्यते, श्रीभागवते च स्वयंवरगृहे त्रिशतोपनीतमित्युक्तम् । तदेवं विरोधे चापभेद एव सिद्धान्त । गो० ]

२० । परिकरं कटिबन्धं दृढं कठिन यथा स्यात्तथा बद्ध्वा । लीलया कौतूहलेनेव ।

२१ । अखिलहृत्सार अखिलप्राणिनां हिरण्यगर्भादीनां सकलब्रह्माण्डस्थानां हृत्सारो बलं यस्य स । रा० ।

[ बभञ्जाखिलहृत्सार इति । अखिलानां लोकानां हृद सारो बलं यस्मिन् । सर्वतेजोरूपाखिलानां हृत्सार । गो० ]

---

1 च 'शतकुम्भस-' । 2 ख-घ 'मणिवज्रादि', ग-च-छ 'मणिवस्त्रैर्वि-', ङ 'मणिवस्त्रैर्विराजितम्' । 3 ख-घ '-वता' । 4 क ख-घ-छ '-या तोलयन् धनुः' । 5 च 'तदा गुण पश्यत्सु राजसु' । 6 च 'स्वर्गमर्त्यरसा-' ।

आच्छादयन्त· कुसुमैर्देवा· स्तुतिभिरीडिरे ।
देवदुन्दुभयो नेदुर्ननृतुश्चाप्सरोगणा· ॥ २३ ॥
द्विधा भग्नं धनुर्दृष्ट्वा राजालिङ्ग्य [1]रघूद्वहम् ।
विस्मयं लेभिरे सीतामातरोऽन्त·पुराजिरे ॥ २४ ॥
सीता स्वर्णमयीं[2] मालां गृहीत्वा दक्षिणे करे ।
स्मितवक्त्रा स्वर्णवर्णा [3]सर्वाभरणभूषिता ॥ २५ ॥
मुक्ताहारैः [4]कर्णपत्रैः [5]क्वणच्चलितनूपुरा ।
दुकूलपरिसंवीता वस्त्रान्तर्व्यञ्जितस्तनी ।
रामस्योपरि निक्षिप्य स्मयमाना मुदं ययौ ॥ २६ ॥
ततो मुमुदिरे [6]सर्वे राजदाराः स्वलङ्कृताः[7] ।
गवाक्षजालरन्ध्रेभ्यो दृष्ट्वा लोकविमो[8]हनम् ॥ २७ ॥
ततोऽब्रवीन्मुनिं राजा [9]दूतं प्रेषय सत्वरम्[10] ।
राजा दशरथ· शीघ्रमागच्छतु सपुत्रक· ।
विवाहार्थं कुमाराणां सदार· सह मन्त्रिभि· ॥ २८ ॥

---

२३ । नरो० । आच्छादयन्तोऽर्थात् श्रीरामम् ।

२४ । नरो० । सर्वावयवभग्नत्वसूचनाय द्विधेत्युक्तम् । राजा जनक· लेभे इत्यध्याहार्यम् । अन्त·पुराजिरे अवरोधाङ्गने इत्यर्थ· ।

२६ । नरो० । क्वणन्तौ चलितौ च नूपुरौ यस्यास्तादृशी । चलितत्वात् क्वणत्त्वम् । दुकूलपरिसंवीता दुकूलाच्छादिता । वस्त्रान्तर्व्यञ्जितस्तनी वस्त्रोच्चमध्यभागव्यक्तीकृतस्तनीत्यर्थ· । एतेन कैशोरावस्था सूचिता ।

२७ । नरो० । ततो मालानिक्षेपानन्तरम् । गवाक्षजालरन्ध्रेभ्य इति । गवाक्षजाल वातायनसमूहस्तस्य यानि रन्ध्राणि तानि प्राप्येत्यर्थ· ।

२८ । नरो० । मुनिं विश्वामित्रम् । प्रेषय प्रेषणेन स्थानान्तरं नयेत्यर्थ· ।

---

२४ । रघूद्वहमालिङ्ग्य राजाऽतिहृष्टो जात इति शेष· । सीतामातरो जनकपत्न्यः । अन्त·पुराजिरे तदङ्गने आगता किमिदमिति विस्मयवशादिति भावः । विस्मयमद्भुतरसं लेभिरे प्राप्ता· । रा० ।

२६ । [ मुक्ताहारै· कर्णपत्रैश्च भूषिता इति समासैकदेशे सम्बन्ध· । गो० ]
निक्षिप्य मालामिति शेष· । स्मयमाना ईषद्धास्ययुक्ता ।

---

1. ङ-च 'रघूत्तमम्' । 2 ग 'मयी । 3 च 'स्वर्णा-' । 4 च 'स्वर्ण-' । 5 ख-घ-छ 'क्वणच्चरणनूपुरा' । 6 ङ 'देवा' । 7 ख घ '-ङ्कृतम्' । 8 च-छ '-ह्निनीम' । 9 क 'सर्वशास्त्रविशारद ', ङ 'पत्र प्रेषय सत्वरम्', छ 'दूत प्रेषय मा चिरम्' । 10 अत पर क-ख-घ-पुस्तकेषु 'भो कौशिक मुनिश्रेष्ठ पत्र प्रेषय सत्वरम्' इत्यधिकम ।

तथेति प्रेषयामास दूतांस्त्वरितविक्रमान् ।
ते गत्वा [1]राजशार्दूलं रामश्रेयो न्यवेदयन् ॥ २६ ॥

श्रुत्वा रामकृतं राजा हर्षेण महता[2]प्लुतः ।
मिथिलागमनार्थाय त्वरयामास मन्त्रिणम्[3] ॥ ३० ॥

गच्छन्तु मिथिलां सर्वे गजाश्वरथपत्तयः ।
रथमानय मे शीघ्रं गच्छाम्यद्यैव मा चिरम् ॥ ३१ ॥

वशिष्ठ[4]स्त्वग्रतो यातु सदारः [5]सहितोऽग्निभिः ।
राम[6]मातॄः समादाय मुनिर्मे भगवान् गुरुः ॥ ३२ ॥

एवं प्रस्थाप्य सकल राजर्षिर्विपुलं रथम् ।
महत्या सेनया सार्द्धमारुह्य त्वरितो ययौ ॥ ३३ ॥

आगत राघवं [7]श्रुत्वा राजा हर्षसमाकुलः ।
प्रत्युज्जगाम जनकः शतानन्दपुरोधसा ।
यथो[8]क्तपूजया पूज्य पूजयामास सत्कृतम् ॥ ३४ ॥

रामस्तु लक्ष्मणेनाऽऽशु ववन्दे चरणौ पितुः ।
ततो हृष्टो दशरथो रामं वचनमब्रवीत् ॥ ३५ ॥

---

२९ । नरो० । त्वरितो विक्रमो गमनं येषां तादृशा । एकस्य द्वयोर्वा ज्वरादिना क्लिष्टत्वेऽप्यन्येन तत्र पत्र नेतव्यमिति हृदि कृत्वा दूतानां प्रेषणम् ।

३० । नरो० । त्वरयामास त्वरायुक्तं कृतवान् ।

३४ । नरो० । राघवं दशरथम् । हर्षसमाकुलो हर्षव्याप्त । यथोक्तपूजया विधिबोधितपूजया । पूज्यं पूजार्हम् ।

३५ । नरो० । आशु वन्दनमत्यादरसूचकम् । ततश्चरणवन्दनानन्तरम् ।

---

३१ । गजाश्वरथपत्तय इति मध्यपदलोपी समास· । 'द्वन्द्वश्च' इति सूत्रे सेनाङ्गशब्देन रथिकादीनामेव ग्रहणम् , न रथादीनामतोऽत्र न दोष· । अत एव 'संग्रामं हस्त्यश्वरथपदातिभि·' इति अल्पाच्तरसूत्रस्थभाष्यप्रयोग· सङ्गच्छत इत्यन्ये । रा० ।

---

1 क-ग 'नर-' । 2 ग-च '-व्रत' । 3 ख-घ '-ण' । 4 ग '-स्त्वरितो' । 5· च 'सह वह्निभि' । 6· ग ङ च-छ '-मातरमा-' । 7· छ 'दृष्ट्वा' । 8· च '-क्त पू' छ '-क्त पूजयामास पूज्य सत्कृत्वा पूजया' ।

दिष्ट्या पश्यामि ते राम मुखं फुल्लाम्बुजोपमम् ।
मुनेरनुग्रहात् सर्वं सम्पन्नं मम शोभनम् ॥ ३६ ॥
इत्युक्त्वाघ्राय मूर्धानमालिङ्ग्य च पुनः पुन ।
हर्षेण महता[1]विष्टो ब्रह्मानन्दं[2] गतो यथा ॥ ३७ ॥
ततो जनकराजेन मन्दिरे सन्निवेशित ।
शोभने सर्व[3]भोगाढ्ये सदार.[4] ससुत सुखी ॥ ३८ ॥
तत [5]शुभे दिने लग्ने [6]सुमुहूर्त्ते रघूत्तमम् ।
आनयामास धर्मज्ञ.[7] सभ्रातृपितृकं [8]तथा ॥ ३९ ॥
रत्नस्त[9]म्भसुविस्तारे सुविताने सुतोरणे ।
मण्डपे सर्वशोभाढ्ये मुक्ता[10]पुष्पफलान्विते ॥ ४० ॥
वेदविद्भि [11]सुसम्बाधे ब्राह्मणैः स्वर्ण[12]-भूषणै ।
[13]सुवासिनीभि. परितो निष्ककण्ठीभिरावृते ॥ ४१ ॥

---

३६ । नरो० । दिष्ट्या भाग्येन ।

३७ । नरो० । पुन. पुनराघ्राणमालिङ्गनञ्चातिस्नेहसूचकम् । आविष्टो व्याप्त । ब्रह्मानन्द गतो यथा, ब्रह्मण. स्वरूपमानन्द प्राप्त इवेत्यर्थ ।

४० । नरो० । रत्नस्तम्भानां सुविस्तारो यत्र तादृशे, शोभनो वितानो यत्र । वितान-श्रॉद्या इति ख्यात., तादृशे देशे । शोभनस्तोरणो यत्र तादृशे, सर्वशोभाढ्ये सर्वशोभा-सम्पन्ने ।

४१ । नरो० । सुवासिनीभि. पितृगेहस्थितदुहितृभि. । निष्का कण्ठे यासां ताभि. । निष्का. पदकानि ।

---

४० । वितान वास कृतमङ्गनाच्छादनम् । मण्डपोऽत्र विवाहशाला । रा० ।

४१ । सुसंबाधे सङ्कीर्णे । सुवासिन्यो जीवद्भर्तृका । 'पतको रुचको रुक्मो निष्क वक्षोविभूषणे' इति कोषाद् वक्षोविभूषण निष्कम्, तत् कण्ठे यासां ताभि. । रा० ।

वेदविद्भिर्वेदज्ञै ब्राह्मणै. सुसम्बाधे परिपूरिते रत्नपीठे इत्यर्थ ।

---

1 क 'ता हृष्टो'। 2 क '-नन्दगतो'। 3 क '-शोभा-'। 4 ग 'रसहित', ङ च-क '-र सस्थित'। 5 ग च 'शुभदिने'। 6 च 'मुहूर्त्ते च'। 7 ख घ '-ज्ञो राम सभ्रातृक'। 8 ख ग-घ-ङ 'तदा'। 9 क '-म्भे सुवि'। 10 च क '-फलसम'। 11 क च-क 'सुसवादे', ङ-क 'सुसवासे'। 12 ख-घ च 'भूषिते.'। 13 ख 'सवाससा परिवृते'।

भेरीदुन्दुभिनि[1]र्घोषे नृत्यगीतसमाकुले ।
दिव्यरत्ना[2]ञ्चिते स्वर्णपीठे रामं न्यवेशयत् ॥ ४२ ॥
वशिष्ठं कौशिक[3]ञ्चैव शता[4]नन्दपुरोहितम् ।
यथाक्रम पूजयित्वा रामस्योभयपार्श्वयो. ॥ ४३ ॥
स्थापयित्वा स तत्राग्निं ज्वालयित्वा यथाविधि ।
सीतामानीय शोभाढ्यां नानारत्नविभूषिताम् ॥ ४४ ॥
सभार्यो जनक· [5]प्रादाद् राम राजीवलोचनम् ।
पादौ प्रक्षाल्य विधिवत्तदपो मूर्द्ध्न्यधारयत् ॥
या धृता मूर्ध्नि शर्वेण ब्रह्मणा मुनिभि· [6]सदा ॥ ४५ ॥
ततः सीतां करे धृत्वा साक्षतोदकपूर्वकम् ।
रामाय प्रददौ प्रीत्या पाणिग्रहविधानत· ॥ ४६ ॥
सीता कमलपत्राक्षी [7]स्वर्णमुक्तादिभूषिता ।
दीयते मे सुता तुभ्य प्रीतो भव रघूत्तम ॥ ४७ ॥
इति प्रीतेन मनसा सीतां रामकरेऽ[8]र्पयन् ।
मुमोद जनको लक्ष्मीं क्षीराब्धिरिव विष्णवे ॥ ४८ ॥

---

४२ । नरो० । दिव्यरत्नाञ्चिते विलक्षणमणिशोभिते ।
४४ । नरो० । शोभाढ्यां शोभासम्पन्नाम् ।
४५ । नरो० । प्रादात् प्रदातुं सतकृतवान् । या आप । शर्वेण शिवेन ।
४६ । नरो० । साक्षतोदकपूर्वकं सयवजलदानपूर्वकमित्यर्थ· ।

---

४२ । भेरीदुन्दुभी वाद्यविशेषौ । वितस्तित्रितयदीर्घा ताम्रनिर्मिता चर्मच्छन्ना चतुर्विंशत्यङ्गुलवदनद्वया भेरी । वर्त्तुलश्चर्मबद्धैकाननो दुन्दुभिरिति वदन्ति । रत्नाञ्चिते रत्नघटिते । रा० ।

४३-४४ । यथाक्रमं क्रममनुल्लङ्घ्य दशरथकुलगुरुत्वात् प्रथमं वशिष्ठम्, अभ्यागतत्वात् तत· कौशिक विश्वामित्रम्, ततश्च पुरोहितं स्वस्येति शेष', शतानन्दं पूजयित्वा । स जनक ।

४६ । साक्षतोदकपूर्वकं पाद्यार्घ्याचमनीयदानपूर्वकमित्यर्थः । पाणिग्रहविधानतः पाणिग्रह· सप्तपदीगमनान्तो विवाहस्तस्य विधानतो विधिना वेदोक्तेनेति शेष· ।

४७ । सीतानाम्नी मे सुता तुभ्यं दीयते प्रीतो भवेति । अनेन निष्कामतया भगवत्प्रीतये दानं कृतवानिति सूच्यते ।

---

1 ख-घ-ङ ' घोषैर्गीतनृत्य समा-', ग '-घोषे गीतनृत्य-', च '-घोषैर्गीतनृत्यसमा-' । 2. ङ-ङ '-न्विते' । 3 ङ '-चापि' । 4 क-ख-घ-ङ-ङ 'नन्द. पुरोहित । 5 क ख-घ-ङ 'प्रायाद्', ग-ङ-ङ 'प्रागाद्' । 6 च 'समम्' । 7. ग-ङ 'स्वर्णरत्नादिभूषिता', ङ 'स्वर्णमुक्ताविभूषिता' । 8 ग-च-ङ '-र्पयत' ।

ऊर्मिलाञ्चौरसीं कन्यां लक्ष्मणाय ददौ [1]तदा ॥ ४९ ॥
तथैव श्रुतकीर्त्तिञ्च माण्डवीं भ्रातृ[2]कन्यके ।
भरताय ददावेकां शत्रुघ्नायापरां ददौ ॥ ५० ॥
चत्वारो दारसम्पन्ना भ्रातरः शुभलक्षणाः ।
विरेजुः प्रभया सर्वे लोकपाला इवापरे ॥ ५१ ॥
ततोऽब्रवीद्वशिष्ठाय विश्वामित्राय मैथिलः ।
[3]स्वसुताया यथोदन्त नारदेनाभिभाषितम् ॥ ५२ ॥
यज्ञभू[4]मिविशुद्ध्यर्थं [5]कृष्यतो [6]लाङ्गलेन मे ।
[7]सीतामुखात् समुत्पन्ना कन्यका शुभलक्षणा ॥ ५३ ॥
[8]तामदात्तमहं प्रीत्या पुत्रिकाभावभावि[9]ता ।
अर्पिता प्रियभार्यायै शरच्चन्द्र[10]निभानना ॥ ५४ ॥

---

५१ । नरो० । लोकपाला इवापरे इति । इवशब्दोऽत्र उत्प्रेक्षाव्यञ्जक ।

५२ । नरो० । तत सीतादिसमर्पणानन्तरम्, यथोदन्त वार्त्तानतिक्रमेणेत्यर्थ ।

५३ । नरो० । सीतामुखात् लाङ्गलपद्धतिप्रथमभागात् । समुत्पन्ना आविर्भूता ।

५४ । नरो० । पुत्रिकाभावभाविता दुहितृत्वं प्रापिता, दुहितृत्वेन सम्भाविता ।

---

४९-५० । भरताय माण्डवीं शत्रुघ्नाय श्रुतकीर्त्ति ददाविति शेप । व्यक्तमाह वाल्मीकीये—

तमेवमुक्त्वा जनको भरत केकयीसुतम् ।
चोदयामास धर्मात्मा माण्डव्याः पाणिसंग्रहे ॥
शत्रुघ्नमपि चाऽऽसीनं जनको वाक्यमब्रवीत् ।
श्रुतकीर्त्त्या गृहाण त्वं पाणिना पाणिमुद्यतम् ॥ इति

१।७९।२१-२२ श्लो० ।

५२ । स्वसुतायाः सीताया यथा यथावत् याथातथ्येनेति यावत्, नारदेन अभिभाषितम् उदन्तं वृत्तान्तम् सर्वं तत्स्वरूपमित्यर्थ ।

---

1 ख-घ-ङ 'मुदा'। 2 ङ 'कन्यकाम'। 3 ख घ क्ष 'जनक स्वसुतोदन्त । 4 च '-मेर्वि-'। 5 ख ग-घ-च 'कर्षतो'। 6 ङ 'लाङ्गलस्य,' च 'लाङ्गलस्य च'। 7 ग-ङ 'सीर-'। 8 ग 'तामवेक्ष्य महा-', क्ष 'तामदाच्च मया प्रीतया'। 9 क-ख-घ-च क्ष '-ताम्'। 10 क्ष 'शुभा-'।

धनुरेतत् [1]पणं कार्यमिति [2]चिन्त्य [3]तथा कृतम् ।
सीतापाणिग्रहार्थाय [4]सर्वेषां [5]माननाशनम् ॥ ६४ ॥
त्वत्प्रसादान्मुनिश्रेष्ठ रामो राजीवलोचनः ।
[6]आगतोऽत्र धनुर्द्रष्टुं फलितो मे मनोरथः ॥ ६५ ॥
अद्य मे सफलं जन्म [7]राम त्वां [8]सीतया सह ।
एकासनस्थं पश्यामि भ्राजमानं [9]रविं यथा ॥ ६६ ॥
त्वत्पादाम्बुधरो ब्रह्मा सृष्टिचक्रप्रवर्त्तकः ।
बलिस्त्वत्पादसलिलं धृत्वाऽभू[10]द्दिविजाधिपः ॥ ६७ ॥
त्वत्पादपांशुसंस्पर्शादहल्या भर्तृशापतः ।
सद्य एव विनिर्मुक्ता [11]कोऽन्यस्त्वत्तोऽधिरक्षिता ॥ ६८ ॥
[12]त्वत्पादपङ्कजपराग[13]सरागयोगि-
वृन्दैर्जितं भवभयं जितकालचक्रैः ।
यन्नामकीर्त्तनपरा जितदुःखशोका
देवास्तमेव [14]शरणं सततं प्रपद्ये ॥ ६९ ॥

---

६४ । नरो० । माननाशनमहङ्कारनाशकमित्यर्थः ।

६५ । नरो० । मुनिश्रेष्ठेति वशिष्ठसम्बोधनम् ।

६७ । नरो० । सृष्टिरेव चक्रं तत्प्रवर्त्तयतीति सृष्टिचक्रप्रवर्त्तकः । त्वत्पादजलधारणादेव ब्रह्मणः सृष्टिसामर्थ्यमिति भावः । दिविजाधिपोऽमरपतिः ।

६९ । नरो० । तव यत् पादपङ्कजं तस्य यः परागस्तेन सरागाणि यानि योगिवृन्दानि तैः । अत्र पङ्कजपदसमभिव्याहारसत्त्वे पदार्थैकदेशे निरूढो लाक्षणिकः परागशब्दः । परागशब्दः श्लिष्टः । जितं कालचक्रं यैस्तादृशैः । शरणं रक्षितारम् ।

---

६७ । त्वत्पादाम्बु गङ्गारूपम् । रा० । त्वत्पादसलिलं तव चरणोदकम् ।

६९ । [त्वत्पादपङ्कजयोर्ये परागा धूलयस्तेषु सरागाणि यानि योगिवृन्दानि तैः । गो०]

---

1 ग 'पण कार्यो विचिन्त्येति' । 2 च 'चिन्ताक्रान्त तदा' । 3 ख-घ 'क्रान्त तया', ङ 'मया कृतम्' । 4 छ 'सर्वैरेवागतैः कृतम' । 5 क ङ छ 'मननाशनम्' । 6 ग छ 'आनीतोऽत्र', च 'आनीतो धनुराकृष्टुं' । 7 च 'रामं तं' । 8 ख घ च-छ 'सह सीतया' । 9 ग 'हरिं' । 10 क-ग च छ '-द्दितिजा-' । 11 ग 'कोऽन्यो मत्तोऽधि-' । 12 क 'यत' । 13 क-ख घ 'सुराग-' । 14 ग 'सततं शरण' ।

इति स्तुत्वा नृप प्रादाद् राघवाय महात्मने ।
[1]दीनारगणां कोटिशत [2]रथानामयुत तथा ॥ ७० ॥

अश्वानां नियुतं प्रादाद् गजा[3]नां षट्शतं तथा ।
पत्तीनां लक्षमे[4]कश्च दासीनां त्रिशत ददौ ॥ ७१ ॥

दिव्याम्बराणि [5]हारांश्च मुक्तारत्नमयोज्ज्वलान् ।
सीतायै जनकः प्रादात् प्रीत्या दुहितृवत्सलः ॥ ७२ ॥

वशिष्ठा[6]दीन् सुसम्पूज्य भरत लक्ष्मणं तथा ।
पूजयित्वा यथान्यायं [7]तथा दशरथ नृपम् ॥ ७३ ॥

प्रस्थापयामास नृपो राजान रघुसत्तमम् ।
सीतामालिङ्ग्य रुदतीं मातरः साश्रुलोचना ॥ ७४ ॥

---

७२ । नरो० । दिव्याम्बराणि विलक्षणवस्त्राणि । मुक्तारत्नमयोज्ज्वलान् प्रचुरमुक्ताश्रेष्ठोज्ज्वलान् ।

७४ । नरो० । रघुसत्तम रघुश्रेष्ठम् ।

---

७० । दीनाराणामिति—

दीनारो रूपकैरष्टाविंशत्या परिकीर्त्तित ।
सुवर्णसप्ततितमो भागो रूपक इष्यते ॥ इति विष्णुगुप्तोक्ते ।

कात्यायनस्तु—

कार्षापणोऽन्तिका ज्ञेयास्ताश्चतस्रस्तु धानक ।
ते द्वादश सुवर्णास्तु दीनारश्चित्रकः स्मृत ॥ इति ।

कात्यायनमतसंग्रहे दण्डविषयः ३६१ ।

कार्षापणो दक्षिणस्यां दिशि रौप्य प्रवर्त्तते ।
पणैर्निबद्ध पूर्वस्यां षोडशैव पणा स तु ॥

इति षोडशपणरूप्य दक्षिणस्थः कार्षापण इत्यर्थ । अयुत दशसहस्रम् । रा० ।

७१ । नियुतं दशलक्षम् । रा० ।

पत्तय पादचारिसेनाविशेषास्तेषाम् ।

---

1 ग 'दाशादीना', ङ-च छ 'दासादीना' । 2 च 'गवामयुतक तथा' । 3 ग ङ-छ '-नामयुत' । 4 ख घ '-कन्तु' । 5 ग ङ 'वाहाश्च' । 6 च '-दींश्च सम्पूज्य' । 7 च 'राजा' ।

[1]अब्रुवन् गद्गद धीरा मृजन्त्यो दुहितुर्मुखम् ।
-[2]श्वश्रूशुश्रूषणपरा[3] नित्य राममनुव्रता ।
पातिव्रत्यमुपा[4]लभ्य तिष्ठ वत्से यथासुखम् ॥ ७५ ॥
प्रयाणकाले रघुनन्दनस्य भेरीमृदङ्गानकतूर्यघोषै[5] ।
स्वर्वासिभेरी[6]घनतूर्यशब्द[7] सम्मूर्छितो भूतभयङ्करोऽभूत् ॥ ७६ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे आदिकाण्डे षष्ठोऽध्याय ॥ ६ ॥

---

७५ । नरो० । अनु लक्ष्यीकृत्य व्रत यस्या सा ।

७६ । नरो० । भेरीति । अत्र तूर्यशब्देनैव मृदङ्गलाभेऽपि मृदङ्गपदोपादानं तद्बाहुल्य-सूचनार्थम् । स्वर्वासीति । सुरसम्बन्धिभेरीकाशततताालादिमृदङ्गपणवशङ्खपटहशब्दः सम्मूर्छित सवर्धित , अर्थादत्रोत्पन्नभेर्यादिशब्दै । 

[ आदिकाण्डे षष्ठाध्यायव्याख्या समाप्ता ॥ ६ ॥ ]

---

७६ । आनको दुन्दुभि, ततप्रभृतितूर्यसम्बन्धिघोषः स्वर्वासिभेर्यादिशब्दै संमूर्छितो मिश्रित. सन् प्राणिनां भयङ्करोऽभूत् । घन कांस्यतालादि । रा० ।

रघुनन्दनस्य प्रयाणकाले जनकभवनादयोध्याप्रत्यागमनप्रारम्भे भेरीमृदङ्गानकतूर्यघोषै जनकभवनोत्थैरिति शेष. । भूतभयङ्कर. प्राणिनां भीतिप्रद ।

---

1 ख घ ङ पुस्तकेष्विदमर्द्ध नास्ति । 2 च 'श्वश्रो शु' । 3. क-च 'रता' । 4 ग ङ 'लभ्या' । 5 ग ङ 'घोषा', क ख च 'घाष । 6 च 'ध्वनि-' । 7 क-ख घ-ङ 'शब्दे' ।

# सप्तमोऽध्यायः

श्रीमहादेव उवाच—

अथ गच्छति श्रीरामे मैथिलाद् योजनत्रयम् ।
निमित्तान्यतिघोराणि ददर्श नृपसत्तम ॥ १ ॥
नत्वा वशिष्ठं पप्रच्छ किमिदं मुनिपुङ्गव[1] ।
निमित्तानीह दृश्यन्ते विषमाणि समन्ततः ॥ २ ॥
वशिष्ठस्तमथ प्राह भयमागामि सूच्यते ।
पुनरप्यभयं तेऽद्य शीघ्रमेव भविष्यति ॥ ३ ॥
मृगाः प्रदक्षिणं यान्ति [2]ह्यपश्यन् शुभसूचकाः ।
इत्येवं वदतस्तस्य ववौ घोरतरोऽनिलः ।
मुष्णंश्चक्षूंषि सर्वेषां [3]पांशुवृष्टि[4]भिरर्दयन् ॥ ४ ॥
[5]ततो [6]ददर्श भगवाञ्जामदग्न्यः प्रतापवान् ।
नीलमेघनिभः प्रांशुर्जटा[7]मण्डलमण्डितः ॥ ५ ॥

---

१ । नरो० । निमित्तानि चिह्नानि ज्ञापकानीति यावत्, अतिघोराण्यतिभयानकानि । नृपसत्तमो नृपश्रेष्ठः ।

२ । नरो० । किमिदमिति विस्मयसूचकम् । मुनिपुङ्गव मुनिश्रेष्ठ । विषमाणि प्रतिकूलानि विपरीतानि वा । समन्ततः परितः ।

३ । नरो० । सूच्यते अर्थाद्विषमनिमित्तैः ।

४ । नरो० । अपश्यन्निति भवन्त इति शेषः । घोरतरोऽतिभयानकः । अनिलो वातः । अर्दयन् पीडयन् ।

५ । नरो० । ददर्श अर्थाद्दशरथादीन् । नीलमेघनिभो नीलमेघतुल्यः । प्रांशुरुन्नतः, जटामण्डलमण्डितो जटासमूहभूषितः ।

---

४ । मुष्णन् दर्शनशक्तिरहितानि कुर्वन् । रा० ।

---

1 ङ 'वम्' । 2 घ 'पश्य त्वा', क-ख ग ङ च छ 'ह्यवश्य' । 3 घ 'पासु-' । 4 ग '-भिरार्द्दयत', च-छ '-रद्दश्यत' । 5 ख घ-पुस्तकयोः पञ्चमषष्ठश्लोकयोः स्थाने 'ततो व्रजन् ददर्शाग्रे तेजोराशिमुपस्थितम् । कोटीसूर्यप्रतीकाशं विद्युत्पुञ्जसमप्रभम् ॥ तेजोराशिं ददर्शाथ जामदग्न्यं प्रतापवान् । नीलमेघनिभप्रांशुजटा-मण्डलमण्डितम् ॥ धनुः परशुपाणिञ्च साक्षात् कालमिवान्तकम् । कार्त्तवीर्यान्तकं रामं दृप्तक्षत्रियमर्दनम् । प्राप्तं दशरथस्याग्रे कालमृत्युमिवापरम् ॥' इति पाठः । 6. क-ख-ग-घ-ङ च 'ददृशे' । 7. ङ '-मुकुट-' ।

धनु परशुपाणिश्च साक्षात् काल इवान्तकः ।
कार्त्तवीर्यान्तको रामो दृप्तक्षत्रियमर्दन[1] ।
प्राप्तो दशरथस्याग्रे कालमृत्युरिवापर ॥ ६ ॥
त दृष्ट्वा भयसन्त्रस्तो राजा दशरथस्तदा ।
अर्घ्यादिपूजां विस्मृत्य त्राहि त्राहीति चाब्रवीत् ॥ ७ ॥
[2]दण्डवत् प्रणिपत्याऽऽह पुत्रप्राणान्[3] प्रयच्छ मे ॥ ८ ॥
इति [4]ब्रुवाण राजानमनादृत्य रघूत्तमम् ।
उवाच निष्ठुरं वाक्य क्रोधात् प्रचलितेन्द्रियः ॥ ९ ॥
त्व राम इति [5]नाम्ना मे चरसि क्षत्रियाधम ।
द्वन्द्वयुद्ध प्रयच्छाऽऽशु यदि त्व क्षत्रियोऽसि [6]वै ॥ १० ॥
पुराण जर्जर चाप भङ्क्त्वा त्वं कत्थसे [7]मृषा ।
[8]अस्मिंस्तु वैष्णवे चापे आरोपयसि चेद् गुणम् ।
तदा युद्ध त्वया सार्द्ध करोमि रघु[9]वंशज ॥ ११ ॥
[10]नो चेत् सर्वान् हनिष्यामि क्षत्रियान्तकरा [11]ह्यहम् ॥ १२ ॥

---

६ । नरो० । साक्षात् काल इवान्तक । अन्तक इति प्रलयकाले साक्षाद् यम इवेत्यर्थः । कालमृत्युरिवापर इत्यत्र इवशब्द उत्प्रेक्षाद्योतक । कालमृत्यु प्रलयकालमृत्यु ।

७ । नरो० । भयसन्त्रस्तो भयोद्विग्न ।

१० । नरो० । हे क्षत्रियाधम, मे मम राम इति नाम्ना त्वं चरसीत्यन्वय । क्षत्रियाधम क्षत्रियेभ्योऽपकृष्टेत्यर्थ ।

११ । नरो० । पुराणं जर्जरमित्यनेन चापस्य भग्नप्रायत्वमुक्तम् । कत्थसे श्लाघसे आत्मानमिति शेष ।

---

६ । [ साक्षात् काल इवान्तक इति । अन्तक संहारलक्षण काल इव । कालमृत्युरिवापर इति कालसहितो मृत्यु कालमृत्यु , अनतिक्रमे दृष्टान्त । गो० ]

१० । [ क्षत्रियाधम इति । क्षत्रिया अधमा यस्मादिति वास्तवोऽर्थ । गो० ]

११ । [ यत पुराणम् अतो जर्जरम् । गो० ]

---

1 च छ '-र्दक' । 2 च 'त राजा' । 3 ख घ च '-प्राण' । 4 ख घ च 'ब्रुवन्त' । 5 ङ 'मे नाम्ना' । 6 ग ङ च छ 'मे' । 7 ख घ-च 'मुधा', छ 'मुदा' । 8 क 'इदन्तु', ग-ङ-च-छ 'इदन्तु एव चापमारो' । 9 छ 'नन्दन' । 10 ङ च छ 'न' । 11 क '-स्म्यहम्' ।

इति ब्रुवति वै तस्मिंश्चचाल वसुधा भृशम् ।
अन्धकारो बभूवाथ सर्वेषा[1]मपि चक्षुषाम् ॥ १३ ॥
रामो दाशरथिर्वीरो वीक्ष्य तं भार्गवं रुषा ।
धनु[2]राच्छिद्य तद्धस्तादारोप्य गुणमञ्जसा ॥ १४ ॥
तूणीराद्बाणमादाय सन्धायाऽऽकृष्य वीर्यवान् ।
उवाच भार्गवं [3]रामं [4]शृणु ब्रह्मन् वचो मम ॥ १५ ॥
लक्ष्यं दर्शय बाणस्य ह्यमोघो [5]रामसायकः ।
लोकान् [6]पादयुगं वाऽपि वद शीघ्रं ममाऽऽज्ञया[7] ॥ १६ ॥
एवं [8]वदति श्रीरामे भार्गवो विकृताननः ।
संस्मरन् पूर्ववृत्तान्तमिदं वचनमब्रवीत् ॥ १७ ॥
राम राम महाबाहो जाने त्वां परमेश्वरम् ।
पुराण[9]पुरुषं विष्णुं जगत्सर्गलयो[10]द्भवम् ॥ १८ ॥

---

१६ । नरो० । अमोघोऽव्यर्थः । शायकः शरः । तथा च 'शरे खड्गे च शायकः' इत्यमरः । लोकान् पादयुगं वाऽपि रुणद्धीति शेषः । आज्ञया शासनेन ।

१७-१८ । नरो० । भार्गवस्य विकृताननत्वेन शङ्का सूचिता । हृततेजा विस्मयं प्राप्य, परशुरामः पूर्ववृत्तान्तं स्मरन् तं वदन् स्तौति—राम रामेत्यादिना । पुराणपुरुषम् अनादिपुरुषम् । अथ स्वयमेव पालकः, स्वांशभूतब्रह्मद्वारा स्रष्टा, स्वांशभूतरुद्रद्वारा संहारक इत्यभिप्रेत्याऽऽह—विष्णुं जगदित्यादि । जगतां सर्गलययोरुद्भवो यस्मात्तादृशम् ।

---

१५ । [ शृणु ब्रह्मन्निति । धनुषा सह तत्स्थवैष्णवतेजोग्रहणाद् ब्राह्मण्यमात्रस्याव-शेषत्वात् । गो० ]

१६ । लोकान् तपोऽर्जितान् परलोकगतिमिति यावत् । पादयुगं चरणयुगलम् इह लोके तीर्थादिगतिमिति यावत् । ममाज्ञयेति स्वस्य स्वरूपाविर्भावं सूचयति । रा० ।

[ लोकान् तपसाऽर्जितान् स्वर्गादीन्, पादयुगं पादयुगस्य पृथ्वीचक्रमणम् । गो० ]

१८ । पुराणपुरुषम् अनादित्वान्नवद्वारात्र सर्वपूर्षु शयनाच्च । विष्णुं व्यापकम्, अन्तर्बहिश्च सर्वत्र प्रविष्टं वा । जगत्सर्गलयोद्भवम्, जगतः सृष्टिसंहारस्थितयो यस्मात् तम् । रा० ।

---

1 ङ छ मेव' । 2 क '-राच्छिद्य' । 3 छ 'राम' । 4 क 'ब्रह्मञ् शृणु' । 5 ख ग-घ 'मम शा' । 6 क ख ङ-छ 'पदं' । 7 अतः परं ख-घ पुस्तकयो 'अथ लोकाः परो वाऽथ त्वया गन्तुं न शक्यते । एवं त्वां हि प्रकर्त्तव्यं वद शीघ्रं ममाज्ञया ॥' इत्यधिकम् । 8 ग 'ब्रुवति' । 9 ग-ङ-छ '-णं पु-' । 10 च '-द्भूतम्' ।

बाल्येऽहं तपसा विष्णुमाराधयितुमञ्जसा ।
चक्रतीर्थं शुभं गत्वा तपसा विष्णुमन्वहम् ।
अतोषयं महात्मानं नारायणमनन्यधीः ॥ १९ ॥
ततः प्रसन्नो देवेशः शङ्खचक्रगदाधरः ।
उवाच मां रघुश्रेष्ठ प्रसन्नमुखपङ्कजः ॥ २० ॥

श्रीभगवान् उवाच—

उत्तिष्ठ तपसो ब्रह्मन् फलितं ते तपो महत् ।
मच्चिदंशेन युक्तस्त्वं जहि हैहयपुङ्गवम् ।
कार्त्तवीर्यं पितृहणं यदर्थं तपसः श्रमः ॥ २१ ॥
ततस्त्रिःसप्तकृत्वस्त्वं हत्वा क्षत्रियमण्डलम् ।
कृत्स्नां भूमिं [1]कश्यपाय दत्त्वा शान्ति[2]मुपावह ॥ २२ ॥
त्रेता[3]युगे दाशरथिर्भूत्वा रामोऽहमव्ययः ।
उत्पत्स्ये परया [4]शक्त्या तदा द्रक्ष्यसि मां पुनः ॥ २३ ॥
मत्तेजः पुनरादास्ये त्वयि दत्तं मया पुरा ।
तदा तपश्चरल्लोँके तिष्ठ त्वं ब्रह्मणो दिनम् ॥ २४ ॥
इत्युक्त्वाऽन्तर्दधे देवस्तथा सर्वं कृतं मया ।
स एव विष्णुस्त्वं [5]रामो जातोऽसि ब्रह्मणाऽर्थितः ॥ २५ ॥

---

१९ । नरो० । अनन्यधीस्तन्मात्रमतिः ।

२४ । नरो० । दत्तं न्यस्तम् । ब्रह्मणो दिनं चतुर्युगसहस्रपरिमितं कालं, 'चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते' इति वचनात् ।

२५ । नरो० । स एव विष्णुस्त्वमिति पूर्वानुभूतो नारायण एव त्वमित्यर्थः । तर्हि अत्र कथं जात इति चेत्तत्राऽऽह—ब्रह्मणाऽर्थित इति ।

---

१९ । [ चक्रतीर्थं शालग्रामक्षेत्रम् । गो० ]

२१ । फलितं फलसमर्थं जातम् । मच्चिदंशेन मद्रूपचिदाश्रयशक्त्यंशेन । तपसः श्रम इति तपोरूपश्रमः, राहोः शिर इतिवत् । रा० ।

२४ । ब्रह्मणो दिनं चतुर्युगसहस्राख्यम् । रा० ।

---

1 च 'काश्य-' । 2 च '-मवाप्स्यसि' । 3 ख-च '-सुखे' । 4 ङ 'भक्त्या यदा', च 'भक्त्या' । 5 ख-ङ-च 'राम' ।

मयि [1]स्थितन्तु त्वत्तेजस्त्वयैव पुनराहृतम् ।
अद्य मे सफलं जन्म प्रतीतोऽसि [2]मम प्रभो ॥ २६ ॥
ब्रह्मादिभिरलभ्यस्त्वं प्रकृतेः पारगो मतः ।
त्वयि जन्मादिषड्भावा न सन्त्यज्ञानसम्भवाः ॥ २७ ॥
निर्विकारोऽसि[3] पूर्णस्त्वं गमनादिविवर्जितः ।
यथा जले फेनवृन्दं[4] धूमो वह्नौ तथा त्वयि ।
त्वदाधारा त्वद्विषया माया कार्यं [5]सृजत्यहो ॥ २८ ॥

---

२६। नरो०। प्रतीतो ज्ञातः ।

२७-२८। नरो०। ननु ब्रह्मादीनां प्रकृतिरपि लभ्या, तेषां कथमहमलभ्य इत्यत आह—प्रकृतेः पारगो मत इति। प्रकृतेः सीमातिग इत्यर्थः। जन्मादिमतो मम कथं तत्सीमातिगत्वमिति चेत्तत्राऽऽह—त्वयीत्यादि। आदिपदेन—जन्मान्तरास्तित्त्वम् वृद्धिर्विपरिणामोऽपक्षयो नाशो गृह्यते। अज्ञानसम्भवा अविद्याजन्या जन्मादयः कुतो मयि न सन्तीत्यत आह—निर्विकार इति, विकारशून्य इत्यर्थः। तत् कुत इत्यत आह—पूर्ण इति। अथ वा तर्हि मम जीवत्वं स्यान्नेत्याह—पूर्णस्त्वमिति। पूर्णः ऐश्वर्यादिषड्गुणयुक्त इत्यर्थः, सर्वज्ञत्वादिषड्गुणयुक्त इत्यर्थो वा। यदि निर्विकारत्वं तर्हि गमनादिमत्त्वं कुत इत्याह—गमनादिविवर्जित इति। परमार्थतो गमनादित्यक्त इत्यर्थः। तर्हि गमनादिकं कस्य कार्यमित्यपेक्षाया-

---

२६। मम प्रतीतोऽसि मया प्रत्यभिज्ञातोऽसीत्यर्थः। रा०।

२७। ननु मत्प्रत्यभिज्ञायाः किमेवं दौर्लभ्यं येनैव सम्भ्रमस्तत्राऽऽह—ब्रह्मादिभिरिति। अलभ्यत्वे हेतुः—प्रकृतेः पारग इति। जन्मादिषड्भावाः—जायतेऽस्ति विपरिणमतेऽपक्षीयते वर्द्धते नश्यतीत्येवंरूपाः षड् भावविकारास्ते। यतस्त्वं पूर्णो ज्ञानेनातोऽज्ञानसंभवास्ते त्वयि न सन्ति। रा०।

[ ननु दशरथात्मजस्य तव जन्मादयः सन्त्येवेत्याह—त्वयीत्यादि। जायते म्रियते परिणमत्यस्ति वर्द्धतेऽपक्षीयते इति षड् भावा विकारा अज्ञानजन्याः। ज्ञाने सति ब्रह्मत्वापत्तेस्तदभावात्। यद्वा अज्ञानो जडो देहस्तस्मिन्नेव सम्भवन्ति। गो० ]

२८। त्वं निर्विकारो गमनादिवर्जितश्चासि। ननु तेजोहरणादिक्रियाया इदानीमेवोक्ते कथं निष्क्रियत्वमत आह—यथेति। यथा शुद्धे एव जलादौ फेनजालादि औपाधिकं

---

1 घ 'स्थिते तु'। 2 च 'विभो मम'। 3 च '-कारोऽपि', छ '-कल्पोऽसि'। 4. क-ख घ ''जालं'' ग-ङ-च-छ '-जालो'। 5 ग-च 'करो-'।

यावन्मायावृता लोकास्तावत् त्वां न विजानते।
अविचारित[1]सिद्धैषाऽविद्या विद्याविरोधिनी ॥ २९ ॥

माह—यथेत्यादि। यथा जले जलाधार परस्परमिलिततरङ्गवृन्दं फेनवृन्दं सृजति वह्नौ तदाधारमार्द्रेन्धन धूम सृजति, तथा त्वदाधारा त्वद्विषया माया त्वयि कार्यं सृजतीति फलितार्थ। सर्वज्ञतादय. षड् गुणा यथा—सर्वज्ञता तृप्तिरनादिबोध स्वतन्त्रताऽलुप्तशक्तिरनन्तशक्तिश्चेति। त्वमाधारो यस्या सा, तथा त्व विषयो यस्या. सा तथा। यथा जल फेनं जनयति वह्निर्धूमं जनयतीति लोकानामतात्त्विकी प्रतीतिस्तथाऽसौ रामो गमनादिक करोतीति लोकानामतात्त्विकी प्रतीतिरिति भाव.।

२९। नरो०। तर्हि मां ज्ञात्वा लोका मोक्ष प्राप्नुवन्त्विति चेत्तत्राऽऽह—यावदित्यादि। मायाया आवरणविक्षेपनामशक्तिद्वयमस्ति। आवरणशक्तिस्तावद अल्पोऽपि मेघो यथाऽनेकयोजनमायतमादित्यमण्डलम् अवलोकयितृबुद्धिपिधायकतया आच्छादयतीव, तथा मायापरिच्छिन्नाऽप्यपरिच्छिन्नमात्मानमसंसारिणमवलोकयितृबुद्धिपिधायकतया आच्छादयतीव तादृश सामर्थ्यम्। ननु मुक्तिसाधिकाया विद्यायामुत्पन्नायां सत्यामेव मुक्तिर्भविष्यति किमावरणशक्तिमत्या मायया कर्त्तव्यमिति चेत्तत्राऽऽह—अविचारितेति, अविचारिता अनिर्वचनीयत्वेन विचारयितुमपारिता च सिद्धा चेति। सिद्धा नित्या, अविद्या माया। विद्याविरोधिनी विद्याप्रतिबन्धिका।

तथा त्वयि क्रियौपाधिकीत्यर्थ। उपाधिमेवाह—त्वदाधारेति, अन्यान् प्रति त्वामावृणोतीति त्वद्विषया अस्वतन्त्रतया त्वदधीनत्वात् त्वदाधारा च सेति भाव। रा०।

[ननु यद्यह ब्रह्म तथाऽपि विश्वरूपेण परिणामात् कुतो निर्विकारता तत्राऽऽह—यथा जल इति। यथा फेनसमूहो जले, यथा वा अग्नौ धूमस्तथा त्वयि त्वदाधारे मायैव कार्यप्रपञ्च सृजति। अय भाव.—न हि फेनो जलस्य विकार, किन्तु जल निमित्तम्, वायुरुपादानम्, एवमग्निर्निमित्तम् आर्द्रेन्धनमुपादान धूमस्य। एव त्व निमित्तमात्र माया प्रकृतिरुपादानं प्रपञ्चस्य, कुतस्तव विकारप्रसङ्ग.। ननु प्रकृतिराधार विना कथ सृजतु तत्राऽऽह—त्वदाधारेति। त्वमेवाधारो यस्या। उद्देश्यमपि त्वमेवत्याह—त्वमेव विषय उद्देश्यो यस्या। यद्यपि जीवभोगार्थमेव सृष्टिस्तथाऽपि जीवस्यापि त्वदंशतया वस्तुतो ब्रह्मत्वात् त्वदर्थैव सृष्टि। गो०]

२९। [ननु तर्हि कथ दाशरथिं मा मानुष वदन्तीत्याह—यावदित्यादि। माया अविद्या। यावदविद्यया आवृतास्तावल्लोकास्त्वा न जानन्ति। ननु श्रेय परिपन्थिनीमविद्या कथ ते न जानन्ति तत्त्वज्ञानाभावादित्याह—अविचारितेत्यादि। अविचारितेन स्वरूपनिरूपणाभावेनाविद्या सिद्धा लब्धावकाशा अस्या विरोधिनी पुनर्विद्यैव, अत एव यावदविद्या कृतकार्या तावत्त्वां न जानन्ति विद्योदयादविद्यानाशे सत्येव जानन्तीति। गो०]

1 ङ 'सिद्धैषाऽ'।

अविद्याकृतदेहादिसङ्घाते प्रतिबिम्बिता ।
चिच्छक्तिर्जीवलोकेऽस्मिञ्जीव इत्यभिधीयते ॥ ३० ॥
यावद्देहमनःप्राणबुद्ध्यादिष्वभिमानवान् ।
तावत् कर्त्तृत्वभोक्तृत्वसुखदुःखादिभाग् [1]भवेत् ॥ ३१ ॥
आत्मनः संसृतिर्नास्ति बुद्धेर्ज्ञानं न जा[2]त्विति ॥ ३२ ॥
अवि[3]वेकाद्द्वयं [4]युक्त्वा संसारीति प्रवर्त्तते ।
जडस्य चित्समायोगाच्चित्त्वं भूयाच्चितेस्तथा ।
जडसङ्गाज्जडत्वं हि जलाग्न्योर्मेलनं यथा ॥ ३३ ॥

३० । नरो० । तर्हि जीवपरयोः को भेद इति चेत्तत्राऽऽह—अविद्येति । आदिपदेनेन्द्रियवृन्दं गृह्यते । न च शरीरादिसंघातस्यास्वच्छत्वात्तत्र कथं प्रतिबिम्बमिति वाच्यम्, तन्मध्यस्थितस्य सकलतद्व्यापकस्य सत्त्वप्राधान्येनापञ्चीकृतपञ्चभूतारब्धस्याविद्याजन्यस्यान्तःकरणस्य दर्पणादिवत् स्वच्छत्वात् ।

३१ । नरो० । ननु अहं कर्त्ता, अहं भोक्ता, अहं सुखी, अहं दुःखीत्याद्यनुभवः कथं जायते इति चेत्तत्राऽऽह—यावदित्यादि । बुद्धिरन्तःकरणम् । आदिपदेनेन्द्रियग्रामो गृह्यते । अभिमानवान् अहङ्कारास्पदत्वेनावभासवान् ।

३२ । नरो० । तर्हि जीवस्य संसारनिवृत्तिर्न स्यादिति चेत्तत्राऽऽह—आत्मन इति । संसृतिर्नास्तीति परमार्थतः संसृतिर्नास्तीत्यर्थः । संसृतिः संसारः । बुद्धेरन्तःकरणस्य ज्ञानं क्षणिकविज्ञानम् । जातु कदाचित् ।

३३ । नरो० । तर्हि कथमात्मनः संसारित्वेनाऽऽत्मज्ञानमिति चेत्तत्राऽऽह—

३० । कार्यं सृजत्यहो इत्युक्तं तत् कार्यं दर्शयति—अविद्येति । देहादिसङ्घाते आदिनेन्द्रियादितत्सङ्घातावच्छिन्नेऽन्तःकरणे प्रतिबिम्बिता अनिर्वाच्यसम्बन्धेन सम्बद्धा चिच्छक्तिः प्राणादिप्रेरकत्वेन प्राणधारकतया जीव इत्युच्यते । जीव प्राणधारणे इति धातोः । रा० ।

[ अत्र जीवस्वरूपमाह—अविद्येति । देहपदेन देहोपाधिका पृथिवी । अविद्यया कृतो यः पृथिव्यादिसङ्घो मेलनं राशिरिति यावत् । गो० ]

३१ । ननु चिच्छक्तेरक्रियत्वेन जीवे कर्त्तृत्वादिव्यवहारः कथमत आह—यावदिति । अभिमानोऽहमिति बुद्धिः, यावद् विवेकाभावमूलको देहादिसङ्घातेऽहमित्यभिमानस्तावत् कर्त्तृत्वाद्यारोपेण तद्भागिनेवेत्यर्थः । रा० ।

[ भूतसूक्ष्मपञ्चकैक्याच्चिच्छक्तिरेव जीवः, ततः कथं कर्त्तृत्वाद्यभिमानः कथं वा दुःखभागित्वम् ? देहाध्यासेनैवेत्याह—यावद्देहेत्यादि । यावद्देहमनःप्राणबुद्ध्यादिषु, प्राणा इन्द्रियाणि । चक्षुषि नष्टे अन्धः काण इत्याद्यभिधानाद् अभिमानवान् अहमिति बुद्धिः, तावत् कर्त्तृत्वाद्यभिमानः । तदभिमानशून्यः सुखदुःखादिभाग्वत् कर्मवशाद् भवति । गो० ]

३२-३३ । विशिष्टे एव कर्त्तृत्वादीत्युक्तमर्थं प्रत्येकं तन्निषेधेन द्रढयति—आत्मन इति । संसृतिः कर्त्तृत्वभोक्तृत्वाद्यभिमानकृतः संसारो नास्त्यपरिणामित्वादिति भावः । एवं बुद्धेर्ज्ञानं

1 क 'भवे' । 2 ग 'लिह' । 3 क-ख-ग व-ड-च-छ '-काद्द्वय' । 4 क ग-व-ड-छ 'युक्ता', च 'लोके' ।

यावत् त्वत्पादभक्तानां 'सङ्गसौख्य न 'विन्दति ।
तावत् संसारदुःखौघान्न निवर्त्तेन्नरः सदा ॥ ३४ ॥

अविवेकादिति । अविवेकादनात्मभ्य आत्मनः पृथक्त्वेन ज्ञानात् भ्रमं देहादिष्वात्मबुद्धिम्, आत्मनि देहादिबुद्धिञ्च । युक्त्वा कृत्वा । कारणं विना कथं भ्रमोत्पत्तिरिति चेत्तत्राऽऽह—जडस्येति । जडस्य प्रधानस्याऽवस्तुनो वा । चित्समायोगात् चैतन्यसमायोगात् । चित्त्वं चैतन्यत्वम् । यद्वा एवमाभास्यम् । तर्हि कथमह जानामि, अहमिच्छामि, अहं सुखी, अहं दुःखीत्याद्यनुभव', कथं वा त्वमज्ञ इत्यनुभव इति । 'भ्रम'मिति स्थाने 'द्वय'मिति पाठे द्वयम् आत्मबुद्धी परस्पर युक्त्वा इत्यर्थः । अस्मिन् पक्षे चरम आभास एव स्थापनीय । जडस्यान्त करणस्येत्यर्थः । दृष्टान्तमाह—जलाग्न्योरिति ।

३४ । नरो० । तर्ह्युपायाभावात् संसारदुःखात् कोऽपि कदाऽपि न निवर्त्तेत इति

न जडत्वादिति भाव । तस्मात्तद् द्वयं युक्त्वाहमिति बुद्ध्या गृहीत्वा । तत्र हेतुरविवेक । ससारी जीव इति अह कर्त्ता भोक्तेत्यादिरूपेण प्रवर्त्तते व्यवहरति । तदुक्तम्—

न बुद्धेरेव बोधोऽस्ति नाऽऽत्मनो विद्यते क्रिया ।
अतो नान्यतरस्यापि जानातीति न युज्यते ॥ इति ।

नन्वेवं बुद्धश्चिती संज्ञान इति धातुनिष्पन्नचित्तव्यवहारानुपपत्तिरत आह—जडस्येति । नन्वेवम् 'अहमज्ञ' इति व्यवहारानुपपत्तिरत आह—यथा चितेर्जडसंयोगाज्जडत्वम् । संमेलने मिथोऽन्योन्य-धर्मतिरोभावे दृष्टान्तमाह—जलाग्न्यो । मेघे विद्युज्जलयोर्यथेत्यर्थः । विद्युत प्रकाशं जातमपि जलमावृणोति जलस्वरूप जडमप्यग्निसयोगाद् विद्युद्रूपेण प्रकाशरूपता प्राप्नोतीत्यर्थ । रा० ।

[ ननु चिज्जडात्मक जगदित्यत्र चिदंशस्य निर्लेपत्वात् जडस्याकर्त्तृत्वात् कस्य ससार-स्तत्राऽऽह—आत्मन इति । आत्मनो जीवस्य ससृतिर्जन्ममरणादिर्नास्ति चिन्मयत्वात् । जातु कदाचिदपि बुद्धेर्ज्ञान नास्ति जडत्वात्, कुत' कर्त्तृत्वादि । बुद्धेरिति इन्द्रियादीनामुपलक्षणम् । अविवेकाद् विचाराभावाद् द्वय चिज्जडरूप युक्त्वा सयोग प्राप्याहं ससारीति ज्ञात्वा प्रवर्त्तते आसक्तो भवतीत्यर्थः । द्वयोर्योग विशिनष्टि—जडस्येति । जडस्य बुद्ध्यादेश्चित्समायोगात् चैतन्य-सम्पर्कात् चित्त्व चेतनत्व भूयाद् भवति । स्वतो जडस्यापि बुद्ध्यादे कर्त्तृत्वादि । चितेश्चैतन्यस्य जीवात्मनो जडसङ्गाद् बुद्ध्यादिससर्गाज्जडत्वम्, अत स्वरूपाज्ञानात् कर्त्तृत्वाद्यभिनिवेश । एव परस्यान्यधर्माध्यास ससारहेतु । तत्र दृष्टान्त—जलाग्न्योर्मेलन यथेति । यथा स्वभावशीतलस्य जलस्याग्निसयोगे उष्णतेति जडस्य चेतनत्वे । स्वभावत प्रकाशदाहयुक्तस्य वा वह्नेर्जलसयोगे स्वप्रकाशदाहशक्तिहानिश्चैतन्यस्य जडसयोगे स्वरूपाहानौ दृष्टान्त । गो० ]

३४ । [ तन्निवृत्तेरवधि वक्तुं प्रथम सत्सङ्गमाह—यावदित्यादि । सङ्गसौख्य सङ्गेन सुखम्, त्वत्सङ्गेन त्वत्कथाश्रवणादिना सुखोत्पत्त । गो० ]

1 च 'सङ्ग सौख्य' । 2 क 'विद्यते' ।

सत्सङ्गलब्धया भक्त्या यदा त्वां समुपासते ।
तदा माया शनैर्याति [1]त्वामेव प्रतिपद्यते ॥ ३५ ॥
[2]ततस्त्वज्ज्ञानसम्पन्नः सद्गुरु[3]स्तेन लभ्यते ।
[4]वाक्यज्ञानं गुरोर्लब्ध्वा त्वत्प्रसादाद् विमुच्यते ॥ ३६ ॥
[5]तस्माद् त्वद्भक्तिहीनानां कल्पकोटिशतैरपि ।
न मुक्तिशङ्का विज्ञानशङ्का नैव सुखं तथा ॥ ३७ ॥

---

चेत्तत्राऽऽह—यावदित्यादि । सङ्गसौख्यं सङ्गजनितसुखम् । विन्दति प्राप्नोति । संसारदुःखौघात् संसारदुःखसमूहात् । संसारो जन्ममरणादि ।

३५ । नरो० । सत्सङ्गलब्धया साधुसङ्गलब्धया । समुपासते सेवते । माया अविद्या । शनैरल्पम् । याति नश्यति । न च नित्याया मायाया कथं नाश इति वाच्यम्, मायापदस्यात्र तूलाविद्यापरत्वादावरणशक्तिपरत्वाद्वा । प्रतिपद्यते जानाति ।

३६ । नरो० । ततः आवरणतूलाविद्याकिञ्चिन्नाशानन्तरम् आवरणशक्तिकिञ्चिन्नाशानन्तरं वा । वाक्यज्ञानं तत्त्वमस्यादिवाक्यजन्यज्ञानम् । गुरोः सकाशात् ।

३७ । नरो० । उपसंहरति—तस्मादिति ।

---

३५ । सता सङ्गेन लब्धया भक्त्या त्वां यदा जनाः समुपासते, तदा तेभ्यः माया शनैर्मन्दं याति अपसरति विक्षेपशक्तिं त्यजतीत्यर्थः । अत एव सा तानवं प्रतिपद्यते । रा० ।

[ सत्सङ्गाल्लब्धयेत्यादि । त्वां समुपासते इति अस् गतिदीप्तादानेष्वित्यस्य भ्वादे रूपम् । अनेकार्थत्वात् पूजार्थता । शनैर्याति अनुष्ठानक्रमेण वा । अनन्तरं त्वामेव प्रतिपद्यते सेवते न त्वन्यद् गृहादि वा । गो० ]

३६ । तव ज्ञानमभेदेन यत्तद्युक्तः सद्गुरुस्त्वद्भक्तियोगात्तेन लभ्यते तदनन्तरं तादृशगुरोः सकाशाद्वाक्यज्ञानं तत्त्वमसीति वाक्यार्थाखण्डार्थज्ञानं त्वत्प्रसादाल्लब्ध्वा विमुच्यते । 'आचार्यवान् पुरुषो वेद' ( छान्दो० ६।१४।२ ) इति श्रुतेः, 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इति ( गीता ४।३४ ) स्मृतेश्च । रा० ।

सर्वमायोपरमहेतुं वदन् गुरूपसत्तिमाह । तथा च श्रुतिः—'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' ( मुण्डको० १।२।१२ ) 'आचार्यवान् पुरुषो वेद, नैषा तर्केण मतिरापनेया' (कठो० ५।९) । प्रथमं सङ्गलाभस्ततस्तन्मुखादीश्वरगुणकर्मश्रवणादिपरलोकचिन्ता च, ततः ईषद्विरज्यत्त्वात् सेवायां प्रवृत्तिः, ततस्तु कृपया सद्गुरुसेवा, ततस्तस्मादुपनिषत्तत्त्वज्ञानं ततस्तत्त्वपदार्थयोरैक्यभावनया पूर्णस्तव प्रसादः । अतस्तयोरैक्यं ज्ञात्वा तन्मयतया मुक्तो भवति, माया च ततः प्रागेव निःशेषं नीयत इति ।

३७ । [ यतो न विज्ञानमपरोक्षज्ञानमतो न मुक्तिः ।
'तमेव विदित्वाऽतिमृत्युमेति
नान्यः पन्था विद्यतेऽयनाय ॥' (श्वेताश्व० ३।८) इति श्रुतेः । गो० ]

---

1. ख-घ 'तानवं', ङ 'त्वामेव', च 'संसारोऽपि निवर्त्तते' । 2. ङ 'अतः' । 3. ग ङ-छ 'स्तस्य' । 4. च 'वाक्यं ज्ञानं' । 5 च 'तथा त्वं' ।

अनन्त्वत्पाद[1]युगले भक्तिर्मे जन्मजन्मनि ।
स्यात् त्वद्भक्तिमतां सङ्गो[2]ऽविद्या याभ्यां विनश्यति ॥ ३८ ॥
लोके त्वद्भक्तिनिरतास्त्वद्धर्मामृतवर्षिण ।
पुनन्ति लोकमखिलं किं पुन [3]स्वकुलोद्भवान् ॥ ३९ ॥
[4]नमोऽस्तु जगतां नाथ नमस्ते [5]भक्तिभावन ।
नम कारुणिकानन्त रामचन्द्र नमोऽस्तु ते ॥ ४० ॥
देव यद् यत् कृतं पुण्यं मया लोकजिगीषया ।
[6]तत् सर्वं तव बाणाय भूयाद्राम नमोऽस्तु ते ॥ ४१ ॥
तत प्रसन्नो भगवान् श्रीराम करुणाकर[7] ।
प्रसन्नोऽस्मि तव ब्रह्मन् यत्ते मनसि वर्त्तते ॥ ४२ ॥
दास्ये [8]तदखिलं कामं मा [9]कुरुष्वात्र संशयम् ।
तत प्रीतेन मनसा भार्गवो राममब्रवीत् ॥ ४३ ॥

३८ । नरो० । पादयुग वापीत्यनेन प्राप्तपदयुगबोधोऽतस्त्वत्पादयुगलेत्यादिना वारित । अतो विवेकजनकत्वाद । अविद्या माया याभ्या भक्तिसङ्गाभ्याम् ।

३९ । नरो० । त्वद्भक्तिनिरतास्त्वद्भक्तिपरिनिष्ठिता । त्वद्धर्मामृतवर्षिणस्त्वच्चरितपीयूषवर्षिणस्त्वच्चरितगायका इति यावत् ।

४० । नरो० । अस्मात् पर कोऽपि नमस्कार्यो नास्तीत्यभिप्रेत्य पुन पुनर्नमस्कुर्वन् स्तौति—नमोऽस्त्वित्यादिना । जगता नाथ हे जगता स्वामिन्, एतेन स्वनाथत्वमपि सूचितम् । हे भक्तिभावन हे भक्त्युत्पादक, त्वत्प्रसाद विना भक्तिरपि न भवतीति भाव । सापराधत्वेऽपि द्वेषो नास्तीति सूचयन्नाह—नम कारुणिकेति । अस्य ज्ञान दुर्लभमित्यभिप्रेत्याह—अनन्तेति । अपरिच्छिन्नेत्यर्थ । अयमेवान्तस्तमोनाशक इत्यभिप्रेत्याह—रामचन्द्रेति ।

४२ । नरो० । तत स्तुत्यनन्तरम् । सापराधे परशुरामे कथ प्रसाद इति चेत्तत्राऽऽह—करुणाकर इति ।

४३ । नरो० । काममभीष्टम् । ततो रामप्रसादानन्तरम् ।

३८ । [ याभ्या विनश्यतीति । याभ्यां त्वद्भक्तिसङ्गाभ्यामविद्या नश्यति । गो० ]

४१ । तव बाणाय भूयात् त्वद्बाणनाश्यं भूयादित्यर्थ । अनेन सर्वकर्मक्षयेण मुक्तिं देहीति व्यङ्गम् । रा० ।

1 क '-कमले' । 2 च 'ह्यविद्या च' । 3 ङ 'मुक्तु', क 'स्वकुलोद्भवम्' । 4 'नमस्ते' । 5 ग 'भक्तभावन', च 'भक्तवत्सल' । 6. ङ पुस्तके इदमर्द्धं नास्ति । 7 ख-घ 'मय' । 8 च 'तम' । 9 च 'कुरुष्वात्म' ।

यदि मेऽनुग्रहो राम तवास्ति मधुसूदन ।
त्वद्भक्तसङ्ग[1]स्त्वत्पादे [2]दृढा भक्तिः सदाऽस्तु मे ॥ ४४ ॥
स्तोत्रमेतत् पठेद् यस्तु भक्तिहीनोऽपि सर्वदा ।
त्वद्भक्तिस्तस्य विज्ञानं भूयादन्ते स्मृतिस्तव ॥ ४५ ॥
तथेति [3]राघवेणोक्त परिक्रम्य प्रणम्य तम् ।
पूजितस्तदनुज्ञातो महेन्द्राचलमन्वगात् ॥ ४६ ॥
राजा दशरथो हृष्टो रामं मृतमिवागतम् ।
आलिङ्ग्याऽऽलिङ्ग्य हर्षेण नेत्राभ्यां जलमुत्सृजन् ॥ ४७ ॥
तत प्रीतेन मनसा [4]सुस्थचित्त पुर ययौ ॥ ४८ ॥
रामलक्ष्मणशत्रुघ्नभरता देव[5]सम्मिता ।
स्वां स्वां भार्यामुपादाय रेमिरे स्वस्वमन्दिरे ॥ ४९ ॥
मातापितृभ्यां [6]संहृष्टो राम सीतासमन्वित ।
रेमे वैकुण्ठभवने श्रिया सह यथा हरि ॥ ५० ॥
युधाजिन्नाम कैकेयीभ्राता भरतमातुल ।
भरत नेतुमागच्छत् स्वराज्य प्रीतिसयुत ॥ ५१ ॥
प्रेषयामास भरत राजा स्नेहसमन्वित ।
शत्रुघ्नश्चापि सम्पूज्य युधाजितमरिन्दम ॥ ५२ ॥
कौशल्या शुशुभे देवी रामेण सह सीतया ।
देवमातेव पौलोम्या शच्या शक्रेण शाभना ॥ ५३ ॥

---

५३ । नरो० । देवमाता अदिति ।

---

४४ । सोऽपि मुक्तिकारणसम्पद प्रार्थयते—यदीति । मधुसूदनेत्यनेन मोक्षप्रतिबन्धकमत्कर्मनाशने त्व समर्थ इति व्यज्यते । रा० ।

४५ । विज्ञान त्वभेदसाक्षात्कार । इदं भक्तिफलम् । यदि कदाचिदिद न स्यात्तर्ह्यन्ते मरणकाले तव स्मृतिरवश्यं भूयादिति लोकोपकाराय प्रार्थयते । अन्ते या मति सा गतिरिति न्यायात्तत्स्मृतौ तल्लाभोऽवश्यभावीति भाव । रा० ।

४९ । देवसम्मिता देवतुल्या । रा० ।

५३ । पौलोम्या पुलोमनामदानवविशेषस्य कन्यया शच्या इत्यस्य विशेषणम् ।

---

1 ग-ङ-च 'त्वत्पादपद्मभक्ति सदा' । 2 छ 'भक्तिरेवास्तु मे सदा' । 3 ङ 'रामेणैवोक्त' । 4 ख घ च 'स्वस्थ-' । 5 ङ च छ '-सन्निभा' । 6 च 'सहितो' ।

[1]साकेते लोक[2]नाथप्रथितगुणगणो लोकसङ्गीतकीर्त्तिः
श्रीरामः सीतयास्तेऽखिलसुरनिकरानन्दसन्दोहमूर्त्तिः ।
[3]नित्यश्रीर्निर्विकारो निरवधिविभवो नित्यमायानिरासो
मायाकार्यानुसारी मनुज इव सदा भाति देवोऽखिलेशः ॥ ५४ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे आदिकाण्डे
सप्तमोऽध्यायः ॥ ७ ॥

---

६४ । नरो० । श्रीरामः सीतया सह यानब्दानास्ते ते शाके बोद्धव्याः[?] । अथ वा अयोध्यायामित्यर्थः । तथा च कोषान्तरम्—'अयोध्यायाञ्च साकेत' इति । श्रीरामः कीदृशः ? अखिलो यः सुरनिकरो देवतासमूहस्तस्यानन्दसन्दोह आनन्दसमूहो यस्यास्तादृशी मूर्तिर्यस्य तादृशः । पुनः कीदृशः ? नित्या श्रीः शोभा यस्य तादृशः । पुनः कीदृशः ? निर्विकारः जन्ममरणादिविकारशून्य इत्यर्थः । निरवधिविभवोऽनन्तैश्वर्यः । नित्यमायानिरास इत्यनेन अधीनमायत्वं सूचितम् । तर्हि कथं प्राकृतलोकवच्चेष्टते इति चेत्तत्राऽऽह—मायाकार्यानुसारीति । अखिलेशोऽखिलनियन्ता ।

[ आदिकाण्डे सप्तमाध्यायव्याख्या समाप्ता ॥ ७ ॥ ]

---

६४ । साकेते अयोध्यायाम् । लोकनाथेषु प्रथिता प्रसिद्धगुणगणा यस्य सः । लोके सम्यग्गीता कीर्तिर्यस्य । सकलजनसमूहस्याऽऽनन्दसमूहरूपा मूर्तिर्यस्य शतगुणानन्दत्वात्तस्येति भावः । नित्यं श्रीः परा शक्तिर्यस्य, अत एव निरवधिविभवः, नित्यः मायाया आवरणशक्तिरूपाया निरासो यस्मात्, माया सर्वथा यं प्रत्यनावरिकेति भावः । माया कार्यं सर्वम् अनुसरति सत्तास्फूर्तिभ्यां व्याप्नोति तादृशो देवोऽप्यखिलेशोऽपि माययैव यो मनुज इव भाति । रा० ।

आदिकाण्डं समाप्तम् ॥

---

1. च 'साकेतेर्लो-' । 2 च-छ '-नाथ प्र' । 3 च 'नित्यत्वान्नि' ।

# अयोध्याकाण्डम्

## प्रथमोऽध्यायः

श्रीमहादेव उवाच—

एकदा सुखमासीनं रामं स्वान्त[1]पुराजिरे ।
सर्वाभरण[1]सम्पन्नं रत्नसिंहा[2]सने स्थितम् ॥ १ ॥
नीलोत्पलदलश्यामं कौस्तुभामुक्तकन्धरम् ।
सीतया रत्नदण्डेन चामरेणाथ वीजितम् ॥ २ ॥
विनोदयन्तं ताम्बूलचर्वणादिभिरादरात् ।
नारदोऽवातरद् द्रष्टुमम्बराद् यत्र राघव ॥ ३ ॥

---

१ । नरो० । स्वान्त पुराजिरे निजान्तःपुराङ्गणे ।
२ । नरो० । कौस्तुभेन आमुक्ता कन्धरा यस्य तादृशम् ।
३ । नरो० । अवातरद् अवारोहत्, अम्बरादाकाशात् ।

---

१ । प्रथमे त्वथ सर्गेऽत्र रामो नारदसंस्तुतः ।
प्रतिज्ञां रावणवधे कृतवानिति वर्ण्यते ॥ रा० ।

अथ काण्डे द्वितीये प्रथमतो नारदमुखेन रावणवधप्रतिज्ञां प्रस्तोतुं नारदागमनमाह—एकदेत्यादिना । इयमन्या धृतमानवरूपस्यापि रामस्य परब्रह्मत्वं प्रतिपादयितुर्भक्तप्रवरस्य तत्रभवतो व्यासस्य शब्दब्रह्मविदो वाल्मीकेर्नवीना सरणिर्नारदागमनरावणवधप्रतिज्ञादिरूपा । वाल्मीकीये न प्रस्तुत नारदागमनम्, न वा तस्य सविधे रावणवधप्रतिज्ञादिकम् । स्वान्त - पुराजिरे निजान्त पुरचत्वरे 'अङ्गनं चत्वराजिरे' इत्यमर ।

२ । कौस्तुभेनाऽऽमुक्ता युक्ता भूषिता वा कन्धरा यस्य तम् । कौस्तुभशब्देनात्र तन्नामकतदाकारो भूषणविशेष । रा० ।

रत्नदण्डेन—रत्ननिर्मित दण्डं यस्य तादृशेन चामरेणेत्यर्थः ।

३ । विनोदयन्तं प्रीणयन्तं सीतामिति शेष । द्रष्टुमर्थात् सीतारामौ । अम्बरादाकाशात् ।

---

1 ड '-सम्पूर्ण' । 2 ड '-मनस्थि-' । 3 घ-छ 'वतरद्' ।

शुद्धस्फटिकसङ्काशः शरच्चन्द्र इवामलः ।
अतर्कित[1]मुपायातो नारदो [2]दिव्यदर्शन ॥ ४ ॥
त दृष्ट्वा सहसोत्थाय रामः प्रीत्या कृताञ्जलि' ।
ननाम शिरसा भूमौ सीतया सह भक्तिमान् ॥ ५ ॥
उवाच नारदं राम' प्रीत्या परमया युत'[3] ।
संसारिणां मुनिश्रेष्ठ दुर्लभं तव दर्शनम् ।
अस्माक विषयासक्तचेतसां नितरां मुने ॥ ६ ॥
[4]अवाप्त मे पूर्वजन्म[5]कृतं पुण्यमहो[6]दयम् ।
ससा[7]रिणाऽपि हि मुने [8]लभ्यते [9]सत्समागमः ॥ ७ ॥

४ । नरो० । शुद्धस्फटिकसङ्काशः पदार्थान्तरामिश्रस्फटिकतुल्य· । अतर्कितमिति क्रियाविशेषणम् ।

५ । नरो० । कृताञ्जलि· पुटीकृतहस्त ।

६ । नरो० । विषये आसक्तं चेतो येषां तादृशानामस्माकं नितरां तव दर्शनं दुर्लभमित्यन्वय· ।

७ । नरो० । पूर्वजन्मकृत कर्मेति शेष· । पुण्यस्य महानुदयो यस्मात्तादृशम् । सत्समागम· साधुसमागम ।

४ । शुद्धस्फटिकसङ्काश इत्यमलस्फटिकविशद इत्यर्थ । शरच्चन्द्र इवामल इत्यनेन तैक्ष्ण्यहीनज्योतिर्विशिष्टत्वं ध्वनितम् । अतर्कितमचिन्तितम् असम्भावितं वा, तद् यथा स्यात्तथा । दिव्यदर्शन दिव्यम् इन्द्रियागोचरार्थदर्शनसमर्थं दर्शनं दृष्टिर्यस्य स·, अतीन्द्रियार्थद्रष्टेत्यर्थ· ।

५ । शिरसा भूमौ ननामेति भूमिं स्पृष्ट्वेत्यर्थ' । भक्तिमान् अनुरागयुक्त , अत एव प्रीत्या अनुरागेण कृताञ्जलि· पुटीकृतहस्त ।

७ । पूर्वजन्मकृतानि यानि पुण्यानि पुण्यकर्माणि तज्जन्यमहोदयै शुभादृष्टैरवाप्तमित्यर्थ । महत फलस्य उदयो येभ्यस्तैरिति वाच्योऽर्थ । ननु ससारिणां दुर्लभं वस्तु कथं त्वया लब्ध तत्राऽऽह—संसारिणेति, काकतालीयन्यायेनेति भाव· । रा० ।

अवाप्तमिति । पूर्वजन्मकृतपुण्यमहोदयमिति पाठे मे मया पूर्वस्मिन् जन्मनि कृतं यत् कर्म, तज्जन्यं यत् पुण्यं तस्य महानुदयो यस्मात्तादृशं तव दर्शनमित्यर्थ , अवाप्तम् । पूर्वजन्मकृतपुण्यमहोदयैरिति पाठे तु पूर्वजन्मकृतं यत् पुण्यं तज्जन्यमहोदयै· करणैर्हेतुभिर्वा तव दर्शनमवाप्त प्राप्तम् ।

1 च '-त इवा-' । 2 च 'मुनिसत्तम' । 3 अत पर ग-पुस्तके 'श्रीराम उवाच' इत्यधिकम् । 4. ग-ड-च-क 'अथवा मे' । 5. क ख ग-घ ड-च 'कृतपुण्य' । 6 क ख ग घ-च 'दयै' । 7. च 'रिणो वापि', क '-रिणामिह' । 8 ख 'लप्स्यते' । 9 ड 'त्वत्स-' ।

अतस्त्वद्दर्शनादेव कृतार्थोऽस्मि मुनीश्वर ।
किं कार्यं ते मया कार्यं ब्रूहि तत् करवाणि भो.[1] ॥ ८ ॥
अथ तं नारदोऽप्याह राघवं भक्तवत्सलम् ।
किं मोहयसि [2]मां राम वाक्यैर्लोकानुसारिभि' ॥ ९ ॥
[3]ससार्यहमिति प्रोक्तं सत्यमेव [4]त्वयोदितम् ।
जगतामादिभूता या सा माया गृहिणी तव ।
त्वत्सन्निकर्षाज्जायन्ते तस्यां ब्रह्मादयः प्रजाः ॥ १० ॥
त्वदा[5]श्रया सदा भाति [6]माया या त्रिगुणात्मिका ।
सूतेऽजस्रं [7]शुक्लकृष्णलोहिता· सर्वदा प्रजा' ।
लोकत्रयमहागेहे गृहस्थस्त्वमुदाहृत ॥ ११ ॥

---

९ । नरो० । किं कथ मोहयसि मोह नयसि ।

१० । नरो० । कार्यकारणयोरभेदमङ्गीकुर्वन्नाह, अथ वा ससारिणामित्यादि यदुक्तं तत्राऽऽह—ससार्यहमितीति । ससारकारण माया यस्य गृहिणी तस्य ससारित्वे किं चित्रमिति भाव । ननु यस्य गृहिणी विद्यते तस्य तत्र प्रजा जायन्ते मम तत्र कथं प्रजा न जायन्ते इत्यत आह—त्वत्सन्निकर्षादिति, त्वत्स्वरूपचिदाभासासत्तेरित्यर्थ· । यद्वा सन्निकर्षोऽत्र विलक्षण-सन्निकर्ष·, वैलक्षण्यञ्चात्र ईक्षणकालीनत्वं बोध्यम् ।

११ । नरो० । त्रयो गुणा आत्मा स्वरूपं यस्यास्तादृशी । तथा च कारणीभूत-सत्त्वगुणावच्छिन्नो विष्णु पालयिता, कारणीभूतरजउपहितो ब्रह्मा स्रष्टा, कारणीभूततमउपहितो रुद्र संहर्त्ता । अजस्रं निरन्तरम् । शुक्लाश्च ता कृष्णाश्च लोहिताश्चेति तास्तथा । तथा च सत्त्वप्रधान देवशरीरम्, तम प्रधानं तिर्यगादिस्थावरान्तशरीरम्, रज प्रधानं मनुष्य-

---

९ । लोकानुसारिभि —लोकान् अनुसरन्तीति तैर्मानुषोचितैरित्यर्थ· ।

१०-११ । आदिभूता मूलप्रकृति । 'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वर'मिति ( श्वेताश्व० ४।१० ) श्रुते' । त्वत्सन्निकर्षादिति, अचेतनत्वेन तस्याश्चेतनसन्निकर्षापेक्षत्वादिति भाव । अत एव सा त्वदाश्रयेति त्वत्सन्निकर्षेण तस्या स्रष्टृत्वात् सा त्वदाश्रयेत्यर्थ· । त्रिगुणात्मिका सुखदु·खमोहस्वभावा सत्त्वरजस्तमोरूपगुणत्रयात्मिका । अत एव स्वगुणानु-रूपास्तथागुणा' प्रजा सूते, तादृश्या गृहिण्या युक्तो लोकत्रयरूपगेहे गृहस्थस्त्वमित्युदाहृत' । रा० ।

---

1 ग-पुस्तके अत पर 'श्रीमहादेव उवाच' इत्यधिकम् । 2 क 'मे' । 3 क-पुस्तके इदमर्द्धं नास्ति । 4 ख घ 'त्वया विभो' । 5 च '-श्रयात्' । 6. क 'या माया' । 7 च 'कृष्णशुक्ल-' ।

त्वं विष्णुर्जानकी लक्ष्मीः शिवस्त्वं जानकी शिवा ।
ब्रह्मा त्वं जानकी वाणी सूर्यस्त्वं जानकी प्रभा ॥ १२ ॥
भवान् शशाङ्कः सीता तु रोहिणी शुभलक्षणा ।
शक्रस्त्वमेव पौलोमी सीता स्वाहाऽनलो भवान् ॥ १३ ॥
यमस्त्वं कालरूपश्च सीता संय[1]मनी प्रभो ।
निर्ऋतिस्त्वं जगन्नाथ [2]तामसी जानकी शुभा ॥ १४ ॥
राम त्वमेव वरुणो भार्गवी जानकी [3]मता ।
[4]वायुस्त्वं राम सीता तु सदागतिरितीरिता ॥ १५ ॥
कुबेरस्त्वं राम सीता सर्वसम्पत् प्रकीर्त्तिता ।
रुद्राणी जानकी प्रोक्ता रुद्रस्त्वं लोकनाशकृत् ॥ १६ ॥
लोके स्त्रीवाचकं [5]यावत् तत् सर्वं[6] जानकी शुभा ।
पुन्नामवाचकं यावत् तत् सर्वं त्वं हि राघव ।
तस्माल्लोकत्रये [7]देव युवाभ्यां नास्ति किञ्चन ॥ १७ ॥

---

शरीरम् । गेहं विना गृहिणी कथं शोभेतेति चेत्तत्राऽऽह—लोकत्रयमहागेह इति । लोकत्रयेत्युपलक्षणम् । यद्वा मम यदि गेहस्थत्वं स्यात् तदा गेहमपि तिष्ठेदिति चेत्तत्राऽऽह—लोकेत्यादि, अथ वा तर्हि अहं कुत्र गृहस्थ इत्यपेक्षायामाह—लोकेत्यादि । लोकत्रयमेव महागेहं तस्मिन् ।

१२-१३ । नरो० । ननु लोकत्रयमहागेहे नानागेहस्था विद्यन्ते, तत्र कुतो मम गृहस्थत्वमित्यत आह—त्वं विष्णुरित्यादि । शिवा गौरी, वाणी सरस्वती, शशाङ्कश्चन्द्रः, पौलोमी शची, अनलो वह्निः ।

१७ । नरो० । अनन्तत्वान्मिथुनं प्रत्येकं वक्तुमशक्यमिति हृदि निधायाऽऽह—लोके स्त्रीवाचकमित्यादि । स्त्रीशब्दो वाचको यस्य वस्तुनस्तद्वस्तु स्त्रीवाचकम् । पुन्नाम पुंशब्दो वाचकं यस्य वस्तुनस्तद्वस्तु पुन्नामवाचकम् । उपसंहरति—तस्मादिति ।

---

१४ । [ संयमनी धूम्रवर्णा यमपत्नी । तामसी निर्ऋतिपत्नी । गो० ]

१५ । [ सदागतिर्वायुपत्नी सततगमनशक्तिर्वा । गो० ]

१७ । विशिष्य किञ्चिदुक्त्वा सामान्येनोपसंहरति—लोक इति । युवाभ्यामन्यदिति शेषः । रा० ।

---

1. घ '-मिनी' । 2 च 'जानकी तामसी' । 3 क-ख घ-ङ ङ 'शुभा' । 4 च 'राम त्व पवनः सीता सदा भाति विभीषिता' । 5. ग-ङ-च-ङ 'यद्यत' । 6 ग 'भिन्न' । 7. अत परं च पुस्तके 'तं विसृज्य तदितरज्ञानमप्याकृत सदा' इत्यधिकम् ।

त्वदाभासोदिताज्ञानमव्याकृतमितीर्यते ।
तस्मान्महांस्तत [1]सूत्र लिङ्गं सर्वात्मक ततः ॥ १८ ॥
अहङ्कारश्च बुद्धिश्च पञ्च प्राणेन्द्रियाणि च ।
लिङ्गमित्युच्यते प्राज्ञैर्जन्ममृत्युसुखादिमत् ॥ १९ ॥

---

१८। नरो०। तर्हि मम जीवेन सह भेदो न स्यात्, जीववज्जन्ममरणं सुखदु खादिभाक्त्वञ्च स्यादिति चेत्तत्राऽऽह—त्वदाभासोदितेत्यादि। त्वदाभासेन उदितम् उदय प्राप्तं प्रकाशं गतम् उज्ज्वलितमिति यावत्, तच्च तदज्ञानञ्चेति तत्तथा। अज्ञानमविद्या तस्मादव्याकृतात् महान् महत्तत्त्व ज्ञानशक्तिमान् प्रथमो विकार । सूत्र क्रियाशक्तिमान् द्वितीयो विकार ।

१९। नरो०। किं लिङ्गमित्याकाङ्क्षायामाह—अहङ्कारश्चेत्यादि। मनोऽहङ्कारयो समानपर्यायता। मन सङ्कल्पविकल्पात्मकान्त करणवृत्ति, बुद्धिर्निश्चयात्मिकाऽन्त करणवृत्ति, पञ्च प्राणा, दश इन्द्रियाणि एतानि मिलित्वा लिङ्गशरीर भवति। तदुक्तम्—

प्राणपञ्चमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतार्थं सूक्ष्माङ्ग भोगसाधनम् ॥ इति

( पञ्चीकरणवार्तिकम् ३६ श्लो० )

पञ्च प्राणा यथा—प्रागननवान् वायु प्राणो नासिकादिस्थानवर्त्ती, अवागननवान् वायुरपान पाय्वादिस्थानवर्त्ती, विश्वगननवान् व्यान सर्वशिरावर्त्ती, ऊर्द्ध्वमननवान् वायुरुदान् कण्ठवर्त्ती, अशितपीतान्नादिसमीकरणो नाभिस्थान समान, एते रजोगुणोपेतेभ्य आकाशादिपञ्चभूतेभ्यो जायन्ते। दशेन्द्रियाणि यथा—श्रोत्रत्वक्चक्षूरसनाघ्राणानि पञ्च ज्ञानेन्द्रियाणि,

---

१८। तदेवोपपादयति—त्वदिति। त्वदाभासेन त्वत्सम्बन्धेन उदित सृष्ट्युन्मुखत्वं प्राप्तमीदृश ज्ञान मायैवाव्याकृतपदेनोच्यते। महान् बुद्धितत्त्वम्, तत सूत्रमहङ्कार, तत सर्वात्मक सर्वकार्यात्मक लिङ्ग लिङ्गदेह । रा०।

[ ननु यदि माया जगत् सूते कुतस्तर्हि मम गार्हस्थ्यमुच्यते तत्राऽऽह—त्वदाभासेति। तवाभासेन चिच्छक्त्या उदितम् आ सम्यग् ज्ञानं यस्य एवम्भूतम्। तस्माद् महान् महत्तत्त्वमभूदितीर्यते श्रुत्येत्यर्थ । ततो महत सूत्रम्, क्रियाशक्तियुक्तं महत्तत्त्वमेव सूत्रमुच्यते। तत सूत्राल्लिङ्गं लिङ्गशरीरम्। ननु षोडशपदार्थैर्लिङ्गदेहस्य निष्पन्नत्वात् कथं सूत्रादेव लिङ्गं तत्राऽऽह—यत सर्वात्मकम्, अहमादिकार्याणां कारणत्वात् सर्वात्मकत्वं सूत्रस्य। यद्वा लिङ्गस्य विशेषण सर्वात्मकं स्थूलदेहस्थसमस्तसामग्रीयुक्तम्। यद्वा सर्वेषां चराचरदेहानामात्मा स्वार्थे क, स्वार्थिकस्य क्वचिल्लिङ्गाद्यतिक्रमात् क्लीबत्वम्। गो० ]

१९। सर्वात्मकत्वमाह—अहङ्कारश्च बुद्धिश्चेत्यादि। पञ्चेत्यस्य सूक्ष्मभूतानीति शेष.।

---

1 च 'स्थूल सूक्ष्मम्'।

स एव जीवसंज्ञश्च लोके भाति जगन्मयः ।
अवाच्या[1]नाद्यविद्यैव कारणोपाधिरुच्यते ॥ २० ॥
स्थूलं सूक्ष्मं कारणाख्यमुपाधित्रितयं चिते: ।
एतैर्विशिष्टो जीवः स्या[2]द्विमुक्तः परमेश्वरः ॥ २१ ॥

---

एतानि यथाक्रमं सत्यगुणोपेतेभ्य आकाशादिभ्य: पञ्चभूतेभ्यो जायन्ते । बुद्धिरहङ्कारश्च जायते, वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि, एतानि यथाक्रमं रजोगुणोपेतेभ्य आकाशादिभ्य: पञ्चभूतेभ्यो जायन्ते ।

२० । नरो० । समष्ट्यभिप्रायेण जगन्मय इत्युक्तम् । अवाच्या चासौ अनादिश्चाविद्या चेति सा तथा । अवाच्या वक्तुमशक्या, अनादिर्नित्या, अविद्या माया । कारणरूपोपाधि: कारणोपाधि: ।

२१ । नरो० । स्थूलं स्थूलशरीरम्, सूक्ष्मं सूक्ष्मशरीरं लिङ्गशरीरमिति यावत् । एतै: स्थूलसूक्ष्मकारणाख्योपाधिभि: । विमुक्त इत्यनेन एतैरित्यनुषञ्जनीयम् । पूर्वोक्तपरलोकयात्रानिर्वाहक-मोक्षपर्यन्तस्थायिलिङ्गशरीरमात्रावच्छिन्नचैतन्यभिन्नत्वादेतदुपाधित्रयाविशिष्टस्यास्य चैतन्यस्य न पौनरुक्त्यम् ।

---

प्राणेन्द्रियाणि—पञ्च प्राणा:, पञ्चेन्द्रियाणि, मनस्त्वहङ्कारेणैव संगृहीतम् । तत्राहङ्कारोऽह-मित्याकारो ज्ञानविशेष: । बुद्धिरध्यवसायात्मक महत्तत्त्वम् । कर्मेन्द्रियाणि भूतेष्वन्तर्भूतानि, तल्लिङ्गं लिङ्गदेह एव प्राज्ञैर्जन्ममृत्युसुखादिमदुच्यते इत्यर्थ: । रा० ।

२० । स एव लिङ्गदेहाभिमान्येवेत्यर्थ: । जगन्मयो हिरण्यगर्भ:, तत्समष्टिरूपत्वात्त-स्येत्यर्थ: । अवाच्या सत्त्वासत्त्वाभ्यामनिर्वाच्या, अनादिरुत्पत्तिरहिता, कारणोपाधि: संसार-कारणरूपकूटस्थस्य ब्रह्मण उपाधि: । रा० ।

२१ । स्थूल: स्थूलदेहस्तत्समष्ट्युपाधिर्विराट्, सूक्ष्मं लिङ्गदेहस्तत्समष्ट्युपाधिर्हिरण्यगर्भ:, कारणोपाधिरीश्वर:, एतैर्विशिष्टो जीव:, अन्तर्यामितया ईश्वरस्यापि तत्रान्तर्भावात् । उपाधि-त्रयविमुक्तो य: स परमेश्वरस्तुरीय इत्यर्थ: ।

विराड् हिरण्यगर्भश्च कारणञ्चेत्युपाधय: ।
ईशस्य यस्त्रिभिर्हीनं तुरीयं तत् पदं विदु: ॥

इति वार्तिकोक्तेः । रा० ।

[ एकस्यैव चैतन्यस्य त्रिप्रकारकत्वमाह—स्थूलमित्यादि । स्थूलं स्थूलशरीरम्, लिङ्गं लिङ्गशरीरम्, कारणाख्यं परं ब्रह्म परात्मा, इति चितेरुपाधित्रितयम्, यद्वा कारणाख्यम-

---

1. च 'नात्मवि-' । 2. क ख घ '-द्वियुक्त' ।

जाग्रत्स्वप्नसुषुप्त्याख्या संसृतिर्या प्रवर्तते ।
[1]तस्या विलक्षणः साक्षी चिन्मात्रस्त्वं रघूत्तम ॥ २२ ॥

२२ । नरो० । ननु भवतु जीवपरमेश्वरविभागस्तावज्जाग्रदाद्यवस्थावतो मम कथं जीवत्वं न स्यादिति चेत्तत्राऽऽह—जाग्रदित्यादि । इन्द्रियवृत्तिकालीनोऽर्थोपलम्भो जागरणम्, अन्तःकरणवासनानिमित्त इन्द्रियवृत्त्यभावकालीनोऽर्थोपलम्भः स्वप्नः । न च इन्द्रियवृत्त्यभावे कथमर्थोपलब्धिरिति वाच्यम्, स्वप्नदशायामविद्यावृत्तिस्वीकारात् । जाग्रत्स्वप्नभोगद्वयेन श्रान्तस्य जीवस्य तदुभयकारणकर्मक्षये अज्ञानशक्त्यवच्छिन्नस्य सवासनस्यान्तःकरणस्य अविद्यात्मना अवस्थाने सति विश्रामस्थानं सुषुप्त्यवस्थाकारणमात्रोपलम्भः सुषुप्तिः । अज्ञानशक्त्यवच्छिन्नस्येत्यनेन क्रियाशक्त्यवच्छिन्नस्य श्वासादिकारणस्यान्तःकरणस्य सत्त्वं सूचितम् । न च तदानीं ज्ञानशक्त्यवच्छिन्नस्यान्तःकरणस्याभावात् कथं सुषुप्तावस्थाकारणमात्रोपलब्धिः, कथं वा सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति सुप्तोत्थितस्य परामर्शः, कथं वा साक्षिचैतन्यानुभव इति वाच्यम्, सुषुप्त्यवस्थायां ज्ञानाकारसुखाकारसाक्षात्कारात्मकस्याविद्यावृत्तित्रयस्य स्वीकारात् । तस्या विलक्षण इत्यनेन त्रिविधाज्जीवात् श्रीरामस्य वैलक्षण्यं सूचितम् । स्वोपाध्यवान्तरभेदेन विश्वतैजसप्राज्ञभेदाज्जीवत्रैविध्यम् । तथा हि—अविद्यान्तःकरणस्थूलशरीरावच्छिन्नो जाग्रदवस्थाभिमानी विश्वः, स एव स्थूलशरीराभिमानरहित उपाधिद्वयोपहितः स्वप्नावस्थाभिमानी तैजसः, शरीरान्तःकरणोपाधिद्वयरहितोऽन्तःकरणसंस्कारावच्छिन्नाविद्यामात्रोपहितः सुषुप्त्यवस्थाभिमानी प्राज्ञः साक्षी द्रष्टा चिन्मात्रः केवलानुभवस्वरूपः ।

विद्या । त्रिष्वेव चैतन्यप्रतिबिम्बयोगात् एतैरुपाधिभिस्त्रितयैर्युक्तो जीवः । त्रिप्रकारता चितेश्चैतन्यस्य । गो० ]

२२ । तत्र स्थूलसूक्ष्मोपाधिभ्यां कारणोपाधेः साक्षिणो भेदकमाह—जाग्रदिति । इन्द्रियादिवृत्तिमती जाग्रदवस्था विश्वसाक्षिणी । इन्द्रियवृत्त्यभावकालिकी अन्तःकरणवासनानिमित्तार्थोपलम्भरूपतैजससाक्षिणी स्वप्नावस्था । प्रज्ञासाक्षिणी निद्रावृत्त्यतिरिक्तसर्ववृत्त्यभावरूपा सुषुप्त्यवस्था । एतत्त्रयात्मिकायाः संसृतेरविद्यात्मकत्वात्ततो विलक्षणश्चिन्मात्ररूपः साक्षी कारणोपाधिस्त्वमित्यर्थः । रा० ।

[ ननु तर्हि मायागृहिणीत्वाज्जीवोऽहम्, नेत्याह—जाग्रदित्यादि । जाग्रदादिसञ्ज्ञाया संसृतिरवस्था वर्तते, अर्थाज्जीवे, तस्याः संसृतेस्त्वं साक्षी द्रष्टा तुरीय इत्यर्थः । अतो विलक्षणो जीवाद् भिन्नः, न हि द्रष्टा दृश्यावस्थायुक्तो भवति, तत्रापि हेतुश्चिद्घनः, जीवस्तु स्वाविद्यया संवृतज्ञानः । गो० ]

1. क 'तथा' ।

त्वत्त एव जगज्जातं त्वयि सर्वं प्रतिष्ठितम् ।
त्वय्येव लीयते [1]कृत्स्नं तस्मात्त्वं सर्वकारणम् ॥ २३ ॥
रज्जावहिमिवाऽऽत्मानं [2]जीवं ज्ञात्वा भयं [3]वहेत् ।
[4]परात्माऽहमिति ज्ञात्वा [5]भयदुःखैर्विमुच्यते ॥ २४ ॥

२३। नरो०। नन्वेवमपि यस्माज्जगज्जायते जातं यस्मिंस्तिष्ठति यस्मिन् लीयते तस्यैव परमेश्वरत्वम्, मम कुत इत्यत आह—त्वत्त एव जगज्जातमित्यादि। परमेश्वरस्य जगदुपादानत्वे 'आत्मन आकाशः सम्भूतः' (तैत्ति० २।१।१) इत्यादिश्रुतिः। 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति' (तैत्ति० ३।१।१) इत्यादिश्रुतिश्च प्रमाणम्। परमेश्वरस्य जगत्प्रलयाधिकरणत्वे प्रमाणम्—

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते ॥
वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते ।
अव्यक्तं पुरुषे ब्रह्मन्निष्कले सम्प्रलीयते ॥

इति विष्णुपुराणवचनम्। लयलक्षणं यथा—स्वकारणे सूक्ष्मरूपेणावस्थानं लय इति। कस्यचित् लयस्य साक्षादधिकरणत्वम्, कस्यचित् लयस्य परम्परयाऽधिकरणत्वमिति नास्ति विरोधः। उपसंहरति—तस्मादिति। यद्वा अयमेव जीवकर्मप्रयुक्तो नानाविधशक्तिविशिष्टः स्वाधीनो मायासहकृतः सन् जगत् सृजतीति हृदि निधायाऽऽह—त्वत्त एव जगज्जातमिति। उपादाने उपादेयमवश्यमेव तिष्ठतीति हृदि निधायाऽऽह—त्वयि सर्वं प्रतिष्ठितमिति। महाप्रलये इमं विना किञ्चिदपि न स्थास्यतीत्यभिप्रेत्याऽऽह—त्वय्येव लीयते कृत्स्नमिति। इमं विना जगतो जन्मादिषु एकोऽपि न जायते इत्यभिप्रेत्याऽऽह—तस्मात्त्वं सर्वकारणमिति।

२४। नरो०। तर्हि जीवः कथं बिभेति इति चेत्तत्राऽऽह—रज्जावहिमिवेत्यादि। रज्जौ यथा सर्पं ज्ञात्वा जीवो भयं वहेत्, तथा आत्मानं ज्ञात्वा भयं वहेदित्यर्थः। तर्हि केनोपायेन

२३। जगज्जन्मादिकारणमपि त्वमेवेत्याह—त्वत्त इति। कृत्स्नमविद्यादिसहितम्। रा०।

इदानीं जगज्जन्मपालननाशकर्तृत्वेन सर्वकारणं ब्रह्मेति दर्शयितुं 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' इत्यादिश्रुत्यनुसारेण स्तौति—त्वत्त एवेत्यादि। सर्वं जङ्गमाजङ्गमं त्वत्त एव जातम्, त्वयि प्रतिष्ठितं प्रवृद्धञ्च, त्वय्येव कृत्स्नं समग्रं प्रविलीयते लीनं भवति। तस्मात् सर्वेषामुत्पत्त्यादीनां त्वमेव कारणम्।

२४। रज्जाविति। रज्जोरहित्वेन ज्ञानाद् यथा भयं तथात्मानं जीवत्वेन जानतो भयं

1 ङ 'सर्वं', छ 'विश्वं'। 2 ब-च-छ 'जीवो'। 3 क-ख-घ 'भवेत्'। 4 ग 'परमोऽहं-'। 5 ग घ 'भव-'।

चिन्मात्रज्यो[1]तिषा सर्वाः सर्व[2]देहेषु बुद्धयः ।
त्वया यस्मात् प्रकाश्यन्ते सर्व[3]स्यात्मा ततो भवान् ॥ २५ ॥
अज्ञानान्न्यस्यते सर्वं त्वयि रज्जौ भुजङ्गवत् ।
त्वज्ज्ञानाल्लीयते सर्वं[4] तस्माज् ज्ञानं सदाऽभ्यसेत् ॥ २६ ॥

---

भयशून्य· स्यादित्यपेक्षायामाह—परात्माऽहमिति ज्ञात्वेति । जीवस्य परेणाऽऽत्मनाऽभेदज्ञानमनर्थनिवर्तकमिति भावः ।

२५ । नरो० । परमात्मना सह शरीरिणो जीवस्यात्यन्तभेदात् कथं तस्य परमात्माऽहमिति ज्ञानमुत्पद्येत इति चेत्तत्राऽऽह—चिन्मात्रज्योतिषेति । चिन्मात्राभासेन बुद्धयोऽन्तःकरणानि प्रकाश्यन्ते भास्यन्ते , परमार्थतस्त्वया सह जीवस्य भेदो नास्तीति भाव· ।

२६ । नरो० । तर्हि सर्वमविद्याकार्यं मयि विद्येतेति चेत्तत्राऽऽह—अज्ञानादित्यादि । रज्जौ यथा सर्पज्ञानं भ्रमात्मकं तथा त्वयि सर्वाविद्याकार्यमज्ञानं भ्रमात्मकमिति भावः । तर्हि

---

ससाररूपम्, तस्या एव रज्जो रज्जुत्वेन ज्ञानाद् यथा भयनिवृत्तिस्तथा स्वस्य परमात्मत्वेन ज्ञानात्तन्निवृत्तिरित्यर्थ· । रा० ।

[ ननु जगत्सृष्ट्यादिकारित्वे मम विकारित्वमापादयसीति चेत्, न , हि संसारिणोऽपि जीवस्य तत्त्वज्ञाने निर्विकारित्वम्, तव पुन कुतो विकाराशङ्केत्याह—रज्जाविति । रज्जावहिमिव आत्मानं देहादिं मत्वा जीवो भयं ससारं वहेत् प्राप्नुयात् । यथा रज्जौ सर्पभ्रमवतो भयं न निवर्तते, एवं देहात्मभानिनो जीवस्य भयादिरपि । नाहं देह·, किन्तु परात्मा, देहादे· परो भिन्न आत्मा इत्यात्मानं मत्वा भयदु खैर्विमुच्यते । गो० ]

२५ । चिन्मात्रज्योतीरूपेण भवता सर्वदेहेषु वर्तमाना· सर्वा बुद्धयोऽन्त करणानि यस्मात् प्रकाश्यन्ते तत्तद्वृत्तिमन्ति सम्पाद्यन्ते, अतो भवान् सर्वस्यास्याऽऽत्माऽन्तर्यामीत्यर्थ· । रा०

[ ननु जीवोऽपि चिदंशत्वाज् ज्ञानमय एव, कथमेवं मिथ्याभिमानेन भयादिमावहति ? अन्तर्यामिणा त्वयैव बुद्धेस्तथा तथा प्रकाशनादित्याह—चिन्मात्रेति । सर्वेषु देहेषु जीवेषु सर्वा बुद्धयश्चिन्मात्रवपुषा चिदेकप्रकाशमूर्त्या यस्मात् प्रकाश्यन्ते, तासां जडत्वात् प्रकाशकत्वदधीनत्वम् , तत· सर्वस्य जीवसमूहस्य भवानात्मा अन्तर्यामी बुद्धिप्रकाशक इत्यर्थ , तत्र साम्येऽपि तेषां विशेषज्ञानाभावादज्ञानविजृम्भितया व्यवसायात्मकबुद्ध्या देहाभिमान एव भवति । नैतावता ईश्वरस्यापि वैषम्याशङ्का । बुद्धय इति बहुत्वम् अव्यवसायिबुद्धेर्बहुत्वात् । तदुक्तं गीतासु—

'बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ।' इति २।४१ । गो० ]

२६ । अज्ञानात् त्वत्स्वरूपाज्ञानात् त्वयि इदं सर्वं जगद् न्यस्यते आरोप्यते, जगद्रूपेण

---

1 ङ '-तिष' । 2 छ -देवेषु ह्यसने' । 3 च '-स्यान्तर्गतो' । 4 ङ '-र्वमस्मा-' ।

त्वत्पादभक्तियुक्तानां [1]ज्ञानं भवति विक्रमात् ।
तस्मात्त्वद्भक्तियुक्ता ये मुक्तिभाजस्त एव हि ॥ २७ ॥

---

केनोपायेनाज्ञानादिकं निवर्तेत इत्यपेक्षायामाह—त्वज्ज्ञानादिति । त्वत्साक्षात्कारादित्यर्थः । लीयते निवर्तते । उपसंहरति—तस्मादिति । ज्ञायतेऽनेनेति ज्ञानं श्रवणादिकम्, तदत्र साक्षात्कारजनकमभ्यसेत् पुनः पुनः कुर्यात् । यद्वा, ज्ञानं प्रत्यक्षम् अभ्यसेत् पुनः पुनर्हृत्पद्मे स्थिरीकुर्यात् ।

२७ । नरो० । ननु दुर्लभं मज्ज्ञानं जीवानां कथं भवेदिति चेत्तत्राऽऽह—त्वत्पादभक्तियुक्तानामित्यादि । विक्रमात् प्रभावात् । त्वज्ज्ञानं प्रति त्वत्पादभक्तिरेव कारणमिति भावः । उपसंहरति—तस्मादिति ।

---

त्वं गृह्यसे इत्यर्थः । यथा च रज्जुतत्त्वाज्ञानाद् भासमानस्य भुजङ्गस्य रज्जुज्ञानाल्लयः, एवं त्वत्स्वरूपज्ञानाज्जगतो लयः । अतस्त्वज्ज्ञानं सदाऽभ्यसेत्,

तच्चिन्तनं तत्कथनमन्योऽन्यं तत्प्रबोधनम् ।
एकान्ते तत्परत्वञ्च तदभ्यासं विदुर्बुधाः ॥

इत्युक्तमभ्यासं कुर्यात् । रा० ।

[ननु देहादेरवस्तुत्वात् कथं प्रतीतिर्भवतीत्याह—अज्ञानादित्यादि । त्वय्यज्ञानात् त्वद्विषयकज्ञानाभावात् सर्वं चराचरात्मकं शरीरादि त्वयि त्वदधिकरणे दृश्यते, तत्र मिथ्याभूतस्य भाने दृष्टान्तः—रज्जौ भुजङ्गवत्, यथा रज्जुसत्तया मृषाऽप्यहिर्भाति, तथा परमार्थसत्यस्य तव सत्तया मिथ्याभूतमपि सर्वं सत्यवद्बुद्धौ प्रतीयते इत्यर्थः । लयावधिमाह—त्वज्ज्ञानात् तव स्वरूपज्ञानात् लीयते नश्यति सर्वं निःशेषं लयं याति प्रतियोगित्वात् । 'ज्ञानेन भूयोऽपि च तत् प्रलीयते' इति श्रीभागवतोक्तेः । यतो ज्ञानेनैव सर्वं भ्रमादिर्लीयते तस्माद् योगादिसाधनं परित्यज्य सदा ज्ञानमेवाभ्यसेत् । ज्ञानं ज्ञानोपायं परिशीलयेत् । गो० ]

२७ । त्वत्पादभक्तियुक्तानाम्

'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ भागवतम् ७।५।१८ ।

इत्येवं नवविधभक्तियुक्तानां क्रमाद् वैराग्यश्रवणादिक्रमेण विज्ञानमपरोक्षसाक्षात्कारो भवति, अतस्त एव मुक्तिभाज इत्यर्थः । रा० ।

[ तत्र ज्ञानं हि द्विधा जायते, सच्छास्त्रार्थावबोधयमनियमादिभिरेकान्तभक्त्या च, तत्रापि योगात् सुदुष्कराद् विघ्नबाहुल्ययुक्ताच्च भक्तिः सुखसाध्या निर्विघ्ना चेति भक्तियुक्तान्

---

1 क ख ग घ ङ च छ 'विज्ञानं भवति क्रमात्'।

अहं त्वद्भक्तभक्तानां तद्भक्तानाञ्च किङ्करः ।
[1]अतो मामनुगृह्णीष्व मोहयस्व न मां प्रभो ॥ २८ ॥
त्वन्नाभिकमलोत्पन्नो ब्रह्मा मे जनकः प्रभो ।
अतस्तवाहं पौत्रोऽस्मि भक्तं मां पाहि राघव ॥ २९ ॥
इत्युक्त्वा बहुशो नत्वा [2]आनन्दाश्रुपरिप्लुतः ।
उवाच वचनं [3]रामं ब्रह्मणा [4]चोदितोऽस्म्यहम् ॥ ३० ॥

---

२८ । नरो० । नारदोऽतिदीनवत् प्रार्थयते—अहमित्यादिना । अत परम्परया किङ्करत्वात् ।

२९ । नरो० । न केवल मम दासत्वम्, किन्तु सम्बन्धोऽप्यस्तीति सूचयन्नाह—त्वन्नाभिकमलोत्पन्न इत्यादि । त्वन्नाभिकमलोत्पन्नस्तव नाभिपद्माज्जात इत्यर्थः । अतस्त्वत्पुत्रजन्यत्वात् । भक्तिं विना पुत्रमपि मोहयामीति चेत्तत्राऽऽह—भक्तमिति ।

३० । नरो० । आनन्दाश्रुपरिप्लुतो हर्षाश्रुस्नात इत्यर्थ । चोदित प्रेरित ।

---

स्तौति—त्वत्पादेत्यादि । विज्ञानमपरोक्षज्ञानम् , क्रमादनुष्ठानानुरोधात् । मुक्तिभाजस्त एव हीति निश्चितार्थशब्दद्वयेन विघ्नादेरभावादतिनि सन्धिग्धोऽय पन्था इत्यर्थ. । तदुक्तं श्रीभागवते—'धावन्निमील्य वा नेत्रे स्खलन्नेव पतेदिह' इति । गो० ]

२८ । [ स्तुत्वाऽभिमुखीकृत्य स्ववाञ्छितं प्रार्थयते—अहमित्यादिना । त्वद्भक्तानां ये भक्तास्तेषामपि किङ्करो दासः । अनुग्रहमेवाऽऽह—मां न मोहयस्वेति । गो० ]

२९ । [ अन्तरङ्गसम्बन्धं कथयति—त्वन्नाभीत्यादि । गो० ]

त्वन्नाभिकमलोत्पन्न इति । योगनिद्रां भजतस्तव विष्णोर्नाभिकमलाज्जातो ब्रह्मा । तथा च भागवते—

'यस्याम्भसि शयानस्य योगनिद्रां वितन्वत ।
नाभिह्रदाम्बुजादासीद् ब्रह्मा विश्वसृजां पतिः ॥' १।३।२ । इति

स ब्रह्मा एव मे जनक. । ब्रह्मणो नारदजनकत्वमपि तत्रैव—

'कल्पान्त इदमादाय शयानेऽम्भस्युदन्वत. ।
शिशयिषोरनुप्राणं विविशेऽन्तरहं विभो ॥
सहस्रयुगपर्यन्त उत्थायेदं सिसृक्षत ।
मरीचिमिश्रा ऋषय प्राणेभ्योऽहञ्च जज्ञिरे ॥ भागवतम् । १।६।३०-३१ ।

इति । 'विभोर्ब्रह्मण । प्राणेभ्य इन्द्रियेभ्य.' इति तत्रत्या स्वामिव्याख्या ।

---

1 ग 'ततो' । 2 क-ख-घ-छ 'स्वा-', च 'भक्त्या साश्रुपरिप्लुत' । 3 ख-घ 'राम' । 4 क ख-घ 'नोदितो-' ।

रावणस्य वधार्थाय जातोऽसि रघु[1]सत्तम ।
इदानीं राज्यरक्षार्थं पिता त्वामभिषेक्ष्यति ॥ ३१ ॥
यदि राज्याभि[2]संसक्तो रावण न हनिष्यसि ।
प्रतिज्ञा [3]ते कृता राम भूभारहरणाय वै ॥ ३२ ॥
[4]तां सत्यां कुरु राजेन्द्र सत्यसन्धस्त्वमेव हि ।
श्रुत्वैतद् गदितं रामो [5]नारदं प्राह सस्मितम् ॥ ३३ ॥
शृणु नारद मे किञ्चिद् विद्यतेऽविदितं क्वचित् ।
प्रतिज्ञातञ्च यत् [6]पूर्वं करिष्ये तन्न संशयः ॥ ३४ ॥
किन्तु [7]कालानुरोधेन तत्तत्प्रारब्धसंक्षयात् ।
हरिष्ये सर्वभूभारं क्रमे[8]णासुरमण्डलम् ॥ ३५ ॥

---

३२ । नरो० । ते त्वया ।

३३ । नरो० । राजेन्द्र राजश्रेष्ठ । अङ्गीकृताकरणे मम का हानिरिति चेत्तत्राऽऽह—सत्यसन्ध इति । सत्यसन्धः सत्यप्रतिज्ञः, अङ्गीकृतनिर्वाहक इति यावत् । अत्रैवकारोऽन्ययोगव्यवच्छेदार्थः ।

३५ । नरो० । ततस्तत्प्रारब्धसंक्षयात् तत्तत्प्राक्तनकर्मनाशात् अर्थादसुरमण्डलस्य, बोढुमशक्यः पदार्थो भारपदवाच्यः । असुरमण्डलं सुरविरोधिसमूहम् ।

---

३२ । प्रतिज्ञा ते कृतेति ।

'उत्पत्स्यते तया सार्द्धं सर्वं सम्पादयाम्यहम्' १।२।२६ ।

इत्युक्तलक्षणा प्रतिज्ञा कृतेति भावः ।

३५ । [ किन्त्विवति । तत् तस्मात् । तत्तत्प्रारब्धसंक्षयादिति तस्य प्रारब्धस्य प्रारब्धकर्मणः संक्षयात् सम्यक् क्षयं प्राप्य, प्रारब्धसंक्षयादित्यनन्तरं वा, हेतौ वा पञ्चमी । गो० ]

कालानुरोधेन कालक्षयक्रमेण प्रारब्धस्य पूर्वजन्मकृतकर्मणः संक्षयाद् भोगादिति भावः । 'प्रारब्धकर्मणां भोगादेव क्षयः' इत्युक्तेः । योग्ये समये समुपस्थिते सतीति भावः । क्रमेण असुरमण्डलं सुरविरोधिसमूहं रावणकुलमित्यर्थः । हत्वेति शेषः ।

---

1 छ '-नन्दन' । 2. ग-ङ-छ 'ससक्तो' । 3. च 'या' । 4 क ख-ग घ ङ-छ 'तत् सत्य' । 5 ङ च छ 'मुनिना' । 6 ङ 'सत्य' । 7 ङ 'कायानु' । 8. छ 'ए रणमण्डले' ।

रावणस्य विनाशार्थं श्वो गन्ता दण्ड[1]काननम् ।
चतुर्दश समास्तत्र ह्युषित्वा मुनिवेशधृक् ।
सीतामिषेण तं दुष्टं सकुलं नाशयाम्यहम् ॥ ३६ ॥
एवं रामे प्रतिज्ञाते नारदः प्रमुमोद ह ।
प्रदक्षिणत्रयं कृत्वा दण्डवत् प्रणिपत्य तम् ।
अनुज्ञातश्च रामेण ययौ देव[2]गतिं मुनिः ॥ ३७ ॥
संवादं पठति शृणोति संस्मरेद्वा यो नित्यं मुनिवररामयोः स भक्त्या ।
सम्प्राप्नोत्यमरसुदुर्लभं विमोक्षं [3]कैवल्यं विरतिपुरःसरं क्रमेण ॥ ३८ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अयोध्याकाण्डे
प्रथमोऽध्यायः ॥ १ ॥

---

३६ । नरो० । सीतामिषेण सीताव्याजेन ।

३७ । नरो० । देवगतिं देवलोकम् ।

३८ । नरो० । कैवल्यं कैवल्याख्यातम् । विरतिपुरःसरम् इहामुत्र फलभोगविराग-पुरःसरम् ।

[ अयोध्याकाण्डे प्रथमाध्यायव्याख्या समाप्ता ॥ १ ॥ ]

---

३६ । समाः वत्सरान् वाप्येति शेषः । तत्र दण्डकारण्ये । सीतामिषेण जानकी-हरणव्याजेन । तं रावणम् ।

३८ । कैवल्यं विमोक्षं ब्रह्मैकत्वलक्षणं मोक्षम् । विरतिर्वैराग्यम् । रा० ।

---

1 च '॰के वने' । 2 च '॰गतिर्मु॰' । 3 च 'वैराग्य' ।

# द्वितीयोऽध्यायः

---*---

अथ राजा दशरथः कदाचिद्रहसि स्थित[1]।
वशिष्ठं स्वकुलाचार्यमाहूयेदमभाषत[1] ॥ १ ॥
भगवन् राममखिला' प्रशसन्ति मुहुर्मुहुः।
[2]पौराश्च नैगमा वृद्धा मन्त्रिणश्च विशेषत ॥ २ ॥

---

१। नरो०। अथेति। अथ नारदनिवेदनानन्तरम्। रहसि निर्जने।

२। नरो०। पौरा· पुरस्थितजना·। नैगमा· क्रयविक्रयिकाः। यद्वा पौरा· स्वगृहस्थिता दासादय·। वृद्धा· पण्डिता।

---

१।     द्वितीये राज्ञि रामस्याभिषेक कर्तुमुद्यते।
मन्थरामोहिता राज्ञी विघ्नं चक्र इतीर्यते ॥

अथ राजेति। रहसि एकान्ते। रा०।

वशिष्ठमिति। यद्यपि—

यदा राजा जरायुक्तो रोगार्त्तो निस्पृहोऽपि च।
आसन्नमृत्युं विज्ञाय कुलधर्मं विचारयन् ॥
तदा पौरजनान् सर्वानाहूय मन्त्रयेच्च तैः ॥ राजकृतराज्यदानम् ७९ पृ०।

इत्यादि राजनीतिरत्नाकरधृतवचनेन पौरजनै· सह मन्त्रणमुपदिष्टम्, तथाऽप्यत्र पौराणां सर्वेषामेव प्रतिनिधिभूतेनैकेन वशिष्ठेन सहैवेदं मन्त्रणं न दोषाय तेनैव तत्तदर्थसिद्धे·। अत्र वशिष्ठसकाशे दशरथनिवेदनम्, वाल्मीकीये दशरथसकाशे गुरुमन्त्रिपौरजनानां निवेदनम्। तथा च—

तं तस्य भाव भावज्ञा विज्ञाय सुधियो जना।
गुरवो मन्त्रिणश्चैव पौरजानपदास्तथा ॥
समेत्य मन्त्रयामासुर्मन्त्रयित्वा च निश्चयम्।
ऊचु· समन्तत· सर्वे वृद्धं दशरथं नृपम् ॥ इति। २।१।२३-२४।

२। नैगमा इति। निगमो वेद·, तस्यार्थं विदन्तीति नैगमा·। यद्वा निगमे वणिक्पथे भवा नैगमाः। 'निगमे वाणिजे पुर्यां कटे वेदे वणिक्पथे' इत्युभयत्रैव विश्व·। प्रशंसन्तीत्यनेन तस्मिन्ननुरागबाहुल्यात् तेऽपि राममेव राजानं काङ्क्षन्तीति ध्वनितम्। एतच्च स्फुटं तेषां तेषां मुखेन वाल्मीकीये अयोध्याकाण्डस्य प्रथमे सर्गे।

---

1. गं पुस्तके अत पर 'श्रीराजोवाच' इत्यधिकम। 2 च 'पौरा सर्वे'।

ततः सर्वगुणो[1]पेतं रामं राजीवलोचनम् ।
ज्येष्ठं राज्येऽभिषेक्ष्यामि वृद्धोऽहं मुनिपुङ्गव ॥ ३ ॥
भरतो मातुलं द्रष्टुं गतः शत्रुघ्नसङ्गतः ।
अभिषेक्ष्ये श्व एवाऽऽशु भवा[2]ंस्तत्रानुमोदताम् ॥ ४ ॥
सम्भाराः [3]सम्भ्रियन्ताञ्च [4]गच्छ मन्त्रय राघवम् ।

३ । नरो० । मुनिपुङ्गव मुनिश्रेष्ठ ।

४ । नरो० । केकय्या दत्तं वरद्वयं मयि न्यस्तं विद्यते, आगतेन सता भरतेन प्रार्थिता सा यदि तदभिषेकरूपं वरं याचेत, तदा मम मनोरथः पूर्णो न भविष्यतीत्याशङ्क्याऽऽह—भरत इत्यादि ।

३ । ततो यतस्ते प्रशंसन्ति अतस्तादृशप्रशंसाभाजनायैव राज्यप्रदानमुचितमिति कृत्वा ।

विधाय वृत्तिं बहूनां राज्यं ज्येष्ठाय दापयेत् । इति
राजनीतिरत्नाकरधृतराजनीतिवचनात् ( राजनीतिर० ७९ पृ० )
सहाङ्गानि च राज्यानि ज्येष्ठपुत्राय दापयेत् ।
शाश्वतोऽयं स्मृतो धर्मः पार्थिवानां नरर्षभ ।
न यवीयान् स्थिते ज्येष्ठे राजा भवितुमर्हति ॥

इत्यादिराजनीतिरत्नाकरधृतव्यासवचनाच्च (राजनीतिर० ७९ पृ० ) ज्येष्ठाय एव राज्यप्रदान-प्रसक्तिरित्याह—ज्येष्ठमिति ।

वाल्मीकीयेऽपि—

तस्माज्ज्येष्ठेषु पुत्रेषु राज्यतन्त्राणि पार्थिवाः ।
आसजन्त्यनवद्याङ्गि गुणवत्स्वितरेषु वा ॥
तेऽपि ज्येष्ठाः स्वपुत्रेषु ज्येष्ठेष्वेव न संशयः ।
आसजन्त्यखिलं राज्यं न भ्रातृषु कथञ्चन ॥ इति । २।७।१९-२० ।

वृद्धोऽहमिति,

अथ राजा जरायुक्तो रोगार्त्तो निस्पृहोऽपि च ।
इत्युक्तेः । ( राजनीतिरत्ना० ७९ पृ० )

४ । अनेन कैकेयीप्रतिबन्धशङ्कानिरासः । भरतागमनपर्यन्तमेनमभिषेक्ष्ये तदागमनोत्तरमुभयोर्विभागं करिष्यामीत्येवं तां समाधास्य इति भावः । रा० ।

शीघ्रसम्पादनाभिलाषित्वेन श्व एवाऽऽशु इत्यभिहितम् । कालविलम्बे भरतो नगरं प्रविश्य विघ्नं वा कुर्यादित्याशयः ।

1 क छ '-पेतरा-' । 2 ग-च 'स्तत्रानु-', '-स्तदन्वमो-' । 3 च छ 'सत्क्रियन्ताञ्च' । 4 च-छ 'गच्छाऽऽस' ।

[1]उच्छ्रीयन्तां पताकाश्च नानावर्णाः समन्ततः ।
तोरणानि विचित्राणि स्वर्णमुक्तामयानि वै ॥ ५ ॥
आहूय मन्त्रिणं राजा सुमन्त्रं मन्त्रिसत्तमम् ।
आज्ञापयति यद् यत् त्वां मुनिस्तत्तत् समानय ।
यौवराज्येऽभिषेक्ष्यामि श्वो भूते रघुनन्दनम् ॥ ६ ॥
तथेति हर्षात् स मुनिं किं करोमीत्यभाषत ।
तमुवाच महातेजा वशिष्ठो ज्ञानिनां वरः ॥ ७ ॥
श्वः प्रभाते मध्यकक्षे कन्यकाः स्वर्णभूषिताः ।
तिष्ठन्तु षोडश [2]गजः स्वर्ण[3]रत्नादिभू[4]षितः ॥ ८ ॥
चतु[5]र्दन्तः समायातु ऐरावतकुलोद्भवः ।
नानातीर्थोदकैः पूर्णाः स्वर्णकुम्भाः सहस्रशः ॥ ९ ॥

---

५ । नरो० । सम्भारा अभिषेकोचितसामग्र्यः । मन्त्रय कर्तव्यं बोधय । समन्ततः सर्वतः । स्वर्णमुक्तामयानि स्वर्णमुक्ताप्रचुराणि प्रचुरस्वर्णमुक्तानि वा ।

८ । नरो० । मध्यकक्षे मध्यद्वारे ।

९ । नरो० । चत्वारो दन्ताः प्रधानदन्ता यस्य स तथा ।

---

अत्र राजाज्ञया वशिष्ठस्य रामसकाशगमनम्, तेनैव राज्याभिषेकवृत्तान्तविनिवेदनम्, वाल्मीकीये राजाज्ञया सुमन्त्रेण राजसविधे रामस्यानयनम्, राज्ञैव तत्सकाशेऽभिषेकवृत्तान्तवर्णनम् । ( २।२।८-२६ ) ।

६ । राजा दशरथः सुमन्त्रम् आहूय मुनिर्यद् यद् वस्तु आनेतुं त्वाम् आज्ञापयति तत् तत् समानय, श्वो भूते रघुनन्दनं यौवराज्ये अभिषेक्ष्यामि इत्युवाचेति शेषः ।

७ । स सुमन्त्रस्तथा इति राजवाक्यमङ्गीकृत्य किं करोमि किं किं वस्त्विहाऽऽनेतव्यम्, किं किं कार्यं वाऽनुष्ठेयमिति मुनिं वशिष्ठम् अभाषत परिपप्रच्छेत्यर्थः ।

८ । षोडशेति कन्यकान्वयि । वाल्मीकिनापि कन्यकानामष्टसंख्या द्विरुक्ता ।

अष्टौ कन्याश्च रुचिरा मत्तश्च वरवारणः ।'
अष्टौ कन्याश्च माङ्गल्या वराभरणभूषिताः ॥

गज इत्युत्तरान्वयि । रा० ।

९ । स्वर्णकुम्भा इति । वाल्मीकीयेऽपि—

---

1. ग ड च-क 'उत्थाप्यन्ताः' । 2 ड-च 'गजाः' । 3 ग 'रत्नविभू-' । 4. ड-च '-षिताः' । 5 च '-र्दन्ताः समायान्तु ऐरावतकुलोद्भवाः' ।

स्थाप्यन्तां [1]नव [2]वैयाघ्रत्रीणि चर्माणि [3]चाऽऽनय ।
श्वेतच्छत्रं रत्नदण्डं मुक्तामणिविराजितम् ॥ १० ॥
दिव्यमाल्यानि वस्त्राणि दिव्यान्याभरणानि च ।
मुनयः [4]सत्कृतास्तत्र तिष्ठन्तु कुशपाणयः ॥ ११ ॥
नर्त्तक्यो वारमुख्याश्च गायका [5]वैदिकास्तथा ।
नानावादित्रकुशला वादयन्तु नृपाङ्गणे ॥ १२ ॥
हस्त्यश्वरथपादाता बहिस्तिष्ठन्तु सायुधाः ।
नगरे यानि तिष्ठन्ति देवतायतनानि च ।
तेषु प्रवर्ततां पूजा नानाबलिभिरावृता ॥ १३ ॥

---

१० । नरो० । वैयाघ्राणि च तानि त्रीणि चेति तानि तथा । रत्नखचितं दण्डं यस्य तत्तथा ।

११ । नरो० । दिव्यमाल्यानि विलक्षणमाल्यानि ।

१२ । नरो० । वारमुख्या वेश्या । वैदिका वेदपाठकाः । वाद्यचतुष्टयं वादित्रम् ।

---

सौवर्णान् वानरेन्द्राणां चतुर्णाञ्चतुरो घटान् ।
ददौ क्षिप्रं स सुग्रीवः सर्वाभरणभूषितान् ॥ ७।१३०।४९ ।
नदीशतानां पञ्चानां जलं कुम्भैरुपाहरन् । इति ७।१३३।५३ ।

तत्प्रमाणञ्च राजनीतिरत्नाकरे—

सौवर्णं स्थापयेत्तत्र कलसं दृढमग्रत ।
पूरयेत् सर्वतीर्थाद्भिर्गाङ्गेन पयसाऽथवा ॥ इति । (राजनीति० ८३ पृ०)

१० । व्याघ्रचर्माणि नव वा त्रीणि वा भद्रपीठास्तरणार्थमित्यर्थः । रा० ।

वैयाघ्रचर्माणि अभिषेक्ष्यमाणराजोपवेशनार्थम् । तथा च—

. .. सभामध्ये व्याघ्रचर्मोपरि स्थितम् ।
सुहृद्विप्रवणिग्वीथिमन्त्रिसम्बन्धिसन्निधौ ।
अभिषिञ्चेच्छान्तिमन्त्रैः पल्लवानीततज्जलैः ॥ (राजनीतिरत्नाकर० ८३पृ०)

१२ । वारमुख्याः वारं सङ्केतदिनमेव मुख्यं भर्त्तृनियमे यासां ता वेश्या इत्यर्थः । रा० ।

१३ । नानाबलिभिः पूजोपकरणैः । रा० ।

'बलिः पूजोपहारः स्या'दिति कोषः ।

---

1 क 'तत्र' । 2 क-ख-च-छ 'वै व्याघ्रचर्माणि त्रीणि' । 3 च 'चानघ' । 4. ग 'सत्कृता-' ।
5. क-ख-घ 'वेणुका-', ग-च-छ 'वादका-' ।

राजानः शीघ्रमायान्तु नानोपायनपाणयः ॥ १४ ॥
इत्यादिश्य मुनिः श्रीमान् सुमन्त्रं [1]नृपमन्त्रिणम् ।
स्वयं जगाम भवनं राघवस्याति[2]शोभनम् ॥ १५ ॥
रथमारुह्य भगवान् वशिष्ठो मुनिसत्तमः ।
त्रीणि कक्षाण्यतिक्रम्य रथात् क्षितिमवातरत् ॥ १६ ॥
अन्तः प्रविश्य [3]भवनं [4]स्वाचार्यत्वादवारितः ।
गुरुमागतमाज्ञाय रामस्तूर्णं कृताञ्जलिः ॥ १७ ॥
प्रत्युद्गम्य नमस्कृत्य दण्डवद् भक्तिसंयुतः ।
स्वर्ण[5]पात्रेण पानीयमानिना[6]याऽऽशु जानकी ॥ १८ ॥

---

१४। नरो०। नाना उपायनानि उपढौकनानि पाणौ येषाम्, ते तथा।

१६। नरो०। मुनिसत्तमो मुनिश्रेष्ठः। कक्षाणि द्वाराणि। अवातरद् अवारोहत्।

१७। नरो०। भवनान्तः प्रविश्याऽऽचार्यत्वादवारित इत्यन्वयः। यद्वा स्थित इत्यध्याहार्यम्। भवनं गृहम्। अन्तर्मध्यम्। तूर्णं शीघ्रम्। कृताञ्जलिः पुटीकृतहस्तः।

१८। नरो०। प्रत्युद्गम्य आदरादुत्थाय। पानीयं जलम्।

---

१६। त्रिणीति। अत्र वाल्मीकेर्भङ्गीवैशिष्ट्यम्—

'स रामभवनं प्राप्य पाण्डुराभ्रचयोपमम्।
तिस्रः कक्ष्या रथेनैव विवेश मुनिसत्तमः॥
तमागतमृषिं रामस्त्वरमाणः ससंभ्रमः।
मानयिष्यन् स मानार्हं निश्चक्राम निवेशनात्॥
अभ्येत्य त्वरमाणश्च रथाभ्यासं मनीषिणः।
ततोऽवतारयामास परिगृह्य रथात् स्वयम्॥ इति २।५।५-७।

१७। आचार्यत्वादतिवृद्धत्वाच्च द्वारपालैरवारितो भवनं प्रविश्यान्तोऽन्तःपुरं प्रविष्ट इति शेषः। रा०।

१८। पानीयमानिनाय, अर्घ्यपाद्यार्थमिति भावः। रा०।

---

1. क 'मन्त्रिसत्तमम्'। 2 ङ-च '-भास्वरम्', क 'भासुरम्'। 3 ङ 'भगवान्'। 4 ग-ङ-क 'आचा-'। 5 च '-पात्रे च'। 6 च '-याय'।

रत्नासने समावेश्य पादौ प्रक्षाल्य भक्तितः ।
[1]तदपः शिरसा धृत्वा सीतया सह राघवः ।
धन्योऽस्मीत्य[2]ब्रवीद्रामस्तव पादाम्बुधारणात् ॥ १९ ॥
श्रीरामेणैवमुक्तस्तु प्रहसन् मुनिरब्रवीत् ।
त्वत्पादसलिल धृत्वा धन्योऽभूद् गिरिजापतिः ॥ २० ॥
ब्रह्माऽपि मत्पिता [3]ते हि पादतीर्थहताशुभः ।
इदानीं भाषसे यत्त्वं लोकानामुपदेशकृत् ॥ २१ ॥
जानामि त्वां परात्मान लक्ष्म्या सञ्जातमीश्वरम् ।
देवकार्या[4]र्थसिद्ध्यर्थं भक्तानां भक्तिसिद्धये ॥ २२ ॥

---

१९। नरो०। रत्नासने रत्नखचितासने समावेश्य उपवेश्य ।

२०। नरो०। गिरिजापति शिव ।

२१। नरो०। पादतीर्थेन पादजलेन हतानि अशुभानि पापानि यस्य स तथा। यद् यस्मात् त्वं लोकानामुपदेशकृत् अत इदानीं धन्योऽस्मीति भाषसे इत्यन्वय ।

२२। नरो०। यद्यहं परमात्मा तदा मम जन्म किमर्थमित्यपेक्षायामाह—देवकार्यार्थसिद्ध्यर्थमिति। देवानां कार्या कर्तुं योग्या येऽर्था प्रयोजनानि तन्निष्पत्त्यर्थमित्यर्थः। न केवलं देवकार्यसिद्ध्यर्थं तव जन्म इति सूचयन्नाह—भक्तानामिति। तव मूर्त्तिं विना भक्तानामर्चनध्यानचरणारविन्दस्तवादिरूपा भक्तिर्न सिध्यतीति भाव ।

---

२१। [ इदानीमित्यादि। लोकानामुपदेशकृदिति लोकोपदेशार्थम्। यदुक्तं गीतासु—

यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जन ।
स यत् प्रमाण कुरुते लोकस्तदनुवर्त्तते ॥ ३। २१ इति। गो० ]

ब्रह्माऽपि मत्पितेति। वशिष्ठादीनां ब्रह्मजनकत्वमाह श्रीमद्भागवते तृतीयस्कन्धे द्वादशाध्याये—

'अथाभिध्यायत सर्गं दश पुत्रा प्रजज्ञिरे ।
भगवच्छक्तियुक्तस्य लोकसन्तानहेतव· ॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्य पुलह· क्रतुः ।
भृगुर्वशिष्ठो दक्षश्च दशमस्तत्र नारद ॥
उत्सङ्गान्नारदो यज्ञे दक्षोऽङ्गुष्ठात् स्वयम्भुव ।
प्राणाद् वशिष्ठः सञ्जातो भृगुस्त्वचि करात् क्रतु· ॥ २१—२३ इति ।

२२। भक्तिसिद्धये इत्यनेन सर्वेतरस्वरूपापेक्षया रामस्वरूपभक्तिरेव सर्वेष्टसाधनमिति सूचितम्। रा० ।

---

1. क-ख-ड 'तदाप'। 2. '-ब्रुवद् ब्रह्म स्तव। 3 ङ 'यात'। 4 च 'भिसिद्ध्य-'।

रावणस्य वधार्थाय जातं जानामि राघव ।
तथाऽपि देवकार्यार्थं गुह्यं नोद्घाटयाम्यहम् ॥ २३ ॥
यथा त्वं मायया सर्वं करोषि रघुनन्दन ।
तथैवानुविधास्येऽहं शिष्यस्त्वं गुरु[1]रित्यहम् ॥ २४ ॥
[2]गुरुर्गुरूणां त्वं देव पितॄणां त्वं पितामहः ।
अन्तर्यामी जगद्[3]यन्त्रवाहकस्त्वमगोचर ॥ २५ ॥

---

२३-२४ । नरो० । पृथिव्यां तव जन्मनो मुख्यप्रयोजनं रावणवध इति सूचयन्नाह—रावणस्य वधार्थायेति । धृतमानुषरूपस्त्वं यदि न स्यास्तदा रावणश्चिरजीवी स्यादिति भाव. । तथाऽपि ज्ञाततत्त्वत्वेऽपि । उद्घाटयामि प्रकटयामि । तदेवोपपादयति—यथेत्यादिना । अनुविधानप्रकारमाह—शिष्यस्त्व गुरुरित्यहमिति ।

२५ । नरो० । पित्रादीनां गुरुस्त्वं कथं मम गुरुर्न भविष्यसीति चेत्तत्राऽऽह—गुरुर्गुरूणामिति । उपदेष्टॄणामप्युपदेष्टेत्यर्थ. । बहुवचनमत्राशेषत्वसूचनार्थम् । दशरथपुत्रं मां कथमेवं ब्रवीषीति चेत्तत्राऽऽह—पितॄणां त्वमिति । पितॄणां दक्षादीनाम् । ननु सर्वोपदेशकत्व तावदन्तर्यामिण. पुरुषस्य, पितॄणां पितामहत्वमपि जगज्जनकस्य तस्यैव, दशरथपुत्रस्य मम तत् कुत इत्यत आह—अन्तर्यामीत्यादि । अन्तर्यामी सर्वान्त'स्थायी । जगद्यन्त्रवाहक इति जगदेव यन्त्र मायया तद्भ्रामक इत्यर्थ. । अथ च अन्योऽपि बलीवर्दद्वारा यन्त्र भ्रमयति । यद्यहमन्तर्यामी तदा सर्वे मां ज्ञातुमीश्वरा इति चेत्तत्राऽऽह—अगोचर इति, मनसोऽगोचर इत्यर्थ. ।

---

२३ । [ तथाऽपीति । गुह्यञ्चेद् घटयाम्यहमिति । यद्येतद् गुह्यं तथाऽप्यहं घटयामि अभिषेकादिचेष्टां कारयामि । यद्वा एतद् गुह्यमिति कृत्वा घटयामि शिष्यमिव त्वां चेष्टयामि । गो० ]

२४ । त्वं माययेति । माययाच्छादितस्वस्वरूपो यथा व्यवहरसि तथैव त्वयि शिष्यत्वेन गुरुर्भूत्वाऽहं व्यवहरिष्यामीत्यर्थ' । रा० ।

२५ । गुरूणामस्मद्गुरूणां ब्रह्मादीनाम् । तत्रैव हेतुमाह—अन्तर्यामीति । अन्त स्थित्वा सर्वनियामक., अगोचरो वाङ्मनसोरप्यविषय. । स्वाधीनसम्भवत्वं मायाधिष्ठातृत्वात् । रा० ।

[ अन्तर्यामीत्यादि । अन्तर्यामी बुद्ध्यादिप्रेरक. सन्, जगद् यन्त्रमिव त्वदधीनप्रवृत्तत्वात्, तस्य वाहक. प्रवर्त्तकः । अगोचरो बुद्ध्यादेरविषयः । 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' तैत्ति० २।४।१ इति श्रुतेः । गो० ]

---

1. क-ख-घ च '-रस्त्यहम्' । 2. च 'गुरूणा त्व गुरुर्देव' । 3 क ख घ छ '-यात्रा-', च '-यन्त्र-' ।

शुद्धसत्त्वमयं देहं धृत्वा स्वाधी[1]नसम्भवम्[2] ।
मनुष्य इव लोकेऽस्मिन् भासि त्वं योगमायया ॥ २६ ॥
पौरोहित्यमहं जाने [3]विगर्ह्यं [4]दूष्यजीवनम् ।
इक्ष्वाकूणां कुले रामः परमात्मा जनिष्यते ।
इति [5]ज्ञातं मया पूर्वं ब्रह्मणा कथितं पुरा ॥ २७ ॥
[6]ततोऽहमाशया राम तव सम्बन्धकाङ्क्षया ।
[7]अकार्यं गर्हितमपि तवाऽऽचार्यत्वसिद्धये ।
ततो मनोरथो मेऽद्य फलितो रघुनन्दन ॥ २८ ॥
त्वदधीना महामाया सर्व[8]लोकैकमोहिनी ।
मां यथा मोहयेन्नैव तथा कुरु [9]रघूद्वह ॥ २९ ॥

---

२६ । नरो० । तर्हि कथमहं शरीरीति चेत्तत्राऽऽह—शुद्धसत्त्वमयमिति । रजस्तमोऽसम्पृक्तसत्त्वविकारमित्यर्थः, शुद्धसत्त्वस्वरूपमित्यर्थो वा । योगमायया अचिन्त्यशक्त्या ।

२७ । नरो० । तर्हीदं विगर्हितं दृष्टफलं कर्म कृत्वा वृथा कथं कालं नयसीति चेत्तत्राऽऽह—पौरोहित्यमित्यादि । यतो दूष्यजीवनं पौरोहित्यं पुरोहितकर्म, अतो विगर्ह्यमहं जाने इत्यन्वयः । दूष्यजीवनं दूष्यजीवनोपायमित्यर्थः । परलोकयात्रानिर्वाहकं कर्मैवानवद्यमिति भावः । तर्हि त्यज्यतामिति चेत्तत्राऽऽह—इक्ष्वाकूणामित्यादि ।

२८ । नरो० । ततः प्रभृतीति शेषः । आशया दीर्घतृष्णया । सम्बन्धमाकाङ्क्षति विषयीकरोति सम्बन्धाकाङ्क्षा तया । अकार्यं कर्तुमयोग्यम् । गर्हितमपि निन्दितमपि न त्यजामीति शेषः । किं-सम्बन्धिकाङ्क्षेत्यपेक्षायामाह—तवाऽऽचार्यत्वसिद्धये इति । ततः इक्ष्वाकुकुले तव जननात् ।

२९ । नरो० । मम गुरुत्वे तव किं स्यादिति चेत्तत्राऽऽह—त्वदधीनेत्यादि । स्वतन्त्रा माया कथं मम वचनस्था भविष्यतीति चेत्तत्राऽऽह—त्वदधीनेति । तव मोहने

---

२६ । [ ननु देही कथमन्तर्यामी भवत्वित्याह—शुद्धसत्त्वमयमिति, न तु प्राकृतम् । ननु जीववज्जन्मादिदर्शनात् कथं शुद्धसत्त्वमयत्वं तत्राऽऽह—स्वाधीनसम्भव इति । स्वाधीनः स्वेच्छाविलसितः सम्भवो जन्म यस्य सः । जीवस्तु कर्माधीनतया जायते इति विशेषः । गो० ]

स्वाधीनसम्भवमिति । स्वाधीनः स्वेच्छायत्तः सम्भवः उत्पत्तिर्यस्य तम् ।

---

1 ग '-मं ईश्वर' । 2. ङ-च-छ '-व' । 3. ग 'गर्हितं, ङ 'विवर्ज्यं' । 4 ग-च 'तुच्छ-', ङ 'द्विज-' । 5 च 'ज्ञात्वा' । 6. ग 'अतोऽहमनया', छ 'अतोऽ-' । 7. क-ख-घ 'अकार्षं' । 8. ग-च '-लोकविमोहनी' । 9. च-छ 'रघूत्तम' ।

गुरुनिष्कृतिकामस्त्वं यदि [1]देह्येतदेव मे ।
प्रसङ्गात् सर्वमप्युक्त न वाच्यं कुत्रचिन्मया ॥ ३० ॥
राज्ञा दशरथे[2]नाहं प्रेषितोऽस्मि [3]रघूद्वह ।
त्वामामन्त्रयितुं राज्ये श्वोऽभिषेक्ष्यति राघव ॥ ३१ ॥
अद्य त्वं सीतया सार्द्धमुपवासं यथाविधि ।
कृत्वा [4]शुचिर्भूमिशायी भव राम जितेन्द्रिय' ॥ ३२ ॥
गच्छामि राजसान्निध्य त्वन्तु प्रातर्गमिष्यसि ।
इत्युक्त्वा रथमारुह्य ययौ राजगुरुर्द्रुतम् ॥ ३३ ॥
रामोऽपि लक्ष्मणं दृष्ट्वा प्रहसन्निदमब्रवीत् ।
सौमित्रे यौवराज्ये मे श्वोऽभिषेको भविष्यति ॥ ३४ ॥
निमित्तमात्रमेवाहं कर्ता भोक्ता त्वमेव हि ।
मम त्वं हि बहिः[5]प्राणो नात्र कार्या विचारणा ॥ ३५ ॥

---

तस्या कथ सामर्थ्यमिति चेत्तत्राऽऽह—सर्वलोकैकमोहिनीति । अशेषजनप्रधानमोहिनीत्यर्थ· । मोहयेद् विवेकशून्यं कुर्यादित्यर्थ· ।

३० । नरो० । गुरुनिष्कृतिकामो गुरुनिस्तारकामः ।

३१ । नरो० । आमन्त्रयितुं सम्बोधयितुम् ।

३२ । नरो० । भव इत्यादिना अद्य स्त्री न गन्तव्येति सूचितम् ।

३५ । नरो० । प्राणशब्देनान्त करणमप्यधीयते तद्वारणाय बहिरित्युक्तम् । यद्वा दश प्राणा विद्यन्ते, तेषां मध्ये यान् विना जीव· शरीरे स्थातुं न शक्नोति ते बहि·प्राणा· । अथवा शरीरस्थप्राणव्यतिरिक्तप्राणत्वं सूचयन्नाह—बहि·प्राण इति । प्राणान् विना यथा नाहं शरीरी तथा त्वां विनाऽपीति भाव· ।

---

३० । गुरुनिष्कृतिकामो गुरौ प्रत्युपकारकरणेच्छु । रा० ।

गुरोर्निष्कृति संसारबन्धनादिति भाव , तत्र कामोऽभिलाषो यस्य स त्वम् ।

३३ । प्रातर्गमिष्यसि राजसान्निध्यं वनञ्चेति भाव· । रा० ।

३५ । कर्त्ता राज्यकर्त्ता । भोक्ता राज्यसुखभोक्ता । अनेन स्वकर्तृत्वादिराहित्यमपि ध्वनितम् । मम त्वं हि बहि प्राण इति । अनेन शेषांशरूपत्वात्तस्य प्राणधारकत्वरूपं जीवत्वं दर्शितम् । रा० ।

---

1. च-छ 'तद्देहि-' । 2. च 'नाद्य' । 3 ङ 'रघूत्तम' । 4 छ 'शुद्धि भूमि-' । 5. ग-छ '-प्राणा' ।

ततो वशिष्ठेन यथा भाषितं तत्तथाऽकरोत् ।
वशिष्ठोऽपि नृपं गत्वा [1]कृतं सर्वं न्यवेदयत् ॥ ३६ ॥
वशिष्ठस्य पुरो राज्ञा ह्युक्तं रामाभिषेचनम् ।
[2]यदा तदैव नगरे श्रुत्वा कश्चित् सुमाञ्जगौ ।
कौशल्यायै राममात्रे सुमित्रायै तथैव च ॥ ३७ ॥
[3]श्रुत्वा ते हर्ष[4]सम्पूर्णे ददतु[5]र्हारमुत्तमम् ।
तस्मै ततः प्रीतमनाः कौशल्या पुत्रवत्सला ।
लक्ष्मीं पर्यचरद्देवीं [6]रामस्यार्थप्रसिद्धये ॥ ३८ ॥
सत्यवादी दशरथः करोत्येव प्रतिश्रुतम् ।
कैकेयीवशगः किन्तु कामुकः किं करिष्यति ।
इति [8]व्याकुलितात्मा सा [9]दुर्गां देवीमपूजयत् ॥ ३९ ॥
एतस्मिन्नन्तरे देवा [10]दैवीं [11]वाणीमचोदयन् ।
गच्छ देवि भुवो लोकमयोध्यायां प्रयत्नतः ॥ ४० ॥

---

३८ । नरो० । पुत्रवत्सला पुत्रविषयकस्नेहयुता । पर्यचरदपूजयत् । अर्थप्रसिद्धये प्रयोजननिष्पत्तये ।

३९ । नरो० । व्याकुलितात्मा व्याकुलचित्ता ।

---

३८ । तस्मै ददतुरित्यन्वयः । ततः प्रीतमनाः कौशल्या रामस्यार्थप्रसिद्धये अर्थोऽभिषेकरूपस्तस्य प्रसिद्धये, लक्ष्मीं पर्यचरत् पूजयामास । लक्ष्म्या अर्चनेन तादृश-राजैश्वर्यलाभभाग् भविष्यतीति भावः ।

३९ । सत्यवादीति यदुक्तं कामुकत्वात् तत्र विकल्पमुद्घाटयन्ती प्रस्तौति—कैकेयीवशग इति । कामवशगस्य किमप्यकार्यं नास्तीति भावः । तादृशे विप्रश्ने सञ्जाते तत्प्रतीकारमवश्य-मेव कार्यमित्याह—दुर्गामिति ।

'दुर्गात्तारयसे दुर्गे तेन दुर्गा स्मृता जनैः'

इत्युक्तरीत्या सकलसङ्कटपरित्राणकारिणीं तामपूजयदित्यर्थः ।

४० । दैवीं कुम्भकर्णस्य निद्रावरव्याहारादिना देवानामुपकर्त्रीम् अयोध्यायामयोध्या-प्रदेशावच्छिन्नं भुवो लोकं गच्छेत्यन्वयः । रा० ।

---

1. ङ-छ 'सर्वं तच्च' । 2 क 'सदा' । 3 च छ '-स्मुलाऽति-' । 4 ग '-मापन्ने', ङ च '-सम्पन्ने' । 5 ग-ङ-छ '-र्हेमभूषणे' । 6 च 'पुवस्या- । 7 च -चेव' । 8 क ख-ग-घ-ङ 'व्याकुलचित्ता सा' । 9. च 'देवी दुर्गा-', छ 'दुर्गादेवी-' । 10. क-ग-ङ-च-छ 'दैवी' । 11. ङ 'वाणी स्वचो-' ।

रामाभिषेकविघ्नार्थं यतस्व ब्रह्मवाक्यत[1]।
मन्थरां प्रविशस्वाऽऽदौ कैकेयीञ्च ततः परम्[1] ॥ ४१ ॥
ततो विघ्ने समुत्पन्ने पुनरेहि दिवं शुभे ।
तथेत्युक्त्वा तथा चक्रे प्रविवे[2]शाथ मन्थराम् ॥ ४२ ॥
साऽपि कुब्जा त्रिवक्रा तु प्रासादाग्रमथाऽऽरुहत् ।
नगरं परितो दृष्ट्वा सर्वतः समलङ्कृतम् ॥ ४३ ॥
[3]नानातोरणसम्बाधं पताकाभिरलङ्कृतम् ।
सर्वोत्सवसमायुक्तं विस्मिता [4]पुनरागमत् ॥ ४४ ॥
धात्रीं पप्रच्छ [5]मातः किं नगरं समलङ्कृतम् ।
नानोत्सवसमायुक्ता कौशल्या चातिहर्षिता ।
ददाति विप्रमुख्येभ्यो वस्त्राणि विविधानि च ॥ ४५ ॥

---

४१। नरो०। युष्माकं वाक्येन कथमहं गमिष्यामीति चेत्तत्राऽऽह—ब्रह्मवाक्यत इति। सूचकं विना कार्यसिद्धिर्न भवेदित्यभिप्रेत्याऽऽह—मन्थरामित्यादि। सरस्वत्या प्रवेशं विना कैकेयी कटुवाक्यं वक्तुं न शक्ष्यतीत्यभिप्रेत्याऽऽह—कैकेयीञ्चेत्यादि।

४२। नरो०। प्रविश्यैवाऽऽगतायां प्रत्यूहो न भविष्यतीति हृदि निधायाऽऽह—ततो विघ्ने इत्यादि।

४३। नरो०। त्रिषु प्रदेशेषु वक्रा त्रिवक्रा। प्रासादाग्रं देवगृहाग्रं राजगृहाग्रं वा। परितः सर्वतः।

४४। नरो०। नानातोरणसम्बाधम् अनेकतोरणव्याप्तम्। अलङ्कृतं भूषितम्। विस्मिता प्राप्तविस्मया।

---

वाल्मीकीये देवानां वाणीप्रेरणात्मको वृत्तान्तो न दृश्यते।

४१। भुवो लोकमिति सामान्येनोक्त्वा तत्रायोध्यायां रामाभिषेकविघ्नार्थं यतस्वेति विशद्योक्तम्।

४२। तथेति देववाक्यं स्वीकृत्य तथा चक्रे भूलोकमगात्। अथात परं मन्थरां प्रविवेशेत्यर्थः।

४३। सा वाण्याविष्टा। त्रिषु कटौ उरसि कण्ठे च वक्रा। रा०।

---

1 अत परं ग-घ च पुस्तकेषु 'तथा तथा विधेय ते यथा रामो न सिच्यते', ङ-पुस्तके च 'तस्मिन् कर्मणि सवृत्ते पुनरागमयेत्य नः' इत्यधिकम्। 2 क '-शाग्रं'। 3 च-पुस्तके इदमर्धं नास्ति। 4 ख 'पुनरागतम्', च 'साऽभवत्तदा', छ 'सा ततोऽभवत'। 5 च 'गमस्य पर कि'।

तामुवाच [1]तदा धात्री रामचन्द्राभिषेचनम् ।
श्वो भविष्यति तेनाद्य सर्वतोऽलङ्कृतं पुरम् ॥ ४६ ॥
तच्छ्रुत्वा त्वरितं[2] गत्वा कैकेयीं वाक्यमब्रवीत् ।
पर्यङ्कस्थां विशालाक्षीमेकान्ते पर्यवस्थिताम् ॥ ४७ ॥
किं शेषे दुर्भगे मूढे महद् भयमुपस्थितम् ।
न जानीषेऽतिसौन्दर्यमानिनी मत्तगामिनी ॥ ४८ ॥
[3]रामस्यानु[4]ग्रहाद्राज्ञः श्वोऽभिषेको भविष्यति ।
तच्छ्रुत्वा सहसोत्थाय कैकेयी प्रियवादिनी ॥ ४९ ॥
तस्यै दिव्यं ददौ स्वर्णनूपुरं रत्न[5]भूषितम् ।
हर्षस्थाने [6]किमिति मे कथ्यते भयमागतम् ॥ ५० ॥
भरतादधिको रामः प्रियकृन्मे प्रियंवदः ।
कौशल्यां मां [7]समं पश्यन् सदा शुश्रूषते हि माम् ॥ ५१ ॥
रामाद्भयं किमापन्नं तव मूढे वदस्व मे ।
तच्छ्रुत्वा विषसादाथ कुब्जा कारणवैरिणी ॥ ५२ ॥
शृणु मद्वचनं देवि [8]यथार्थं ते महद् भयम् ।
त्वां तोषयन् सदा राजा प्रियवाक्यानि भाषते ॥ ५३ ॥

---

४७ । नरो० । दासी तादृशं वाक्यं वदन्ती कथं शङ्कां नाऽऽप चेत्तत्राऽऽह—एकान्ते इति ।

४८ । नरो० । मूढे मोहविशिष्टे कर्त्तव्याकर्त्तव्यविवेकशून्ये इति यावत् ।

५१ । नरो० । सममिति क्रियाविशेषणम् ।

५२-५८ । नरो० । विषसाद विषादं प्राप्तवती । इदानीं मन्थरा कथं प्रतिकूलेति चेत्तत्राऽऽह—कारणवैरिणीति । कारणमत्र सरस्वत्या प्रवेशः । निरस्ताऽपि मन्थरा सरस्वती-

---

४८ । पुत्रस्य राज्याप्राप्त्या दुर्भगे, तच्चिन्ताराहित्याच्च मूढे । रा० ।

४९ । राज्ञो दशरथस्यानुग्रहाद् रामस्याभिषेको भविष्यतीत्यन्वयः ।

५२ । कारणेन वाणीप्रवेशरूपेण वैरिणी वैरमापन्ना । अकारणवैरिणीति च्छेद इति कश्चित् । रा० ।

---

1 ङ 'ततो', घ 'तथा' । 2 ङ-च छ '-तागत्य' । 3 छ 'रामस्य राज्ञोऽनुग्रहात्' । 4 च 'ग्रहो राज्ञ' । 5 ग '-भूषणम्' । 6 छ 'च किमिति' । 7 च 'समा' । 8. च 'यदर्थं' ।

कामुकोऽतथ्यवादी च त्वां वाचा परि[1]तोषयन् ।
कार्यं करोति तस्या वै राममातुः सुपुष्कलम् ॥ ५४ ॥
मन[2]स्येतन्निधायैव प्रेषयामास ते सुतम् ।
भरतं मातुल[3]कुले प्रेषयामास सानुजम् ॥ ५५ ॥
सुमित्रायाः समीचीनं भविष्यति न संशयः ।
लक्ष्मणो राममन्वेति राज्यं सोऽनुभविष्यति ॥ ५६ ॥
भरतो राघवस्याग्रे किङ्करो वा भविष्यति ।
विवास्यते वा नगरात् प्राणैर्वा [4]हाप्यतेऽचिरात् ॥ ५७ ॥
त्वन्तु दासीव कौशल्यां नित्यं परिचरिष्यसि ।
[5]ततोऽपि मरणं श्रेयो यत् [6]सापत्नैः पराभवः ॥ ५८ ॥
अतः शीघ्रं यतस्वाद्य भरतस्याभिषेचने[7] ।
रामस्य वनवासार्थं वर्षाणि नव [8]पञ्च च ॥ ५९ ॥

---

प्रभावात् 'शृणु देवि मद्वचनं यथार्थं ते महद् भयमि'त्युक्त्वा 'त्वा'मित्यादि'सानुजमि'त्यन्तेन पदसमूहेन दशरथस्य शठत्वं दर्शयित्वा 'सुमित्राया' इत्यादि 'अनुभविष्यती'त्यन्तेन पदसमूहेन 'सुमित्राया' श्रेयो दर्शयित्वा 'भरत' इत्यादि 'पराभव' इत्यन्तेन पदसमूहेन श्रेयांसि दर्शयति । प्रियवाक्यानि मम त्वं प्राणादपि प्रियाऽसीत्यादीनि । कामुक इत्यनेन धर्माधर्मविवेचनशून्यत्वं सूचितम् । अतथ्यवादीत्यनेनाङ्गीकृतानिर्वाहकत्वं सूचितम् । सुपुष्कलमतिबृहत्, स्वल्पकार्यकरणे क्षमा स्यादिति भावः । सापत्नैः शत्रुभिः । समीचीनं मङ्गलम् । ततश्चिरकालवनवासात् ।

---

५४ । अतथ्यवादी अयथार्थवादी मिथ्यावादीति यावत् । पुष्कलं पर्याप्तम् ।

५५ । अतिदुःखावेशात् प्रेषयामासेति पुनरुक्तिर्न दोषाय । रा० ।

[ मनस्येत्यादि । एतदेव सानुजं भरतं वञ्चयन् रामाय राज्यं दास्यामीति मनसि निधाय ते सुतं सानुजं मातुलकुलं प्रति प्रेषयामास, तत्र गमनानुमोदनेन इच्छां कारितवान्, न केवलमेतावत् किन्तु प्रेषयामास च । इषु इच्छायाम् इषु गताविति धातुद्वयस्य रूपम् । गो० ]

५६ । कथं सुमित्रायाः समीचीनमित्याह—लक्ष्मण इति ।

५९ । अभिषेचने इति विषयसप्तमी । नव पञ्च चतुर्दश । रा० ।

---

1 च क 'तोषयेत्'। 2 च '-स्येतद्वि-', क '-स्येव विधा'। 3 ग-ङ-क 'कुल', च 'गृह पूर्वमेव सहानुजम्'। 4 च 'हन्यते'। 5 ग ङ च क 'अतस्ते'। 6 क ख ग घ ङ क 'सपत्न्या', च 'सापत्न्यपराभवात्'। 7 क 'नम'। 8 क 'पञ्चकम्'।

[1]ततो [2]रूढोऽभये पुत्रस्तव राज्ञि भविष्यति ।
उपायं ते प्रवक्ष्यामि पूर्वमेव [3]सुनिश्चितम् ॥ ६० ॥
पुरा देवासुरे युद्धे राजा दशरथः स्वयम् ।
इन्द्रेण याचितो धन्वी सहायार्थं महारथः ॥ ६१ ॥
जगाम सेनया सार्द्धं त्वया [4]सह शुभानने ।
युद्धं प्रकुर्वतस्तस्य राक्षसैः सह धन्विनः ॥ ६२ ॥
तदाक्ष[5]कीलो न्यपतच्छिन्नस्तस्य न वेद सः ।
त्वन्तु हस्तं समावेश्य [6]कीलरन्ध्रेऽतिधैर्यतः ॥ ६३ ॥
स्थितवत्यसिता[7]पाङ्गी पतिप्राणपरीप्सया ।
ततो हत्वाऽ[8]सुरान् सर्वान् ददर्श त्वामरिन्दम ॥ ६४ ॥

---

६० । नरो० । रूढः स्थिराधिकारः । उपायं विना कथमहं यतेयेति चेत्तत्राऽऽह—उपायमित्यादि ।
६१ । नरो० । देवाश्च असुराश्च यत्र तस्मिन् ।
६३ । नरो० । अक्षकीलो रथावयवशङ्कुः ।
६४ । नरो० । असितापाङ्गी कृष्णापाङ्गी । पतिप्राणपरीप्सया पतिप्राणपालनेच्छया ।

---

६० । हे राज्ञि, अभयेऽभयस्थाने भयरहिते तव पुत्रो रूढो राज्ये दृढो भविष्यतीत्यर्थः । ननु वयसा सर्वगुणैश्च ज्येष्ठे विद्यमाने कथं कनीयसो मे पुत्रस्य राज्यमत आह—उपायमिति । रा० ।

६१ । पुरा देवासुरे युद्धे इति । देवासुरयुद्धमधिकृत्याऽऽह वाल्मीकिः—

पुरा देवासुरे युद्धे युद्धसह्यः पतिस्तव ।
याचितो देवराजेन युद्धं कर्त्तुमितो गतः ॥
दिशमास्थाय केकेयि दक्षिणां दण्डकां प्रति ।
वैजयन्तमिति ख्यातं पुरं यत्र तिमिध्वजः ॥
स शम्बर इति ख्यातो बहुमायो महासुरः ।
ददौ शक्राय संग्रामं देवसङ्घैरनिर्जितः ॥
तस्मिन् महति संग्रामे राजा शस्त्रपरिक्षतः ।
विजित्याभ्यागतो देवि त्वयोपचरितः स्वयम् ॥ इत्यादि । २।८।११-१४ ।

६३-६४ । अक्षकीलो रथाक्षकील इत्यर्थः । तस्य छिन्नो न्यपतत् स दशरथो न वेद । तत्कीलरन्ध्रे कीलस्थाने स्वहस्तं दत्त्वा त्वं स्थितवतीत्यन्वयः । रा० ।

---

1 ग ङ 'स्थानारूढो हि भरतस्तव' । 2 ङ 'रूढो भवेत् पुत्रो राज्यं तव', च 'रूढो नृप पुत्रस्तव', छ 'रूढो भवेत् पुत्रो राज्ञि मूढे' । 3 ङ-च-छ 'विनि-' । 4 छ 'सा ङ्ग' । 5 ग '-कीलोऽभ्याप-' । 6 ग 'कील', छ 'कील दर्भ्रेऽति-' । 7. छ '-पाङ्गि' । 8 च '-सुरगणान्'

आश्चर्य परम लेभे त्वामालिङ्ग्य मुदाऽन्वितः ।
वृणीष्व यत्ते मनसि वाञ्छितं वरदोऽस्म्यहम् ।
वरद्वय वृणीष्व त्वमेव [1]राजाऽवदत् स्वयम् ॥ ६५ ॥
त्व[2]योक्तो वरदो राजन् यदि दत्तं वरद्वयम् ।
त्वय्येव तिष्ठतु [3]चिर न्यासभूतं [4]ममानघ ॥ ६६ ॥
यदा मेऽवसरो भूयात्तदा [5]देहि वरद्वयम् ।
तथेत्युक्त्वा [6]स्वय राजा मन्दिरं [7]व्रज सुव्रते ॥ ६७ ॥
[8]त्वत्त श्रुत मया पूर्वमिदानीं स्मृतिमागतम् ।
अत शीघ्रं प्रविश्याद्य [9]क्रोधागारं रुषाऽन्विता ॥ ६८ ॥
विमुच्य सर्वाभरण सर्वतो विनिकीर्य च ।
भूमावेव शयाना त्व तूष्णीमातिष्ठ भामिनी ।
यावत् [10]सत्य प्रतिज्ञाय राजाऽभीष्ट [11]करोति ते ॥ ६९ ॥
श्रुत्वा त्रिवक्रयोक्त तत् तदा [1-]कैकेयनन्दिनी ।
तथ्यमेवाखिल मेने दु सङ्गाहितविभ्रमा ॥ ७० ॥
तामाह [13]केकयी [14]दुष्टा [15]कुतस्ते बुद्धिरीदृशी ।
[16]एव त्वां बुद्धिसम्पन्नां न जाने वक्रसुन्दरि ॥ ७१ ॥
भरतो यदि राजा मे भविष्यति सुत प्रिय ।
ग्रामान्कुत प्रदास्यामि मम त्व प्राणवल्लभा ॥ ७२ ॥

---

७० । नरो० । दु सङ्गेन आहितो जनितो विभ्रमो यस्या· सा तथा ।

---

६७ । तथेत्युक्त्वा । हे सुव्रते, मन्दिरं व्रज युद्धभूमे· शिबिरं व्रजेति स्वयमुक्तवानिति शेष । रा० ।

६९ । सत्यं तत्पूर्वक शपथपूर्वकमिति यावत्, तथा प्रतिज्ञाय राजा तेऽभीष्टं यावत् करोति तावन्मौन कुर्वित्यर्थ । रा० ।

७० । दु सङ्गेन जातविभ्रमा अहितेऽपि हितबुद्धिमती, दुष्टा दुष्टभावा । रा० ।

अखिल समग्रं कुब्जयोक्त सर्वमिति भाव , तथ्य यथार्थं मेने ।

---

1 ग च छ 'रात्रि वदत्यपि' । 2 ग च छ '-योक्त' । 3 छ 'वर' । 4 च छ 'मयाऽ-' । 5 ङ च 'देय' । 6 ग ङ-च छ 'ययौ' । 7 ग ङ-च छ 'तव' । 8 ग च छ' '-त्त एव श्रुत पूर्वं-' । 9 च छ 'कोपा' । 10. च 'सत्यप्रतिज्ञोऽय' । 11 च 'करिष्यति' । 12 घ-च छ 'कैकय-' । 13 क-ख-ग घ-ङ 'कैकेयी' । 14 च छ 'हृष्टा' । 15. च 'कुत ते' । 16 क ग 'स्वय' ।

इत्युक्त्वा कोपभवनं प्रविश्य [1]सहसा रुषा ।
विमुच्य सर्वाभरण परिकीर्य समन्ततः ।
भूमौ शयाना मलिना मलिनाम्बरधारिणी ॥ ७३ ॥
[2]प्रोवाच शृणु मे कुब्जे यावद्रामो वन व्रजेत् ।
प्राणांस्त्यक्ष्येऽथवा वक्रे शयिष्ये तावदेव हि ॥ ७४ ॥
निश्चय कुरु कल्याणि कल्याणं ते भविष्यति ।
इत्युक्त्वा प्रययौ कुब्जा गृह साऽपि तथाऽकरोत् ॥ ७५ ॥
धीरोऽत्यन्तदयाऽन्वितोऽपि सुगुणाचारान्वितो वाऽथवा
नीतिज्ञो विधिवाददेशिकपरो विद्याविवेकोऽथवा ।
दुष्टाना[3]मतिपापभावितधियां सङ्ग सदा चेद् भजेत्
तद्बुद्ध्या परि[4]भावितो व्रजति तत्साम्य क्रमेण स्फुटम्[5] ॥ ७६ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसवादे अयोध्याकाण्डे द्वितीयोऽध्याय ॥ २ ॥

---

७३ । नरो० । मलिनाम्बरधारिणी मलिनवस्त्रधारिणी ।

७६ । नरो० । कैकेय्या विपरीतबुद्धेर्दु सङ्गजनितत्व द्रढयति—धीर इत्येकेन । धीरो बाह्यविषयत्यागेन मन स्थैर्यवान् । अत्यन्तदयाऽन्वितोऽतिदयालु । सुगुणाचारान्वित इति । गुणा अमात्सर्यादय, आचारा स्नानशौचादय । विधिवाददेशिकपरो वेदभाग-विशेषवादातिथिपर । विद्यया विवेक कर्त्तव्याकर्त्तव्यविवेचनम्, आत्मानात्मविवेचन वा यस्य तादृश । दुष्टाना क्रोधासूयामात्सर्यादिदोषाश्रयाणाम् । अतिपापेन भाविता व्याप्ता धीर्येषां तेषाम् । तया बुद्ध्या परिभावित सर्वतोभावेन व्याप्त. स्वस्वजातीयबुद्ध्याश्रयीकृतो वा । क्रमेण धैर्यनाशादिक्रमेण ।

[ अयोध्याकाण्डे द्वितीयाध्यायव्याख्या समाप्ता ॥ २ ॥ ]

---

७६ । अथ कैकेय्या. कुब्जासङ्गादिदमविचार्यकारित्वमित्यर्थविशेष सामान्यरूपेणार्थान्तरन्यासेन दर्शयति—धीर इति, महामना इत्यर्थ. । सुगुणश्चासावाचारान्वित इत्यर्थ. । वाशब्दश्चार्थे । विधिं वदति तादृशो यो देशिको गुरुस्तत्सेवापरो गुरुसेवया सकलविधेय-निषेध्यार्थज्ञ इत्यर्थ । विद्या वस्तुतत्त्वज्ञानम्, तेन विवेक कर्त्तव्याकर्त्तव्यविचारो यस्य स. । रा० ।

[ विधिवाददेशिकपर इति, विधिवादो वेदार्थ, तदुपदेशनिष्ठ, विद्यया विवेको विचारो यस्य यस्मिन् वा । गो० ]

---

1 क 'च महारुषा' । 2 ङ-पुस्तके अयं श्लोको नास्ति । 3 च '-मपि पाप-' । 4 च '-भाविता' ।
5. अत पर क ख-घ-पुस्तकेषु 'अत सङ्ग परित्याज्यो दुष्टानां सर्वदैव हि । दु.सङ्गी च्यवते स्वार्थाद् यथेय राजकन्यका ॥' अयं श्लोकोऽधिक ।

# तृतीयोऽध्यायः

—— ० ——

श्रीमहादेव उवाच—

ततो [1]दशरथो राजा रामाभ्युदयकारणात् ।
आदिश्य मन्त्रि[2]प्रकृती: सानन्दो गृहमाविशत् ॥ १ ॥
तत्रादृष्ट्वा प्रियां [3]राजा किमेतदिति विह्वल: ।
या पुरा मन्दिरं[4] तस्याः प्रविष्टे मयि शोभना ॥ २ ॥
हसन्ती मामुपायाति सा किं नैवाद्य[5] दृश्यते ।
इत्यात्मन्येव सञ्चिन्त्य मन[6]साऽतिविदूयता ॥ ३ ॥
पप्रच्छ दासीनिकरं कुतो व: स्वामिनी [7]शुभा ।
नायाति [8]मां यथापूर्वं मत्प्रिया प्रियदर्शना । ४ ॥
ता ऊचु: [9]क्रोधभवनं प्रविष्टा [10]नैव विद्महे ।
कारणं तत्र देव त्वं गत्वा निश्चेतुमर्हसि ॥ ५ ॥

---

१। रामाभ्युदयकारणाद् रामस्याभ्युदयोऽभ्युत्थानमुन्नतिरिति यावत्, तस्य कारणं तस्मात्, मन्त्रिप्रकृती मन्त्रिणो वशिष्ठप्रमुखान् अमात्यादीन्, प्रकृती: सैनिकप्रजासमूहान् । अत्र वाल्मीकि:—

'आज्ञाप्य तु महाराजो राघवस्याभिषेचनम् ।
कैकेय्या: प्रियमाख्यातुं विवेशान्त:पुरं नृप: ॥ २।९।१। इति ।

२-३। तस्या: कैकेय्या मन्दिरं प्रविष्टे मयि कैकेयी हसन्ती मामुपायाति साऽद्य किं न दृश्यते एतत् किमित्यन्वय: । रा० ।

इति आत्मनि हृदि एव सञ्चिन्त्य, एवशब्देन चिन्ताविषयीकृतं तत्तद्वस्तु न बहि: प्रकाशितमिति सूचितम् । अतिविदूयता अतिदु:खितेन ।

५। प्रविष्टा सेति शेष: । कारणं रोषागारप्रवेशहेतुं वयं नैव विद्महे । देव, त्वं तत्र क्रोधभवनं गत्वेत्यन्वय: ।

---

1 ङ-ख 'राजा दशरथो'। 2 ङ-च '-प्रभृतीन्'। 3 ख 'भार्यां'। 4 च '-रे'। 5 च '-त्र'। 6 च 'साऽतीव दू-'। 7 ग 'गता'। 8 ङ 'कि'। 9 च 'कोप'। 10 ङ 'किं न विद्महे'।

इत्युक्तो भयसन्त्रस्तो राजा तस्याः समीपगः ।
उपविश्य शनैर्देहं [1]स्पृशन् वै पाणिनाऽब्रवीत् ॥ ६ ॥
किं [2]शेषे वसुधापृष्ठे पर्यङ्कादीन् विहाय च ।
मां त्वं खेदयसे भीरु यतो मां [3]नाभिभाषसे ॥ ७ ॥
अलङ्कारं परित्यज्य भूमौ मलिन[4]वाससा ।
किमर्थं ब्रूहि सकलं विधास्ये तव वाञ्छितम् ॥ ८ ॥
को वा तवाहितं कर्त्ता नारी वा पुरुषोऽपि वा ।
स मे दण्ड्यश्च वध्यश्च भविष्यति न संशय' ॥ ९ ॥
ब्रूहि देवि यथा प्रीतिस्तदवश्यं ममाग्रत· ।
तदिदानीं साधयिष्ये सुदुर्लभमपि क्षणात् ॥ १० ॥
जानासि त्व मम स्वान्त प्रियं मां [5]त्वद्वशे स्थितम् ।
तथाऽपि मां खेदयसे वृथा तव परिश्रम' ॥ ११ ॥
ब्रूहि [6]कि धनिनं कुर्याद् दरिद्रं ते प्रियङ्करम् ।
धनिनं क्षणमात्रेण निर्ध[7]नञ्च तवाहितम् ॥ १२ ॥
ब्रूहि क वा वधिष्यामि वधार्हो वा [8]विमोक्ष्यते ।
किमत्र बहुनोक्तेन प्राणान् दास्यामि ते प्रिये ॥ १३ ॥

६ । शनैर्मन्दं मन्दं भयत्रस्तत्वेन मन्दस्पर्श । यद्वा शनैरिति अब्रवीदित्यस्य विशेषणम् । भयत्रस्तत्वाद् वाक्यस्य मान्द्यम् ।

८ । किमर्थं किंकारणं भूमौ शेषे इति शेष तद् ब्रूहि । तव सकलं वाञ्छितमभिलषित विधास्ये साधयामीत्यर्थ ।

१० । यथा येन प्रकारेण दण्डेन वधेन वा तदवश्य ब्रूहि । रा० ।

११ । मम स्वान्तं जानासि सुखदु खासहिष्णुत्वेनेति शेष । प्रियं मां स्वाधीन जानासि । एव परिश्रमं विनाऽपि त्वदुक्तार्थानुष्ठानं मया कर्त्तव्यमेवेति वृथाऽयं परिश्रम इति भाव । रा० ।

१३ । कं ब्रह्मतुल्यमपि वधिष्यामि वधार्हश्चोरादिरपि त्वत्प्रियो विमोक्ष्यते मयेति शेषः । रा० ।

1 ग-ङ-छ 'विमृशन् पा-', च 'सस्पृशन् पा-' । 2 छ 'शेते' । 3 क-ख-च 'नावभा-' । 4 ङ '-वासिनी' । 5 क-ख च 'त्ववशे' । 6 क-ख 'क' । 7 ग-च-छ '-न तव वाऽहितम्' । 8 च 'विमुच्यते' ।

मम प्राणात् प्रियतरो [1]राम' सत्यपराक्रम' ।
तस्योपरि शपे ब्रूहि त्वद्धितं [2]तत् करोम्यहम् ॥ १४ ॥
इति ब्रुवाणं राजान शपन्तं राघवोपरि ।
शनैर्विमृज्य नेत्रे सा राजानं प्रत्यभाषत ॥ १५ ॥
यदि सत्यप्रतिज्ञोऽसि शपथ कुरुषे यदि ।
[3]याच्ञां मे सफलां कर्त्तुं [4]शीघ्रमेव त्वमर्हसि[5] ॥ १६ ॥
पूर्वं देवासुरे युद्धे मया त्वं परिरक्षित' ।
तदा वरद्वयं दत्तं त्वया मे तुष्टचेतसा ।
तद्द्वयं न्यासभूत मे स्थापितं त्वयि सुव्रत ॥ १७ ॥
तत्रैकेन वरे[6]णाऽऽशु भरतं मे प्रियं सुतम् ।
अभि' सम्भृतसम्भारैर्यौवराज्येऽभिषेचय ॥ १८ ॥
अपरेण वरेणाऽऽशु रामो गच्छतु दण्डकान् ।
मुनिवेशधर श्रीमान जटावल्कल[7]भूषण' ॥ १९ ॥

१४ । नरो० । तस्योपरि शपे इति तस्यापि शिर स्पर्शरूपं दिव्यं करोमीत्यर्थ ।
१८ । नरो० । सम्भृतसम्भारैर्निहितसाधने' ।
१९ । नरो० । मुनिवेशधरो मुनिचिह्नधर । जटावल्कले भूषणे यस्य स तथा ।

१४ । यत्तव हितं तत् करोमीति शपे रामशपथपूर्वक प्रतिजाने इत्यर्थ । रा० । प्रतिज्ञान्तरं वाल्मीकीये । तथा च—

बलमात्मनि पश्यन्ती न विकाङ्क्षितुमर्हसि ।
करिष्यामि तव प्रीतिं सुकृतेनाऽऽत्मन शपे ॥ इति । २।९।२२ ।

अनेन च राज्ञो रामादपि प्रियं सुकृतमिति तात्पर्यत' प्रतिभाति ।

१९ । जटावल्कले भूषणं परिच्छदो यस्येत्यर्थ ।

1 क ख-घ 'रामो राजीवलोचन'। 2 च 'करवाण्यहम्'। 3 ङ 'यदा मे'। 4 ङ 'शीघ्र वक्तु त्व'। 5 अत पर ङ-पुस्तके 'प्रिया प्रियहिते युक्ता भार्या नित्यमनुव्रताम् ॥ स ता विज्ञाय सन्तप्ता कैकेयी पार्थिवोऽब्रवीत् । करिष्यामि तव प्रीति सुकृतेनाथ न, शपे ॥ तुष्टा तेनाऽऽत्मवाक्येन हृष्टाति-प्रियमात्मन । व्याजहार महाघोर कैकेयी भूषणप्रिया ॥ यथा धर्मेण शपसे वर मह्य ददासि च । तच्छृण्वन्तु समागम्य देवा शक्रपुरोगमा ॥ चन्द्रादित्या ग्रहाश्चैव नभो रात्र्यहनी दिश । वर मह्य ददात्वे-तत्तन्मे शृणुत देवता ॥ इति देवी महेष्वास परिगृह्याभिपद्य च । ततो वच उवाचेद वरद काममोहितम् ॥' इत्यधिकम्। 6 ङ '-णाथ'। 7 च 'धारक'।

चतुर्दश समास्तत्र कन्दमूलफलाशनः ।
पुनरायातु तस्यान्ते वने वा तिष्ठतु स्वयम् ॥ २० ॥
प्रभाते गच्छतु वनं रामो राजीवलोचनः ।
यदि किञ्चिद् विलम्बेत प्राणांस्त्यक्ष्ये तवाग्रतः ।
भव सत्यप्रतिज्ञस्त्वमेतदेव [1]मम प्रियम् ॥ २१ ॥
श्रुत्वैतद्दारुणं वाक्यं कैकेय्या रोमहर्षणम् ।
निपपात महीपालो वज्राहत [2]इवाचलः ॥ २२ ॥
शनैरुन्मील्य नयने [3]विमृज्य परया भिया ।
दुःस्वप्नो वा मया दृष्टो [4]ह्यथ वा चित्तविभ्रमः[5] ॥ २३ ॥
इत्या[6]लोक्य [7]पुनः पत्नीं व्याघ्रीमिव पुरः स्थिताम् ।
किमिदं [8]भाषसे [9]भद्रे मम प्राणहरं वचः ॥ २४ ॥

---

२० । नरो० । कन्दमूलफलाशन इति । कन्दं सूरणादि, मूलं केमुकादि ।

२२ । नरो० । दारुणं भयानकम् । रोमहर्षणं रोमहर्षजनकम् । अद्भुतवाक्यं श्रुत्वाऽतिविस्मयाद्रोमाञ्चः ।

२३ । नरो० । भ्रमो मिथ्यामतिः ।

---

२० । कन्दश्च मूलञ्च फलञ्च तानि अशनं यस्य सः । तस्यान्ते चतुर्दशवर्षावसाने । स्वयमिति स्वेच्छयेत्यर्थः । तत्र तस्य स्वेच्छैव बलवती भविष्यतीति भावः ।

२१ । किञ्चिद् विलम्बेत प्रातःकालोत्तरं क्षणमपि विलम्बे मया प्राणत्यागः कर्त्तव्य इत्यर्थः । रा० ।

त्वं सत्यप्रतिज्ञः स्वीकृतरामप्रवासनभरताभिषेकरूपकार्यद्वयमनुष्ठायाङ्गीकृतनिर्वाहको भवेत्यर्थः । मम एतदेव तव प्रतिज्ञापालनरूपकार्यमेव प्रियं भविष्यतीति शेषः ।

२३ । परया उत्कृष्टया कैकेयीभिया नेत्रे विमृज्य अश्रुरहिते कृत्वा । साश्रुनेत्रत्वं दृष्ट्वा अतिक्रोधेन रामवधं प्रार्थयेदित्यधिका भीः । निवृत्येति पाठे पतनवेलायां पराङ्मुखपतनादुक्तरीत्या भियैव झटिति तत्सम्मुखीभूयेत्यर्थः । पुनर्मनुष्यदेहधराया मद्भार्याया एवं क्रौर्यासम्भवं पर्यालोच्य दुःस्वप्न इति तर्कः । जाग्रतः स्वप्नानुभवासम्भवादाह—अथवा ममैव चित्तस्य विभ्रमः, अन्यार्थकस्यान्यार्थकत्वग्रहः । रा० ।

२४ । मम प्राणहरमित्यनेन स्ववैधव्यसम्पादकत्वेनात्यन्तं स्वानिष्टं कथं भाषसे इत्यर्थः । रा० ।

इति पूर्वोक्तप्रकारं मनसि विविच्येति शेषः । ततः पुरः पुरतः स्थितां पत्नीं व्याघ्रीमिव आलोक्य तां प्रत्युवाच किमिदमित्यादि । व्याघ्रीमिवेत्यनेन कैकेय्या हिंस्रस्वभावत्वं

---

1 ग-छ 'प्रिय मम' । 2 ग-ङ-च-छ 'इव द्रुम' । 3 ङ 'निवृत्य', च-छ 'विवृत्य' । 4 ग 'माया वा', छ 'भ्रमो वा' । 5 ङ '-मात' । 6 ङ '-लोच्याऽऽत्मन.' । 7 क-ख-घ-ङ 'पुर' । 8 ङ 'भाषसेऽभद्र' । 9 च 'देवि' ।

रामः [1]कमपराधं ते कृतवान् कमलेक्षणः ।
ममाग्रे राघवगुणान् वर्णयस्यनिशं शुभान् ॥ २५ ॥
कौशल्यां मां समं पश्यञ् शुश्रूषां कुरुते सदा ।
इति ब्रुवन्ती [2]त्वं पूर्वमिदानीं भाषसे[3]ऽन्यथा ॥ २६ ॥
राज्यं गृहाण पुत्राय रामस्तिष्ठतु मन्दिरे ।
अनुगृह्णीष्व मां वामे रामान्नास्ति भय तव ॥ २७ ॥
इत्युक्त्वाऽश्रुपरी[4]ताक्षः पादयोर्निपपात ह ।
कैकेयी प्रत्यु[5]वाचेद् साऽपि रक्तान्तलोचना ॥ २८ ॥

---

२८ । नरो० । अश्रुणा परीते व्याप्ते अक्षिणी यस्य स तथा ।

---

सूचितम् । अत्र च तत्रभवतो वाल्मीकेर्दशरथः कथञ्चित् कठिन, प्रतिज्ञानाशजन्यभयत्रस्तोऽपि तादृशेन रामप्रवासप्रार्थनरूपेणासदृशेन प्रार्थनेन क्रुद्धः, 'वृद्धस्य तरुणी भार्या प्राणेभ्योऽपि गरीयसी' इत्युक्तदिशा तरुण्यां समासक्तोऽपि जनिष्यमाणरामप्रवासचिन्तया जर्जरितहृदयः प्राणेभ्योऽपि गरीयसीं पत्नीमविगणय्यैव—

'नृशंसे दुष्टचारित्रे कुलस्यास्य विनाशिनि ।
किं कृतं तव रामेण मया वा पापदर्शने ॥ २।९।३७ ।

इत्यादिना तिरस्कृतवान्

त्वं मयात्मविनाशाय भवनं स्व प्रवेशिता ।
राजपुत्रीति विज्ञाय व्याली तीक्ष्णमहाविषा ॥२।९।३९ ।

इत्यादिना चाऽऽत्मानमपि धिक्कृतवान् ।

२५ । वर्णयसीति भूतसामीप्ये लट् ।

२६ । इदानीम् अन्यथा भाषसे, अत पूर्वापरविरोधादिद तद्वचोऽश्रद्धेयमित्यर्थः । रा० । राम इत्यूहनीयम् । कौशल्यां मां समं पश्यन् सदा मे शुश्रूषां कुरुते, त्वं पूर्वमिति ब्रुवन्ती (ब्रुवती) इदानीम् अन्यथा भाषसे इत्यन्वयः ।

२७ । रामस्य स्वसम्मुखावस्थानकामुको राजा बालक इव प्रार्थयते—राज्यं गृहाणेत्यादिना । हे वामे प्रतिकूलकारिणि, पुत्राय भरताय राज्यं गृहाण । तव पुत्रो भरत एव राजा भवतु । रामो मन्दिरे अयोध्याभवने तिष्ठतु इत्यर्थः । रामात् सर्वजनचित्ताह्लादनकारकादित्यर्थः ।

२८ । साऽपि पूर्वं तादृशभाषणशीलाऽतिमृदुरपि कैकेयी देववाण्यावेशवशाद्रक्तान्तलोचना सती राजानं प्रत्युवाच । रा० ।

---

1. ग-ड-च क 'किम-' । 2 च 'पूर्वं त्वमि-' । 3 ग-ड क 'वृथा' । 4 क क्र '-ताक्ष' ।
5. च '-वाचाथ' ।

[1]राजेन्द्र किं त्वं भ्रान्तोऽसि [2]उक्तं तद् भाषसे[3]ऽन्यथा ।
मिथ्या करोषि [4]चेत् स्वीय भाषितं [5]नरको भवेत् ॥ २९ ॥
वनं न गच्छेद् यदि रामचन्द्र
प्रभातकालेऽजिनचीर[6]युक्तः ।
उद्बन्धनं वा विषभक्षणं वा
कृत्वा मरिष्ये पुरतस्तवाहम् ॥ ३० ॥
सत्यप्रतिज्ञोऽहमितीह लोके
विडम्बसे सर्वसभान्तरेषु ।
रामोपरि त्वं शपथञ्च कृत्वा
मिथ्याप्रतिज्ञो नरकं प्रयाहि ॥ ३१ ॥
इत्युक्तः प्रियया दीनो मग्नो दुःखार्णवे नृपः ।
मूर्च्छितः पतितो भूमौ [7]विसंज्ञो मृतको यथा ॥ ३२ ॥
एवं रात्रिर्गता तस्य [8]दुःखात् संवत्[9]सरोपमा ।
अरुणोदयकाले तु वन्दिनो गायका जगुः ।
निवारयित्वा तान् सर्वान् कैकेयी रोषमास्थिता ॥ ३३ ॥
ततः प्रभातसमये मध्यकक्ष[10]मुपस्थिता ।
ब्राह्मणाः क्षत्रिया वैश्या ऋषयः कन्यकास्तथा ॥ ३४ ॥

---

३० । नरो० । अजिनचीरयुक्त इति चर्मवस्त्रखण्डयुक्त इत्यर्थः । उद्बन्धनम् ऊर्ध्वावबन्धनम् ।

---

३० । मिथ्याभाषणजन्यो नरकोऽस्त्येव, पुनः पापान्तरजनरकमपि दर्शयति—वनमिति । अजिनमेव चीरम् ऋषिवस्त्रं तेन युक्तः । रा० ।

३१ । विडम्बसे श्लाघसे । रामोपरीत्यनेन भगवच्छपथो मिथ्या त्वया कृत इति ध्वनयति । रा० ।

३३ । तान् वन्द्यादीन् गानान्निवर्त्त्य रोषं रोषातिशयम् आस्थिता प्राप्ता प्रातःसमये जातेऽपि राममाकार्य वनाय न प्रेषयतीत्यधिको रोषः । रा० ।

संवत्सरोपमेति । अत्राऽऽह वाल्मीकिः —
त्रियामाऽपि भृशार्तस्य सा रात्रिरभवत्तदा ।
तथा विलपतस्तस्य राज्ञो वर्षशतोपमा ॥ इति २।१०।१७ ।

---

1 ग-ङ-च-छ 'उवाच' । 2 ग-ङ-च-छ 'राजन्न भा-' । 3 ग-ङ-च-छ 'वृथा' । 4 ग-ङ-च-छ 'चेद्राजन्' । 5 ग-ङ 'नरकं व्रजे', छ 'नरकं भवेत्' । 6. छ '-वल्कल' । 7 च 'निःस-' । 8 ग 'दुःखे' । 9 ग-च-छ '-सरो यथा' । 10 च '-मुपा-' ।

छत्रञ्च चामरं दिव्यं [1]गजो वाजी तथैव च ॥ ३५ ॥
[2]अन्याश्च [3]वारमुख्या याः पौरजानपदास्तथा ।
वशिष्ठेन यथाज्ञप्तं तत् सर्वं तत्र [4]संस्थितम् ॥ ३६ ॥
स्त्रियो बालाश्च वृद्धाश्च रात्रौ निद्रां न लेभिरे ।
कदा द्रक्ष्यामहे रामं पीतकौशेयवाससम् ॥ ३७ ॥
सर्वाभरणसम्पन्नं किरीटक[5]नकोज्ज्वलम् ।
कौस्तुभाभरणं श्यामं कन्दर्पशतसुन्दरम् ॥ ३८ ॥
अभिषिक्तं समा[6]यान्तं गजारूढं स्मिताननम् ।
श्वेतच्छत्रधरं तत्र लक्ष्मणं लक्षणान्वितम् ॥ ३९ ॥
रामं कदा वा द्रक्ष्यामः प्रभातं वा कदा भवेत् ।
इत्युत्सुकधियः सर्वे बभूवुः पुरवासिनः ॥ ४० ॥
नेदानीमुत्थितो राजा [7]किमर्थश्चेति चिन्तयन् ।
सुमन्त्रः शनकैः प्रायाद् यत्र राजाऽवतिष्ठते ॥ ४१ ॥
वर्द्धयञ्जयशब्देन प्रणमञ् शिरसा नृपम् ।
अतिखिन्नं नृपं दृष्ट्वा कैकेयीं समपृच्छत ॥ ४२ ॥
देवि कैकेयि वर्द्धस्व [8]किं राजा दृश्यतेऽन्यथा ।
तमाह [9]कैकयी राजा रात्रौ निद्रां न लब्धवान् ॥ ४३ ॥

---

३७ । नरो० । पीतकौशेये वाससी यस्य स तम् ।

३८ । नरो० । तथा किरीटकनकोज्ज्वलं मुकुटघटकस्वर्णदीप्तमित्यर्थः ।

---

३८ । किरीटकटकानि उज्ज्वलानि शोभावन्ति यत्सम्बन्धात् तम् । रा० ।

४१ । राज्ञो जागरणकालोऽतिवाहितस्तथाऽपि कथं स नोत्थितः, प्रातःकृत्यादिकं विहाय कथं शय्यायामेव स्थित इत्याह—नेदानीमित्यादि । सुमन्त्र इति । प्रजानां तादृशीं चिन्तां ज्ञात्वा स्वयमपि चिन्तयन्नित्यर्थः । रा० । शनकैर्मन्दम् । चिन्ताव्याकुलत्वाद् धीरगामित्वम् ।

४२ । जयशब्देन राजा दशरथो जयतीत्यादिनेत्यर्थः । शिरसा नृपं प्रणमन् पश्यति, पश्यन् नृपं खिन्नं दृष्ट्वेति योजना ।

४३ । अन्यथा शोकवान् अस्वस्थश्च । रा० । राज्ञोऽवस्थावलोकनेन जाताशङ्कः

---

1. ग-च-छ 'गजवाजी' । 2 ङ-च छ 'अन्ये च' । 3 ङ-च-छ 'वारमुख्याश्च' । 4. ग 'मे हितम्' । 5 क-ख ग-घ-ङ च छ '-टकौ' । 6 क ख '-यातं' । 7. ग-ङ-च-छ '-मर्थश्चेत्यचि-', च '-मेतदित्यचि' । 8. च 'राजा किं' । 9. क 'कैकेयी' ।

राम रामेति रामेति राममेवानुचिन्तयन् ।
[1]प्रजागरेण वै राजा ह्यस्वस्थ इव लक्ष्यते ।
राममानय शीघ्र त्वं राजा [2]द्रष्टुमिहेच्छति ॥ ४४ ॥

सुमन्त्र उवाच—

अश्रुत्वा राजवचनं कथ गच्छामि [3]भामिनि ।
तच्छ्रुत्वा मन्त्रिणो वाक्य राजा मन्त्रिणमब्रवीत् ॥ ४५ ॥

सुमन्त्र राम द्रक्ष्यामि शीघ्रमानय सुन्दरम् ।
इत्युक्तस्त्वरित[4] गत्वा सुमन्त्रो राममन्दिरम्[5] ॥ ४६ ॥

[6]अवारितप्रविष्टोऽयं [7]त्वरितं राममब्रवीत् ।
शीघ्रमागच्छ भद्रन्ते राम राजीवलोचन ॥ ४७ ॥

पितु[8]र्गृह मया सार्द्धं राजा त्वां द्रष्टुमिच्छति ।
इत्युक्तो रथमारुह्य सम्भ्रमात् [9]त्वरितो ययौ ॥ ४८ ॥

रामः सारथिना सार्द्धं लक्ष्मणेन समन्वितः ।
मध्यकक्षे वशिष्ठादीन् पश्यन्नेव त्वरान्वित ।
पितुः समीपं सङ्क्रम्य ननाम चरणौ पितुः ॥ ४९ ॥

---

४५ । नरो० । अश्रुत्वेति । राजाज्ञां विना राममानेतुं गन्तुं न शक्नोमीति भाव ।
४७ । नरो० । अवारितप्रविष्ट इत्यनेन सुमन्त्रस्यातिविश्वस्तत्वं सूचितम् ।
४८ । नरो० । सम्भ्रमाद्रथमारुह्येत्यन्वय. ।
४९ । नरो० । मध्यकक्षे मध्यद्वारे । पश्यन्नेवेत्यनेन संलापादिर्वारित. ।

---

सुमन्त्रस्तमपृष्ट्वा 'देवि कैकेयि वर्द्धस्वे'त्यादिना समुदाचारपुर:सरं तामेव पृच्छति—किं राजेत्यादिना ।
४५ । भामिनि कोपने, 'कोपना सैव भामिनी' इति निघण्टु । रा० ।
४७ । अतिवृद्धत्वात् प्रियत्वाच्च द्वारपालैरवारित' । रा० ।
४९ । पश्यन्नेव पितृदर्शनत्वरया दर्शनमात्रेण चक्षुषैव तेषां शिष्टाचारं कुर्वन्नित्यर्थः । रा० ।

---

1. म-च 'जजागार ततो' । 2 च-छ 'त द्रष्टुमिच्छति' । 3 छ 'भाविनि' । 4 ङ छ '-रितो' । 5 च '-रे' । 6. क-ख-ग घ-ङ-च-छ 'अवारित' । 7 ग-ङ-च-छ 'राम त्वरित-' । 8. ख-च '-र्गे' 9. ग-ङ-च-छ 'त्वरित' ।

राममालिङ्गितुं राजा समुत्थाय ससम्भ्रमः ।
बाहू प्रसार्य रामेति [1]दुःखान्मध्ये पपात ह ।
हा हेति रामस्तं शीघ्रमालिङ्ग्याङ्के न्यवेशयत् ॥ ५० ॥

राजानं मूर्च्छितं दृष्ट्वा चुक्रुशुः सर्वयोषितः ।
[2]किमर्थं रोदनमिति वशिष्ठोऽपि समाविशत् ॥ ५१ ॥

रामः पप्रच्छ किमिदं राज्ञो दुःखस्य कारणम् ।
एवं पृच्छति [3]रामे सा कैकेयी राममब्रवीत् ॥ ५२ ॥

त्वमेव कारणं ह्यत्र राज्ञो दुःखोपशान्तये ।
किञ्चित् कार्यं त्वया राम कर्त्तव्यं नृपतेर्हितम् ।
कुरु सत्य[4]प्रतिज्ञस्त्वं राजानं सत्यवादिनम् ॥ ५३ ॥

---

५३ । नरो० । कारणं राज्यत्यागपूर्वकवनगमनद्वारेणेति शेषः । सत्यप्रतिज्ञोऽङ्गीकृतनिर्वाहकः । रामं प्रोत्साहयितुं सत्यप्रतिज्ञ इत्युक्तम् । सत्यवादिनः सत्यानुपतिरनुचितेति सूचनाय सत्यवादिनं कुर्वित्युक्तम् ।

---

५० । दुःखात् भाविरामविरहशङ्काजनितात् क्लेशात् ।
अत्र वाल्मीकेः काचिद् नवीना भङ्गी । तथा च—

स्थितं सप्रश्रितं दृष्ट्वा रामं दशरथो नृपः ।
नाशक्नोदप्रियं वक्तुं प्रियं पुत्रमनागसम् ॥
रामेत्युक्त्वा तु वचनं कम्पवेगजडीकृतः ।
नाशक्नोत् परतो वक्तुं नेक्षितुं दयितं सुतम् ॥ २।१९।४-९ ।

५१ । स्त्रीणां रोदनध्वनिं श्रुत्वा तस्य कारणनिर्णयार्थं वशिष्ठागमनमाह—किमर्थमिति ।

५२ । इदम् अवस्थान्तरं किं कथमिति भावः । दुःखस्य कारणमित्यत्र किमित्यध्याहार्य व्याख्या कार्या ।

५३ । राजदुःखोपशान्तये तदर्थं त्वमेव कारणम् । तदेव कारणत्वं समर्थयति—किञ्चिदिति । कार्यमेवाऽऽह—सत्यप्रतिज्ञ इति । त्वं दण्डकगमनविषये सत्यप्रतिज्ञो भूत्वा इत्यर्थः । रा० । यतस्त्वं सत्यप्रतिज्ञ, अतो राजानमपि सत्यवादिनं कुर्वित्यर्थः ।

---

1. ग-च 'चोक्त्वा मध्ये', ङ 'दुःखमध्ये'। 2 ङ-च-छ 'किमेतद्'। 3 च 'रामेऽपि', ख 'रामे तु'। 4 च 'प्रतिज्ञात'।

राज्ञा वरद्वयं दत्तं मम सन्तुष्टचेतसा ।
[1]त्वदधीनन्तु तत् सर्वं वक्तुं त्वां लज्जते नृप' ॥ ५४ ॥
सत्यपाशेन सम्बद्धं पितरं त्रातुमर्हति ।
पुत्रशब्देन चैतद्धि नरकात् त्रायते पिता ॥ ५५ ॥
रामस्तयोदित श्रुत्वा शूलेनाभिहतो यथा ।
व्यथित कैकयीं प्राह किं मा[2]मेवं प्रभाषसे ॥ ५६ ॥
[3]पित्रर्थे [4]जीवितं दास्ये पिबेयं विषमुल्वणम् ।
सीतां त्यक्ष्येऽथ कौशल्यां [5]राज्यञ्चापि त्यजाम्यहम् ॥ ५७ ॥
[6]अनाज्ञप्तोऽपि कुरुते पितु कार्यं स उत्तम· ।
उक्त करोति यः पुत्र' स मध्यम उदाहृतः ॥ ५८ ॥

---

५४ । नरो० । राज्ञा किं सत्यं कृतमित्यपेक्षायामाह—राज्ञेत्यादि । कृतं सत्य तेनैव पालयिष्यते इति चेत्तत्राऽऽह—त्वदधीनन्त्विति । राज्ञा तत् कथमहं नोक्त इति चेत्तत्राऽऽह—वक्तुमित्यादि ।

५५ । नरो० । त्वया पितुस्त्राणमुचितमिति दर्शयति—सत्यपाशेनेत्यादिना । मया पितुस्त्राणस्य कथमुचितत्वमिति चेत्तत्राऽऽह—पुत्रशब्देनेति । हि यस्मात् यत् पिता नरकात् त्रायते एतत् पुत्रशब्देन प्रतिपाद्यम् । पुन्नाम्नो नरकादित्यत्र पुन्नाम्न इत्युपलक्षणम् ।

५६ । नरो० । व्यथित· प्राप्तव्यथ ।

५७ । नरो० । जीवितं जीवनं प्राणं दास्ये त्यक्ष्यामि । केनोपायेन जीवनं त्यक्ष्यामीत्यपेक्षायामाह—पिबेयमिति । उल्वणमुत्कटम् ।

---

५४ । तत् सर्वं वरप्रदत्तवस्तुजातम् ।

५५ । पुत्रशब्देनैतदुच्यते । तदेव दर्शयति—पुन्नाम्नो नरकात् पिता त्रायते येन स पुत्र इत्यर्थ । रा० । नरकात् पुन्नाम्नो नरकात्—

पुन्नाम्नो नरकाद् यस्मात् त्रायते पितरं सुत ।
तस्मात् पुत्र इति ख्यात स्वयमेव स्वयम्भुवा ॥ इत्याद्युक्ते ।

५७ । उल्वणविषभक्षणेनापि जीवनदानसम्भावना, पित्रा चेदाज्ञप्तस्तदाऽन्येनो-द्बन्धनादिनाऽपि जीवनं परित्यजेयमित्याशयेन पुनराह—जीवितं दास्ये इत्यादि । जीवितं दास्ये इत्यादिना क्रमेण रामचरितस्यातिवैशिष्ट्य महत्त्वञ्च प्रतिपादितम् ।

५८ । अनाज्ञप्तोऽपि, पितुरभिलषितं ज्ञात्वैवेत्यर्थ ।

---

1 ग-पुस्तके इदमर्द्ध पञ्चपञ्चाशश्लोकश्च न स्त । 2 छ '-मेव' । 3 क 'पित्रर्थं' । 4 ग 'जीवन' । 5 च छ 'राज्य वाऽपि' । 6 च 'अनुक्तश्चापि' ।

उक्तोऽपि कुरुते नैव [1]स पुत्रो मल उच्यते ।
[2]अथ करोमि तत् सर्वं यन्मामाह पिता मम ॥ ५९ ॥
सत्यं सत्यं करोम्येव रामो [3]द्विर्नैव भाषते ।
इति रामप्रतिज्ञां सा श्रुत्वा वक्तुं प्रचक्रमे ॥ ६० ॥
राम त्वदभिषेकार्थं सम्भाराः सम्भृताश्च ये ।
तैरेव भरतोऽवश्यमभिषेच्यः प्रियो मम ॥ ६१ ॥
अपरेण वरेणाऽऽशु चीरवासा जटाधरः ।
वनं प्रयाहि शीघ्रं त्वमद्यैव पितुराज्ञया ॥ ६२ ॥
चतुर्दश समास्तत्र [4]वस उत्पन्नभोजनः ।
एतदेव पितुस्तेऽद्य कार्यं [5]त्वं कर्त्तुमर्हसि ।
राजा तु लज्जते वक्तुं त्वामेवं[6] रघुनन्दन ॥ ६३ ॥

---

५९ । नरो० । मलो विष्ठा । अथ अथवा ।

६० । नरो० । रामो द्विर्नैव भाषते इत्यनेनात्मनः सत्यसन्धत्वमुक्तम् ।

६१ । नरो० । शुभकर्मणोऽचिरात् कर्त्तव्यत्वमुचितमित्यभिप्रेत्याऽऽह—रामेत्यादि ।

६२ । नरो० । वने यदि राक्षसैरसौ भक्ष्येत तदा मम पुत्रो निष्कण्टकं राज्यं भुञ्जीतेत्यभिप्रेत्याऽऽह—वन प्रयाहीति । मुनिवेशं दृष्ट्वा अवीरं मत्वा हठाद् भक्षयेतेत्यभिप्रेत्याऽऽह—चीरवासा जटाधर इति । दिनद्वयं दिनत्रयं वाऽत्र स्थिते कौशल्यया याचितो यदि राजाऽन्यथा भवेत्तदा मम पुत्रस्याभिषेको न भवेदित्याशङ्कयाऽऽह—अद्यैवेति । अत्रास्य स्थितिर्मुहूर्त्तमनुचितेति हृदि निधायाऽऽह—शीघ्रमिति । तवाऽऽज्ञया कथं वनं गच्छामीति चेत्तत्राऽऽह—पितुराज्ञयेति ।

६३ । नरो० । वनं गत्वा कतिचिद् दिनानि स्थित्वा यद्यागच्छेत्तदा मम पुत्रो रूढो न भवेदिति हृदि निधायाऽऽह—चतुर्दश समास्तत्रेति । बलवत्त्वे मत्पुत्रं पराभूय राज्यं हरिष्यते इत्यभिप्रेत्याऽऽह—उत्पन्नभोजन इति । वृद्धपितृपालनं विहाय कथं वनं गन्तव्यमिति चेत्तत्राऽऽह—एतदेवेत्यादि । राजाज्ञां विना तं विहाय कथं गन्तव्यमिति चेत्तत्राऽऽह—राजेत्यादि ।

---

1 ग ड 'शत्रोरधम', च 'स पुत्रोऽधमः' । 2 क ख-ग घ-ड च-छ 'अत' । 3 ग 'हि नातिभाषते', क-ख-व-ड 'हिर्नाभिभाषते' । 4 क-ख-ग-व 'वस मुन्यन्न-', ड 'वन्यमूलफलाशन', छ 'वसन् मूलफलाशन' । 5 च 'कर्त्तु, त्वमर्हसि' । 6 छ '-मेव' ।

श्रीराम उवाच—

भरतस्यैव राज्यं स्यादहं गच्छामि दण्डकान् ।
किन्तु राजा न वक्तीह मां न जानेऽत्र कारणम् ॥ ६४ ॥
[1]श्रुत्वैतद्रामवचनं दृष्ट्वा रामं पुरःस्थितम् ।
[2]प्राह राजा दशरथो दुःखितो दुःखितं वचः ॥ ६५ ॥
स्त्रीजितं भ्रान्तहृदयमुन्मार्गपरिवर्त्तिनम् ।
निगृह्य मां गृहाणेदं राज्यं पापं न [3]ते भवेत् ॥ ६६ ॥
एवञ्चेदनृतं नैव मां स्पृशेद्रघुनन्दन ।
इत्युक्त्वा दुःखसन्तप्तो विललाप नृपस्तदा ॥ ६७ ॥
हा राम हा जगन्नाथ हा मम प्राणवल्लभ ।
मां विसृज्य कथं घोरं विपिनं गन्तु[4]मर्हसि ।
इति रामं समालिङ्ग्य मुक्तकण्ठो रुरोद ह ॥ ६८ ॥

६६। नरो०। मां निगृह्य इदं राज्यं गृहाणेत्यन्वयः। तर्हि पापं भवेदिति चेत्तत्राऽऽह—पापं न ते भवेदिति। पितृनिग्रहे कथं पापं न भवेदिति चेत्तत्राऽऽह—स्त्रीजितमित्यादि। त्रयमत्र हेतुगर्भविशेषणम्। तथा हि स्त्रीजितत्वाद् भ्रान्तहृदयत्वं भ्रान्तहृदयत्वादुन्मार्गपरिवर्तित्वमिति। निग्रहानर्हस्यैव पितुर्निग्रहः पापजनक इति भावः।

६७। नरो०। तर्हि तव मिथ्यावादित्वं स्यादिति चेत्तत्राऽऽह—एवमित्यादि। सत्यपालनसामर्थ्ये सत्येव सत्यापालनं दोषजनकमिति भावः।

६८। नरो०। मुक्तकण्ठो रुरोद महास्वरं सन्नश्रु विमुक्तवानित्यर्थः।

---

६४। राजा किं केन कारणेनेह विषये मां न वक्ति तत् कारणं न जाने, अकर्त्तव्यतासंभावनाया मय्यभावादिति भावः। रा०।

६५। दुःखितं राज्ञो वचनेनेति शेषः। रा०। दुःखितं राज्ञोऽसदृशावस्थादर्शनेनेत्यर्थः।

६६। ज्येष्ठादाच्छिद्य कनिष्ठाय राज्यदानरूपे उन्मार्गे वर्तमानमत एव भ्रान्तहृदयं स्त्रीजितञ्च। पापं न तद् भवेदिति।

'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।
उत्पथं प्रतिपन्नस्य दण्ड एव विधीयते॥ वाल्मीकिरामायणम् २।२१।१३।

इति नीत्युक्तेः। रा०।

६७। त्वया बलात्कारेण ग्रहणाद् ममाप्येतद्वरदानानृतकृतो न दोष इत्याह—एवञ्चेदिति। रा०।

६८। यद्यपि तव जगन्नाथत्वाद्राज्यविपिनयोः समतैव तथाऽपि त्वद्वियोगे मम प्राणास्त्वद्वल्लभत्वात् त्वया सह गमिष्यन्तीत्याह—मम प्राणवल्लभेति। रा०।

---

1 ग 'श्रुत्वैव राम-'। 2 ग-ङ-छ 'आह'। 3 क-ख-घ 'तद्'। 4 ग-च '-मिच्छसि'।

विमृज्य नयने रामः [1]पितुः [2]सजलपाणिना ।
आश्वासयामास [3]नृपं शनैः स नयकोविदः ॥ ६९ ॥
किमत्र दुःखेन विभो राज्यं शास्तु मेऽनुजः ।
अहं प्रतिज्ञां निस्तीर्य पुन[4]र्यास्यामि ते [5]पुरम्
राज्यात् कोटिगुणं सौख्यं मम राजन् वने [6]सतः ॥ ७० ॥
त्वत्सत्यपालनं [7]देवकार्यं वाऽपि भविष्यति ।
कैकेय्याश्च प्रियो राजन् वनवासो महागुणः ॥ ७१ ॥
इदानीं गन्तुमिच्छामि व्येतु मातुश्च हृज्ज्वरः ।
सम्भारा[8]श्चापनीयन्तामभिषेकार्थमागताः ॥ ७२ ॥

---

७० । नरो० । वनं गत्वा नाऽऽगमिष्यतीति चिन्ता पितुर्मा भूदिति हृदि निधायाऽऽह—किमत्रेत्यादि । घोरवने महद्दुःखं तत् कथमयं सोढुं शक्नुयादिति चिन्ता पितुर्मा भूदिति हृदि निधायाऽऽह—राज्यादिति । राज्याद् राज्यसुखमपेक्ष्येत्यर्थः । सतो विद्यमानस्य ।

७१ । नरो० । अत्र महति दुःखे सत्यपि मां विहाय गमनमनुचितमिति चेत्तत्राऽऽह—त्वत्सत्यपालनमित्यादि । भरताय राज्यदान एव कैकेयीसन्तोषो भविष्यति किं वनगमनेनेति चेत्तत्राऽऽह—कैकेय्याश्चेति ।

७२ । नरो० । कानिचिद्दिनानि स्थीयतां पश्चाद् गन्तव्यमिति चेत्तत्राऽऽह—इदानी-मित्यादि । हृज्ज्वरो हृदयसन्ताप इत्यर्थः । सम्भारेष्वत्र सत्सु तान् दृष्ट्वा तातस्य शोकोद्रेको भविष्यतीति हृदि निधायाऽऽह—सम्भारा इति । सम्भाराः साधनानि । अपनीयन्तां दूरीक्रियन्ताम् ।

---

७० । शास्तु इत्यार्षम् । मदनुजेनापि राज्यकरणे तस्यापि त्वत्पुत्रत्वात् त्वद्-भक्तत्वाच्च दुःखं वृथेति भावः । रा० ।

७१ । मम सुखं तु विशिष्टम् । हे देव, त्वत्सत्यपालनरूपं कार्यं च भविष्यतीत्यधिको लाभः, विशेषेण देवानां कार्यञ्च रक्षोनाशरूपं भविष्यतीति ध्वनितम् । कैकेय्याश्च प्रियोऽतो महागुणो बहुगुण इत्यर्थः । रा० ।

---

1 च 'सजल पाणिना मुखम्' । 2 क 'सलिल' । 3 च 'शनैर्नृप' । 4 च '-र्द्रक्ष्यामि' । 5 ग-च 'पदम्' । 6 च 'भवेत्' । 7 क-ख-घ-ङ च छ 'देवकार्यं चापि' । 8, क ख ग घ ङ-च छ '-श्चोपक्रीयन्ता-' ।

मातरञ्च समाश्वास्य अनुनीय च जानकीम् ।
आगत्य [1]पादौ वन्दित्वा [2]तव यास्ये सुखं वनम् ॥ ७३ ॥
इत्युक्त्वा [3]त परिक्रम्य मातरं द्रष्टुमाययौ ।
कौशल्याऽपि हरेः पूजां कुरुते रामकारणात् ॥ ७४ ॥
होमञ्च कारयामास ब्राह्मणेभ्यो [4]ददौ धनम् ।
[5]ध्यायन्ती विष्णुमेकाग्र[6]मानसा मौनमास्थिता ॥ ७५ ॥
[7]अन्तःस्थमेकं घनचित्प्रकाशं निरस्तसर्वातिशयस्वरूपम् ।
विष्णुं सदानन्दमयं हृदब्जे [8]सा भावयन्ती न ददर्श रामम् ॥ ७६ ॥

इति श्रीमदध्यात्मरामायणे अयोध्याकाण्डे उमामहेश्वरसंवादे तृतीयोऽध्यायः ॥ ३ ॥

---

७३ । नरो० । तर्हि किं न गच्छसीति प्रश्ने आह—मातरश्चेत्यादि ।

७४ । नरो० । परिक्रम्य प्रदक्षिणीकृत्य । रामकारणाद् रामकृते इत्यर्थः, रामकारणमुद्दिश्येत्यर्थो वा ।

७५ । नरो० । एकाग्रमानसा विष्णुं ध्यायन्ती मौनमास्थितेत्यन्वयः । एकाग्रमानसा अनन्यवृत्तिमना. ।

७६ । नरो० । ध्यानप्रकारमाह—अन्तःस्थमित्यादिना । अन्तस्तिष्ठतीत्यन्तःस्थः, तम् । एतेन दूरस्थत्वं वारितम् । एकमद्वितीयम् । घना चासौ चिच्चेति सा तथा, सा चासौ प्रकाशश्चेति तम् । घनेत्यनेन परिणामो वारितः । प्रकाशते अर्थात् स्वयंप्रकाशः । प्रकाशदर्लेन स्वयं प्रकाशमानो जगत् प्रकाशयतीत्युक्तम् । निरस्तः सर्वातिशयः सर्वप्रपञ्चो येन तादृशं स्वरूपं यस्य तं तथा । एतेनाविद्याधीनत्वाभावः सूचितः । विष्णुं सर्वव्यापकम्, एतेनापरिच्छिन्नत्वं सूचितम् । सच्चासावानन्दमयश्चेति तं तथा । एतदंशस्वीकारो मुमुक्षोरानन्दावाप्तिप्रयोजनसिद्ध्यर्थः ।

[ अयोध्याकाण्डे तृतीयाध्यायव्याख्या समाप्ता ॥ ]

---

७६ । अन्तःस्थमन्तर्यामितया हृदये स्थितम् । ध्येयं रूपमाह—घनेत्यादि । निरस्तेत्यादिना निर्विकल्पसमाधिस्थेत्युक्तम् । सकलविशेषरहितध्यानस्यैव निर्विकल्पकत्वात् । निरस्तानि सर्वाण्यतिशयस्वरूपाणि भेदकस्वरूपाणि येनेत्यक्षरार्थः । रा० ।

[ अन्तःस्थमित्यादि । विष्णुं भावयन्ती ध्यायन्ती रामं न ददर्श, अन्तःस्थं सर्वेषां हृदिस्थम् । ननु किमन्तःस्थत्वेन परिच्छिन्नं प्रतिशरीरेणेत्याह—एकमद्वितीयम् । निरस्तसर्वातिशयस्वरूपं निरस्तः सर्वेषामतिशयो यस्मिन् यस्माद्वा एवम्भूतं स्वरूपं यस्य तम् । सदानन्दमयं नित्यानन्दस्वरूपम् । गो० ]

---

1 क 'पदौ' । 2. ङ 'ततो', च 'गमिष्येऽहं सुखं वने' । 3 क-ख-ग-घ-ङ-छ 'तु' । 4 च-छ 'धनं ददौ' । 5 क-ख-च 'ध्यायती' । 6. क-ख-ग-घ-ङ-च-छ '-मनसा' । 7 ग-छ 'अनन्य-' । 8 ग 'सभावयन्ती' ।

# चतुर्थोऽध्यायः

—*—

श्रीमहादेव उवाच—

ततः सुमित्रा [1]दृष्ट्वैनं रामं [2]राज्ञीं ससम्भ्रमा ।
कौशल्यां बोधयामास रामोऽयं समुपस्थित ॥ १ ॥
श्रुत्वैव[3] रामनामैषा बहिर्दृष्टि[4]प्रवाहिता ।
राम दृष्ट्वा विशालाक्षमालिङ्ग्याङ्के न्यवेशयत् ॥ २ ॥
[5]मूर्ध्न्यवघ्राय पस्पर्श गात्रं नीलोत्पल[6]च्छविम् ।
भुङ्क्ष्व पुत्रेति च प्राह मिष्टमन्नं क्षुधार्दितः ॥ ३ ॥
रामः प्राह न मे मातर्भोजनाव[7]सरः [8]कुत ।
दण्डकागमने शीघ्रं मम कालोऽद्य निश्चितः ॥ ४ ॥

---

२ । नरो० । श्रुत्वैवेत्यनेनात्यादर. सूचित । प्रवाहितेति चुरादावण्यस्य पाठो बोध्य । अङ्के क्रोडे ।

३ । नरो० । नीलोत्पलस्येव छवि कान्तिर्यस्य तं तथा ।

४ । नरो० । कुत इति । प्रश्नोत्तर दण्डकागमने इत्यादि ।

---

१ । चतुर्थे लक्ष्मणं क्रुद्धं सान्त्वयित्वोपदेशत ।
सीतया सहितोऽगच्छद् दण्डक चेति वर्ण्यते ॥

ससम्भ्रमा सादरा सुमित्रा राज्ञी कौशल्यां बोधयामासेत्यन्वयः । रा० ।

ततः कौशल्यायाः पूर्वाध्यायप्रस्तुतध्यानानन्तरमित्यर्थः । एनमिति 'न ददर्श राममि'त्यादिना पूर्वं प्रस्तुतं राम दृष्ट्वा ससम्भ्रमा सत्वरा सुमित्रा अय रामः समुपस्थित इत्युक्त्वा राज्ञीं कौशल्यां बोधयामास तद्गतामकरोत् ।

२ । बहिर्दृष्टिप्रवाहिता त्यक्तसमाधिरित्यर्थः । रा० ।

३ । पुत्रेति इति अप्लुतवद्भावात् सन्धिः । रा० ।

गात्र पस्पर्श एतेन स्नेहबाहुल्यं सूचितम् । हे पुत्र, त्वं क्षुधाऽर्दित. क्षुत्पीडितः, अतो मिष्टमन्नं भुङ्क्ष्व इति राम प्राह इत्यन्वयः ।

---

1 ङ-च 'दृष्ट्वैव', क 'दृष्ट्वा तं' । 2. च-क 'साऽतीव सम्भ्रमा' । ३ च '-वं' । 4 ग '-निवेशिनी' । 5 च 'मूर्धन्याघ्राय', क 'मूर्ध्न्युप' । 6. घ 'च्छवि' । 7 च '-सरोऽस्ति च' । 8. क-ख ग-घ ङ 'कुत.' ।

कैकेयीवरदानेन सत्य[1]सन्धः पिता मम ।
भरताय ददौ राज्यं [2]ममा[3]प्यरण्यमुत्तमम् ॥ ५ ॥
चतुर्दश समास्तत्र ह्युषित्वा [4]मुनिवेशधृक् ।
आगमिष्ये पुनः शीघ्रं [5]न चिन्तां कर्त्तुमर्हसि ॥ ६ ॥
तच्छ्रुत्वा सहसोद्विग्ना मूर्च्छिता पुनरुत्थिता ।
आह [6]रामं सुदुःखार्त्ता दुःखसागरसंप्लुता ॥ ७ ॥
यदि राम वनं सत्यं यासि चेन्नय मामपि ।
त्वद्विहीना [7]क्षणार्द्धं वा जीवितं धारये कथम् ॥ ८ ॥
यथा गौर्बालकं वत्सं त्यक्त्वा तिष्ठेन्न कुत्रचित् ।
तथैव त्वां न शक्नोमि त्यक्तुं [8]प्राणात् प्रियं सुतम् ॥ ९ ॥
भरताय प्रसन्नश्चेद् राज्यं राजा [9]प्रयच्छतु ।
किमर्थं वनवासाय त्वामाज्ञापयति प्रियम् ॥ १० ॥
कैकेय्या वरदो राजा सर्वस्वं वा प्रयच्छतु ।
त्वया किमपराद्धं [10]हि कैकेय्या वा नृपस्य वा ॥ ११ ॥

५ । नरो० । सत्यसन्धो दृढप्रतिज्ञः ।

६ । नरो० । वनं गत्वा माऽऽगमिष्यति तत्र वा एकाकी कथं स्थास्यतीति चिन्ताकुला माता मा भूदिति हृदि निधायाऽऽह—चतुर्दश समा इत्यादि ।

---

५ । [ मामप्यारण्यमुत्तममिति, आरण्यमरण्यराज्यं मां प्रति ददौ । गो० ]

६ । मुनिवेशधृक् चीराजिनधारी, समा वत्सरान् व्याप्य तत्र दण्डकारण्ये उषित्वा पुनः शीघ्रं चतुर्दशवत्सरानन्तरमेव । एतेन ततः परं कालविलम्बमात्रमपि न करिष्यामीति ध्वनयन् मातुश्चिन्ताभारं लघूकर्त्तुं यतते इति भावः ।

७ । सप्लुता मग्ना । रा० ।

उद्विग्ना सा मूर्च्छिता हतचेतनतया भूमौ पतिता, पुनर्मूर्च्छापनोदेन उत्थिता कथञ्चिदुपविष्टेत्यर्थः । दुःखसागरसंप्लुता दुःखवारिधौ पतितेवेत्यर्थः ।

---

1 ङ '-बन्ध' । 2 छ '-मह्यमारण्य-' । 3. ख-घ '-प्या-' । 4 ग-ङ-च छ 'मुनिभि सह' । 5. ग-ङ च 'चिन्ता मा' । 6. ङ 'रामञ्च कौशल्या' । 7. च 'क्षणादूर्ध्वं' । 8 च 'प्रियतर सुतम्' । 9. घ 'स यच्छ' 10. च 'वा' ।

पिता गुरुर्यथा राम [1]तवाहमधिका [2]ततः ।
पित्राज्ञप्तो वनं गन्तुं वार[3]येयमहं [4]सुतम् ॥ १२ ॥
यदि गच्छसि मद्वाक्यमुल्लङ्घ्य [5]नृपवाक्यतः ।
तदा प्राणान् परित्यज्य गच्छामि यमसादनम् ॥ १३ ॥
लक्ष्मणोऽपि ततः श्रुत्वा कौशल्यावचनं रुषा ।
उवाच राघवं वीक्ष्य दहन्निव जगत्त्रयम् ॥ १४ ॥
उन्म[6]त्त भ्रान्त[7]मनसं कैकेयीवशवर्त्तिनम् ।
बद्ध्वा निहन्मि भरतं तद्बन्धून् मातुलानपि ॥ १५ ॥
अद्य पश्यन्तु मे शौर्यं लोकान् प्रदहतः [8]पुरा ।
राम त्वमभिषेकाय कुरु यत्नमरिन्दम ॥ १६ ॥

---

१२ । नरो० । ततस्तमपेक्ष्येत्यर्थं, अधिका गर्भधारणपोषाभ्यामिति शेष· ।

१५ । नरो० । ततो वनगमनादुत्पथगामिनोऽपि पितुर्वधोऽनुचित इति हृदि कृत्वाह—बद्ध्वेति । तस्मिन् मृतेऽपि तदानी तद्बन्धवो विघ्नं करिष्यन्तीति चेत्तत्राऽऽह—तद्बन्धूनित्यादि ।

---

१२ । यथा पिता गुरुस्तथाऽहमपि तव गुरुः । यद्वा ततोऽधिका ।

'पितुर्दशगुणं माता गौरवेणातिरिच्यते ।

इति स्मृते । एवञ्च मदाज्ञया वनागमनमेवोचितमिति भाव· । रा० ।

पिता गुरुर्यथेत्यादि, ततस्त्वत्पितु· सकाशादहम् अधिका गरीयसी, अतो मदाज्ञा-परिपालनमेव तव सर्वथोचितमिति भाव । पितृतो मातु· श्रेष्ठत्वमाह वाल्मीकीये—

पितॄन् दश च मातैका सर्वां वा पृथिवीं विभो ।
गुरुत्वेनाभिभवति कोऽस्ति मातृसमो गुरुः ॥
पतिता गुरवस्त्याज्या माता तु न कथञ्चन ।
गर्भधारणपोषाभ्यां तेन माता गरीयसी ॥ २।२२।१३-१४ ।

१३ । न तु वाक्योल्लङ्घनजन्येयं प्राणपरित्यागवासना अपि तु त्वां विहायात्र स्थातुं सर्वथैवासमर्थाऽहमिति यमसादनगमनमेव मे श्रेय इति भाव· ।

१५ । उन्मत्तमिति । यत· कैकेयीवशवर्त्तिनम् अतः कामवशगत्वादुन्मत्तं हिताहितज्ञान-शून्यमित्यर्थ· । यत उन्मत्तं तत एव भ्रान्तमनसं राजानमिति शेष·, बद्ध्वा ।

१६ । पुरा लोकान् प्रदहतः कालाग्निरुद्रस्येवेत्यर्थ· । अनेन तदवतारत्वं स्वस्य सूचितम् । रा० ।

---

1 क 'तथाऽह-' । 2. ग च छ 'तव' । 3 च '-ये ला' । 4 ङ 'तत' । 5 क 'पितृ-' । 6. छ '-सभ्रान्त' । 7 च '-हृदय' । 8. च 'पुर' ।

धनुष्पाणिरहं तत्र निहन्यां विघ्नकारिणः ।
इति ब्रुवन्तं सौमित्रिमालिङ्ग्य रघुनन्दनः ॥ १७ ॥
शूरोऽसि रघुशार्दूल ममात्य[1]न्त हिते रतः ।
जानामि [2]सर्वं ते सत्यं किन्तु [3]ते समयो न हि ॥ १८ ॥
यदिदं दृश्यते [4]विश्वं राज्य देहादिकञ्च [5]यत् ।
यदि सत्यं भवेत्तत्र आयासः सफलश्च ते ॥ १९ ॥
[6]भोगा मेघविता[7]नस्थविद्युल्लेखेव चञ्चला:[8] ।
आयुरप्यग्निसन्तप्तलोहस्थजलबिन्दुवत् ॥ २० ॥
यथा व्यालगलस्थोऽपि भेको दंशानपेक्षते ।
तथा कालाहिना [9]ग्रस्तो लोको भोगानशाश्वतान् ॥ २१ ॥

---

१८ । नरो० । समयः प्रतिज्ञा । न हि उचित इति शेष ।

१९ । नरो० । समयस्यानौचित्य दर्शयन्नाह—यदिदमित्यादि । सामान्यविशेषन्यायाद् विश्वं राज्यं देहादिकमित्युक्तमिति नास्ति विरोधः ।

२० । नरो० । राज्ये सति भोगा भविष्यन्ति तत्र यत्न' कथ विफल इति चेत्तत्राऽऽह—भोगा इत्यादि । मेघ एव वितानः 'चाँदोया' इति ख्यात, तत्स्था चासौ विद्युल्लेखा चेति सा तथा । आयुषि स्थिते भोगा. पुनरुत्पत्स्यन्ते इति चेत्तत्राऽऽह—आयुरपीति ।

२१ । नरो० । अग्नीत्यादिना आयुषोऽत्यन्तास्थैर्यमुक्तम्, तदेव द्रढयितुं सदृष्टान्त-

---

१७ । रघुनन्दन. सौमित्रिमालिङ्ग्य आहेति शेष. ।

१८ । ते सर्वं कालाग्निरुद्रतुल्यत्वं तद्रूपत्वञ्च सत्यमेव जानामि किन्तु तस्य पराक्रमस्य समय इदानीं न, किन्तु चतुर्दशवर्षे इति व्यङ्ग्यम् । रा० ।

१९ । अथ तत्रत्यजनप्रतारणाय संसारानित्यत्वप्रदर्शनेन रोषान्निवर्त्तयति—यदिदमिति । सर्वं जगद् राज्यम् अन्ततः स्वदेहेन्द्रियादिकं च न सत्यम् । तथा च किं कस्यार्थे उपादेयं येनैवं रोषः कार्य इति भाव । यदि सत्यं भवेत्तदा ते आयास. सफलो भवेदित्यन्वय । रा० ।

२० । मेघवितानं मेघसमूहः । एवञ्च भोग्यभोक्त्रोरुभयोरप्यस्थिरत्वात् सर्वं व्यर्थमिति भाव. । रा० ।

भोगा भोग्या राज्यादय', मेघवितानो मेघसमूह., तत्स्थविद्युल्लेखेव चञ्चला क्षणिका. । अग्निसन्तप्तलोहस्थजलबिन्दुर्यथा नश्यति तथा आयुरपीत्यर्थ. । न तु कदाचिदप्यायुषोऽविनाशित्वमिति भावः ।

२१ । यथेति । यथा सर्पगलवर्त्ती भेकस्तद्गलवर्त्तिकोमलमांसभोगाय आसन्नमपि

---

1. घ-ङ च-छ '-न्तहिते' । 2 ग च-छ 'सत्य' । 3 घ 'तत्समयो' । 4 क-ख-ग-घ-ङ 'सर्वं' । 5 छ 'तत्' । 6 च 'लक्ष्मीर्मेघानिलानस्था वि-' । 7. ग-छ '-नस्था वि-' । 8. च 'ला' । 9 च 'वशो' ।

करोति दुःखेन हि कर्मतन्त्रं शरीरभोगार्थमहर्निशं नरः ।
देहस्तु भिन्नः पुरुषात् समीक्ष्यते को वाऽत्र भोगः पुरुषेण [1]भुज्यते ॥२२॥
पितृमातृ[2]सुहृद्भ्रातृदारबन्ध्वादिसङ्गमः ।
प्रपायामिव जन्तूनां नद्यां काष्ठौघवच्चलः ॥ २३ ॥

---

माह—यथेत्यादि । व्यालगलस्थः सर्पकण्ठस्थो भेको मण्डूको दंशानपेक्षते दंष्टुं वाञ्छतीत्यर्थः । काल एवाहिः सर्पस्तेन तथा । अशाश्वतानित्यान् ।

२२ । नरो० । तथाऽपि भोगार्थं कर्म कर्त्तुं युज्यत इति चेत्तत्राऽऽह—करोतीत्यादि । तत्राऽऽयासो नास्तीति चेत्तत्राऽऽह—दुःखेनेति । अभोगाद देहभोग एव पुरुषभोग इति चेत्तत्राऽऽह—देहस्त्वित्यादि ।

२३ । नरो० । पित्रादिमेलनार्थं शरीरपालनमुचितमिति चेत्तत्राऽऽह—पित्रित्यादि । दारा

---

स्वमृत्युमजानंस्तद्गलमांसदशनमपेक्षते इच्छति तथा कालाहिग्रस्तो लोको भोगान् इच्छतीत्यर्थः । रा० ।

नन्वेवं विजानन्तोऽपि सन्तः कथं राज्यभोगादीनपेक्षन्त इत्यत आह—यथा व्यालगलस्थेति । व्यालः सर्पस्तद्गलस्थो भेकोऽज्ञानान्धतया निश्चितमपि स्वमृत्युम् अजानन् इव इत्यर्थः । दंशान् स्वभक्षणीयकीटविशेषान् अपेक्षते, तथा भोगसुखादिभिराकृष्टा जीवा मृत्युम् अविजानन्त इव अशाश्वतान् विनाशपरिणामिनोऽपि भोगानपेक्षन्ते इति भावः । तथा चोक्तम्—

अजानन् दाहार्तिं विशति शलभो दीपदहनं
न मीनोऽपि ज्ञात्वा वृतबडिशमश्नाति पिशितम् ।
विजानन्तोऽप्येतान् वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ इति ।

२२ । कर्मतन्त्रं धनार्जनादिव्यापारं काम्यं वैदिकं कर्म च । नन्वत्र कस्य भोगः, शरीरस्य उताऽऽत्मनः ? नाद्य इत्याह—देहस्त्विति । पुरुषाद् भेदवतस्तस्यात्यन्तजडत्वात् सुखादिसाक्षात्काररूपभोगस्य तत्रासम्भव इति भावः । नान्त्य इत्याह—को वाऽत्रेति । तस्य शुद्धस्वभावत्वेनापरिणामित्वात् तस्य भोगासम्भव इति भावः । अत्र देहशब्देन चित्तमप्युपलक्ष्यते, यद्यपि तयोः परस्परं विवेकाग्रहाच्चित्तस्य भोगस्तथाऽपि स भ्रान्तिमूलक इति हेय एवेति तात्पर्यम् । रा० ।

[ करोति दुःखेन हीत्यादि । शरीरभोगार्थमिति । शरीरस्यैव भोगार्थं न त्वात्मनः । ननु आत्मैव कर्त्ता भोक्ता च 'अहं भुञ्जे' इत्यादिप्रतीतेः, कथं शरीरभोगार्थमित्युच्यते इत्यत आह—देहस्त्विति । पुरुषाद् जीवात्मनो भिन्नः समीक्ष्यते विवेकिभिरित्यर्थः । को भोगः पुरुषेण भुज्यते, न कोऽपीत्यर्थः, अकर्तृत्वान्निर्गुणत्वाच्च । गो० ]

२३ । एवं भोगस्यापारमार्थिकत्वमुक्त्वेदानीं वैराग्याय पुत्रादिसङ्गस्यास्थिरत्वमाह—पित्रिति । प्रपा पानीयशाला । काष्ठौघयोरिव काष्ठौघवत् । रा० ।

---

1. च 'भोज्यते', ङ 'पूज्यते' । 2 क-ख घ '-सुत-' ।

छायेव लक्ष्मीश्चपला प्रतीता तारुण्यम[1]ब्जाम्बुवदध्रुवञ्च ।
स्वप्नोपमं स्त्रीसुखमायुरल्पं तथाऽपि जन्तोरभिमान एषः ॥ २४ ॥
संसृतिः स्वप्न[2]सदृशी सदा [3]रोगादिसङ्कुला ।
गन्धर्वनगरप्रख्या मूढस्तामनुवर्त्तते ॥ २५ ॥

---

भार्या वधूः । पुत्रादिभार्यापित्रादिसङ्गमस्य कीदृगस्थिरत्वमित्यपेक्षायामाह—प्रपायामिवेत्यादि । प्रपायां पानीयशालिकायाम् । काष्ठौघवत् काष्ठसमूहवत् ।

२४ । नरो० । सम्पत्त्यादीनामस्थिरत्वं दर्शयन् तेषां स्थिरत्वं मन्यमानं जन्तुं निन्दति—छायेवेत्यादिना । केन चपला लक्ष्मीरित्यपेक्षायामाह—छायेवेति, तारुण्यं तरुणत्वम्, अध्रुवम् अशाश्वतम् । किमिवाध्रुवमित्यपेक्षायामाह—अब्जाम्बुवदिति, पद्मपत्रजलवदित्यर्थः । स्वप्नोपमं स्वप्नदृष्टगजतुरगादितुल्यमित्यर्थ । तथाऽपि सम्पत्त्यादीनामस्थिरत्वेऽपि । अभिमानः स्थायित्वेन ज्ञानम् ।

२५ । नरो० । संसृतेरसारत्व तथाऽपि रोगादिव्याप्तत्वञ्च दर्शयंस्तामनुवर्तमानं निन्दति—संसृतिरित्यादिना । संसृति शरीरम् । स्वप्नसदृशीति स्वप्नदृष्टो गजतुरगादिर्यथा स्वप्नक्षयेऽदर्शनं प्राप्नोति तथा प्राक्तनकर्मक्षये संसृतिरपीति भाव । गन्धर्वनगरप्रख्या गन्धर्वनगरतुल्या, गन्धर्वनगर यथा पुन. पुनरागत्य नश्यति तथेयमपीति भाव ।

---

[ ननु तथाऽपि मातृपित्रादीनां भोगार्थं राज्यादिकमपेक्षणीयमेव, न , तेषामपि क्षणिकसङ्गत्वादित्याह—पित्रित्यादि । एषां सङ्गम. प्रपायां जलशालिकायां जलार्थिनां पान्थजनानां सङ्गम इव, नद्यां प्रवाहेण नीयमानस्य काष्ठसमूहस्येव । दृष्टान्तद्वयेन प्रयोजनवशात् कर्मवशत्वाच्च मेलनम्, तत्र जलप्रवाहवत् कर्म सयोगवियोगहेतु. । गो० ]

२४ । [ स्थितेष्वप्येषु लक्ष्मीर्न तिष्ठतीत्याह—छायेवेत्यादि । लक्ष्मी· सम्पत् । यथादित्यगतिवशेन छाया कदाचित् पुरोवर्त्तिनी कदाचित् पृष्ठादिवर्त्तिनी, न क्वापि स्थिरा तथा लक्ष्मीरपि । भोक्तृभोग्यादीनामपि क्षणिकतामाह—अब्जाम्बुवदिति । पद्मपत्रजलवदध्रुवं चञ्चलं स्वप्नोपमम् अनन्तरक्षणे विस्मरणात् । एषोऽभिमानो नित्यत्वाभिमानमात्रं स्मृतिभ्रंशेति । गो० ]

२५ । संसृति ससारस्थिति· स्वप्नसदृशी अल्पकालमनुवर्तते तामुपादेयत्वेन मनुते इत्यर्थ । रा० ।

'संसूति· स्वप्नसदृशी'ति गोपालचक्रवर्त्तिधृत. पाठ. । सूयते गृह्यतेऽसौ सूतिर्देहः स्वप्न सदृशी स्वप्नतुल्या क्षणविनाशित्वात् । सा सूतिरपि न यावज्जीव सुखभोगसमर्था । कुत इत्याह—रोगादिसङ्कुलेति । साऽपि रोगादिना निरन्तरमेव आच्छन्ना तिष्ठतीति भावः ।

---

1 क-ख-ग '-म्बूर्मिव-' । 2 ङ '-सदृक्षा' । 3. च 'रोषा-' ।

[1]आयुः संक्षीयते [2]यस्मादादित्यस्य गतागतैः ।
दृष्ट्वाऽन्येषां जरामृत्यू [3]कथञ्चिन्नैव बुध्यते ॥ २६ ॥
स एव दिवसः सैव रात्रिरित्येवमूढधीः ।
भोगाननुपतत्येव कालवेगं न पश्यति ॥ २७ ॥
प्रतिक्षणं क्षरत्येतदायुरामघटाम्बुवत् ।
सपत्ना इव रोगौघाः शरीरं प्रहरन्त्यहो ॥ २८ ॥

---

२६-२७ । नरो० । सूर्यस्य गमनमागमनं चाऽऽयुःक्षयस्य सूचकम् । जरामृत्यू दृष्ट्वाऽपि । यतः केनापि प्रकारेण नैव बुध्यते अतः स एव दिवसः सैव रात्रिरित्येव । मूढधियः सतो भोगानुशोचनाश्रयत्वं कालवेगदर्शनाभावाश्रयत्वञ्च दर्शयति—आयुः संक्षीयत इति । अन्तर्भावितण्यर्थत्वमङ्गीकृत्य कर्मकर्तरि प्रयुक्तम् । यद्वा क्षिधातुर्दिवादिरपि विद्यते इति नास्ति विरोधः । स एव दिवसः सैव रात्रिरित्येव मूढा अयथार्था धीर्यस्य स तथा ।

२८ । नरो० । अजस्रक्षरदायुषि सदा रोगवृन्दव्याप्ते आसन्नजरे आसन्नमृत्यौ नश्वरे बीभत्सरसालम्बने देहे आत्मबुद्धिरत्यन्तमनुचितेति दर्शयन्नाह—प्रतिक्षणमित्यादिना । सपत्ना इव रोगौघा रोगसमूहाः ।

---

रोगादीत्यादिपदेन शोकादीनामपि ग्रहणम् । रोगादिसङ्कुला सन्ततं रोगशोकादिभियुक्ता ।

२६ । [ नन्वेवभूते देहे कथमभिनिवेशं करोति अज्ञानादित्याह—आदित्यस्य गतागतैरिति । दिवारात्रिभिरन्येषां पित्रादीनां जरामृत्युप्रभृतीन् समक्षं दृष्ट्वाऽपि तत्तुल्यतया आत्मनो जरामृत्युप्रभृति न बुध्यते । कथञ्चिदिति, अन्येन ज्ञानिना बाधितोऽपि न बुध्यत इत्यर्थः । गो० ]

२७ । पूर्वपूर्वभुक्तदिनरात्र्यपेक्षयोत्तरोत्तरस्य विशेषमपश्यन् अतो मूढमतिः, कालवेगं पूर्वपूर्वावस्थापहारकं न पश्यति अतो भोगाननुपतति तेष्वासज्जते । रा० ।

स एवेति विधेयप्राधान्यादन्यलिङ्गता, एवं सैवेत्यत्रापि । तथा च—तद् आदित्यस्य आगतम् एव दिवसो गतञ्च रात्रिरित्येव मत्वेत्यर्थः, मूढधीः भोगान् अनुपतति भोगसमूहं प्रत्युन्मुखो भवति। येन तावदायुःक्षयकारकत्वेनादित्यस्य गतेनागतेन च जनानां विरागो जनयितव्यस्तेनैव दिनरात्र्यात्मना मूढधियं प्रति भोगासक्तिरुत्पाद्यत इत्यहो आश्चर्यमिति भावः ।

२८ । [ एतदेव स्पष्टयति—प्रतिक्षणमिति । आमघटोऽपक्वार्द्रघटस्तत्स्थजलवत् क्षरति क्षीयते । न केवलमायुः क्षरति जनो रोगैरपि सततं दग्धो भवतीत्याह—सपत्ना इति । सपत्नाः शत्रवः । गो० ]

---

1 क-ग 'आयुर्वं ची-', ख-घ-ङ च 'आयुष्य ची-'। 2. च 'नियमा-'। 3. ग 'कथं त्वमात्मनि बुध्यसे', च 'कथं नाऽऽत्मनि बुध्यसे', ङ 'कथञ्चिन्न तु'।

जरा व्याघ्रीव पुरतस्तर्जयन्त्यवतिष्ठते ।
मृत्युः सहैव यात्येष समयं [1]सम्प्रतीक्षते ॥ २९ ॥
देहेऽहंभावमापन्नो राजाऽहं लोकविश्रुतः ।
इत्यस्मिन्[2]मनुते [3]जन्तुरन्ते विड्भस्मसंज्ञिते ॥ ३० ॥
त्वगस्थिमांसविण्मूत्ररेतोरक्तादिसंयुतः ।
विकारी परिणामी च देह आत्मा कथं [4]वद ।
यमास्थाय भवाल्लोँकं दग्धुमिच्छसि[5] लक्ष्मण ॥ ३१ ॥

---

२९ । नरो० । जरा वृद्धत्वं पुरतोऽग्रे तर्जयन्ती भर्त्सयन्ती । तर्हि क्षणार्द्धमपि जन्तुर्न जीवेदिति चेत्तत्राऽऽह—समयं सम्प्रतीक्षत इति ।

३० । नरो० । अन्ते अवसाने । शृगालादिना भक्षिते विट्संज्ञा, दग्धे भस्मसंज्ञा ।

३१ । नरो० । अन्ते बीभत्सरसालम्बनं नेदानीमिति चेत्तत्राऽऽह—त्वगस्थीत्यादि । देहात्मनोरभेदासम्भवं दर्शयित्वा लक्ष्मणं प्रत्याह—विकारीत्यादि । विकारी उत्पत्तिनाशादिमान्, परिणामी भस्मादिरूपपरिणामवानित्यर्थः । एतादृशं नश्वरदेहं प्राप्य तवैतादृशः कोपोऽनुचित इति सूचयन्नाह—यमित्यादि ।

---

२९ । आगतप्रायाऽहं किं मूढोऽसीति तर्जयन्ती । मृत्युः समयं प्रहर्त्तुं संप्रतीक्षते सह तिष्ठन्नपि । रा० ।

[ जरा व्याघ्रीवेत्यादि । मृत्युरिति । सहैव देहेन सहैव, एष पुरोवर्त्तीव मृत्युरायाति आगच्छति नियमितत्वात् । तर्हि कथं न मारयतीत्यत आह—समयमिति । समयं नियतकालं प्रारब्धक्षयकालं वा । गो० ]

३० । देहे उपचयादिविशिष्टे कृमिविड्भस्मसंज्ञिते । भूस्थे आद्या संज्ञा, जन्तुभिर्भक्षिते मध्या संज्ञा, दग्धे अन्त्या । तादृशे देहे अहं राजेति अस्मिन् लोके मनुते । रा० ।

३१ । अथ देहस्याऽऽत्मत्वं खण्डयति—त्वगिति । त्वगादिसंयुक्तत्वाद् विकारी रसादिधातुविकारवान् । परिणामी बाल्याद्यवस्थापरिणामवान् । आत्मा त्वविकारी अपरिणामी चेति विपरीतः श्रुत्यादिभिरुक्त इति भावः । रा० ।

[ देहेऽहंभावोऽसकृत उक्तेत्याह—त्वगस्थीति । त्वगादिभिः संयुत एकीभूतस्तदात्मको देहः, अत एव विकारी विकारवान् अत एव च परिणामी मरणधर्मा । गो० ]

यमास्थायेति । यं देहमास्थाय देह एवाहमित्यास्थां कृत्वेत्यर्थः ।

---

1 छ 'सम्प्रचचते' । 2 च-छ '-म्मन्यते' 3 क-ख ग-घ-च 'जन्तु कृमिवि-' । 4 ग 'भवेत्' । 5 च-छ '-सि' ।

देहाभिमानिनः सर्वे दोषाः प्रादुर्भवन्ति हि ।
देहोऽहमिति [1]या बुद्धिरविद्या सा प्रकीर्त्तिता ॥ ३२ ॥
नाहं देहश्चिदात्मेति बुद्धिर्विद्येति [2]भण्यते ।
अविद्या संसृतेर्हेतुर्विद्या तस्या निवर्तिका ॥ ३३ ॥
तस्माद् यत्नः सदा कार्यो विद्याभ्यासे मुमुक्षुभिः ।
कामक्रोधादयस्तत्र शत्रवः शत्रुसूदन ॥ ३४ ॥
तत्रापि क्रोध एवालं मोक्षविघ्नाय [3]सर्वदा ।
येनाऽऽविष्टः पुमान् हन्ति पितृमातृ[4]सुहृत्सखीन् ॥ ३५ ॥

---

३२ । नरो० । देहे आत्मबुद्धौ का हानिरिति चेत्तत्राऽऽह—देहाभिमानिन इत्यादि । देहाभिमानिनो देहात्मबुद्धेरित्यर्थः । दोषा मात्सर्यासूयादयः । हि निश्चितम् । देहाभिमानिनः सर्वे दोषाः प्रादुर्भवन्तीति वाक्यं श्रुत्वा देहे आत्मबुद्धिः किमाकारा किमाख्या किंप्रयोजनिका तस्या निवर्त्तिका बुद्धिः किमाकारिका किमाख्या इति पृच्छन्तं लक्ष्मण प्रत्याह—देहोऽहमिति ।

३४ । नरो० । उपसहरति—तस्मादिति । विद्योत्पत्तावुपायः क इति प्रश्ने आह—कामक्रोधादय इत्यादि । तत्र विद्याभ्यासे, कामक्रोधादीनां त्याग एव विद्योत्पत्तौ कारणमिति भावः । कामादिशत्रुत्यागे तव योग्यताऽस्तीति सूचनाय शत्रुसूदन इत्युक्तम् ।

३५ । नरो० । कामादिषु मध्ये कोपस्य मोक्षातिविघ्नकारकत्वप्रतिपादनाय तत्रा-

---

३२ । ते दोषा देहाभिमानिनः प्रादुर्भवन्ति तस्मात्तं त्यजेति भाव । रा० ।

[ संसारहेतुरविद्यैवेत्याह—देहोऽहमित्यादि । देहोऽहबुद्धिरेवाविद्या प्रकीर्त्तिता मुनिभिरित्यर्थः । गो० ]

देहाभिमानिनो देहात्मज्ञानसम्पन्नस्य दोषाः कामक्रोधादयः । देहाभिमानिनोऽस्य रागादिदोषप्रादुर्भावकत्वतत्कारणाविद्यारूपत्वात्तस्येत्याह—देहोऽहमिति ।

३३ । [ प्रसङ्गाद् विद्यामपि निरूपयति—नाहमिति । चिदात्मेति नाहं देहः किन्तु चिद्रूप आत्मा इति बुद्धिर्विद्येति भण्यते मुनिभिरिति शेषः । गो० ]

देह इत्युपलक्षणम्, अन्तःकरणादेरपि । तदाह—चिदात्मेति । संसृतेः संसारमूलस्य रागादिदोषस्य शत्रव इति । स्वजनकाविद्योच्छेदकत्वाद् विद्याभ्यासे कामादयः शात्रवं कुर्वन्तीत्यर्थः । रा० ।

३४ । [ कामेत्यादि । तत्र विद्याभ्यासे । शत्रुमर्दन इति शत्रुनाशकस्य तव कामादीनां शत्रूणां नाशोऽवश्यं करणीय इति सूचयति । गो० ]

३५ । प्रकृतोपयोगितया क्रोधस्यैव मुक्तिविघाते प्राधान्यमाह—तत्रापीति । पित्रादिवधेन पातित्यं प्राप्तो न श्रवणाद्यधिकारीति भावः । रा० ।

---

1. ख 'वा' । 2 क 'गीयते' । 3 क 'कल्पते' । 4. ग-ड '-मुतान् स-' ।

क्रोधमूलो मनस्तापः क्रोधः संसारबन्धनः[1] ।
धर्मक्षयकरः क्रोधस्तस्मात् क्रोधं परित्यज[2] ॥ ३६ ॥
क्रोध [3]एव [4]यमः साक्षात् तृष्णा वैतरणी नदी ।
सन्तोषो नन्दनवनं शान्तिरेव हि कामधुक् ॥ ॥ ३७ ॥
तस्माच्छान्तिं भजस्वाद्य शत्रुरेवं भवेन्न ते ।
देहेन्द्रियमनःप्राणबुद्ध्यादिभ्यो विलक्षणः ॥ ३८ ॥

---

पीत्याद्युक्तम् । तत्रापि कामादिष्वपि अलंमोक्षविघ्नाय अतिमोक्षप्रतिबन्धाय । तदेव द्रढयति—येनेत्यादिना । क्रोधमूलपित्रादिहननजन्यपापवत्त्वेन नितान्तनिर्मलस्वान्तत्वाभावेनाधिकारित्वमेव न स्यात्, मोक्षस्य का कथेति भाव ।

३६ । नरो० । अपरमपि क्रोधफलं दर्शयति—क्रोधेति । ससारबन्धनो जन्ममरणादिजनक इत्यर्थ ।

३७ । नरो० । क्रोधस्य स्वाश्रयसहारकत्वं दर्शयति—क्रोध एवेत्यादिना । एवकारोऽत्र इतरयोगव्यवच्छेदार्थ. । साक्षादिति अंशतदशवारणाय । तृष्णाऽवश्यं त्याज्येति सूचनाय—तृष्णा वैतरणी नदीत्युक्तम् । पीडादातृत्वं साधारणधर्म । तर्हि क. पदार्थ उपादेय इत्यपेक्षायामाह—सन्तोषो नन्दनवनमिति । यथालाभतुष्टि' सन्तोष । सुखदत्वमनयो साधारणधर्म. । अस्मात् पर' कोऽपि पदार्थ. सेव्यो विद्यते न वेति प्रश्ने आह—शान्तिरेव हि कामधुगिति । रागादिशून्यत्व शान्ति. कामधुक् कामदुघा । अभीष्टदातृत्वमनयो साधारणधर्म. ।

३८ । नरो० । उपसंहरति—तस्मादिति । 'विकारी परिणामी च देह आत्मा कथ वदे'ति श्रीरामवाक्यार्थस्मरणादिदानीं किंस्वरूप आत्मेति पृच्छन्तं लक्ष्मण प्रत्याह—देहेन्द्रियेत्यादि । देहादीनामात्मत्ववारणाय विलक्षण इत्यन्तमुक्तम् । विलक्षणो भिन्न ।

---

[ विशेषत' क्रोधो नाशनीय इत्याह—तत्रापीति । तत्र कामादिषु मध्ये अलं समर्थ., क्रोधाविष्टस्य कार्याकार्यविचारशून्यत्वात् । एतदेवाऽऽह—येनेत्यादि । गो० ]

३७ । महान् शत्रुः परिणामे स्वप्राणापहारकत्वात् । 'क्रोध एव यम साक्षादि'ति पाठान्तरम् । वैतरणी नदी दुस्तरत्वात् । विषयलाभै. कथमप्यनपगमादिति भाव. ।

'न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥' (मत्स्यपु० ३४।१०)

इत्युक्तेः । नन्दनवनमानन्दजनकत्वात् । रा० ।

[ क्रोध एवेति । हितानुसन्धानाभावेन नाशहेतुत्वात् । वैतरणी तरङ्गबाहुल्यात्

---

1 क-ख-ग-घ '-नम्' । 2 ग ङ छ '-र्जेत्' । 3 क ख-ग-घ 'एष' । 4. क-ख-ग-घ-छ महान् शत्रुस्तु-', च 'महाशत्रु- ।

आत्मा शुद्धः स्वयंज्योतिरविकारी निराकृतिः ।
यावद्देहेन्द्रियप्राणैर्भिन्नत्वं नाऽऽत्मनो विदुः ॥ ३९ ॥
तावत् संसारदुःखौघैः पीड्यन्ते मृत्युसंयुताः ।
तस्मात्त्वं सर्वदा भिन्नमात्मानं हृदि भावय ॥ ४० ॥
बुद्ध्यादिभ्यो बहिः सर्वमनुवर्त्तस्व मा [1]खिद ।
भुञ्जन् प्रारब्धमखिलं सुखं वा दुःखमेव वा ॥ ४१ ॥

---

३९ । नरो० । शुद्धः परमार्थतोऽन्तःकरणाद्युपाधिसम्बन्धरहितः, स्वयं स्वप्रकाशः, ज्योतिश्चिद्रूपः, अविकारी जन्ममरणादिशून्यः । एतेन नित्यत्वं सूचितम् । निराकृतिराकार-शून्यः । एतेनापरिच्छिन्नत्वं सूचितम् । तर्हि संसारदुःखैः कथं जीवा बाध्यन्ते इत्यपेक्षायामाह—यावदित्यादि । देहेन्द्रियप्राणैरिति देहेन्द्रियप्राणेभ्य इत्यर्थः ।

४० । नरो० । उपसंहरति—तस्मादिति । आत्मानं भिन्नम् अर्थाद्देहेन्द्रियप्राणेभ्यः, सर्वदा हृदि भावयेत्यन्वयः । भावय चिन्तय ।

४१ । नरो० । तर्हि किं कदाचिदपि किमपि नानुवर्त्तितव्यमित्यत आह—बुद्ध्यादिभ्य इत्यादि । बुद्ध्यादिभ्योऽन्तःकरणादिभ्यः । बहिर्बाह्यम् । अनुवर्त्तस्व अनुसर । मा खिद मा खेदं प्राप्नुहि । बन्धहेतुप्रारब्धकर्मक्षयः कथं भवेदित्यपेक्षायामाह—भुञ्जन्नित्यादि । प्रारब्धं प्राक्तनकर्मफलमित्यर्थः । भोगादेव प्राक्तनकर्मक्षयो भवतीति भावः ।

---

तृष्णायाः प्रतिक्षणमुत्पत्तेः । सन्तोषो यत्किञ्चिल्लाभेऽप्यधिकप्राप्ताविवाल्हबुद्धिः । नन्दनवनम् इन्द्रस्योद्यानमिव, सततं सुखयोगात् । शान्तिर्भोगवैमुख्यम् । कामदोग्ध्री मोक्षहेतुत्वात् । गो० ]

३९ । [ वैलक्षण्यमाह—स्वयंज्योतिरिति । स्वयंज्योतिः स्वप्रकाशः । देहादिरप्रकाशो जडत्वात् । अविकारी जन्मादिरहितः, देहादिस्तद्वान् । निराकृतिराकारशून्यः, ज्योतिर्मयत्वात् । देहादिः साकारः । शुद्धः समस्तदोषहीनः । देहात्माभिमानादेव संसार इत्याह—याव-दित्यादि । आत्मनो यावत्पर्यन्तं देहादिभिः सह भिन्नत्वं न विदुः, तावत् संसारजन्यदुःख-समूहैः पीड्यन्ते मृत्युयुताश्च भवन्ति । गो० ]

४० । तावदिति । अहं ममेत्यभिमानसत्त्वादिति भावः । भिन्नं बुद्ध्यादिभ्य इत्यर्थः । रा० ।

[ निगमयति—तस्मादित्यादि । बुद्ध्यादिभ्यो भिन्नं पृथग् हृदि भावय गो० ]

४१ । बुद्ध्यादिभ्यो ल्यब्लोपे पञ्चमी । तदतिरिक्तोऽहमित्यन्तर्जानन्नेव तानालम्ब्य बहिर्लोकव्यवहारे सर्वं लोकव्यवहारं लोकवदेवानुवर्त्तस्व कुरु । परन्तु तत्र मा खिदः खेदं न कुरु । ननु लोकवत् कार्यकरणे तद्वत् खेदोऽवश्यं भाव्येवेत्यत आह—भुञ्जन्निति । अखिलं सुखं दुःखं वा प्रारब्धमित्येव भुञ्जंस्तथा भावयन् । रा० ।

---

1. घ 'खिद' ।

प्रवाहपतितं[1] कार्यं कुर्वन्नपि न लिप्यते[2] ।
बाह्ये सर्वत्र कर्तृत्वमावहन्नपि राघव ।
अन्त शुद्धस्वभावस्त्वं लिप्यसे न च कर्मभिः ॥ ४२ ॥
एतन्मयोदितं कृत्स्नं हृदि भावय सर्वदा ।
संसारदुःखैरखिलैर्बाध्यसे न कदाचन[3] ॥ ४३ ॥
त्वम[4]प्यम्ब मयादिष्टं हृदि भावय [5]नित्यदा ।
समागमं प्रती[6]क्षस्व न दुःखैः पीड्यसे चिरम् ॥ ४४ ॥

---

४२ । नरो० । आधुनिकं कर्म बन्धः कथं न भवेदित्याकाङ्क्षायामाह—प्रवाहपतितमित्यादि । प्रवाहपतितं प्रवाहवदुपस्थितमित्यर्थः । न लिप्यते न बध्यतेऽर्थात् कार्येण जन्तुरिति शेषः । फलानुसन्धानं विना कृतं कर्म बन्धो न भवेदिति भावः । उपसंहरति—बाह्ये इत्यादि । हे राघव, यतस्त्वमन्त शुद्धस्वभावोऽतः सर्वत्र बाह्ये कर्तृत्वमावहन्नपि कर्मभिर्न लिप्यसे इति सम्बन्धः । अन्तर्बहिः शुद्धो रागादिदोषरहितः । आवहन् प्राप्नुवन् ।

४४ । नरो० । हे अम्ब हे मातः, आदिष्टं कथितम् । आगममागमनम् ।

---

[संसारत्याग एव सद्य किं न क्रियते परमपुरुषार्थत्वात्, तत्राऽऽह—बहिरिति । बहिर्बाह्यभूतं सर्वं लौकिकं कर्म अनुवर्त्तस्व आसक्तिरहितः सन् कुर्वित्यर्थः । मा खिद राज्यत्यागखेदं मा कुरु । भुञ्जन् इति । प्रारब्धमखिलं सुखं वा दुःखमेव वा । तत्र हेतुः—प्रारब्ध पूर्वकर्मणोपपादितं सुखं दुःखं वा भुञ्जन् कर्मक्षयमपेक्षमाणः, उपस्थिते सुखे वा दुःखे वाऽपि खेद मा कुरु । गो० ]

४२ । प्रवाहपतितोऽपि संसारप्रवाहस्थोऽपि कार्यं व्यवहार कुर्वन्नपि तज्जन्यपापपुण्याभ्या न लिप्यते पृथग्जनोऽपि । एवञ्च तव तथा भावयत सर्वथा तदलेप इत्याह—बाह्ये इति । रा० ।

[ ननु कर्मकरणे ससार पुन पुनर्दुर्वार स्यात्तत्राऽऽह—प्रवाहपतितमिति । प्रवाहपतितं संसारधारयोपस्थितं कार्यम् आसक्तिहीन सन् कुर्वन्नपि न लिप्यते जन इत्यर्थः । एतदेव दृढीकरणार्थं पुनराह—बाह्य इति । बाह्ये लौकिके कर्मणि सर्वत्र दैहिकादौ कर्त्तृत्वमावहन् कुर्वन्नपि ते तवान्तर्हृदये शुद्धभाव कर्त्तृत्वभोक्तृत्वाभिमानाभावश्चेत्तदा कर्मभिर्नैव लिप्यसे । गो० ]

४४ । [आगममागमनम् । समागमम् इति पाठे समागमं सङ्गमम् एकत्र मिलनम् । गो०]
आदिष्टम् इदानीमेव कीर्त्तितम् उपदेशादिकमित्यर्थः ।

---

1. क ख-ग-ङ 'त' । 2. घ '-से' । 3. ङ-च पुस्तकयोरत परं 'एवमुक्त्वा ततो धीमान् भ्रातरं लक्ष्मण तथा । आश्वासयामास तदा मातरं रघुनन्दनः ।' इत्यधिकम् । 4 ग च-छ '-प्यर्थं' । 5 ग-छ 'सर्वदा', च 'सर्वथा' । 6. ङ '-च त्वं' ।

न सदैकत्र संवासः कर्ममार्गानुवर्त्तिनाम् ।
[1]यथा प्रवाहपतितप्लवानां सरितां [2]तथा ॥ ४५ ॥
चतुर्द्दश समाः संख्या [3]क्षणार्द्धमिव जायते[4] ॥ ४६ ॥
अनुमन्यस्व [5]मामम्ब दुःखं सन्त्यज्य दूरतः ।
एवञ्चेत् सुखसंवासो भविष्यति वने मम[6] ॥ ४७ ॥
इत्युक्त्वा दण्डवन्मातुः पादयोरपतत् [7]स्थिरम् ।
उत्था[8]याङ्के समा[9]वेश्य आशीर्भिरभिनन्दयत्[10] ॥ ४८ ॥

---

४५ । नरो० । 'त्वद्विहीना क्षणार्द्धं वा जीवितं धारये कथमि'ति मातुर्वाक्यं समाधातुमाह—न सदैकत्रेत्यादि । कर्ममार्गानुवर्त्तिनां कर्मपथानुसारिणां प्राक्तनकर्माधीनानामिति यावत् । दृष्टान्तमाह—यथेत्यादि । प्रवाहपतिताश्च ते प्लवाश्चेति तेषां तथा । प्लवा उडुपानि । सरितां नदीनाम् ।

४६ । नरो० । चतुर्दश समा इति मच्चिन्ताजनितमहामोदेन चतुर्दश समा क्षणार्द्धमिव बुध्येरन्निति भाव. ।

४७ । नरो० । अम्ब हे मात , एवञ्चेदिति यद्यनुमतिर्भवतीत्यर्थ. ।

४८ । नरो० । स्थिरमिति क्रियाविशेषणम् । उत्थाय उत्थाप्येत्यर्थ. ।

---

४५-४६ । यथा सरितां प्रवाहे पतितानां प्लवानां न सदैकत्र सवास. किन्तु क्षणमात्रम् , तथा कर्ममार्गे ससारे वर्त्तमानानां पितृपुत्रादीनामपीत्यर्थ । एवं भावनायां चतुर्दशसमानां संख्या दिवसगणना क्षणार्द्धवदत्यल्पकालेनैव समाप्ता भविष्यतीत्यर्थ । रा० ।

ननु त्वां विना क्षणमपि गृहे कथ स्थास्यामीति चेत्तत्राऽऽह—कर्ममार्गानुवर्त्तिनामिति । कर्ममार्गानुवर्त्तिनां कर्माधीनानां जन्तूनां सदा सर्वदा एकत्र सवासो सम्यग्वासो न, अत्रापि तथा । सरितां प्रवाहे स्रोतसि पतितानां प्लवानाम् उडुपानामिवेत्यर्थः । यथा सरितां प्रवाहे पतिता प्लवादयस्तद्वेगवशेनैव यथा तथा गच्छन्ति यथा तथा तिष्ठन्ति च, तथा इमेऽपि जीवा कर्मवशादेवेतस्तत सञ्चरन्तोऽवतिष्ठन्तीति फलितार्थ ।

४७ । एवञ्चेत् त्वदनुमत्या गमनञ्चेत्तदा मम वने सुखजनक सवासो भविष्यतीत्यर्थ. । रा०

[ नन्वतिसुकुमाराङ्ग कदाचिदृ खानभिज्ञस्त्वं कथ वने स्थास्यसि तत्राऽऽह—एवञ्चेदिति । गृहे यथा वनेऽपि तथैव । गो० ]

दु.खं सन्त्यज्य प्रसन्नेन चेतसेत्यर्थ. । एवञ्चेत् तथा चेत् त्वं यदि सुप्रसन्ना सती वनगमनमनुमन्यसे तदा त्वन्मानसप्रसादमनुचिन्त्यैवास्माकं महद्दु.खजनकोऽपि वनप्रवासो सुखजनको भविष्यतीति भावः ।

४८ । चिरं यावदनुमतिपर्यन्तम् अभिनन्दयद् अभ्यनन्दयत् । अडभाव आर्ष' । रा० ।

---

1 च 'तथा'। 2 च-छ 'यथा'। 3 ग-ङ 'क्षणोऽर्द्धमपि', छ 'क्षणोऽर्द्धं'। 4 अत पर ङ-पुस्तके 'एवञ्चेत सुखसवासो भविष्यति वने मम' इत्यधिकम्। 5 ग-च छ 'मा मातदुं-। 6 क-पुस्तके इदमर्द्धं नास्ति। 7 क-ख-ग-घ-ङ-च छ 'चिरम्'। 8 क ख ग घ ङ च 'प्याङ्के'। 9 च छ '-रोप्य'। 10. छ '-येत्'।

सर्वे देवा' सगन्धर्वा ब्रह्मविष्णुशिवादयः ।
रक्षन्तु त्वां सदा यान्तं तिष्ठन्तं निद्रया युतम् ॥ ४९ ॥
इति प्रस्थापयामास समालिङ्ग्य पुनः पुन. ।
लक्ष्मणोऽपि तदा रामं नत्वा हर्षाश्रुगद्गदः ॥ ५० ॥
आह [1]'रामं ममान्तःस्थ' संशयोऽयं त्वया [2]हृत' ।
यास्यामि पृष्ठतो राम सेवां कर्तुं [3]तदादिश ॥ ५१ ॥
अनुगृह्णीष्व मां [4]राम नोचेत् प्राणांस्त्यजाम्यहम् ।
तथेति राघवोऽप्याह [5]लक्ष्मण' याहि मा चिरम् ॥ ५२ ॥
[6]प्रतस्थे तां समाधातु [7]सीतां सीता[8]पतिर्विभु' ।
आगत पतिमालोक्य सीता सुस्मितभाषिणी ॥ ५३ ॥
स्वर्णपात्रस्थसलिलै पादौ प्रक्षाल्य [9]भक्तित. ।
पप्रच्छ पति[10]मासीनं [11]देव किं सेनया विना ॥ ५४ ॥

---

४९ । यान्तं गच्छन्त पथीत्यर्थ । तिष्ठन्तमवस्थितम् । निद्रया युतं शयानं निद्राऽभिभूतमपि त्वां शत्रवो यथा स्प्रष्टुमपि न शक्ष्यन्ति तथैव रक्षन्तु इति भाव ।

५१ । रामं किमाहेत्याह—ममान्त स्थ इति । ममान्त स्थो मम हृत्स्थ. अयं देहात्मविवेकविषय. संशय' ।

५२ । याहि मयैव सह गच्छ, चिरं मा विलम्बं न कुर्वित्यर्थ ।

५३ । ततस्तामतिप्रियां सीतां समाधातुमन्वेष्टुं विभुर्जगत पतिः प्रतस्थे सीतागृहमिति शेष ।

५४ । सीतासकाशसमुपस्थितं रामं प्रति सन्देहोद्वेलितचित्ताया सीताया प्रश्नपर्यायो वाल्मीकीये—

कस्माच्छतशलाकेन पूर्णेन्दुप्रतिमेन ते ।
आवृत वदन चारु च्छत्रेण न विराजते ॥
चामरव्यजनाभ्याञ्च चारुपद्मदलेक्षणम् ।
न वीज्यते तेऽद्य मुख कस्मात् पूर्णेन्दुसप्रभम् ॥

•

न ते क्षौद्रञ्च दधि च ब्राह्मणा वेदपारगा ।
मूर्ध्नि मूर्धाभिषेकार्थं ददते विधिवच्च किम् ॥

---

1 क-ख-ग-घ-ङ 'राम' । 2 छ 'हृत' । 3 ङ 'तवा-', ग 'सदा-' । 4 छ 'भ्रातर्नो-' । 5 च 'लक्ष्मण' । 6 ग 'तत सीता समागन्तु' । 7 क ख-ग-घ-ङ 'गत', च-छ 'तत सीतां प्रति-' । 8 च-छ '-पति प्रभु' । 9 च 'यत्नत' । 10. क ख-घ '-मालोक्य' । 11. क-ख-ङ 'देव.' ।

आगतोऽसि [1]गतं कुत्र श्वेतच्छत्रञ्च [2]चामरम् ।
वादित्राणि न वाद्यन्ते किरीटादिविवर्जितः ॥ ५५ ॥
सामन्तराजसहितः सम्भ्रमान्नाऽऽगतोऽसि किम् ।
इति [3]स्म सीतया पृष्टो रामः सस्मितमब्रवीत् ॥ ५६ ॥
राज्ञा मे दण्डकारण्ये राज्यं दत्तं शुभेऽखिलम् ।
अतस्तत्पालनार्थाय शीघ्रं यास्यामि [4]भामिनि ॥ ५७ ॥
अद्यैव यास्यामि वनं त्वन्तु श्वश्रूसमी[5]पगा ।
शुश्रूषां कुरु [6]मे मातुर्न मिथ्यावादिनो वयम् ॥ ५८ ॥
इति ब्रुवन्तं [7]श्रीरामं सीता भीताऽब्रवीद्वचः ।
किमर्थं वनराज्यं ते पित्रा दत्तं महात्मना ॥ ५९ ॥

---

५६ । नरो० । सामन्तराजसहितः क्षुद्रराजसहितः । रामस्य सस्मितवचनेन गाम्भीर्य-मुक्तम् । तल्लक्षणं यथा—

'भी-शोक-त्रास-हर्षादौ गाम्भीर्यं निर्विकारता ।' इति ।

५८ । नरो० । परिहासो मा मन्यतामिति हृदि कृत्वा 'न मिथ्यावादिनो वयमि'त्युक्तम् ।

---

कस्मात् प्रकृतिमुख्यास्ते श्रेणीमुख्याश्च राघव ।
किङ्करा नाथ तिष्ठन्ति यौवराज्याभिषेचने ॥
अष्टाश्ववरयुक्तस्ते मणिकाञ्चनभूषणः ।
नाद्य पुष्परथः क्लृप्तः कस्माद्रिपुनिषूदन ॥
त्रिप्रस्रुतो गजवृषः शुभलक्षणलक्षितः ।
पृष्ठतो नानुयाति त्वां कस्मादद्याभिषेचने ॥
शुभलक्षणसम्पन्नः श्वेतश्च तुरगोत्तमः ।
न तेऽद्य याति पुरतः कस्माच्छ्रीविजयावहः ॥ २।२३।१३-१९ ।

५६ । सामन्तराजेति । एकाकी किमित्यागत इत्यर्थः । पर्यायोक्तमलङ्कारः । रा० ।

५८ । वयं न मिथ्यावादिनः, पितृसविधे कृतवनगमनप्रतिज्ञोऽहं न तां प्रतिज्ञां मिथ्या

---

1 क ख-घ ङ-छ 'गत', च 'गज कुत्र' । 2 क-ख-घ 'ते कुत्र', ङ 'चामर' । 3 ग 'स' । 4 छ 'भाविनि' । 5 ग-च-छ '-पत' । 6 छ 'ते' । 7 च 'राम त' ।

तामाह रामः कैकेय्यै राजा प्रीतो वरं ददौ ।
भरताय ददौ राज्यं वनवास ममानघे ॥ ६० ॥
चतुर्दश समास्तत्र वासो मे किल याचित ।
[1]तया देव्या ददौ [2]राजा सत्यवादी दयापरः ॥ ६१ ॥
अत. शीघ्र गमिष्यामि मा विघ्नं कुरु भामिनि ।
श्रुत्वा तद्रामवचनं जानकी प्रीतिसयुता ॥ ६२ ॥
अहमग्रे गमिष्यामि वन पश्चात् त्वमेष्यसि ।
[3]इत्याह मां विना गन्तुं तव राघव नोचितम् ॥ ६३ ॥
तामाह राघव प्रीत [4]स्वप्रियां प्रियवादिनीम् ।
कथ वन त्वां नेष्येऽहं बहु[5]व्यालमृगाकुलम् ॥ ६४ ॥
राक्षसा घोररूपाश्च सन्ति मानुष[6]भोजिन ।
सिंहव्याघ्रवराहाश्च सञ्चरन्ति समन्तत ॥ ६५ ॥

---

६१ । नरो० । सत्यवादीत्यनेन स्त्रीजितत्वं वारितम् । दयापर इत्यनेन निर्दयत्वं वारितम् ।

६३ । नरो० । अहमित्यादिवाक्यमौत्सुक्यसूचकम् ।

६४-६५ । नरो० । 'मां विना गन्तुं तव राघव नोचितमि'ति सीतया यदुक्तं तत् खण्डयितुमाह—कथमित्यादि । वनस्य दुर्गमत्वे हेतुर्बहुव्यालमृगाकुलमित्यादि । बहवो व्यालाश्च सर्पा मृगाश्च तैराकुल व्याप्तम्, तत्तथा । घोर भयानक रूपं येषां ते तथा । घोररूपित्वेऽपि तेभ्यो न बिभेमीति चेत्तत्राऽऽह—मानुषभोजिन इति । सन्ति तत्रेति शेष । अपरमनर्थं दर्शयति—सिंहेति । समन्तत परित ।

---

करोमि, अतोऽद्यैव वनं यास्यामि । त्वन्तु श्वश्रूसमीपगा मन्मातु समीपवर्त्तिनी तस्या शुश्रूषां कुरु, सा च गुरुशुश्रूषा सुखोदर्का भविष्यतीति भाव ।

६१ । तया देव्या याचितोऽतो मयि दयापरोऽपि राजा सत्यवादी 'अवश्यं त्वदुक्त दास्यामी'ति प्रतिज्ञावाक्यस्य सत्यत्व कर्त्तुं मे वनवास ददौ । रा० ।

६३ । नोचितम्, शुद्धस्य तव मया विना कार्याक्षमत्वात् । विवाहकाले नातिचरिष्यामीति प्रतिज्ञातत्वाच्च । रा० ।

---

1 च-छ 'तस्यै देव्यै' । 2 च 'राज्य' । 3 च-पुस्तके इदमर्द्ध पूर्वार्द्धत्वेन लिखित दृश्यते । 4 ग 'सुप्रि-' । 5 क-ख-घ '-व्याघ्र-' । 6 ङ '-भोजना.' ।

कट्वम्लफलमूलानि भोजनार्थं सुमध्यमे ।
[1]अपूपव्यञ्जनादीनि विद्यन्ते न कदाचन ॥ ६६ ॥
काले [2]काले फलं वाऽपि विद्यते कुत्र सुन्दरि ।
मार्गो न दृश्यते क्वापि शर्कराकण्टकान्वितः ॥ ६७ ॥
गुहागह्वरसंबाधं झिल्लीदंशादिभिर्युतम् ।
एवंबहुविधदोषं वनं दण्डक[3]संज्ञितम् ॥ ६८ ॥
पादचारेण गन्तव्यं शीतवातातपादिमत् ।
राक्षसादी[4]न् वने दृष्ट्वा जीवितं हास्यसेऽचिरात् ।
तस्माद् भद्रे गृहे तिष्ठ शीघ्रं द्रक्ष्यसि मां पुनः ॥ ६९ ॥
रामस्य वचनं श्रुत्वा सीता दुःख[5]समन्विता ।
प्रत्युवाच स्फुरद्वक्त्रा किञ्चित् कोपसमन्विता ॥ ७० ॥

---

६६ । नरो० । भोजनार्थमपि तादृक् किमपि नास्तीत्याह—कट्विति । कटूनि तानि अम्लानि च फलमूलानि तानि तथा । तदेवोपपादयति—अपूपेति । अपूपाः पिष्टकाः ।

६७ । नरो० । तत्र कट्वम्लं वा फलं भवतु तद् भुक्त्वैव कालयापनं करिष्यामीति चेत्तत्राऽऽह—काले काले इत्यादि । काले काले ऋतौ ऋतौ । अपरमनर्थं दर्शयति—मार्ग इति । शर्कराकण्टकान्वितो मार्गः क्वापि न दृश्यते सर्वत्र दृश्यते इत्यर्थः । शर्करा कपालखण्डम् ।

६८ । नरो० । अपरमनर्थं दर्शयति—गुहागह्वरसबाधमित्यादिना । गुहा च गह्वरश्च ताभ्यां संबाधं व्याप्तमित्यर्थः । गुहा पर्वतविले, गह्वरमत्र विलमात्रे । झिल्ली कीटविशेषः । दंशो वनमक्षिका । एवं बहुविधो दोषो यत्र तदेवंबहुविधंदोषम् । मध्यादेरित्यादिना अत्र म कार्यः ।

६९ । नरो० । पादचारेण पादविक्षेपेण गन्तव्यं कथमिति शेषः । हास्यसे त्यक्ष्यसि । उपसंहरति—तस्मादिति ।

---

६७ । फलादिकमपि समये दुर्लभमित्याह—काले इत्यादि । न दृश्यते वनेषु तृणाच्छादनाज्जनसञ्चराभावाच्च । यत्रापि दृश्यते तत्रापि शर्कराद्यन्वितः । रा० ।

६८ । वासस्थानमप्यतिदुःखजनकमित्याह—गुहेत्यादि । सम्यग् बाध्यन्ते रिपवो यत्रेति संबाधं दुर्गवासस्थानं गुहागह्वरस्वरूपम् । तद् यद्यपि रिपुपीडारहितं तथाऽपि झिल्लीदशादियुतत्वात् तत्र स्थातुमशक्यमिति भावः । रा० ।

७० । अत्र वाल्मीके: सीताऽपि भर्त्तुर्मुखत एकस्यैव तस्य वनगमनप्रवृत्तिम् आकर्ण्य अभिमानवशं गतेव असूयापरवशेव स्वमनोगतमभाषत । तथा च—

---

1 क-ख-ग-घ-ङ-छ 'अपूपानि व्यञ्जनानि' । 2 च 'कालफलञ्चापि' । 3 ङ 'संज्ञकम्' । 4. च '-दी तथा' । 5 च '-परायणा'

कथ मामिच्छसे त्यक्तुं धर्मपत्नीं पतिव्रताम् ।
त्वदनन्यामदोषां मां धर्मज्ञोऽसि दयापर ॥ ७१ ॥
त्वत्स[1]मीपे स्थितां राम को वा मां धर्षयेद्वने ।
फलमूलादिकं यद्‌ यत्तव भुक्तावशेषितम् ।
तदेवामृततुल्यं मे तेन तुष्टा [2]रमाम्यहम् ॥ ७२ ॥

७१ । नरो० । त्यागानर्हत्वे हेतु —धर्मपत्नी पतिव्रतामिति । धर्मपत्नीं धर्मेण न्यायेन पत्योढामित्यर्थ । आत्मन पतिव्रतात्व दर्शयन्त्याह—त्वदनन्यामदोषामिति । त्वदविद्यमानोऽन्यो यस्यास्तां त्वदनन्याम् । अविद्यमाना दोषा मौखर्यादयो यस्यास्ताम् । अदोषात्यागेच्छानर्हत्वे हेतु·—धर्मज्ञोऽसि दयापर इति ।

७२ । नरो० । 'कथ वन त्वां नेष्येऽहं बहुव्यालमृगाकुलमि'त्यादि श्रीरामेण यदुक्त तत्

इत्यप्रियमिद वाक्य श्रुत्वा सा प्रियभाषिणी ।
सासूयमिव भर्त्तार सीता वचनमब्रवीत् ॥

भार्यैका पतिभाग्यानि भुङ्क्ते पतिपरायणा ।
साऽह त्वामनुयास्यामि यत्र यत्र गमिष्यसि ॥
शपेऽह ते प्रसादेन जीवितेन च राघव ।
यथा नेच्छाम्यह वस्तु स्वर्गेऽपि रहिता त्वया ॥
त्व मे नाथो गुरुश्चैव गतिर्दैवतमेव च ।
गमिष्यामि त्वया सार्द्धमेष मे निश्चय पर· ॥
यदि त्वमुद्यतो गन्तुं दुर्गं कण्टकित वनम् ।
अह तवाग्रे यास्यामि मृद्नन्ती कुशकण्टकम् ॥
न पिता नाऽऽत्मजो नाऽऽत्मा न माता न सुहृज्जन ।
गतिर्भवति सत्स्त्रीणां पतिस्त्वेक परा गति· ॥
हर्म्यप्रासादभवनविमानेभ्योऽपि मे प्रभो ।
तव पादाश्रय· श्रेयान् स्वर्गादपि सुदुर्लभः ॥ इत्यादि । २।२७।१—१०

७१ । त्वत्तोऽन्य पुरुषो न विद्यते यस्यास्ताम् । यद्वा त्वत्तो भेदरहिताम्, शक्तिशक्तिमतोरभेदात् अत एवादोषाम् । रा० ।

७२ । रमामीति आर्षं परस्मैपदम् । रा० ।

त्वत्समीपे इति । अत्राऽऽह वाल्मीकि·—

'न ममाभिभवे शक्तो महेन्द्रोऽपि त्वदाश्रयात् ।
अतो नार्हसि मां भक्तां निवर्त्तयितुमातुराम् ॥ इति । २।३७।१९ ।

1 च-छ '-मीपस्थिता' । 2. ग ङ-च-छ 'चरा-' ।

त्वया सह चरन्त्या मे कुशाः काशाश्च कण्टकाः ।
पुष्पास्तरण[1]तुल्या [2]वै भविष्यन्ति न संशयः ॥ ७३ ॥
अहं [3]त्वां [4]क्लेशये नैव भवेयं कार्यसाधिनी ॥ ७४ ॥
[5]बाल्येऽपि कश्चिन्मां वीक्ष्य ज्योतिःशास्त्रविशारदः ।
प्राह [6]ते विपिने वासः पत्या सह भविष्यति ।
सत्यवादी द्विजो भूयाद् गमिष्यामि त्वया सह ॥ ७५ ॥
अन्यत् किञ्चित् प्रवक्ष्यामि श्रुत्वा मां नय काननम् ।
रामायणानि बहुशः श्रुतानि बहुभिर्द्विजैः ।
सीतां विना [7]वनं रामो गतः किं कुत्रचिद्वद ॥ ७६ ॥

---

समाधातुमाह—त्वत्समीप इत्यादि । धर्षयेदाक्रामेदित्यर्थः, अभिभवेदित्यर्थो वा । कटुमूलफलमूलानीति यदुक्तं तत् समाधातुमाह—फलमूलादिकमित्यादि ।

७३ । नरो० । मार्ग इत्यादि यदुक्तं तत् समाधातुमाह—त्वया सहेत्यादि । काशाश्चेति चकारः शर्कराः समुच्चिनोति । तत्र कण्टकपदं लाक्षणिकं बोध्यं चरणतलव्यावर्त्तकत्वञ्च (?) शक्यलक्ष्यसाधारणं लक्ष्यतावच्छेदकं बोध्यम् ।

७४ । नरो० । तत्र गत्वा मां वृथा कदर्थयिष्यसीति चेत्तत्राऽऽह—अहमित्यादि । तथाऽपि प्रयोजनं विना योषित् कथं वनं नेतव्येति चेत्तत्राऽऽह—भवेयं कार्यसाधिनीति । रावणवधरूपमत्र कार्यम् ।

७५ । नरो० । तत्र रामस्यानुचितत्वेऽपि दुर्वारत्वं दर्शयति—बाल्येऽपीत्यादिना । तद्वाक्यं कथं प्रमाणमिति चेत्तत्राऽऽह—ज्योतिःशास्त्रविशारद इति । रामस्य वनगमननिश्चय एव मम वनगमननिश्चायक इति हृदि कृत्वाह—सत्यवादीत्यादि । यद्वा ब्राह्मणवाक्यं मिथ्या कर्त्तुमनुचितमिति हृदि कृत्वाह—सत्यवादी द्विजो भूयादित्यादि ।

७६ । नरो० । ज्योतिःशास्त्रज्ञस्यापि कदाचिद् भ्रमो भवेदिति चेत्तत्राऽऽह—अन्यदित्यादि । तदेवाऽऽह—रामायणानीति ।

---

७४ । कार्यसाधिनी रक्षोवधादिकार्यसाधिकेति व्यङ्ग्यम् । रा० ।

७५ । वनगमनञ्च मे अवश्यम्भावीति इतिहासकथनेन द्रढयति—बाल्य इति । रा० ।

७६ । रामायणानि इत्यादिश्लोकेन रामायणस्य सीतायाः पूर्वभावित्वं सूचितम् । तथात्वे— प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः ।
चकार चरितं चित्रं विचित्रपदमर्थवत् ॥ १।३।१
इत्यादिवाल्मीकिवचनात् 'प्राप्तराज्यस्येत्यनेन रामस्य राज्यशासनकाले रामायणनिर्मितिरिति

---

1 क 'कल्पा'। 2. क ख ग-घ-ङ 'मे' छ 'हि'। 3 ग 'त्वत्क्लेशनाशाय'। 4 च 'क्लेशयेय न'। 5 क-ख घ 'बाल्ये मां वीक्ष्य कश्चिद्दै'। 6 ग 'तव वने'। 7 च 'वने'।

अतस्त्वया गमिष्यामि सर्वथा त्वत्सहायिनी ।
यदि गच्छसि मां त्यक्त्वा प्राणांस्त्यक्ष्यामि तेऽग्रतः ॥ ७७ ॥
इति त निश्चयं ज्ञात्वा सीताया रघुनन्दनः ।
अब्रवीद्देवि गच्छ त्वं वनं शीघ्रं मया सह ॥ ७८ ॥
अरुन्धत्यै प्रयच्छाऽऽशु [1]हारानाभरणानि च ।
ब्राह्मणेभ्यो धन [2]सर्वं दत्त्वा गच्छामहे वनम् ।
इत्युक्त्वा लक्ष्मणेनाऽऽशु द्विजानाहूय भक्तित. ॥ ७९ ॥

७७ । नरो० । उपसंहरति—अत इति । त्वया सहायिनी त्वत्सहायिनी । रामायणादिकममत्वा यदि मां त्यक्त्वा गमिष्यति तदा प्राणांस्त्यक्ष्यामीति हृदि कृत्वाह—यदीत्यादि ।

७९ । नरो० । स्वान्त पुरधनाभिप्रायेणोक्तं सर्वमिति ।

गम्यते । एतज्ज्ञापनायैव पुनरारम्भः ।' इति एतट्टीकायां गोविन्दराजवाक्याच्च रामराज्यकरणकालीनं रामायणमिति महान् विरोधः स्वत एव समुदेति, समाधानावसरे पुन' कल्पभेदस्वीकाराद् गत्यन्तरं नास्तीति मन्यते । वाल्मीकीयेऽप्येतदनन्तरमेव—

पवित्रं वैष्णव दिव्यमिदमाख्यानमुत्तमम् ।
वेदैश्चतुर्भि· समितमितिहासं पुरातनम् ॥ १।३।२ ।

'पुरातनं प्राचीनम् । 'प्रतिकल्पं रामायण'मिति मताश्रयणेनात्र कवेस्तथोक्तिरुपपादनीया ।' इति एतट्टिप्पन्यां श्रीमदमेश्वरवेदान्तशास्त्री । एतत्पक्षाश्रयणेन सर्वं समञ्जसमित्यलं विकल्पविरोधाशङ्कयेति दिक् ।

७७ । त्वत्सहायिनी सृष्ट्यादिसर्वकार्येष्वहमेव ते सहायेति व्यङ्ग्यम् । रा० ।

अत्र सा वाल्मीके सीता अतिकठिना रामस्य हृदगतमन्यथाभावं विज्ञाय आत्मनो युक्तिपुर.सरानुनयादिक सर्वं व्यर्थमिव विगणय्य भर्त्तरि परमप्रणयवती रमणीजनसुलभेनापमानेन क्रुद्धा भुजङ्गीव भाविपतिविरहदु खेन हिताहितज्ञानशून्येव हृदयाधिकमपि स्वामिन तिरश्चकार । तथा च—

रामस्य तां मतिं बुद्ध्वा मैथिली कृतनिश्चया ।
रोषात् प्रस्फुरमाणौष्ठी पुनर्वचनमब्रवीत् ॥
उन्मत्तेवाभिपश्यन्ती भर्त्तार विपुलेक्षणा ।
रोषवेगात् क्षिपन्तीव प्रणयादभिमानिनी ॥
कृतार्थं मन्यते मूढ स आत्मानं पिता मम ।
रामं जामातरं लब्ध्वा क्लीबं पुरुषमानिनम् ॥ इत्यादि २।३०।१-३ ।

७९ । अरुन्धत्यै वशिष्ठपत्न्यै । रा० ।

1. च 'हाराण्याभरणानि च' । 2 क 'सर्वेर्द-' ख 'सर्वं द-' ।

ददौ गवां वृन्दशतं धनानि वस्त्राणि दिव्यानि विभू[1]षणानि ।
कुटुम्बवद्भ्यः श्रुतशीलवद्भ्यो मुदा द्विजेभ्यो रघुवंशकेतुः ॥ ८० ॥
अरुन्धत्यै ददौ सीता [2]मुख्यान्याभरणानि च ।
[3]रामो मातुः सेवकेभ्यो ददौ धनमनेकधा ॥ ८१ ॥
[4]स्वकान्तःपुरवासिभ्यः सेवकेभ्यस्तथैव च ।
पौरजानपदेभ्यश्च ब्राह्मणेभ्यः सहस्रशः ॥ ८२ ॥
लक्ष्मणोऽपि सुमि[5]त्रान्तु कौशल्यायै समर्पयत्[6] ।
धनुष्पाणिः समागत्य रामस्याग्रे व्यवस्थित ।
रामः सीता लक्ष्मणश्च जग्मुः सर्वे नृपालयम् ॥ ८३ ॥
श्रीरामः सह सीतया नृपपथे गच्छञ्छनैः सानुजः
पौराञ्जानपदान् कुतूहलदृशः सानन्दमुद्वीक्षयन् ।
श्यामः कामसहस्रसुन्दरवपुः कान्त्या दिशो भासयन्
पादन्यासपवित्रिताखिलजगत् प्रापाऽऽलयं तत् पितुः ॥ ८४ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अयोध्याकाण्डे चतुर्थोऽध्यायः ॥ ४ ॥

---

८० । नरो० । सम्प्रदानभेदेन दानफलगततारतम्यसूचनाय कुटुम्बवद्भ्य इत्याद्युक्तम् । रघुवंशकेतुः रघुवंशश्रेष्ठः ।

८४ । नरो० । पौरान् नागरान् । कुतूहले दृग् दृष्टिर्येषां तांस्तथा । कामसहस्रस्येव सुन्दरं वपुर्यस्य सः । अत्राद्भुतोपमा । भासयन् दीपयन् । पादन्यासेन पवित्रितानि अखिलानि जगन्ति येन स तथा ।

[ अयोध्याकाण्डे चतुर्थाध्यायव्याख्या समाप्ता ॥ ४ ॥ ]

---

८० । कुटुम्बवद्भ्यः स्त्रीपुत्रादिपरिवारवद्भ्यो गृहस्थेभ्य इत्यर्थः । श्रुतं वेदादिशास्त्रम्, शीलं स्वभावः, तद्युक्तेभ्यः ।

८१ । राममातुः सेवकेभ्य इति पाठे सीतैव ददावित्यर्थः । स्वकान्तपुरवासिभ्य इति पाठे स्वकान्तो रामस्तत्पुरवासिभ्य इत्यर्थः । अत्रापि सीतैव दानकर्त्री ।

८४ । नृपपथे राजमार्गे । कुतूहलेन पश्यन्ति तान् कुतूहलदृशः । पौरान् सानन्दं पश्यन् तेन तेषां दुःखनिरासः । पितुस्तत् कैकेय्यधिष्ठितमालयं गृहं प्राप । रा० ।

सानन्दमित्यनेन वनप्रयाणसमयेऽपि नित्यनिर्विकारस्य तस्य विकाराभावः सूचितः । पादन्यासपवित्रिताखिलजगदित्यनेन परब्रह्मत्वं सूचितम् ।

---

1 च '-षितानि' । 2 क ख 'सुखान्या-' । 3 ख 'राममातुः' । 4 ख 'स्वकान्तपु-' । 5 च ख '-त्राञ्च' । 6 च-ख '-र्पयेत्' ।

# पञ्चमोऽध्यायः



श्रीमहादेव उवाच—

आयान्तं [1]नागरा दृष्ट्वा मार्गे रामं सजान[2]किम्।
लक्ष्मणेन समं वीक्ष्य ऊचुः सर्वे परस्परम्।
कैकेय्या वरदानादि[3] श्रुत्वा दुःखसमा[4]वृता॥ १॥
[5]बत राजा दशरथः सत्यसन्ध[6] प्रियं सुतम्।
स्त्रीहेतोरत्यजत् कामी [7]तस्य [8]सत्यात्मता कुत॥ २॥
कैकेयी वा [9]कथ दुष्टा रामं [10]सत्यं प्रियङ्करम्।
विवासयामास [11]कथ क्रूरकर्मातिमुढधी॥ ३॥

---

२। नरो०। बत इति खेदे। सत्यसन्धो दृढप्रतिज्ञ.।

३। नरो०। अकारणविवासनं दृष्ट्वा विस्मित्य कथमिति वारद्वयमुक्तम्। अतिमूढा अतिकार्याकार्यविवेकशून्या धीर्यस्या. सा तथा।

---

१। सजानकिं जानक्या सहितं लक्ष्मणेन समायान्तमित्यन्वय.। तादृश दृष्ट्वा परस्पर वीक्ष्य ऊचु परस्परमित्येव। रा०।

कैकेय्या वरदानादि श्रुत्वा दु खसमावृता नागरा' सजानकिं लक्ष्मणेन समायान्तं रामं दृष्ट्वा परस्पर वीक्ष्य ऊचुरित्यन्वय.।

२। किमूचुरित्याह—बत राजेत्यादि। अत्यजद वनवासं समाज्ञापितवान्। रा०।

३। कैकेयी वा पूर्वमत्यन्तं रामे प्रीतिमती कथं दुष्टा जातेति शेष'। यद् भरतस्य राज्यं रामस्य वनवास वृतवतीति भाव.। याचतां वा लोभाद भरतस्य राज्यम्, राममुच्यमानगुण कथ कुनो हेतोर्विवासयामास, अत्र हेतु न पश्याम। रा०।

---

1 घ च छ 'नगराद्', ग 'नगरि'। 2 ङ-च छ '-कीम'। 3 च 'दि'। 4 छ '-कुला'। 5 छ 'अथ'। 6 क-ख ग घ 'सन्ध'। 7 ङ 'व्यञ्जयन् सत्यमात्मन.'। 8 क-ख-घ-ङ-छ 'सत्यवता'। 9 घ 'यथा'। 10 ङ 'लक्ष्मणसयुतम्', च-छ 'सत्यप्रिय-'। 11 ग-ङ 'भ्रष्ट', च 'वन'।

हे जना नात्र वस्तव्यं गच्छामोऽद्यैव काननम् ।
यत्र रामः सभार्यश्च सानुजो गन्तुमिच्छति ॥ ४ ॥
पश्यन्तु जानकीं सर्वे पादचारेण गच्छतीम् ॥ ५ ॥
पुम्भिः कदाचिद् दृष्टा वा जानकी लोकसुन्दरी ।
साऽपि पादेन गच्छन्ती जन[1]सङ्घेष्वनावृता ॥ ६ ॥
रामोऽपि पादचारेण गजाश्वादिविवर्जितः ।
[2]गच्छति [3]द्रक्ष्यथ विभुं सर्वलोकैक[4]सुन्दरम् ॥ ७ ॥
राक्षसी कैकेयी[5]नाम्नी जाता सर्वविनाशिनी ।
रामस्यापि भवेद् दुःखं [6]सीतायाः पादयानतः ॥ ८ ॥

६ । नरो० । लोकेभ्यः सुन्दरी लोकसुन्दरी ।
८ । नरो० । रामशोकात् सर्वे मरिष्यन्तीति सूचनाय सर्वविनाशिनीत्युक्तम् ।

४ । य कामवशगो राजा अकारणं प्राणाधिक पुत्रमपि विवासयामास तस्य नाकार्यं किमपि विद्यत इति कृत्वा अत्र वासो न समीचीन इत्याहु.—हे जना इति । यद्यत्र न स्थास्यथ तदा कुत्र गमिष्यथेत्याह—यत्रेति ।

५-६ । मानसनिर्वेदमुद्घाटयन्त आहुः—पश्यन्त्विति । या कदाचिदपि यानं विना न गच्छति, साऽद्य राजदोषेण पादचारेण गच्छति । तादृशी तां पश्यन्तु, हा धिग् राजानमिति भाव । तस्या दर्शने का हानिरित्याह—पुम्भिरित्यादि । राजयोषित् सा सर्वदैव अस्मद्विधानाम् अदृश्या पुम्भि. पुरुषै. पतिपित्रादिभिर्विनेति शेष. । कदाचिद् दृष्टा वा, न दृष्टेत्यर्थ. । सा तादृश्यपि इदानीं जनसङ्घेषु अनावृता पटादिकृतावरणरहिता पादेन गच्छतीति क्लेशलज्जादीनां महत् स्थानमापतितमिति भाव. ।

अत्राऽऽह वाल्मीकिः—

या न शक्या पुरा द्रष्टुं देवैराकाशगैरपि ।
सीतां तामपि पश्यन्ति राजमार्गे पृथग्जना ॥ इत्यादि । २।३३।९ ।

७ । यानादीन् विहाय य कदाऽपि पादचारेण न गच्छति, यश्च प्रभु सर्वेषां नियन्ता सोऽपि राजाज्ञया गजाश्वादिविवर्जित पादचारेण गच्छतीति द्रक्ष्यथ, दृष्ट्वाऽवस्थाविपर्ययं विवेचयन्तु इति भावः ।

1 च '-मध्येऽश्रुणावृता' । 2 ग-ड 'गच्छन्त' । 3 ग-ड 'पश्यत' । 4 ङ च 'सम्मतम्' । 5 ग-ड-च 'नाम्ना' । 6. ङ 'सीता दृष्टाऽप्रचारिणीम्' ।

बलवान् विधिरेवात्र पुंप्रयत्नो[1] हि दुर्बल. ॥ ९ ॥
इति दुःखाकुले वृन्दे साधूनां मुनिपुङ्गव. ।
अब्रवीद् वामदेवोऽथ [2]साधूनां सङ्घमध्यग ।
[3]माऽनुशोचथ रामं वा सीतां वा वच्मि तत्त्वत. ॥ १० ॥
[4]एष रामः परो विष्णुरादि[5]र्नारायण स्मृत. ।
एषा सा जानकी लक्ष्मीर्योगमायेति विश्रुता ॥ ११ ॥
असौ [6]शेषस्तमन्वेति लक्ष्मणाख्यश्च साम्प्रतम् ।
एष मायागुणैर्युक्तस्तत्तदाकारवानिव ॥ १२ ॥

---

९ । नरो० । विधिर्दैवम् ।

१० । नरो० । दु खाकुले दु खव्याप्ते । मुनिपुङ्गवो मुनिश्रेष्ठ ।

११ । नरो० । एष रामो नारायण स्मृत इत्यन्वय. । ननु तस्यासङ्गित्व सर्वव्यापकत्वं सृष्टे पूर्वं वर्त्तमानत्वमस्य तेषामभावे कथं तत्त्वमित्यत आह—परो विष्णुरादिरिति । रामस्तावदनुशोच्यो न भवतु सीतालक्ष्मणौ कथ नानुशोच्याविति चेत्तत्राऽऽह—एषा सेत्यादि । सा प्रसिद्धा योगमाया अचिन्त्यशक्तिरूपा ।

१२ । नरो० । शेषोऽनन्तस्तं राममन्वेति अनुगच्छति । तथात्वेऽपि चतुर्मुखपञ्चानना-

---

९ । उपसंहरति—बलवानिति । पर्यायोक्तमलङ्कार' । रा० ।

अथवा तादृशस्य धर्मप्रधानस्य राज्ञो दोषोद्घाटनमनुचितम् इति मत्वाह—बलवानिति । विधिर्दैवं बलवान् । 'विधिर्विधाने दैवे च' इत्यमर. । पुंप्रयत्न पुंसां प्रचेष्टा दुर्बल । राजा यदि एतद्विपरीतमपि विधातुं कृतयत्नो भवेत् तदा तदपि विधेरिच्छया निष्फलं स्यादित्याशय ।

१० । साधूनां वृन्दे समूहे । तत्त्वत तेषां तत्त्व वच्मीत्यर्थ. । रा० ।

११ । परो जडेभ्य. । विष्णुर्व्यापको वैकुण्ठनिलयो वा । आदिमन्नार जीवसमूहस्तद्रूपो हिरण्यगर्भस्तस्याप्ययन. परायण. वेदलाभद्वारा सृष्ट्यादिसामर्थ्यद. । योगमाया योगेन स्वसम्बन्धेनापरिच्छिन्नमपि अतिपरिच्छिनत्ति सा । रा० ।

[ एष राम परो विष्णुरिति । यो विष्णुर्ब्रह्मादिरभवत् स एव विष्णू रावणादिवधार्थं श्रीरामोऽभवदित्यनुषङ्ग । गो० ]

१२ । एष मायागुणैरिति । एतेन मायिक एवायमाकारो न तु पाञ्चभौतिक इत्युक्तम् । रा० ।

---

1. ड '-त्नोऽतिदु-', च '-त्नोऽत्र दुर्लभ' । 2. 'साधुसङ्घ प्रशान्तयन्' । 3 ड 'माऽनुशोचाथ', छ 'मानुषो नाथ रामो वा सीता वा' । 4 ड 'अय' । 5 ख-ग '-नारा-' । 6 ग 'शेषल' ।

एष एव रजोयुक्तो ब्रह्माऽभूद् विश्वभावनः।
सत्त्वाविष्टस्तथा विष्णुस्त्रिजगत्[1]प्रतिपालक.।
एष रुद्र[2]स्तमस्यन्ते जगत्प्रलयकारणम्[3] ॥ १३ ॥
एष मत्स्य. पुरा भूत्वा भक्तं वैवस्वतं मनुम्।
नाव्यारोप्य लय[4]स्यान्त पालयामास राघव. ॥ १४ ॥

---

द्याकारवत्त्व विना कथमस्य तत्त्वमिति चेत्तत्राऽऽह—एष मायागुणैरित्यादि। तत्तदाकारवान् स स आकारोऽस्यास्तीत्यर्थ.। इवात्र वाक्यालङ्कारे।

१३। नरो०। तदेव विवृणोति—एष इत्यादिना। विश्वं भावयतीति विश्वभावन। सत्त्वाविष्ट' सत्त्वगुणयुक्त इत्यर्थ। तमसि तमोगुणे उपाधौ सतीति शेष'। अन्ते अवसाने।

१३। मायागुणैस्तत्तदाकारवत्त्वमेव विवृणोति—एष एवेति। विश्वभावनो विश्व-स्रष्टा। रा०।

एष इति। एष राम एक एव इत्यर्थ। तथा च कौर्मे पूर्वभागे—

'एकोऽपि सन् महादेवस्त्रिधाऽसौ समवस्थित।
सर्गरक्षालयगुणैर्निर्गुणोऽपि निरञ्जन.॥ इति। ४।९३।

रजोयुक्तो रजोगुणमय ब्रह्मरूपधारी, विश्वभावनो विश्वेषां त्रिजगताम् उत्पादक। सत्त्वाविष्ट सत्त्वगुणमय विष्णुरित्यर्थ, त्रिजगतां स्वर्गमर्त्तपातालानां प्रतिपालक. पालयिता, अन्ते जगताम् अवसाने महाप्रलयसमये इत्यर्थ, तमसि तमोगुणप्रादुर्भावे तमोगुणमय इत्यर्थः, शिवरूपधारी जगतां प्रलयकारणम्। तथा च तत्रैव—

रजोगुणमयश्चान्यद्रूपं तस्यैव धीमत.।
चतुर्मुख. स भगवाञ् जगत्सृष्टौ प्रवर्त्तते॥
सृष्टञ्च पाति सकलं विश्वात्मा विश्वतोमुखः।
सत्त्वं गुणमुपाश्रित्य विष्णुर्विश्वेश्वरः स्वयम्॥
अन्तकाले स्वय देव सर्वात्मा परमेश्वर'।
तमोगुणं समाश्रित्य रुद्र संहरते जगत्॥ इति। ४।९०-९२।

१४। लयस्यान्तं दैनन्दिनप्रलयस्यान्तं समाप्तिपर्यन्तम्। रा०।

मत्स्य इति। एष रामरूपधारी भगवानेव पुरा ब्रह्मणो दैनन्दिनप्रलयकाले मत्स्यो भूत्वा मत्स्यरूपं धृत्वा नावि वैवस्वतं मनुम् आरोप्य संस्थाप्य पालयामास। व्यक्तमाह अग्निपुराणे—

---

1 ङ-च 'परि-'। 2 क-ख-घ-च छ '-स्तामसोऽन्ते'। 3 च-छ '-कारक'। 4 ग-ङ 'स्यादौ', च-छ '-स्यान्ते'।

समुद्र[1]मन्थने पूर्व[2] मन्दरे [3]सुतल गते ।
[4]अधारयत् स्वपृष्ठेऽद्रि कूर्मरूपी रघूत्तम' ॥ १५ ॥

आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लय ।
समुद्रोपप्लुतास्तत्र लोका भूरादिका मुने ॥
मनुर्वैवस्वतस्तेपे तपो वै भुक्तिमुक्तये ।
एकदा कृतमालायां कुर्वतो जलतर्पणम् ॥
तस्याञ्जल्युदके मत्स्य स्वल्प एकोऽभ्यपद्यत ।
क्षेप्तुकाम जले प्राह न मां क्षिप नरोत्तम ॥
ग्राहादिभ्यो भय मेऽद्य तत्श्रुत्वा कलसेऽक्षिपत् ।
स तु वृद्ध पुनर्मत्स्य प्राह त देहि मे बृहत् ॥
स्थानमेतद्वच श्रुत्वा राजाऽथोदञ्चनेऽक्षिपत् ।
तत्र वृद्धोऽब्रवीद् भूप पृथु देहि पद मनो ॥
सरोवरे पुन· क्षिप्तो ववृधे तत्प्रमाणवान् ।
ऊचे देहि बृहत् स्थान प्राक्षिपच्चाम्बुधौ मनु ॥
लक्षयोजनविस्तीर्ण क्षणमात्रेण सोऽभवत् ।
मत्स्यं तमद्भुतं दृष्ट्वा विस्मित· प्राब्रवीन्मनु ॥
को भवान् ननु वै विष्णुर्नारायण नमोऽस्तु ते ।
मायया मोहयसि मां किमर्थं त्वं जनार्दन ॥
मनुनोक्तोऽब्रवीन्मत्स्यो मनु वै पालने रतम् ।
अवतीर्णो भवायास्य जगतो नष्टदुष्टये ॥
सप्तमे दिवसे त्वब्धि प्लावयिष्यति वै जगत् ।
उपस्थितायां नावि त्वं बीजादीनि विधाय च ॥
सप्तर्षिभिः परिवृतो निशां ब्राह्मी चरिष्यसि ।
उपस्थितस्य मे शृङ्गे निबध्नीहि महाहिना ॥
इत्युक्त्वाऽन्तर्दधे मत्स्यो मनु कालप्रतीक्षक ।
स्थितः समुद्र उद्वेले नावमारुरुहे सदा ॥
एकशृङ्गधरो मत्स्यो हैमो नियुतयोजन· ।
नावं बबन्ध तच्छृङ्गे मत्स्याख्यञ्च पुराणकम् ॥ २।३-१९ ।

१९ । समुद्रमन्थने इति । मन्दरे मन्थदण्डस्वरूपे सुतल रसातलं गते प्रविष्टे । मन्दरस्य मज्जनमाह भागवते—

1 क 'मथने'। 2 ख 'पूर्वमन्द'। 3 क 'भूत-'। 4 च 'आधा-'।

महो रसातल याता प्रलये शूकरो'ऽभवत् ।
तोलयामास दंष्ट्राग्रे तां क्षौणीं रघुनन्दनः ॥ १६ ॥

---

मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत् ।
ध्रियमाणोऽपि बलिभिर्गौरवात् पाण्डुनन्दन ॥ इति । ८।७।६

रघूत्तमो भगवान् राम· कूर्मरूपी तद्रूपधारी स्वपृष्ठे अद्रिं मन्दरपर्वतम् अधारयत् । एतदपि तत्रैव—

विलोक्य विघ्नेशविधिं तदेश्वरो दुरन्तवीर्योऽवितथाभिसन्धि ।
कृत्वा वपु कच्छपमद्भुतं महत् प्रविश्य तोय गिरिमुज्जहार ॥ इति ८।७।८ ।

कौर्मे पूर्वभागेऽपि—

पुराऽमृतार्थं दैतेयदानवै· सह देवता ।
मन्थान मन्दरं कृत्वा ममन्थ क्षीरसागरम् ॥
मथ्यमाने तदा तस्मिन् कूर्मरूपी जनार्दन ।
बभार मन्दर देवो देवानां हितकाम्यया ॥ १।२७-२८ इति ।

१६ । महीत्यादि । प्रलये महाप्रलये मही रसातल याता । तां मग्नां वीक्ष्य तस्या समुद्धरणाय—

परमेष्ठी त्वपां मध्ये तथा मग्नामवेक्ष्य गाम् ।
कथमेनां समुन्नेष्य इति दध्यौ धिया चिरम् ॥ भागवतम् ३।१३।१६

इत्युक्तरीत्या ध्यायमानस्य,

यस्याहं हृदयादासं स ईशो विदधातु मे । भागवतम् ३।१३।१७

इति विष्णौ अर्पितभारस्य च ब्रह्मणो नासाविवराद् वराहरूपेणावतरद्विष्णुः । तथा च तत्रैव—

इत्यभिध्यायतो नासाविवरात् सहसाऽनघ ।
वराहतोको निरगादङ्गुष्ठपरिमाणक ॥ ३।१३।१८ ।

स एव शूकररूपी भगवान् क्रमविवर्द्धमानकाय स्वदंष्ट्रया महीमिमामुज्जहार । तथा च तत्रैव—

स्वदंष्ट्रयोद्धृत्य महीं विलग्नां स उत्थित· संरुरुचे रसाया ।
तत्रापि दैत्य गदयापतन्तं सुनाभसन्दीपिततीव्रमन्युः ॥ भागवतम् । ३।१३।३१

कूर्मपुराणे पुनर्विष्णुरूपधारिणो ब्रह्मण· पृथिवीरक्षार्थं शूकररूपधारणम् । तथा च कौर्मे पूर्वभागे—

---

1. च '-रो भवन्' ।

नारसिंहं[1] वपुः कृत्वा प्रह्लादवरदः पुरा ।
त्रिलोककण्टकं [2]वक्षः पाटयामास [3]तं नखैः ॥ १७ ॥
पुत्रराज्यं हृतं दृष्ट्वा ह्यदित्या [4]याचितः पुरा ।
वामनत्वमुपागम्य याच्ञया [5]चाहरत् [6]पुनः ॥ १८ ॥

---

१७। नरो०। त्रिलोककण्टकं त्रिलोकशत्रुम्। वक्षो वक्षसि पाटयामास विदारयामास। तं हिरण्यकशिपुम्।

---

एकार्णवे तदा तस्मिन् नष्टे स्थावरजङ्गमे ।
तदा समभवद् ब्रह्मा सहस्राक्षः सहस्रपात् ॥
सहस्रशीर्षा पुरुषो रुक्मवर्णो ह्यतीन्द्रियः ।
ब्रह्मा नारायणाख्यस्तु सुष्वाप सलिले तदा ॥ ६।२-३ ।

. ... .

ततस्तु सलिले तस्मिन् विज्ञायान्तर्गतां महीम् ।
अनुमानात् तदुद्धारं कर्तुकामः प्रजापतिः ॥
जलक्रीडासु रुचिरं वाराहं रूपमास्थितः ।
अधृष्यं मनसाऽप्यन्यैर्वाङ्मयं ब्रह्मसंज्ञितम् ॥
पृथिव्युद्धरणार्थाय प्रविश्य च रसातलम् ।
दंष्ट्रयाऽभ्युज्जहारैनामात्माधारो धराधरः ॥ इति । ६।७-९ ।

इत्येभिः कूर्मपुराणवचनैः प्रकृतग्रन्थस्य भागवतप्रमाणस्य च विरोधाशङ्काया विष्णुब्रह्मणोरभेदाङ्गीकार एव सुसमाधानमिति दिक् ।

१७। तद्रक्षः प्रह्लादपीडकं रक्षः। रा०।

नारसिंहेन वपुषा भगवतो हिरण्यकशिपुनामदैत्यस्य विनाशमाह खिलहरिवंशे—

एवमुक्त्वा स भगवान् विसृज्य त्रिदशेश्वरान् ।
हिरण्यकशिपो राजन्नाजगाम हरिः सभाम् ॥
नरस्य कृत्वाऽर्द्धतनुं सिंहस्यार्द्धतनुं प्रभुः ।
नारसिंहेन वपुषा पाणिं संस्पृश्य पाणिना ॥
जीमूतघनसंकाशो जीमूतघननिःस्वनः ।
जीमूत इव दीप्तौजा जीमूत इव वेगवान् ।
दैत्यं सोऽतिबलं दीप्तं दृप्तशार्दूलविक्रमम् ॥
दृप्तैर्दैत्यगणैर्गुप्तं हतवानेकपाणिना ॥ ४१-७९-७८

१८। पुत्रराज्यमिन्द्रराज्यम्, हृतं बलिना। याच्ञया बलेः सकाशाद् भिक्षाव्याजेनाहरत् परावर्त्तितवान्। रा०

---

1 ङ च-छ '-सिंहवपुर्धृत्वा'। 2 क-ख-व-ङ-छ 'रक्ष', ग-च 'दैत्य'। 3 च 'वै नखैः'। 4 च '-राधितः'। 5 छ 'चाभवत्'। 6 च 'प्रभुः', छ 'पुरा'।

दुष्टक्षत्रियभूभारनिवृत्त्यै भार्गवोऽभवत् ।
स एव जगतां नाथ इदानीं रामतां गतः ॥ १९ ॥

१९ । नरो० । दुष्टक्षत्रियभूभारनिवृत्त्यै दुष्टा मात्सर्यादिदोषाश्रया ये क्षत्रियास्त एव भूभाराः, तेषां निवृत्त्यै नाशाय । क्षत्रियाः कथं मारिता इति चेत्तत्राऽऽह—दुष्टेति । तथात्वे तस्य का हानिरिति चेत्तत्राऽऽह—भूभारेति । भार्गव. परशुराम. ।

पुत्रराज्यमिति । तथा च कौर्मे पूर्वभागे—

स तस्य पुत्रो मतिमान् बलिर्नाम महासुरः ।
ब्रह्मण्यो धार्मिकोऽत्यर्थं विजिग्येऽथ पुरन्दरम् ॥
कृत्वा तेन महद् युद्धं शक्रः सर्वामरैर्वृत. ।
जगाम निर्जितो विष्णुं देवं शरणमच्युतम् ॥ इति । १७।१२-१३ ।

अदित्या याचित स्वपुत्रत्वग्रहणपुर सरबलिराज्यहरणाय प्रार्थित । तथा च तत्रैव—

दृष्ट्वा समागतं विष्णुमदितिर्भक्तिसयुता ।
मेने कृतार्थमात्मानं तोषयामास केशवम् ॥ १७।१८

• ••

प्रणम्य शिरसा भूमौ सा वव्रे वरमुत्तमम् ।
त्वामेव पुत्र देवानां हिताय वरये वरम् ॥ इति १७।२९ ।

वामनत्वमुपागम्य इति । अदित्यामुत्पद्य इति शेष । वामनत्वं खर्वत्वम् उपागम्य चाहरत् तदिन्द्रराज्यमिति शेष. । एतदपि तत्रैव कूर्मपुराणपूर्वभागे—

विज्ञाय विष्णुर्भगवान् भरद्वाजप्रचोदितः ।
आस्थाय वामनं रूप यज्ञदेशमथागमत् ॥ ७।४८

• • •

सम्प्राप्यासुरराजस्य समीप भिक्षुको हरि. ।
सपादैर्विमितं देशमयाचत बलिं त्रिभि. ॥ १७।५०
दास्ये तवेदं भवते पदत्रयं प्रीणातु देवो हरिरव्ययाकृति ।
विचिन्त्य देवस्य कराग्रपल्लवे निपातयामास सुशीतलं जलम् ॥
विचक्रमे पृथिवीमेष चैतामथान्तरीक्षं दिवमादिदेव ।
व्यपेतराग दितिजेश्वर तं प्रकर्तुकाम शरण प्रपन्नम् ॥ इति १७।५२-५३ ।

१९ । भार्गवो जामदग्न्य', स च भागवतमते षोडशावतार । दुष्टक्षत्रियाणां ब्रह्मद्रुहामित्यर्थ. । तथा च भागवते—

अवतारे षोडशमे पश्यन् ब्रह्मद्रुहो नृपान् ।
त्रि.सप्तकृत्व कुपितो नि.क्षत्रामकरोन्महीम् ॥ इति । १।३।२०

रावणादीनि रक्षांसि कोटिशो निहनिष्यति ।
मानुषेणैव मरणं [1]तस्य दृष्टं दुरात्मनः ॥ २० ॥
राज्ञा दशरथेनापि तपसाराधितो हरिः ।
पुत्रत्वाकाङ्क्षया विष्णो[2]स्तथा पुत्रोऽभवद्धरिः ॥ २१ ॥
स एव विष्णुः श्रीरामो रावणादिवधाय [3]हि ।
गन्ताऽद्यैव वनं रामो लक्ष्मणेन सहायवान् ।
एषा सीता हरेर्माया सृष्टिस्थित्यन्तकारिणी ॥ २२ ॥
राजा वा [4]केकयी वाऽपि नात्र कारणमण्वपि ।
पूर्वेद्युर्नारदः प्राह भूभारहरणाय च ॥ २३ ॥

---

२० । नरो० । रावणवधार्थं कथं मानुषरूपं धृतमिति चेत्तत्राऽऽह—मानुषेणैवेति ।

२१ । नरो० । रावणवधार्थं कथं दशरथपुत्रोऽभवदिति चेत्तत्राऽऽह—राज्ञेति ।

२३ । नरो० । राज्ञः कैकेय्याश्च कारणत्वं मत्वा तयोर्निन्दां कृतवतो जनान् प्रत्याह—राजा वेत्यादि । अण्वपि ईषदपि । तर्हि कस्य कारणत्वमित्यपेक्षायामाह—पूर्वेद्युरित्यादि ।

---

२० । तस्य रावणस्य । मानुषेणैव मरणं ब्रह्मवरप्रभावात् । एवशब्दाद् नान्येभ्यः । आदिष्टमिति पाठे आदिष्टं ब्रह्मणेति शेषः ।

२१ । नन्वेव दशरथस्य गृहे एवावतारकरणे किं बीजं तत्राऽऽह—राज्ञेति । पुत्रत्वाकाङ्क्षया विष्णोरिति विष्णुर्मे पुत्रो भवत्वितीच्छयेत्यर्थः । रा० ।

२२ । मायेति । सा च परमेश्वरशक्तिविशेषः इत्युक्तरीत्या हरेः परमेश्वरस्य प्रकृतिः । सा पुनः सत्त्वरजस्तमोगुणमयी । तेन च क्रमेण सत्त्वगुणात्मिका सा स्वर्गविधायिनी, रजोगुणात्मिका पालयित्री, तमोगुणात्मिका संहारकारिणीत्याह—सृष्टिस्थित्यन्तकारिणीत्यादि ।

तथा च रामोत्तरतापिन्युपनिषदि—

श्रीरामसान्निध्यवशाज्जगदाधारकारिणी ।
उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम् ॥
सा सीता भवति ज्ञेया मूलप्रकृतिसंज्ञिता ।
प्रणवत्वात् प्रकृतिरिति वदन्ति ब्रह्मवादिनः ॥ ३-४ ।

सैवेदानीं तमोगुणोपेता रावणादिराक्षसविनाशार्थं परमपुरुषं रामं प्रेरयतीत्याशयः ।

२३ । नारदः प्राह, भूभारहरणोद्देश्यकं ब्रह्मणः सन्देशवचः इत्यर्थः । रा० ।

---

1 ङ 'तस्याऽऽदिष्ट' । 2 क-ख-घ-च-छ '-स्तदा' । 3 ग 'च' । 4 क-ख-ग-घ 'कैकयी' ।

रामोऽप्याह स्वयं साक्षाच् श्वो गमिष्याम्यहं वनम् ।
[1]अतो रामं समुद्दिश्य चिन्तां त्यजत बालिशाः ॥ २४ ॥

राम रामेति ये नित्यं [2]जपन्ति मनुजा भुवि ।
तेषां मृत्युभयादीनि न भवन्ति कदाचन ॥ २५ ॥

[3]का पुनस्तस्य रामस्य दुःखशङ्का महात्मनः ।
रामनाम्नैव मुक्तिः स्यात् कलौ [4]नान्येन केनचित्[5] ॥ २६ ॥

मायामानुषरूपेण विडम्बयति लोककृत् ।
भक्तानां भजनार्थाय रावणस्य वधाय च ।
राज्ञश्चाभीष्टसिद्ध्यर्थं मानुषं वपुराश्रितः[6] ॥ २७ ॥

---

२४ । नरो० । साक्षात् प्रत्यक्षम् । स्वेच्छावनगमनेऽपि तत्र दुःखं विद्यत एवेति चेत्तत्राऽऽह—राममिति ।

२५ । नरो० । राम रामेतीति । मृत्युभयादीनि मृत्योर्भयं तदादीनीत्यर्थः ।

२७ । नरो० । विडम्बयति वञ्चयति भजनार्थायेति ।

---

एतत् सर्वं मायाकार्यत्वात्, राज्ञः कैकेय्या वाऽत्र कारणत्वं न सम्भवतीत्याह—राजा वेत्यादि ।

२४ । बालिशा अल्पबुद्धयः, रामतत्त्वानभिज्ञा इति यावत् ।

२५ । रामो दुःखितो भविष्यतीत्यपि वृथा शङ्का एवेत्याह—रामेति । मृत्युभयाभावे इतरभयाभावः कैमुतिकन्यायसिद्धः । तन्नामजपकर्त्तुस्तत्त्वज्ञानोदयादिति भावः । रा० ।

२६ । तस्य दुःखशङ्का चेत्यन्वयः । कलौ तु नाम्नैव नामाभिलापेनैव मुक्तिस्तज्जनकं तत्त्वज्ञानम्, नान्येन योगादिनेत्यर्थः । रा० ।

[ रामनाम्नैव मुक्तिः स्यात् कलौ नान्यत्र कुत्रचिदिति । अन्यत्र योगादिषु कर्मसु तैर्वा । गो० ]

यस्य रामस्य नाम्नैव मृत्युभयादिस्तिरोभवति तस्य का दुःखशङ्का न काऽपीत्यर्थः ।

२७ । ईदृशस्य किमर्थं देहपरिग्रहस्तत्राऽऽह—मायेति । विडम्बयति स्वीयाचारेण

---

1 छ 'ततो' । 2 ग 'भजन्ति' । 3 ग-ङ-च छ 'किं' । 4 ग-ङ छ 'नान्यत्र कुत्रचित्' । 5 अत परं ग-च छ पुस्तकेषु 'राशब्दोच्चारणादेव बहिर्निर्याति पातकम् । पुनरागमनभीत्या मकारस्तु कपाटकम् ॥' इत्यधिकम् । 6. ग-ङ-च '-स्थितः' ।

इत्युक्त्वा विररामाथ वामदेवो महामुनि ॥ २८ ॥
श्रुत्वा तेऽपि द्विजाः सर्वे राम ज्ञात्वा हरि [1]विभुम् ।
जहुर्हृत्संशयग्रन्थि राममेवान्वचिन्तयन् ॥ २९ ॥
य इद चिन्तयेन्नित्यं रहस्य रामसीतयो ।
तस्य रामे दृढा भक्तिर्भवेद्विज्ञान[2]पूर्विका ॥ ३० ॥
रहस्य गोपनीय [3]वो यूयं वै राघवप्रियाः ।
इत्युक्त्वा प्रययौ विप्रस्तेऽपि रामं परं विदुः ॥ ३१ ॥
ततो राम समा[4]विश्य पितृगेहमवारित ।
सानुज सीतया [5]गत्वा कैके[6]यीमिदमब्रवीत् ॥ ३२ ॥
आगता स्मो वय मातस्त्रयस्ते [7]सम्मत वनम् ।
गन्तुं कृतधिय शीघ्रमाज्ञापयतु न पिता ॥ ३३ ॥

---

२९ । नरो० । शरीरं विना ध्यानादिकं न भवतीति—हृत्संशयग्रन्थिं हृद संशयबन्धम् ।

३१ । नरो० । परं परमात्मानम् । विदुर्जानन्ति ।

---

सदाचार लोकान् शिक्षयति मातापितरौ पुत्रानिव । फलान्तरमप्याह—भक्तानामिति । राज्ञ ऽभीष्टं विष्णो स्वपुत्रत्वम् । रा० ।

२९ । हृत्संशयग्रन्थिं हृदि विद्यमानं रामे मनुष्यत्वादिविषयं संशयग्रन्थिम् । रा०

३१ । [ रहस्य गोपनीयमित्यादि । गोपनीयं वेति गोपनीयमेव । एवार्थो वाशब्द 'वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये' इति विश्व । गो० ]

गोपनीय रहस्यं कथमस्मभ्य प्रकाशितमित्याह—यूयं राघवप्रिया इति । यतो भवन्तस्तत्प्रिया अतो भवतां सविधे प्रकाशनं नानुचितमिति भाव ।

३२ । अवारित पुत्रत्वाद् द्वारपालैरिति शेष । गत्वा कैकेयीसमीपमिति शेष । र

३३ । ते सम्मतं वनं दण्डकारण्य गन्तुं कृतधियो निश्चिता इत्यन्वय । 'आज्ञापय न: पिते'त्यनेन तदाज्ञां विना गमने तस्य दुःखादावहं दोषभाक् स्यामिति सूचितम् । रा० ।

आज्ञापयतु इति । पित्राज्ञां विना किमपि कर्तुमसमर्था वयमिति भाव । अ कैकेयीं प्रति रामस्योक्ति, वाल्मीकीये पुन पितृसकाश एव विनीतस्य रामस्य वनगमनाज्ञ प्रार्थना । तथा च—

---

1 च 'प्रभुम्' । 2 ग ड-च-छ '-पूर्वकम्' । 3 च 'वै' । 4 च '-वेश्य' । 5 छ 'चाथ 6 '-य्यामिद-' । 7 ग 'सम्मता' ।

इत्युक्त्वा सहसोत्थाय चीराणि प्रददौ स्वयम् ।
रामाय लक्ष्मणायाथ सीतायै च पृथक् पृथक् ॥ ३४ ॥
रामस्तु वस्त्राण्युत्सृज्य वन्यचीराणि पर्यधात् ।
लक्ष्मणोऽपि तथा चक्रे सीता [1]तन्न विजानती ॥ ३५ ॥
हस्ते गृहीत्वा रामस्य लज्जया मुखमैक्षत ।
रामो गृहीत्वा तच्चीरमंशु[2]के पर्यवे[3]ष्टयत् ॥ ३६ ॥
तद् दृष्ट्वा रुरुदुः [4]सर्वे राजदाराः[5] समन्ततः ।
वशिष्ठस्तु तदाकर्ण्य रुदितं भर्त्सयन् रुषा ॥ ३७ ॥

३४ । नरो० । सहसा अविमृश्य । चीराणि वस्त्रखण्डानि ।
३५ । नरो० । उत्सृज्य त्यक्त्वा । तत् चीरपरिधानम् ।
३६ । नरो० । अंशुके अर्थात् सीतावस्त्रे ।

मुहूर्तादिव तं रामो लब्धसंज्ञं महीपतिम् ।
उवाच प्राञ्जलिर्भूत्वा शोकार्णवपरिप्लुतम् ॥
आपृच्छे त्वां महाराज ईश्वरोऽसि हि नः प्रभो ।
प्रस्थितं वनवासाय सपश्य कुशलेन माम् ॥
लक्ष्मणञ्चानुजानीहि वैदेहीञ्च महीपते ।
निवर्त्यमानावपि हि न निवृत्ताविमौ मया ॥
अतो नो वनवासाय गमने कृतनिश्चयान् ।
लक्ष्मण माञ्च सीताञ्च समनुज्ञातुमर्हसि ॥ इति । २।३५।१८-२१ ।

३४ । इत्युक्त्वा रामेण कैकेयी सहसा झटिति उत्थाय रामायेत्यन्वयः । चीराणि वन्य-परिधेयानि वल्कलादीनि जीर्णवासांसि वा । रा० ।

३५ । तच् चीरपरिधानप्रकारस्वरूपम् । रा० ।

३६ । लज्जयेति । असामर्थ्यभवेयं लज्जा । 'मुखमैक्षत' इत्यनेन स्वासामर्थ्यं विनिवेदयन्ती परिधानप्रकारं ज्ञातुमिच्छतीति ध्वनितम् । अंशुके वस्त्रे परिहितवस्त्रोपरि एव तच्चीरं निबबन्ध इत्यर्थः । 'अंशुकं श्लक्ष्णवस्त्रे स्याद्वस्त्रमात्रोत्तरीययो' इति मेदिनी ।

३७ । अयमत्र तत्रभवतो वशिष्ठस्य कैकेय्युपालम्भारम्भोऽसुलभ इव गुरुस्थानमुपागतस्येति विवेचयामः । कथमयं वाल्मीकीयाद्यसंवाद्यपि प्रबन्धः प्रस्तुतः कविनेति अल्पधियामस्माकं धियोऽविषयीभूतः । वाल्मीकीये नात्र प्रसङ्गोऽपि वशिष्ठस्य । परम् अनतिपूर्वमुक्तेन—

1 च 'तन्नाभिजानती' । 2 ग '-क' । 3 ङ '-श्यत्' । 4 च 'सर्वा' । 5 ग '-राश्च सर्वशः' ।

कैकेयीं प्राह दुर्वृत्ते राम एव त्वया वृतः ।
वनवासाय दुष्टे त्वं सीतायै [1]किं [2]प्रदास्यसि ॥ ३८ ॥
यदि रामं समन्वेति सीता [3]भक्त्या पतिव्रता ।
दिव्याम्बरधरा नित्यं सर्वाभरणभूषिता ।
रमयत्वनिशं रामं वनदुःखनिवारिणी ॥ ३९ ॥
राजा दशरथोऽप्याह [4]सुमन्त्रं रथमानय ।
रथमारुह्य गच्छन्तु [5]वनं वनचरप्रियाः ॥ ४० ॥

---

३८ । नरो० । दुर्वृत्ते दुश्चरित्रे । वृतो वरेण याचित । कि कथं प्रदास्यसि चीरमिति शेष ।

३९ । नरो० । अम्बरधरेति । अम्बर वस्त्रम् । अनिशं निरन्तरम् ।

४० । नरो० । वनचरा मुनय प्रिया येषां ते तथा । यद्वा वनचराणामपि प्रिया वनचरप्रिया• । यद्वा वने चरिष्यन्तीति वनचरास्ते च ते प्रियाश्चेति ते तथा ।

---

'वशिष्ठो वामदेवश्च जाबालिः काश्यपस्तथा ।
किं मां वक्ष्यन्ति श्रुत्वेद तथाऽन्ये ब्रह्मवादिन• ॥ २।३४।२१

इत्यादिदशरथवचनेन वशिष्ठस्यात्रानुपस्थितिरेव प्रमाणीक्रियते । तत्र च राज्ञा एव कैकेय्या भर्त्सनम् । तथा च—

स निश्वस्योष्णमिक्ष्वाकुर्भार्यां तामिदमब्रवीत् ।
रामस्यैकस्य गमने वर याचितवत्यसि ॥
न सौमित्रेर्न जानक्या नृशसे दुष्टचारिणि ।
किमर्थमनयोश्चीरे ददास्यशुभदर्शने ॥
पापे पापसमाचारे नृशसे कुलपांसने ।
कैकेयि कुशचीरे नो सीता वसितुमर्हति ॥ इत्यादि । २।३७।१९-१७ ।

अनया रीत्या नृपतिमुखसम्भूतं कैकेयीभर्त्सनं श्रोतॄणां मुदमुत्पादयति, वशिष्ठमुखनिर्गतं तत् पुन-र्भावान्तरमेव जनयति । 'भिन्नरुचिर्हि लोक•' इत्युक्तरीत्या रुचिरेवात्र प्रमाणमित्यलं वाग्बाहुल्येन ।

३९ । यदीति । त्वद्वराविषयभूताऽपि यदि स्वेच्छया समन्वेति सम्यग्ग्लानिरहितमनुपश्चाद् गच्छतीत्यर्थ । रा० ।

भक्त्येति पतिभक्त्येत्यर्थ । भक्तेति पाठे रामं प्रति भक्तिमती सतीत्यर्थ । दिव्याम्बरादीनां मन•प्रीतिजनकत्वात् तत्परिधानेन वनवासजन्यदुःखं निवारयितुं प्रभविष्यतीति भाव• ।

---

1 ङ 'प्रददासि किम्' । 2. क-ख घ 'प्रयच्छसि' । 3 क-छ 'भक्ता' । 4 च 'सुमन्त्' । 5 क-ख 'वने' ।

इत्युक्त्वा राममालोक्य सीताञ्चैव सलक्ष्मणम् ।
दुःखान्निपतितो भूमौ रुरोदाश्रुपरिप्लुतः ।
आरुरोह रथं सीता [1]शीघ्रं रामस्य पश्यतः ॥ ४१ ॥

४१। नरो०। अश्रुपरिप्लुतोऽश्रुपरिस्नातः, अश्रुणा सर्वतो व्याप्तो वा। एतेन शोकाधिक्यं सूचितम्। शीघ्रमिति। रथारोहणेन सीतायाः पत्या सह वनगमने उत्साहः सूचितः।

४१। सीता शीघ्रमारुरोहेत्यनेन तस्याः कार्यसाधक उत्साहः सूचितः। रा०।

अत्र वाल्मीकिः स्वभावसुलभेन कविभावेन लक्ष्मणोपदेशं व्याजीकृत्य सुमित्रामुखेनैव सुमित्राचरित्रं चरमोत्कर्षजनकमुपपाद्य रामायणनायकेषु तस्या अप्यन्यतमत्वमापादयामास। तथा चाऽऽदिकवेः सरसकवित्वरसप्रवाहः —

तं वन्दमानं चरणे सुमित्रा पुनरब्रवीत् ।
स्नेहान्मूर्धन्युपाघ्राय परिरभ्य च पीडितम् ॥
अरिष्टं गच्छ पन्थानं सह रामेण लक्ष्मण ।
शुश्रूष भ्रातरं ज्येष्ठं रामं लोकहिते रतम् ॥
सत्पुत्रेण त्वया वत्स तारिताऽहं सबान्धवा ।
यस्त्वं त्यक्त्वा प्रियान् दारान् माञ्च राममनुव्रतः ॥
समस्थो विषमस्थो वा रामस्ते परमा गतिः ।
प्राणेभ्योऽपि प्रियतरो ज्येष्ठो भ्राता गुरुश्च ते ॥
तस्मादत्याप्रमत्तस्त्वं शरीरं प्रतिपालय ।
विजने वसतोऽरण्ये सीतया सहितस्य च ॥
एष पुत्र सतां धर्मो यं त्वमिच्छसि सेवितुम् ।
तस्मात्त्वया तत्परेण शुश्रूष्योऽय गुणाकरः ॥
भ्राता ज्येष्ठोऽप्रमत्तेन रामो राजीवलोचनः ।
त्वया पुत्र वने सेव्यः परिपाल्यश्च सर्वथा ॥
उचितं वः कुले वत्स ज्येष्ठभ्रात्रनुपालनम् ।
दानं दीक्षा तपश्चैव तनुत्यागो मृधेषु च ॥
रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् ।
अयोध्यामटवीं विद्धि गच्छ वत्स यथासुखम् ॥ २।३९।३-११ ।

1 च 'मुखं रामस्य पश्यती'।

रामः प्रदक्षिणं कृत्वा पितरं रथमारुहत् ।
लक्ष्मणः खड्ग[1]युगलं धनु[2]स्तूणीयुग तथा ॥ ४२ ॥
गृहीत्वा रथमारुह्य [3]नोदयामास सारथिम् ।
तिष्ठ तिष्ठ सुमन्त्रेति राजा दशरथोऽब्रवीत् ॥ ४३ ॥
गच्छ गच्छेति रामेण [4]नोदितोऽचोदयद्‌ रथम् ।
रामे दूरं गते राजा मूर्च्छित[5] प्रापतद्‌ भुवि ॥ ४४ ॥
पौरास्तु[6] बालवृद्धाश्च [7]वृद्धा ब्राह्मणसत्तमाः ।
तिष्ठ तिष्ठेति रामेति क्रोशन्तो रथमन्वयु ॥ ४५ ॥
राजा रुदित्वा सुचिरं [8]मां [9]नयन्तु गृहं प्रति ।
कौशल्याया राममातुरित्याह परिचारकान् ॥ ४६ ॥

---

४३ । नरो० । तिष्ठ तिष्ठ सुमन्त्रेत्युक्त्या दशरथस्य विच्छेदभीरुता सूचिता ।

४४ । नरो० । गमनविलम्बने कैकेय्या अप्रीति स्यादिति हृदि कृत्वा गच्छ गच्छेत्युक्तम् ।

४५ । नरो० । पौरा इत्यादिना पौराणामत्यनुराग सूचितः ।

---

४२ । अत्रैकस्य रामस्यैव दशरथप्रदक्षिणम्, वाल्मीकीये पुन. सर्वेषाम् । तथा च—

'कृताञ्जलिस्ततो रामो लक्ष्मणश्च महायशा ।
वैदेही चैव राजानं परिजग्मु प्रदक्षिणम् ॥' इति २।३९।१ ।

४४ । रथमचोदयत् । राज्ञा रामाधीनकृतत्वाद्राजाज्ञापेक्षया तदाज्ञैव प्रबलेति मत्वेति व्यङ्ग्यम् । दूरं गते दृष्टिपथमतिक्रान्ते । रा० ।

तत्र वाल्मीकिः—

तिष्ठ तिष्ठेति चुक्रोश राजा याहीति राघवः ।
सुमन्त्रस्याभवत्तत्र गाञ्च खञ्चान्तरा स्थिति ॥ इति । २।३९।४९ ।

४५ । वृद्धा इत्यस्य ज्ञानवृद्धा इत्यर्थ. । रा० ।

वाल्मीकीये द्विजानां विलपनम् । तदविगणय्यैव रामस्य गमनम् । तथा च—

विक्रोशतामेवमपि द्विजानां न न्यवर्त्तत ।
तूष्णीमेव ययौ वाग्मी राम सौमित्रिणा सह ॥ इति । २।४३।३४ ।

४६ । राममातुरित्यादरसूचक विशेषणम् । एतेनास्य सर्वेभ्यो राम एव स्नेहातिशय इति ध्वनितम् ।

---

1 ग-च '-मुषल' । 2 ग '-तूण-' । 3 'ग-ङ-च-छ 'चोद-' । 4 ङ-च-छ 'चोदि-', ग 'चोदितश्चोद्य-' । 5 ङ '-तो न्यपतद्-' । 6. ग '-श्च' । 7 च 'वृद्धब्रा-' । 8. ङ छ '-मायय्यौ तु' । 9 ग 'नयस्व' ।

किञ्चित् कालं भवेत् तत्र [1]जीवनं दुःखितस्य मे ।
अत ऊर्द्ध्वं न जीवामि चिरं रामं विना कृतः ॥ ४७ ॥
ततो गृहं प्रविश्यैव कौशल्यायाः पपात ह ।
मूर्च्छितश्च[3] चिराद् बुद्ध्वा तूष्णीमेवावतस्थिवान् ॥ ४८ ॥
रामस्तु तमसातीरं गत्वा तत्रावसत् सुखी ।
जलं प्राश्य निराहारो वृक्षमूलेऽस्व[4]पद्विभु[4] ॥ ४९ ॥
सीतया सह धर्मात्मा धनुष्पाणिस्तु लक्ष्मणः ।
पालयामास धर्मज्ञः सुमन्त्रेण समन्वितः ॥ ५० ॥
पौराः सर्वे समागत्य[5] स्थितास्तस्याविदूरतः ।
शक्ता राम पुरं नेतुं नो चेद् गच्छामहे वनम् ॥ ५१ ॥

---

४९ । नरो० । तमसातीरमिति । तमसा नदीविशेषः ।

---

४७ । दुःखितस्य मे यदि कञ्चित् कालं जीवनं भवेत्तदा तद् राममातृगृहे एव, अन्यत्र तु क्षणमात्रमपि तन्न सम्भाव्यते । राममातृगृहेऽपि चिरं नैव तदित्याह—अत इति । विनाकृतो दैवेनेति शेष. । अनेन दैवसम्पादितं मरणं दुर्वारमिति ध्वनितम् । रा० ।

[ अत ऊर्द्ध्वमित्यादि । चिरं रामं विना कृत इति चिरकालं व्याप्य रामेण रहितः कृत इत्यर्थ । 'रामविनाकृत ' इति पाठः सुगम. । गो० ]

४८ । तूष्णीमेव स्वकृतापराधेन लज्जयेत्यर्थः । रा० ।

४९ । अस्वपत् सीतया सहेति परेणान्वयः ।

जलं प्राश्येति । वाल्मीकिरपि—

'अद्भिरेव तु सौमित्रे वसामोऽत्र निशामिमाम् ।
एतद्धि रोचते मह्यं वन्येऽपि विविधे सति ॥ इत्याह । २।४४।१० ।

वृक्षमूल इति । अत्र वाल्मीकीये रामस्य शयनार्थं वृक्षपर्णादिना लक्ष्मणसुमन्त्राभ्यां शय्याया रचना । तथा च—

'उपास्य तु शिवां सन्ध्यां दृष्ट्वा रात्रिमुपस्थिताम् ।
रामस्य शय्यां सञ्चक्रे सूत. सौमित्रिणा सह ॥
तां शय्यां तमसातीरे वृक्षपर्णैः कृतां तदा ।
राम सौमित्रिमामन्त्र्य सभार्य. संविवेश ह ॥ २।४४।१३-१४ ।

५० । पालयामास जाग्रद् राम ररक्षेत्यर्थ ।

---

1 ग-च 'जीवित' । 2 च 'श्याथ' । 3 ग '-स्तु' । 4 ग ङ च-छ '-पत् प्रभु,' । 5. च '-स्य ।

इति [1]निश्चयमाज्ञाय तेषां रामोऽतिविस्मितः ।
नाहं गच्छामि नगरं[2]मैते वै क्लेशभागिनः ॥ ५२ ॥
भविष्यन्तीति निश्चित्य सुमन्त्रमिदमब्रवीत् ।
इदानीमेव गच्छामः सुमन्त्र रथमानय ॥ ५३ ॥
इत्याज्ञप्तः सुमन्त्रोऽपि रथं वाहैरयोजयत् ॥
आरुह्य रामः सीता च लक्ष्म[3]णोऽपि ययुर्द्रुतम् ।
अयोध्याभिमुखं गत्वा किञ्चिद् दूरं ततो ययुः ॥ ५४ ॥
तेऽपि राममदृष्ट्वैव प्रातरुत्थाय दुःखिताः ।
रथनेमिगतं मार्गं पश्यन्तस्ते पुरं ययुः ॥ ५५ ॥

---

५४ । नरो० । अयोध्याभिमुखं गत्वेति । अयोध्याभिमुखगमनं पौरजनवञ्चनार्थम् ।
५५ । नरो० । रथनेमिगतं रथचक्रान्ताभोगचिह्नितम् ।

---

५२ । रामं पुरं नेतुं यदि शक्तास्तदा परावृत्य नेष्यामो नो चेद् वनमेव गमिष्याम इति निश्चयमित्यर्थः । रा० ।

क्लेशभागिनो मया सह वनगमनेनेत्यर्थः । भविष्यन्तीति परेणान्वयः ।

५४ । अयोध्याभिमुखमिति पौराणां प्रतारणार्थमित्यर्थः । ननु कथं तादृशस्य सर्वजनरञ्जकस्य यशस्विनो रामस्य प्राकृतस्येव परवञ्चनम्, कथं वा तत्र न परवञ्चनजन्यपापभाक्त्वमिति चेदेवं समाधेयम्—परदुःखासहिष्णुतया तेषां दुःखनाशाय रामस्य तदनुष्ठानं सदिच्छाप्रसूतमिति न पापाय नायशसे वा, प्रत्युत तेषां तेषां क्लेशनाशायेति कृत्वा पुण्यजनकमेवेति । वाल्मीकीयेऽपि—

सूतमाह ततो रामस्त्वरितं तुरगोत्तमैः ।
उदङ्मुखः प्रयाहि त्वं रथमास्थाय सारथे ॥
मुहूर्त्तं त्वरितं गत्वा निवर्त्तय रथं पुनः ।
यथा न विद्युः पौरा मां तथा कुरु समाहितः ॥ २।४४।२५-२६ ।

'त्वरितं द्रुतं यथा स्यात्तथा । मुहूर्त्तम् उदङ्मुखतया गत्वा रथं पुनर्निवर्त्तय मत्समीपं प्रापय । एतस्य फलमाह—यथा नेति । पौरा मां न विद्युः रामो वनमेव गत इति न जानीयुस्तथा कुरु । रथचिह्नदृष्ट्या उत्तरदिग्भागावस्थितामयोध्यामेव रामो गत इति पौरमोहनार्थम् एवं गमनादेशः ।' इति तट्टिप्पन्याम् । पाठान्तरेऽपि—

मोहनार्थन्तु पौराणां सूतं रामोऽब्रवीद्वचः । इति २।४६।३० ।

---

1. च 'निश्चित-' । 2 ङ '-मैभिर्वै' । 3 च '-णश्च य-' ।

हृदि राम ससीतं ते ध्यायन्तस्तस्थुरन्वहम् ॥ ५६ ॥
सुमन्त्रोऽपि रथं शीघ्रं [1]नोदयामास सादरम् ।
स्फीताञ्जनपदान् [2]पश्यन् रामः सीतासमन्वितः ॥ ५७ ॥
गङ्गातीरं समागच्छच्[3]श्रृङ्गवेराद्विदूरतः ।
गङ्गां दृष्ट्वा नमस्कृत्य स्नात्वा सानन्दमानसः ।
शिंशपावृक्षमूले स निषसाद रघूत्तमः ॥ ५८ ॥
ततो गुहो जनैः श्रुत्वा रामागममहोत्सवम् ।
सखायं स्वामिनं द्रष्टुं हर्षात् तूर्णं [4]समापतत् ॥ ५९ ॥
फलानि मधु[5]पुष्पादि गृहीत्वा भक्तिसंयुतः ।
रामस्याग्रे विनिक्षिप्य दण्डवत् प्रापतद् भुवि ॥ ६० ॥
गुहमुत्थाप्य तं तूर्णं राघवः परिषस्वजे ॥ ६१ ॥

---

५६ । नरो० । अन्वहम् अनुदिनम् ।
५८ । नरो० । श्रृङ्गवेरात् श्रृङ्गवेरनाम्नो गुहजनपदादित्यर्थः ।
५९ । नरो० । समापतत् समागच्छत् ।

---

५८ । श्रृङ्गवेरं श्रृङ्गऋष्याश्रमस्तदविदूरतस्तत्पूर्वभागे । रा० ।

श्रृङ्गवेर इति । 'श्रृङ्गाणि सन्ति येषां ते श्रृङ्गा मृगाः पर्वता वा, तैः सह तेषु वा अवेरं नित्यं प्राप्तिर्यस्य स एव ऋषिस्तस्य पुरं तद्विवाहे लब्धं पत्तनमिति यावत् । अवेत्युपसर्गाकारलोपः ।' इति वाल्मीकिरामायणटीकायां शिरोमणिः । श्रृङ्गिबेर इति पाठे—'श्रृङ्गिण कृष्णसारादयस्तेषां बेराणि कृत्रिमशरीराणि वञ्चनेन सजातीयमृगग्रहणार्थानि यस्मिन् तत् श्रृङ्गिबेरम् । 'प्रतिच्छन्दः प्रतिनिधिर्बेरश्च प्रतिरूपकमि'ति वैजयन्ती ।' इति तत्रैव गोविन्दराजः ।

अत्र शिंशपावृक्षमूले रामादीनामवस्थानम्, वाल्मीकीये पुनरिङ्गुदीवृक्षमूले । तथा च—

'अविदूरे ह्ययं नद्या बहुपुष्पप्रबालवान् ।
सुमहानिङ्गुदीवृक्षो वसामोऽत्रैव सारथे ॥ इति । २।४७।९ ।

५९ । जनैः जनमुखैः । अय सखा समानख्यातिस्तत्समानज्ञानः । अनेन गुहस्य धर्मव्याधादिवत्तत्त्वज्ञत्वं सूचितम् । अथाऽपि 'सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वमि'ति न्यायात् स्वामिनं द्रष्टुमिति । रा० ।

---

1. ग ड-च छ 'चोद-' । 2 च 'राम सीतालक्ष्मणसंयुत' । 3 क ख 'श्रृङ्गिवेरा-', ग 'श्रृङ्गवेराद-', घ च छ 'श्रृङ्गवेरा-' । 4 च-छ 'समागमत' । 5 ड '-पुष्पाणि' ।

[1]संपृष्टकुशलो राम गुहः प्राञ्जलिरब्रवीत् ।
धन्योऽहमद्य मे जन्म [2]नैषाद् लोक[3]पावनम् ।
बभूव परमानन्द· स्पृष्ट्वा तेऽङ्गं रघूत्तम ॥ ६२ ॥
नैषादराज्यमेतत् ते किङ्करस्य रघू[4]त्तम ।
त्वदधीन[5] वसन्नत्र पालयास्मान् रघूद्वह ।
आगच्छ [6]ग्रामो नगर [7]पावनं कुरु [8]मे गृहम् ॥ ६३ ॥
गृहाण फलमूलानि त्वदर्थं सञ्चितानि मे ।
अनुगृह्णीष्व भगवन् दासस्तेऽह [9]सुरोत्तम ॥ ६४ ॥
रामस्तमाह [10]सुप्रीतो वचनं शृणु मे सखे ।
न वेक्ष्यामि गृह ग्राम [11]वर्षाणि नव पञ्च च ॥ ६५ ॥
दत्तमन्येन [12]नो भुञ्जे फलमूलादि[13] किञ्चन ।
राज्य ममैतत् ते सर्व [14]त्वं सखा मेऽतिवल्लभः ॥ ६६ ॥

---

६५ । नरो० । प्रार्थितोऽपि सखा मद्गृहं न यात इति कृत्वा गुहो दु·खी मा भूदिति हृदि निधायाऽऽह—न वेक्ष्यामीति । ग्राममित्युपलक्षणम् । नव पञ्च चतुर्दशेत्यर्थ । वर्षाणि वत्सरान् ।

६६ । नरो० । तदर्थं सञ्चितानि फलमूलानि प्रार्थितोऽपि सखा न गृहीतवान् इति कृत्वा गुहो दु·खी मा भूदिति हृदि कृत्वाह—दत्तमित्यादि । अन्येन गृहिणा । प्रार्थितोऽपि सखा मम

---

६२ । नैषादमपि मे जन्म धन्य' त्वदङ्गस्पर्शादिति भाव·, अद्य लोकपावनम् अभूत् ।

६३ । एतत्ते किङ्करस्य नैषादराज्य यत्त्वदधीनमतोऽत्र वसन् अस्मान् पालय । अत्र न ते पितु स्वाम्यमित्यतो वासे दोषाभाव इति भाव । रा० ।

६४ । दास इत्यनेन भोज्याहारता सूचिता । रा० ।

६५ । अत्राऽऽह वाल्मीकि·—

यदिदं भवता किञ्चित् प्रीत्यर्थमुपकल्पितम् ।
सर्वं तदनुजानामि न हि वर्त्ते प्रतिग्रहे ॥ इति २।४७।२० ।

६६ । एतत्ते सर्वं राज्य ममैव, त्वञ्च मे सखैव तत्त्वज्ञत्वात् । तथाऽपि प्रतिज्ञारक्षणाय ते ग्रामं न प्रविशामीति भाव· । रा० ।

---

1 छ 'सतुष्य कु-' । 2 च 'नैषाधं' । 3 क-ख-घ-च-छ '-पावन' । 4 च '-द्वह' । 5 च '-धीनान्' । 6 ग-छ 'राम' । 7. च 'पवित्र' । 8 छ 'मद्गृ-' । 9. ग-ङ-च 'रघूत्तम' । 10. ग 'सप्रीतो' । 11 क-ख-घ 'नव वर्षाणि पञ्च च' । 12. च 'भोक्तव्य फलमूलादिकञ्च न' । 13. ग-ङ-छ '-दिकञ्च यत्' 14 च 'सखा मेऽतीव वल्लभ' ।

वटक्षीरं समानाय्य जटामुकुटमादरात् ।
बबन्ध लक्ष्मणेनाथ सहितो रघुनन्दन ॥ ६७ ॥
जलमात्रन्तु सम्प्राश्य सीतया [1]सह राघवः ।
आस्तृतं कुश[2]पर्णाद्यैः शयनं लक्ष्मणेन [3]हि ॥ ६८ ॥
उवास तत्र [4]नगरे प्रासादाग्रे यथा पुरा ।
सुष्वाप तत्र वैदेह्या पर्यङ्क इव [5]संस्कृते ॥ ६९ ॥
ततोऽविदूरे परिगृह्य चापं सबाणतूणीर[6]धनुः स लक्ष्मणः ।
ररक्ष रामं परितो विपश्यन् गुहेन सार्द्धं सशरासनेन ॥ ७० ॥

इति श्रीमदध्यात्मरामायणे अयोध्याकाण्डे उमामहेश्वर-संवादे पञ्चमोऽध्यायः ॥ ५ ॥

---

राज्यं न स्वीकृतवानिति कृत्वा दुःखी मा भूदिति हृदि निधायाऽऽह—राज्यमित्यादि । अतिवल्लभोऽतिप्रियः ।

६७ । नरो० । वटक्षीरं समानाय्य जटा आदरात् मुकुटं बबन्ध परस्परेण परस्परं बद्धा कृतवानित्यर्थः । यद्वा जटाभिर्निर्मितं मुकुटं जटामुकुटम्, बबन्ध लताभिरिति शेषः ।

६९ । नरो० । प्रासादाग्रे राजसदनाग्रभागे ।

७० । नरो० । सशरासनेन सचापेन ।

[ अयोध्याकाण्डे पञ्चमाध्यायव्याख्या समाप्ता ॥ ५ ॥ ]

---

६७ । समानाय्य गुहेनेति शेषः । अथ आनयनानन्तरं वार्त्तानन्तरं वा । रा० ।

६९ । लक्ष्मणेन यदास्तृतं शयनं शय्या, तत्र वैदेह्या सह सुष्वाप इति पूर्वेणान्वयः ।

---

1 क 'राघव सदा' । 2 च-छ '-पला-' । 3 ग 'च' । 4. क-ख घ 'नगरप्रा' ।
5 ङ 'सुस्थिते' । 6. ग-ङ च '-धर' ।

# षष्ठोऽध्यायः



[1]सुप्तं रामं समालोक्य गुहः [2]सोऽश्रुपरिप्लुतः ।
लक्ष्मणं प्राह विनयाद् भ्रातः पश्यसि राघवम् ॥ १ ॥
शयानं कुशपत्रौघसंस्तरे सीतया सह ।
यः शेते स्वर्णपर्यङ्के स्वास्तीर्णे भवनोत्तमे ॥ २ ॥
कैकेयी रामदुःखस्य कारणं विधिना कृता ।
मन्थराबुद्धि[3]मास्थाय कैकेयी पापमाचरत् ॥ ३ ॥

---

२ । नरो० । कुशपत्रौघसंस्तरे कुशपत्रसमूहास्तरणे । शोभनमास्तीर्णं यत्र तस्मिन् तथा ।

---

१ । षष्ठे गत्वाऽथ वाल्मीकेराश्रमं तेन संस्तुतः ।
मुनीन्द्रैः सहितस्तत्रावसत् सुखमितीर्यते ॥ रा० ।

स पूर्वाध्यायप्रस्तुतः रामस्य चिरमित्रत्वेन प्रसिद्धो गुहः । विनयादिति । एतेन जात्या नीचस्यापि तस्य समुदाचारपरिनिष्ठितत्वं सूचितम् ।

२ । कुशपत्रनिर्मिते संस्तरे आस्तरण इत्यर्थः । शोभने राङ्कवादिभिरास्तीर्णे । रा० ।

कीदृशं तमित्याह—शयानमित्यादि । भवनोत्तमे अयोध्याया इति शेषः । स्वास्तीर्णे स्वर्णपर्यङ्के यः शेते कुशपत्रौघसंस्तरे शयानं तं पश्यसीति पूर्वेणान्वयः । अनेन रामस्यावस्था-विपर्ययदर्शनेन सुहृदो गुहस्य अतिशयक्लेशभाजनत्वं ध्वनितम् । अत्र खेदो गुहस्य, वाल्मीकीये पुनर्गुहेन विश्रामार्थमनुरुद्धस्य लक्ष्मणस्य । तथा च—

लक्ष्मणस्तमुवाचेदं रक्ष्यमाणास्त्वयाऽनघ ।
नात्र भीता वयं सर्वे जागृम किन्तु चिन्तया ॥
कथं दाशरथौ भूमौ शयाने सह सीतया ।
शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा ॥
यो न देवासुरैः शक्यः प्रसोढुं सहितैर्युधि ।
तं पश्य गुह संविष्टं तृणेषु सह भार्यया ॥ इति २।४८।८-१० ।

३ । प्रकृते कैकेय्या अपराधाभाव इति सूचयन्नाह—विधिना कृतेति । विधेरपि कैकेय्यां

---

1. च-छ-पुस्तकयोरितः पूर्वं 'श्रीमहादेव उवाच' इत्यधिकम् । 2 ग ङ च-छ 'साश्रुप-' । 3 ङ '-मादाय' ।

तच्छ्रुत्वा लक्ष्मणः प्राह सखे शृणु वचो मम ।
कः कस्य हेतुर्दुःखस्य [1]कश्च हेतुः सुखस्य [2]वा ॥ ४ ॥
[3]स्वपूर्वार्जितकर्मैव कारणं सुखदुःखयोः ॥ ५ ॥
सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा ।
अहं करोमीति वृथाऽभिमानः स्वकर्म[4]सूत्रग्रथितो हि लोकः ॥ ६ ॥

४ । नरो० । कैकेयीत्यादिना गुहेन प्रतिपादितं कैकेय्या रामदुःखकारणत्वं निषेधति—कः कस्येत्यादिना । कः कस्य हेतुर्दुःखस्य इति कस्यापि दुःखस्य न कोऽपि हेतुरित्यर्थः ।

५ । नरो० । तर्हि कारणं विना कथं तयोरुत्पत्तिरित्यत आह—स्वपूर्वार्जितकर्मैवेति । स्वेन पूर्वस्मिन् जन्मन्युत्पादितं कर्मैवेत्यर्थः । एवकारेण परस्य कारणत्वव्यवच्छेदः ।

६ । नरो० । कथं तर्हि अयमस्मै दुःखं ददातीत्याद्यनुभवः इत्यत आह—सुखस्येत्यादि ।

---

तादृशं प्रभुत्वं न दृश्यते इत्याह—मन्थराबुद्धिमास्थायेति । मन्थराबुद्धिमास्थाय आश्रित्य तदायत्तीभूयेत्यर्थः ।

४ । कैकेयीमन्थरयोरपि हेतुत्वं निराकुर्वन् आह—कः कस्येति । परः परस्य सुखदुःखहेतुर्न भवति, अपि तु स्वस्य कर्मार्जितफलमेव तयोर्हेतुः स्यादित्याशयः ।

५ । पूर्वं पौरजनमुखेन

'बलवान् विधिरेवात्र पुंप्रयत्नोऽतिदुर्लभः ।'

इत्यादिना विधेः प्राधान्यमुक्तम् । इदानीं पुनः

फलं कर्मायत्तं किमपरगणैः किञ्च विधिना
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ।

इत्युक्तरीत्या विधेरपि कर्मायत्तत्वं विगणय्य कर्मैव बलवदिति बुद्ध्याह—स्वपूर्वार्जितेति । एवशब्दोऽत्रान्ययोगव्यवच्छेदकः । तेन च कर्मणः इतरस्य कस्यापि न सुखदुःखहेतुत्वम् ।

दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ।
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥ १।३४९ ।

इत्यादियाज्ञवल्क्यवचनेनापि दैवाधीना एव सुखदुःखादिरूपा कर्मसिद्धिः । तत्र दैवं 'पूर्वजन्मार्जितं कर्म तद्दैवमिति कथ्यते ।' इत्युक्तरीत्या 'तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकमि'त्युक्तरीत्या च पूर्वजन्मार्जितं कर्मैव, अतः सुखदुःखादिविधौ पूर्वार्जितकर्मरूपं दैवमेव बलवदिति भावः । यद्वा विधिर्बलवानिति यदुक्तं तदपि पूर्वजन्मार्जितकर्मरूपं दैवपरमिति सर्वं सुसमञ्जसम् ।

६ । तदेवोपपादयति—सुखस्येति । स्वयमपि तस्य न सम्पादकः इत्याह—अहमिति ।

---

1 च 'को वा' । 2 च 'च' । 3 ग 'स्वकमार्जित-' । 4 च '-सूत्रैर्-' ।

सुहृन्मित्रार्युदासीनद्वेष्यमध्यस्थबान्धवाः ।
स्वयमेवाऽऽचरन् कर्म तथा तत्र विभाव्यते ॥ ७ ॥
सुखं वा यदि वा दुःखं स्वकर्मवशगो नरः ।
यद् यद् यथागतं तत्तद् भुक्त्वा [1]सुस्थमना भवेत् ॥ ८ ॥
न [2]ते भोगागमे वाञ्छा न [3]ते भोग[4]विसर्जने ।
आगच्छ[5]त्वथ वा गच्छन्न भोगवशगो [6]भवे ॥ ९ ॥

---

तर्हि कर्मैव न क्रियतामित्यत आह—अहमित्यादि । अहं करोमीति वृथाभिमानः सन् लोकः स्वकर्मसूत्रग्रथितो भवतीति सम्बन्धः । अहं करोमीति वृथा मिथ्या अभिमानो ज्ञानं यस्य स तथा । स्वकर्मसूत्रग्रथित इति स्वस्य कर्मैव सूत्रं तेन ग्रथितः स्वकृतेन कर्मणा बद्ध इत्यर्थः । अहं करोमीति वृथाभिमानं विना कृतमपि कर्म बन्धनं न भवतीति भावः ।

७ । नरो० । तर्हि कथं सुहृदिदं सुखजनकं कर्माऽऽचरितवानित्याद्यनुभव इत्यत आह—सुहृदित्यादि । उपकृत उपकारकः सुहृत्, उपकारं विना उपकारको मित्रम्, अरिः शत्रुः । मित्रत्वशत्रुत्वाभावरहित उदासीनः, द्वेष्यो हन्तव्यत्वबुद्धिविषयः, बान्धवो भ्रात्रादिः । न आचरन्तीति शेषः । आचरन् आचार्यमाणं तथा तदाचरितत्वेन तत्र सुहृदादिषु विभाव्यते अध्यस्यते ।

८ । नरो० । सुखदुःखे प्राप्य हर्षविषादाश्रयेण न भाव्यमित्याह—सुखं वेत्यादिना । स्वकर्मवशगः प्राक्तनकर्मायत्त इत्यर्थः ।

९ । नरो० । सुस्थमनस्त्वेन किमिति चेत्तत्राऽऽह—न ते इत्यादि । अतः सुस्थमनस्त्वाद्

---

अहं सुखादिजनकक्रियां करोमीत्यपि वृथाऽभिमानः, अस्वातन्त्र्यादिति भावः । तदेवाऽऽह—स्वकर्मसूत्रेण ग्रथितः ईश्वरेणेति शेषः । यथा सूत्रयुक्तां काष्ठपुत्तली सूत्रधारो नानाप्रकारसूत्रचालनेनानेकविधक्रियावती करोति, एवं भगवान् कर्मरूपसूत्रचालनेन तथा तथा कारयतीति भावः । रा० ।

७ । सुहृन्मित्रे सोपाधिनिरुपाधिभेदाद्भिन्ने एवमरिद्वेष्यौ, एते कर्म सुहृत्त्वादिप्रयोजकं कर्म स्वयमेवाऽऽचरन् येन सुहृत्त्वादिभावो भवति एवं तत्र सुखदुःखादिविषयेऽपि विभाव्यते ज्ञायत इत्यर्थः । रा० ।

८ । स्वकर्मवशगो नरः यद् यत् सुखं वा दुःखं वा यथागतं यथाप्राप्तं भवति तत्तद् भुक्त्वा स्वस्थमना रागद्वेषहीनो भवेत् । रा० ।

९ । भोगागमे सुखभोगप्राप्तौ भोगविवर्जने दुःखभोगप्राप्तौ वाञ्छामेवाभिनयति—

---

1 क-ख-घ-च-छ 'स्वस्थ-' । 2 क-ख-घ 'मे' । 3. क-ख-घ 'मे' । 4 क-ख-ग-घ-ङ '-विवर्जने' छ '-विवर्जिते' । 5 क-ख-घ-च-छ '-त्वथ मागच्छत्वभोग-' । 6 ग-ङ-च 'भवेत्' ।

यस्मिन् देशे च काले च [1]यस्माद्वा येन केन वा ।
कृत शुभाशुभ कर्म भोज्यं तत् [2]तत्र नान्यथा ॥ १० ॥
अलं हर्षविषादाभ्यां शुभाशुभफलोदये ।
विधात्रा विहितं यद् यत् तदलङ्घ्यं सुरासुरैः ॥ ११ ॥

---

भोगागमे भोगप्राप्तौ सुखस्येति शेष । भोगविसर्जने भोगत्यागे दु खस्येति शेष· । कामनैव बन्धकारणमिति भावः । तदेव द्रढयितुमाह—आगच्छन्नित्यादि । आगच्छन्नर्थात् परलोकात्, गच्छन्नर्थात् परलोकम् ।

१० । नरो० । येन केनापि कृतस्य शुभाशुभकर्मणोऽवश्यभोग्यत्वं दर्शयन्नाह—यस्मिन् देशे चेत्यादि । यस्माद्वा कामात् क्रोधाद् भयान्मोहाल्लोभाद्वेत्यर्थ । शुभञ्च तदशुभञ्चेति तच्छुभाशुभम् । तत्र तस्मिन् देशे काले चेत्यर्थ ।

११ । नरो० । सुखदु खयोरपूर्वत्वाभावात् प्राप्तौ हर्षविषादावनुचितावित्याह—अल-मित्यादिना । उपादेयत्वात् सुख भोक्तव्यम्, अनुपादेयत्वाद् दु ख न भोक्तव्यमिति चेत्तत्राऽऽह—विधात्रेत्यादि । विहित ललाटे लिखितमित्यर्थः । सुरासुरै सुरासुरैरपीत्यर्थ ।

---

आगच्छत्विति सुखमिति शेष । मागच्छतु दु खमिति शेष· । अत एवाहं भोगवशगो न भवे । अ इति निषेधार्थकमव्ययम्, पृथक्पदम् । यथैवाहं तथैव रामोऽपीति न किञ्चिदस्माकमेतत्कृतं दु खमिति भाव । रा० ।

[ न ते भोगागमे वाञ्छेति । तव भोगागमे भोगप्राप्तौ भोगविवर्जने भोगत्यागे वाञ्छा इच्छा न । किन्तु कर्मवशादेव भोग आयाति गच्छति च । आगच्छन्निति—भोग आगच्छन् गच्छन् वा भवतु, जनो भोगवशो न भवेत्, तदर्थं हर्षशोकौ न कुर्यात् । गो० ]

१० । यस्मादिति । प्राप्य फलमिति शेष· । 'तत् तत्रे'त्युपलक्षणम्, तस्मात्तेनेत्यपि बोध्यम् । रा० ।

११ । यद् यद्विधात्रा विहित तदलङ्घ्यमिति निश्चित्य तत्तत्फलोदये हर्षविषादाभ्यामलम् । एव चास्मत्कृते त्वया विषादो न कार्य इति भाव । रा० ।

विधात्रेति । यदि कर्मैव बलवत्, तदेव सुखदु खकारणम्, तत् कुत पुनराह विधात्रेति इति चेत् एवं समाधेयम्,—विधिर्हि कर्मजन्यादृष्टाधीनो न तु स्वाधीन· । कर्म च तं द्वारीकृत्य सुखदु·खादिकं विभजते इति तस्यैव कर्तृत्वव्यपदेश इति न विरोध । यद्वा अनयोरभेदमङ्गी-कृत्यैवमुक्तमिति ।

---

1. च 'यस्मिन् वा' । 2 ग 'तत्र वाऽन्यथा' ।

सर्वदा सुखदुःखाभ्यां नरः प्रत्यवरुध्यते ।
शरीरं [1]पुण्यपापाभ्यामुत्पन्नं सुखदुःखवत् ॥ १२ ॥
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
द्वयमेतद्धि जन्तूनामलङ्घ्यं दिनरात्रिवत् ॥ १३ ॥
सुखमध्ये स्थितं दुःखं दुःखमध्ये स्थितं सुखम् ।
द्वयमन्योऽन्यसंयुक्तं प्रोच्यते जलपङ्कवत् ॥ १४ ॥

---

१२ । नरो० । सुखदुःखाभ्यां न केवलं हर्षविषादौ जन्येते किन्तु नरो बध्यते चेत्याशयेनाऽऽह—सर्वदेति । प्रत्यवरुध्यते बध्यते इत्यर्थः । सुखदुःखयोः पुण्यपापसत्तासत्ताकत्वात् सुखदुःखाभ्यामित्युक्तम् । तदेवोपपादयति—शरीरमिति ।

१३ । नरो० । यदि कादाचित्के सुखदुःखे स्यातां तर्हि एव हर्षविषादावुचितौ स्यातामित्यभिप्रेत्याऽऽह—सुखस्यानन्तरमित्यादि । दृष्टान्तमाह—दिनरात्रिवदिति ।

१४ । नरो० । कादाचित्कत्वाभावेऽपि यदि सुखदुःखे परस्परसंयुक्ते न स्यातां तदा

---

१२ । आवश्यकश्च शरीरिणां तत्सम्बन्ध इत्याह—सर्वदेति । पुण्यपापजत्वाच्छरीरस्य तदवच्छेदेन सुखदुःखवत्तावश्यकत्वादयं नरः सदा ताभ्यां प्रत्यवरुध्यते । रा० ।

शरीरं पुण्यपापाभ्यामिति । पुण्यजन्यं पापजन्यञ्च शरीरमित्यर्थः ।

'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥ १२।९ ।
इह दुश्चरितैः केचित् केचित् पूर्वकृतैस्तथा ।
प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्ययम् ॥ ११।४८ ।

इत्यादिमानववचनेन जीवशरीरविपर्यये स्वकर्मदोष एव बलीयान् इत्याह । तेन च शरीरस्य पापजत्वं स्पष्टमायातम् । कथं पुण्यजत्वम् इति चेत्

'पुण्यापुण्याश्रयमयी स्थितिर्जन्तोस्तथोदरे' । ११।१० ।

इत्यादिमार्कण्डेयपुराणवचनेन जन्तोरुदरस्थितिः शरीरधारणार्थम्, तच्च पुण्येनापुण्येन इत्युक्तत्वात् शरीरं पुण्यपापाभ्यामिति शोभनमेव ।

१३ । सुखस्यानन्तरं दुःखमिति । शरीरिणां पुण्यस्य क्षये तदुत्थस्य सुखस्यापि क्षय इति सुखात् परं पापजन्यदुःखभोगः, पुनः पापक्षये पुण्योदयात् तदधीनसुखस्य भोगः पुण्यपापोभयजत्वात् तेषामिति भावः ।

१४ । इदानीं पदार्थमात्रस्य त्रिगुणात्मकत्वेन सुखस्यापि दुःखात्मकत्वाद् हेयत्वमित्याह—

---

1 ग 'पापपुण्या-' ।

तस्माद्धैर्येण विद्वांस इष्टानिष्टोपपत्तिषु ।
न हृष्यन्ति न मुह्यन्ति सर्वं मायेति भावनात्[1] ॥ १५ ॥
गुहलक्ष्मणयोरेवं भाष[2]तोर्विमलं नभः ।
बभूव रामः सलिलं स्पृष्ट्वा [3]प्रातः समाहितः ।
उवाच शीघ्रं सुदृढां नावमानय मे सखे ॥ १६ ॥

---

हर्षविषादावुचितौ स्यातामित्यभिप्रेत्याऽऽह—सुखमध्ये स्थितमित्यादि । दृष्टान्तमाह—जलपङ्कवदिति ।

१५ । नरो० । उपसंहरति—तस्मादिति । भावनात् निश्चयात् ।

---

सुखमध्य इति । तेनोभयमपि हेयमेवेति । तदुक्तं पतञ्जलिना—'सर्वमेव दुःखं विवेकिनः' इति । रा० ।

१५ । उपसंहरति—तस्मादिति । इष्टप्राप्तौ न हृष्यन्ति, अनिष्टप्राप्तौ न मुह्यन्तीत्यन्वयः । तत्र हेतुः—सर्वं मायेति भावनात् । न हि ऐन्द्रजालिकमायाकृतेष्टानिष्टप्राप्तौ हर्षमोहौ, तद्वदिति भावः । रा० ।

तस्मादिति । इष्टानिष्टोपपत्तिषु तुल्यदर्शिनः सन्तो न हृष्यन्तीत्यर्थः ।

समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ गीता १४।२४ ।

इत्युक्तदिशेति भावः ।

१६ । सलिलं स्पृष्ट्वेति प्रातःकालीनसकलक्रियोपलक्षणम् । रा० ।

अत्र वाल्मीकिः—

परिदेवयतस्त्वेवं दुःखार्त्तस्य महात्मनः ।
तिष्ठतो राजपुत्रस्य शर्वरी साऽत्यवर्त्तत ॥ इति । २।४८।२३ ।

वाल्मीकीये अत्रैव सुमन्त्रस्य अयोध्याप्रत्यागमनप्रारम्भः, रामं परित्यज्य गन्तुमनिच्छतस्तस्य परितापादिकम्, रामलक्ष्मणयोस्तन्मुखेन पितरि विनिवेदनञ्च (२।५०-५१) । अत्रैव च जटासंयमनवृत्तान्तः । तथा च—

जटाः कृत्वा गमिष्यामि न्यग्रोधक्षीरमानय ।
तत् क्षिप्रं राजपुत्राय गुहः क्षीरमुपाहरत् ॥
लक्ष्मणस्याऽऽत्मनश्चैव रामश्चक्रे ततो जटाः ।
दीर्घवृत्तभुजौ वीरौ जटामण्डलधारिणौ ।
अशोभेतामृषिसमौ भ्रातरौ रामलक्ष्मणौ ॥ इति । २।५२।२-३ ।

---

1. क '-ना' । 2 च-छ '-तोर्निर्म-' । 3 च 'कृतसमा-' ।

श्रुत्वा रामस्य वचनं निषादाधिपतिर्गुहः ।
स्वयमेव [1]दृढां नाव[2]मानिनाय सुलक्षणाम् ॥ १७ ॥
स्वामिन्नारुह्यतां [3]नौका सीतया लक्ष्मणेन च ॥
वाहये ज्ञातिभिः सार्द्धमहमेव समाहितः ॥ १८ ॥
तथेति राघवः सीतामारोप्य शुभलक्षणाम् ।
गुहस्य ह[4]स्तावालम्ब्य स्वयञ्चाऽऽरुहदच्युतः ।
आयु[5]धादीन् समा[6]रोप्य लक्ष्मणोऽप्यारुरोह च ॥ १९ ॥
गुहस्तान्[7] वाहयामास ज्ञातिभिः सहितः[8] स्वयम् ।
गङ्गा[9]मध्ये गता गङ्गां प्रार्थयामास जानकी ॥ २० ॥
देवि गङ्गे नम[10]स्तुभ्य निवृत्ता वनवासतः ।
रामेण सहिताऽहं त्वां लक्ष्मणेन [11]च पूजये ॥ २१ ॥
[12]सुरामांसोपहारैश्च नानाबलिभिरादृता ।
इत्युक्त्वा [13]परकूलं [14]तौ शनैरुत्तीर्य जग्मतुः ॥ २२ ॥

---

१९ । नरो० । शुभ लक्षण चिह्न यस्यास्तां तथा ।

२१ । नरो० । प्रार्थनमाह—देवीत्यादि ।

२२ । नरो० । सुराऽत्र गौडी माध्वी वा । मांसशब्दोऽत्र मृगमांसपरः । नानाबलिभिर्बहुविधपूजाभिः । आदृता श्रद्धायुक्ता ।

---

१७ । वाल्मीकीये अत्र गुहस्यापि परित्यागः । तथा च—

आमन्त्र्य स सुमन्त्रञ्च सामात्यञ्च ततो गुहम् ।
आस्थाय नावं काकुत्स्थस्तमभाषत नाविकम् । २।५२।११ ।

नाविकेनैतेषां परपारे नयनम्, न तु गुहेन ।

'ततस्तौ भ्रातरौ वीरौ तारयामास नाविकः ।' २।५२।१२ इत्युक्तेः ।

२० । वाहयामास अरित्रादिभिश्चालयामास परं पारं प्रापयितुमित्यर्थः । गङ्गामध्ये गता जानकी गङ्गां प्रार्थयामासेत्यन्वयः । रा० ।

२२ । अत्र वाल्मीकेर्गङ्गाप्रीत्यर्थमुपचाराणां पार्थक्यम् । तथा च—

---

1 छ 'शुभा'। 2 ग-ङ-च '-मानीय शुभलक्षणाम्'। 3 च 'नौका', छ 'नाव'। 4 च '-समानम्य'। 5 च '-धानि'। 6 ग-ङ-च-छ '-नीय'। 7 ङ '-स्ता'। 8 च 'तौ मुदा'। 9 ग ङ-च छ '-मध्यगता'। 10 च '-स्तेऽस्तु'। 11 ग-ङ 'प्रपूजये'। 12. ङ 'मधुपुष्पोप-', च 'वस्त्रपुष्पोप-', छ 'मधु-'। 13 ङ 'तौ पर कूल'। 14 ङ 'तत'।

गुहोऽपि राघवं प्राह गमिष्यामि त्वया सह ।
अनुज्ञां देहि राजेन्द्र नो चेत् प्राणांस्त्यजाम्यहम् ॥ २३ ॥
श्रुत्वा [1]नैषादवचनं श्रीरामस्तमथाब्रवीत् ।
चतुर्दश समाः स्थित्वा दण्डके पुनरप्यहम् ।
आयास्याम्युदितं सत्यं नासत्य रामभाषितम् ॥ २४ ॥
इत्युक्त्वालिङ्ग्य त भक्त समाश्वास्य पुनः पुन ।
निवर्त्तयामास गुह सोऽपि कृच्छ्राद्[2] ययौ गृहम् ॥ २५ ॥
तत्र मेध्यं [3]मृगं हत्वा पक्त्वा हुत्वा च ते त्रय ।
भुक्त्वा वृक्षतले सुप्त्वा सुखमासत तां निशाम् ॥ २६ ॥
ततो रामस्तु[4] वैदेह्या लक्ष्मणेन समन्वित ।
भरद्वाजाश्रमपदं गत्वा बहिरुपस्थित ॥ २७ ॥
तत्रैक वटुक दृष्ट्वा राम· [5]प्राह च हे वटो ।
रामो दाशरथि सीतालक्ष्मणाभ्यां समन्वित ।
आस्ते बहि[6]र्वनस्येति ह्युच्यतां मुनिसन्निधौ ॥ २८ ॥

---

२५ । नरो० । कृच्छ्रात् कष्टं प्राप्येत्यर्थः ।
२६ । नरो० । मेध्यं क्लीबत्वादिदोषरहितम् , मुखरोगादिरहितं वा ।

---

गवां शतसहस्राणि वस्त्राण्याभरणानि च ।
ब्राह्मणेभ्य· प्रदास्यामि तव प्रियचिकीर्षया ॥ इति । २।५२।२० ।
२४ । नासत्यमपि तु सत्यमेवेत्यर्थ· । तेनान्यथा न सम्भावनीयमिति भाव· । रा० ।
२८ । अत्राय वटुकादिसंवादरूप प्रबन्धो वाल्मीकेरनाघ्रात ।
आगत्य चाऽऽश्रमद्वारं मुनेर्दर्शनकाङ्क्षया ।
तस्थौ राम सह श्रीमान् सीतया लक्ष्मणेन च ॥
तौ विदित्वागतौ चापि भ्रातरौ रामलक्ष्मणौ ।
प्रवेशयामास मुनि स्वमाश्रमपदं तदा ॥ २।५४।१०-११ ।
इत्यादिना स्वयं मुनिनैव तेषां प्रवेशोपदेशात् ।

---

1 घ 'नैषादि'। 2 क '-द् गृह ययौ'। 3 क 'फल मूल'। 4. ङ '-श्च'। 5 च 'प्रोवाच'। 6. च '-र्वनान्तस्येत्युच्यता'।

तच्छ्रुत्वा सहसा गत्वा पादयोः पतितो मुनेः ।
स्वामिन् रामः समागत्य वनाद् बहि[1]रवस्थितः ॥ २९ ॥
सभार्यः सानुजः श्रीमानाह मां देवसन्निभः ।
भरद्वाजाय मुनये ज्ञापयस्व [2]यथोचितम् ॥ ३० ॥
तच्छ्रुत्वा सहसोत्थाय भरद्वाजो मुनीश्वरः ।
गृहीत्वाऽर्घ्यञ्च [3]पाद्यञ्च रामसामीप्यमाययौ ॥ ३१ ॥
दृष्ट्वा राम [4]यथान्याय पूजयित्वा सलक्ष्मणम् ।
आह मे पर्णशालायां[5] राम राजीवलोचन ।
[6]आगच्छ पादरजसा पुनीहि रघुनन्दन ॥ ३२ ॥
इत्युक्त्वोटजमानीय सीतया सह राघवौ ।
भक्त्या पुन पूजयित्वा चकाराऽऽतिथ्यमुत्तमम् ॥ ३३ ॥
अद्याह तपस· पारं गतोऽस्मि तव सङ्गमात् ।
ज्ञात राम तवोदन्तं भूतञ्चाऽऽगामिकञ्च यत् ॥ ३४ ॥
जानामि त्वां परात्मानं मायया कार्यमानुषम् ।
यदर्थमवतीर्णोऽसि प्रार्थितो ब्रह्मणा पुरा ।
यदर्थ वनवासस्ते तत् करिष्यामि वै [7]पुनः ॥ ३५ ॥

---

३३ । नरो० । उटजं पर्णशालाम् । आतिथ्यम् अतिथ्यर्थं भक्ष्यादिकम् ।

३४ । नरो० । तपस· पारमिति । पार सीमानम् । अत परं तपो न कर्त्तव्यमिति भावः । सङ्गमात् मेलनात् । उदन्तं वार्त्ता ।

३५ । नरो० । जीवत्ववारणाय परेत्युपात्तम् । मानुषं मां कथं परमात्मानं

---

३१ । रामसामीप्यं स्वार्थे ष्यञ् । रामसमीपमित्यर्थ· । रा० ।

३४ । तपस· पारं पूर्णतां गतोऽस्मि ।

प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
तद्विष्णो· स्मरणादेव संपूर्णं स्यादिति श्रुति ॥

इति स्मृतेर्यस्य नामस्मरणेनापि सर्वकर्मपूर्णता तस्य साक्षाद्दर्शने किं वक्तव्यमित्यर्थ । यद्वा तपस· पारं फलं सर्वतप फलमेतत् यत्तव दर्शनमित्यर्थ· । रा० ।

ज्ञातमिति । तव यद् भूतं वृत्तम् आगामिकं वर्त्तिष्यमाण भावीति यावत्, उदन्तं वार्त्ता तन्मया ज्ञातं तपोलब्धशक्त्येति शेषः । 'वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्त· स्यात्' इत्यमर· । क्लीबत्वमत्रार्षम् ।

---

1 ग-ङ-च '-रुपस्थित' । 2 ग-ङ-च 'मयोदितम्' । 3 छ 'रामस्य सामीप्यमाययौ तदा' । 4 च 'रमानाथ' । 5 क-ख घ-छ '-ला भो' । 6 च 'आगत्य' । 7 ख-घ 'पुरः' ।

जानामि ज्ञानदृष्ट्याऽहं [1]जातया त्वदुपासनात् ।
[2]इतः परं [3]त्वां किं वक्ष्ये कृता[4]र्थोऽहं रघूत्तम ।
[5]यस्त्वां पश्यामि काकुत्स्थं[6] पुरुषं प्रकृतेः परम् ॥ ३६ ॥

रामस्तमभिवाद्याऽऽह सीतालक्ष्मणसंयुतः ।
अनुग्राह्यास्त्वया ब्रह्मन् वयं क्षत्रिय[7]बन्धवः ॥ ३७ ॥

इति सम्भाष्य तेऽन्योन्यमुषित्वा मुनिसन्निधौ ।
प्रातरुत्थाय यमुनामुत्तीर्य मुनिदारकैः ॥ ३८ ॥

[8]कृतप्लवेन मुनिना दृष्टमार्गेण राघवः ।
प्रययौ चित्रकूटाद्रिं वाल्मीकेर्यत्र चाऽऽश्रमः ॥ ३९ ॥

---

ब्रवीसीति चेत्तत्राऽऽह—माययेत्यादि । कार्याय मानुष कार्यमानुषस्तम्, तथा । कार्यार्थं धृतमानुषरूपमित्यर्थः ।

३६ । नरो० । ज्ञानदृष्ट्या ज्ञानचक्षुषा । जाग्रदाद्यवस्थाभिमानिनमविद्यात्मकं मां दृष्ट्वा कुतस्तव कृतार्थत्वमित्यत आह—प्रकृतेः परमिति । प्रकृतिभिन्नमित्यर्थः ।

३७ । नरो० । क्षत्रियबन्धवो निन्दितक्षत्रियाः ।

३८ । नरो० । मुनिदारकैर्मुनिपुत्रैः ।

३९ । नरो० । कृतप्लवेन कृतोडुपेन । अपथिप्रज्ञेन सह रामः कथं गतवानिति चेत्तत्राऽऽह—दृष्टमार्गेणेति ।

---

३७ । क्षत्रियबन्धवः क्षत्रबन्धवः । 'क्षत्रबन्धुर्निन्दितक्षत्रियः' इत्यमरटीकायाम् ।

३८—३९ । ते सीतारामलक्ष्मणभरद्वाजाः अन्योऽन्य प्रागुक्तं सम्भाष्य ततो रामो मुनिसन्निधावुषित्वा यमुनायां कृताप्लवेन कृतस्नानेन मुनिना दृष्टमार्गेण दर्शितमार्गेण राघवो मार्गदर्शकैर्मुनिदारकैः सह यमुनामुत्तीर्य चित्रकूटाद्रिं प्रययौ । यत्र वाल्मीकेराश्रम इत्यनेन तस्य प्राशस्त्यम् । रा० ।

अत्र 'कृतप्लवेन' इत्यत्र रामवर्मादिधृतः 'कृताप्लवेन' इति पाठोऽसमीचीन इव प्रतिभाति ।

---

1 ग-ङ 'तात तत्त्वदु-' । 2 च 'अत' । 3 ङ छ 'किं त्वा' । 4 च '-र्थो रघुनन्दन' । 5. च-छ 'यत्त्वा' । 6 ग-ङ '-त्स्थ' । 7 क-ख-घ-ङ-च-छ '-बान्धवा' । 8 क 'कृताप्लावेन', ख-ग-घ-ङ 'कृताप्लवेन' ।

गत्वा रामोऽथ वाल्मीकेराश्रममृषिसङ्कुलम् ।
नानामृगद्विजाकीर्णं [1]नित्यपुष्पफला[2]न्वितम् ॥ ४० ॥
तत्र दृष्ट्वा [3]समासीनं वाल्मीकिं मुनिसत्तमम् ।
ननाम शिरसा रामो लक्ष्मणेन च सीतया ॥ ४१ ॥

---

४० । नरो० । नानेत्यादिना मृगाणा पक्षिणाञ्च कृतविश्वासत्व सूचितम्, तेन च तत्र स्थितानामृषीणामहिंसा सूचिता । नित्यं पुष्पफलान्वितो नित्यपुष्पफलान्वितस्तं तथा । एतेन मुनिप्रभावातिशय· सूचित· ।

---

वाल्मीकीये—

'कृत्वोडुप ग्राहवती सा हि नित्यं महानदी'

इत्यादिना उडुपेन यमुनापरपारगमने भरद्वाजोपदेशश्रवणात्

तत्र बद्धोडुप काष्ठैर्वेणुभिश्चापि तीरजै ।
सीतामारोपयाञ्चक्रे रामस्तत्र स्वयं तदा ॥ २।५५।१२ ।
तेन प्लवेनांशुमती शीघ्रगामूर्मिमालिनीम् ।
तीरजैर्गहनां वृक्षैस्तेरुस्ते यमुनां नदीम् ॥२।५५।१४।

इत्यादिना च स्पष्टमेव उडुपेन यमुनोत्तरणदर्शनात् ।

४० । ऋषिसङ्कुलम् ऋषिव्याप्तम् । द्विजाः पक्षिणो ब्राह्मणाश्च । रा० ।

४१ । रामादीनां चित्रकूटाद्रौ वाल्मीकिसमागमवृत्तान्तो वाल्मीकीये नास्ति । वाल्मीकिशब्दव्युपत्तिमाह वाल्मीकिरामायणटीकायां तिलक· । तथा च—वल्मीकस्यापत्य पुमान् वाल्मीकि· । 'अत· इञ्' इतीञ् प्रत्ययः । नन्वसौ कथं वल्मीकापत्यं यतोऽय भृगुपुत्र एव प्रतीयते । तथा च विष्णुपुराणे—

'ऋक्षोऽभूद् भार्गवस्तस्माद् वाल्मीकिर्योऽभिधीयते ।'

अन्यत्र च प्रचेतोऽपत्यत्वम् अभिधीयते, अत कथमस्य वल्मीकापत्यत्वम् ? उच्यते—निश्चलतरतपोविशेषेणास्य वल्मीकावृतौ जातायां प्रचेतसा वरुणेन कृतनिरन्तरवर्षेण प्रादुर्भावोऽभूदिति भृगुपुत्रस्यैवास्य प्रचेतसोऽपत्यत्व वल्मीकापत्यत्वञ्च सङ्गच्छते । ननु कथ तत्प्रभवत्वमात्रेण तदपत्यत्वम् ? मैवम्, गोणीपुत्र कलशीसुत इत्यादिव्यवहारस्य तत्प्रभवेऽपि बहुलमुपलब्धे । उक्तञ्च ब्रह्मवैवर्त्ते—

तथाऽब्रवीन्महातेजा ब्रह्मा लोकपितामह· ।
वल्मीकप्रभवो यस्मात्तस्माद् वाल्मीकिरित्यसौ ॥

इति । माऽस्त्वपत्यार्थत्वम्, तथाऽपि वाल्मीकिशब्द साधुरेव, 'गहादिषु (पा० ४।२।१३८)

---

1. क ग-ङ-च-ञ 'नित्य पुष्प-' । 2 क-ख घ '-कुलम्', च 'दिकम्' । 3 च 'लोकनाथ' ।

दृष्ट्वा राम रमानाथं वाल्मीकिर्लोकसुन्दरम् ।
जानकीलक्ष्मणोपेतं जटामुकुटमण्डितम् ॥ ४२ ॥
कन्दर्पसदृशाकारं [1]कमनीयाम्बुजेक्षणम् ।
दृष्ट्वैव सह[2]सोत्तस्थौ [3]विस्मयानिमिषेक्षणः ॥ ४३ ॥
आलिङ्ग्य परमानन्द रामं हर्षाश्रुलोचन ।
पूजयित्वा जगत्पूज्य भक्त्याऽर्घ्यादिभिरादृतः ॥ ४४ ॥
फलमूलै सुमधुरैर्भोजयित्वा च लालित ।
राघवः प्राञ्जलि प्राह वाल्मीकिं विनयान्वित. ॥ ४५ ॥
पितुराज्ञां पुरस्कृत्य दण्डकानागता वयम् ।
भवन्तो यदि जानन्ति किं वक्ष्यामोऽत्र कारणम् ॥ ४६ ॥
यत्र मे सुखवासाय भवेत् स्थानं वदस्व तत् ।
सीतया सहित काल [4]किञ्चित्तत्र नयाम्यहम् ॥ ४७ ॥
इत्युक्तो राघवेणासौ मुनिः सस्मितमब्रवीत् ।
त्वमेव सर्वलोकानां निवासस्थानमुत्तमम् ॥ ४८ ॥

---

४२ । नरो० । जटामुकुटमण्डितं जटाभी रचितेन मुकुटेन भूषितमित्यर्थ. ।

४३ । नरो० । कमनीयाम्बुजेक्षणं मनोहरपद्मनेत्रम् ।

४८ । नरो० । सर्वलोकानां त्वमेव उत्तम निवासस्थानमित्यन्वय । सर्वे लोका युगान्तसमये त्वया स्वोदरे निवेशिता. सन्तो भवति तिष्ठन्तीत्यर्थ. । तदानीं तत्र प्राणिनां दुःख नास्तीति हृदि कृत्वा उत्तममित्युक्तम् ।

---

पठितत्वात् । यद्वा भृगुवंशय कश्चित् प्रचेता नाम तस्यायं पुत्र ऋक्षो नाम, 'चक्रे प्रचेतस. पुत्र ' इति पुत्रत्वाभिधानात् । भार्गवभृगुनन्दनशब्दौ रामे राघवरघुनन्दनशब्दवद्बोध्यौ । वाल्मीकिशब्द पुत्रत्वोपचारात् । अत एव क्वचि'द्वाल्मीकेन महर्षिणा' इति सम्बन्धमात्रेऽण् प्रयुज्यते । सत्स्वपि नामान्तरेषु वाल्मीकिशब्देनाभिधान ज्ञानाङ्कुशमदमाद्युपेतत्वस्फोरणाय । इति ।

४५ । लालित इद मधुरमिद मधुरमिदं भुङ्क्ष्वेत्येव प्रीत्या बोधित । रा० ।

४६ । यदि जानन्तीत्यसन्दिग्धे सन्दिग्धवचनं वेदाश्चेत् प्रमाण स्युरितिवत् । सर्वथा जानन्त्येव अतोऽत्र कारणकथन विफलमिति भाव । रा० ।

४८ । त्वमेवेति । त्वद्विवर्तत्वाज्जगत इति भाव , तवापीति । अन्तर्यामितया सर्वत्र तव वासादिति भाव. । रा० ।

सर्वलोकानां सर्वेषां जनानां भुवनानाञ्च । 'त्वयि सर्वं प्रतिष्ठित'मित्युक्तेः । 'लोकस्तु भुवने जने' इत्युभयत्रापि कोष. । उत्तम सर्वश्रेष्ठं निवासस्थानम् प्रतिष्ठानिकेतनमित्यर्थ. ।

---

1, ङ-छ 'रमणी-' । 2, छ '-सा तस्थौ' । 3 छ 'विस्मितोऽनिमिषेचण ' । 4, च-छ 'कचिच्च-' ।

तवापि सर्वभूतानि निवाससदनानि [1]हि ।
एवं साधारण स्थानमुक्त ते रघु[2]नन्दन ॥ ४९ ॥
सीतया सहितस्येति विशेष पृच्छतस्तव ।
तद् वक्ष्यामि रघुश्रेष्ठ यत्ते नियतमन्दिरम् ॥ ५० ॥
शान्तानां समदृष्टीना[3]मदुष्टानाञ्च जन्तुषु ।
त्वामेव भजतां नित्यं हृदयं तेऽधिमन्दिरम् ॥ ५१ ॥
धर्मा[4]धर्मान् परित्यज्य त्वामेव भज[5]तोऽनिशम् ।
सीतया सह ते राम तस्य हृत् सुखमन्दिरम् ॥ ५२ ॥
तन्मन्त्रजापको [6]यस्तु त्वामेव शरण गत ।
निर्द्वन्द्वो निस्पृहस्तस्य हृदयं [7]ते सुमन्दिरम् ॥ ५३ ॥

---

४९ । नरो० । तवापि सर्वभूतानि निवाससदनानीति सर्वान्तर्यामित्वात् तवापि सर्वे प्राणिनो निवासनिकेतनानीत्यर्थ । अपिशब्दोऽत्र कटाक्षे ।

५१ । नरो० । यत शान्तानां रागादिदोषरहितानामतो जन्तुषु समदृष्टीनामदुष्टानाञ्च, अदुष्टानामसूयादिदोषरहितानामित्यर्थ । 'अद्वेष्टृणामि'ति पाठे देवतान्तरानिन्दकानामित्यर्थ. । त्वामेवेत्येवकारेण देवतान्तरव्यवच्छेद ।

५२ । नरो० । धर्माधर्मान् धर्मजनककर्माधर्मजनककर्माणीत्यर्थ' ।

५३ । नरो० । शरणं आश्रयम् । निर्गतानि द्वन्द्वानि शीतोष्णादीनि युग्मानि यस्य स तथा । शीतोष्णादिद्वन्द्वसहिष्णुरित्यर्थ । निस्पृहोऽर्थाद् विषयेषु ।

---

५०-५१ । नियतमन्दिर सर्वदा वासस्थानम् । समदृष्टीनां मित्रोदासीनशत्रुष्विति शेष । अत एव अद्वेष्टृणा तेषां हृदय तेऽधिक सर्वोत्कृष्ट मन्दिरमित्यर्थ । सर्वदा तत्र वासादिति भाव । रा० ।

सीतयेति—पूर्वं साधारणस्थानमुक्तमृषिणा । रामस्तु 'सीतया सहितस्य मे कुत्र वासो भवेदि'ति सीतासाहित्यवैशिष्ट्येन वासस्थानं पृष्टवान् अत इदानीं तदभिधातुमुपक्रमते इत्यर्थः ।

५२ । धर्माधर्मान् विहितनिषिद्धसकलकर्माणि त्यक्त्वा यस्त्वामेव भजते तस्य हृदयं सीतया सह वस्तु हे राम, ते तव सुखमन्दिरं सुखजनकं गृहम् । रा० ।

धर्माधर्मानिति—

'अनन्यचेता सततं यो मां स्मरति नित्यश ।' गीता । ८।१४

इति त्वदुक्तदिशैव त्वां भजतो जनस्येति शेष. ।

५३ । निर्द्वन्द्वोऽहंममेति द्वन्द्वरहितोऽत एव निस्पृह । रा० ।

---

1 च 'च'। 2 ङ '-पुङ्गव'। 3 क-ख-ग-घ-ङ-च-छ '-मद्वेष्टृणाञ्च'। 4 च 'धर्म-'। 5 च '-तेऽ-'। 6 च 'नित्य'। 7 छ 'तेऽधि-'।

निरहङ्कारिणः शान्ता ये रागद्वेषविवर्जिताः ।
[1]समलोष्टाश्मकनकास्तेषां ते हृदयं गृहम् ॥ ५४ ॥
त्वयि [2]दत्तमनोबुद्धिर्यः सन्तुष्टः सदा भवेत् ।
त्वयि [3]संन्यस्तकर्मा यस्तन्म[4]नस्ते शुभं गृहम् ॥ ५५ ॥
यो न द्वेष्ट्यप्रियं प्राप्य प्रिय प्राप्य न हृष्यति ।
सर्वं मायेति निश्चित्य त्वां भजेत्तन्मनो गृहम् ॥ ५६ ॥

---

५४ । नरो० । निरहङ्कारिणोऽहङ्कारशून्या॰ । शान्ता आत्मन्युपरतचित्ता अन्यनिगृहीतमनसो वा । रागद्वेषवर्जिता उपादेयानुपादेयपदार्थेषु प्रीत्यप्रीतिवर्जिता॰ । समानि लोष्टाश्मकनकानि येषां ते तथा । लोष्टं 'डेला' इति ख्यातम् । अश्मा प्रस्तर॰ । कनकं सुवर्णम् । निरहङ्कारत्वाच्छान्तत्वम्, शान्तत्वाद्रागद्वेषवर्जितत्वम्, रागद्वेषवर्जितत्वात् समलोष्टाश्मकनकत्वम् ।

५५ । नरो० । त्वयि दत्ते अर्पिते मनोबुद्धी येन स तथा । संन्यस्तं कर्म येन सः । एतेन फलानुसन्धानरहितत्वं सूचितम् ।

५६ । नरो० । यो न द्वेष्टीति । द्वेष्टि निन्दति ।

---

५४ । नानाविधप्रकारेण तत्त्वज्ञलक्षणान्याह—निरहङ्कारिण इति । शान्ताः शमशीला॰, लोष्टं मृत्पिण्ड॰, अश्मान॰ पद्मरागादय॰, कनकञ्चेदं सममनुपादेयत्वेन येषां ते । रा० ।

५५ । मन सङ्कल्पविकल्पात्मकम्, बुद्धिर्निश्चयात्मिका द्वयमपि येन त्वय्येव दत्तं त्वद्विषयमेव यस्य सङ्कल्पादिकमिति यावत् । सन्तुष्ट॰ कथञ्चिदशनाच्छादनलाभात् सन्तुष्ट॰ त्वयि सन्त्यक्तकर्मा त्वदर्पणबुद्ध्या कृतकर्मा त्यक्तकाम्यकर्मेति यावत् । रा० ।

त्वयीति—

'ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्परा॰ ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥' गीता । १२।६।

इत्युक्तरीत्या यस्त्वयि सर्वं कर्म समर्पयति तस्य मनस्ते गृहं तन्मनस्येव त्वं निवससीति भाव॰ ।

५६ । अप्रियं दुःखम् । द्वेषहर्षाभावयोर्हेतुः सर्वत्र मायामयत्वनिश्चय॰ । रा० ।

---

1 ङ 'समा॰ शत्रौ च मित्रे च तेषां' । 2. च 'दत्तामलाबुद्धिर्य' । 3 क-ख-ग-घ-ङ-च-छ 'सन्त्यक्त-' । 4 क '-नासौ' ।

षड्[1]वर्गादिविकारान् यो देहे पश्यति नाऽऽत्मनि ।
क्षुत्तृट्[2]सुखभवं दुःखं प्राणबुद्ध्योर्निरीक्षते ।
संसार[3]धर्मैर्निर्मुक्तस्तस्य ते मानसं गृहम् ॥ ५७ ॥
पश्यन्ति ये सर्वगुहाशयस्थ त्वां [4]चिद्घन सत्यमनन्तमेकम् ।
अलेपकं सर्वगतं वरेण्य तेषां हृदब्जे सह सीतया वस ॥ ५८ ॥
निरन्तराभ्यासदृढीकृतात्मनां त्वत्पादसेवापरि[5]निष्ठितानाम् ।
त्वन्नामकीर्त्या हतकल्मषाणां सीतासमेतस्य गृहं हृदब्जे ॥ ५९ ॥

---

५७ । नरो० । षड्वर्गादीति । षड्भि. जन्मास्तित्ववृद्धिविपरिणामापक्षयनाशैर्घटितो वर्ग., षण्णां वर्गो वा, स आदिर्येषां ते च ते विकाराश्चेति तान् तथा । क्षुत्तृडिति, प्राणे क्षुत्तृट् , बुद्धौ अन्त करणे सुखभवं दु.खं निरीक्षते पश्यतीत्यर्थ. । क्षुत्तृट् क्षुधापिपासासमाहारमित्यर्थ । सुखभवं सुखोत्पत्तिम् । संसारधर्मैरिति ससारजनकशुभाशुभादृष्टैरित्यर्थ , कामादिभिरित्यर्थो वा ।

५८ । नरो० । पश्यन्तीति । चिद्घनं सत्यमनन्तमेक त्वां सर्वगुहाशयस्थं सर्वगतमलेपक ये पश्यन्ति तेषां हृदब्जे सीतया सह वसेत्यन्वय । स्वरूपलक्षणलक्षितत्वं दर्शयितुमाह—चिद्घनं सत्यमनन्तमेकमिति । चिद्घनं चित्स्वरूपमित्यर्थ. । सत्य कालत्रये अबाधितमित्यर्थ. । अनन्तमपरिच्छिन्नमित्यर्थ । एकमद्वितीयम् । सर्वगुहाशयस्थ गुहेव आशयोऽन्त - करण गुहाशय., सर्वेषां गुहाशय तत्स्थमित्यर्थ. । सर्वगतं सर्वव्यापकमित्यर्थ । तर्हि लिप्तत्वमायातमित्यत आह—अलेपकमिति, असङ्गमित्यर्थ ।

५९ । नरो० । निरन्तराभ्यासेति । निरन्तराभ्यासेन निरन्तरपरमात्मप्रीत्यावृत्त्या

---

५७ । भावादिविकारानिति । भावोऽत्र जन्म । तेन जन्मसत्ताविपरिणामवृद्ध्यपक्षयविनाशरूपान् विकारान् यो देहे पश्यति नाऽऽत्मनि,त नित्यं वृद्धिक्षयरहितमविनाशिनं पश्यतीत्यर्थ । क्षुत्तृड्भयं प्राणस्य सुखादि बुद्धेरिति विवेकः । रा० ।

५८ । सर्वा गुहा अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयरूपास्तद्रूपो य आशय· स्थानं तत्स्थम्, चिद्घनं चैतन्यरूपं सर्वगतमप्यलेपकं न भवति लेपकं तत् सर्वं पश्यन्ति तत्र स्थितोऽपि तद्गुणास्पृष्ट इत्यर्थः । रा० ।

५९ । निरन्तरं ध्यानाभ्यासेन त्वय्येव दृढीकृतस्त्वदेकविषयीकृत आत्मा चित्त येषाम् । त्वत्पादसेवायां परिनिष्ठितानां त्वत्पराणाम् । रा० ।

---

1. क-ख-ग घ-ङ-च-छ '-भावादि-' । 2 क-ख-घ-ङ-छ 'सुख भय', च 'भय सुख' । 3 क 'धर्मैर्मुक्तस्य तस्य', च '-धर्मनिर्मुक्तस्तस्य तेऽपि मनो गृहम्', छ '-दु खनिर्मुक्तस्तस्य ते' । 4. च 'चिन्मय' । 5 ङ ' निष्ठितात्मनाम्', छ '-निश्चितात्मनाम्' ।

राम त्वन्नाममहिमा वर्ण्यते केन वा कथम् ।
यत्प्रभावादहं राम ब्रह्मर्षित्वमवाप्तवान् ॥ ६० ॥
अहं पुरा किरातेषु किरातैः सह वर्द्धितः ।
जन्ममात्र[1]द्विजत्वं मे शूद्राचाररतः सदा ॥ ६१ ॥
शूद्रायां बहवः पुत्रा उत्पन्ना मेऽजितात्मनः ।
ततश्[2]चोरैश्च संगम्य [3]चोरोऽहमभवं पुरा ॥ ६२ ॥
धनुर्बाणधरो नित्यं [4]जीवानामन्त[5]कोपमः ।
एकदा मुनयः सप्त दृष्टा महति कानने ।
साक्षान्मया प्रकाशन्तो ज्वलनार्कसमप्रभाः ॥ ६३ ॥

---

दृढीकृतः स्थिरीकृत आत्मा मनो बुद्धिर्वा यैस्तेषाम् । अथवा मननादेर्निरन्तराभ्यासेन दृढीकृत आत्मा मनो यैस्तेषाम् । हृतं नाशितं कल्मषं पापं यैस्तेषाम् । हृतकल्मषत्वान्निरन्तराभ्यास-दृढीकृतात्मत्वम्, तस्मात् त्वत्पादसेवापरिनिष्ठितत्वम् ।

६१ । नरो० । किरातेषु म्लेच्छविशेषेषु स्थित इति शेषः । न केवलं तानाश्रित्य एव स्थित इत्याह—किरातैः सह वर्द्धित इति । वर्द्धितस्तदीयद्रव्यभक्षणेनेति शेषः । किराता-नाश्रित्य स्थितस्य तैः सह तद्द्रव्यभक्षणेन वर्द्धितत्वेऽपि स्वकर्मरतत्वान्न तादृग्हानिरिति चेत्तत्राऽऽह—जन्ममात्रद्विजत्वमित्यादि । जन्ममात्रद्विजत्वं जन्ममात्रेण ब्राह्मणत्वमित्यर्थः । यद्वा जन्ममात्रद्विजत्वं संस्कारोत्पत्तिमात्रेण द्विजातित्वमित्यर्थः । मात्रपदव्यवच्छेद्यमाह—शूद्राचाररतः सदेति ।

६२ । नरो० । न केवलं मम एतादृशत्वं किन्तु शूद्राजनितबहुपुत्रत्वमपीत्याह—शूद्रायामित्यादिना । अनुत्पन्नपुत्र-सङ्गम-जन्य-पापापेक्षया उत्पन्नपुत्र-सङ्गम-जन्य-पापस्य गुरुत्व-मित्यभिप्रेत्याऽऽह—बहवः पुत्रा उत्पन्ना मेऽजितात्मन इति । ततोऽपि गुरुत्वमित्यभि-प्रेत्याऽऽह—बहव इति । उत्कटावेशं विना तदपि न तादृक् क्षतिकरमिति चेत्तत्राऽऽह—अजि-तात्मन इति, अजितेन्द्रियस्येत्यर्थः । अथवा एतादृशकुकर्मान्वितत्वं तव कुत इत्यत आह—अजितात्मन इति । न केवलमेतत् कुकर्म कृतवानहं किन्त्वपरमपि कुकर्म कृतवानित्याशयेनाऽऽह—ततश्चेत्यादि । सङ्गम्य मिलित्वा ।

६३ । नरो० । न केवलं मया लोकानां परिच्छदा गृहीताः, किन्तु तेभ्यो भयमपि

---

६० । त्वन्नाममहिमवर्णनस्य प्रकारः कर्ता च दुर्लभ इत्याह—रामेति । रा० ।

६१ । अत्रैवार्थे स्वविषयमितिहासमाह—अहमिति । किरातेषु तद्वसतिदेशेषु जन्ममात्र-द्विजत्वं जन्ममात्रेण द्विजत्वमित्यर्थः । तत्रैवोपपत्तिमाह—शूद्राचाररत इति । रा० ।

---

1. च '-त्व द्विजत्व', छ 'नद्विजन्माऽहं' । 2. घ-च '-श्चौ-' । 3 घ च 'चौ-' । 4 ङ 'धनिनाम-' । 5. ङ 'कोऽभवम्' ।

[1]तानन्वधाव लोभेन तेषां सर्वपरिच्छदान् ।
ग्रहीतुकामस्तत्राहं तिष्ठ तिष्ठेति चाब्रवम् ॥ ६४ ॥
दृष्ट्वा मां मुनयोऽपृच्छन् किमायासि द्विजाधम ॥ ६५ ॥
अहं तानब्रवं किञ्चिद्दातुं मुनिसत्तमाः ।
पुत्रदारादयः सन्ति बहवो मे बुभुक्षिताः ।
तेषां [2]संरक्षणार्थाय चरामि गिरिकानने ॥ ६६ ॥
ततो मामूचुरव्यग्राः पृच्छ गत्वा कुटुम्बकम् ।
यो यो मया प्रतिदिनं क्रियते पापसञ्चयः ॥ ६७ ॥
यूयं तद्भागिनः किं वा [3]नेति वेति पृथक् पृथक् ।
वयं स्थास्यामहे [4]तावदागमिष्यसि निश्चयः ॥ ६८ ॥
तथे[5]त्युक्त्वा गृहं गत्वा मुनिभिर्यदुदीरितम् ।
अपृच्छं पुत्रदारादीन् तैरुक्तोऽहं रघूत्तम ।
पापं तवैव तत् सर्वं [6]वयन्तु फलभागिनः ॥ ६९ ॥
तच्छ्रुत्वा जातनिर्वेदो विचार्य पुनरागमम् ।
मुनयो यत्र तिष्ठन्ति करुणापूर्णमानसाः ॥ ७० ॥
मुनीनां दर्शनादेव शुद्धान्तःकरणोऽभवम् ।
धनुरादीन् परित्यज्य दण्डवत् पतितोऽस्म्यहम् ।
रक्षध्वं मां मुनिश्रेष्ठा गच्छन्तं निरयार्णवम् ॥ ७१ ॥

---

दत्तमित्याशयेनाऽऽह—धनुर्बाणधर इत्यादि । मुनयः सप्त इति मरीच्यादयः सप्त इत्यर्थः । ज्वलनार्काभ्यां समा प्रभा येषां ते तथा । ज्वलनो वह्निः, अर्कः सूर्यः ।

६७ । नरो० । व्याकुला एवमुक्तवन्त इति चेत्तत्राऽऽह—अव्यग्रा इति ।

६९ । नरो० । फलभागिनः फलभाज इत्यर्थः ।

७० । नरो० । जातो निर्वेदः स्वावमाननमलमतिर्वा यस्य स तथा ।

७१ । नरो० । शुद्धं रागादिरहितमन्तःकरणं यस्य स तथा । निरयार्णवं नरकसमुद्रम् ।

---

६७ । पृथक् पृथक् पुत्रभार्यादिष्वेकैकं पृच्छेत्यर्थः । रा० ।

७० । जातनिर्वेदस्तादृशकर्मकृति स्वात्मनि जातापमानबुद्धिः विचार्य एते पुत्रादयो न कुत्राप्युपकर्त्तार इति विचार्य ऋषिसन्निधिं पुनरागममागतः । रा० ।

---

1. च 'तान् प्रत्य-' । 2 ङ 'सभरणार्थाय' । 3 च 'चेति' । 4 ङ-च-छ 'याव-' । 5 क-ग '-त्यक्तो' । 6. ङ 'वयं पाल्यास्तथैव ते' ।

इत्यग्रे पतितं दृष्ट्वा मामूचुर्मुनिसत्तमाः ।
उत्तिष्ठोत्तिष्ठ भद्रन्ते सफलः सत्समागमः ।
उपदेक्ष्यामहे तुभ्यं किञ्चित्तेनैव मोक्ष्यसे ॥ ७२ ॥
परस्परं समालोच्य दुर्वृत्तोऽयं द्विजाधमः ।
उपेक्ष्य एव सद्वृत्तैस्तथाऽपि शरणं गतः ।
रक्षणीयः प्रयत्नेन मोक्षमार्गोपदेशतः ॥ ७३ ॥
इत्युक्त्वा राम ते नाम [1]व्यत्यस्ताक्षर[2]पूर्वकम् ।
एकाग्रमनसाऽत्रैव मरेति जप सर्वदा ॥ ७४ ॥
आगच्छामः पुन[3]र्यावदुक्तं तत्त्वं सदा जप ।
इत्युक्त्वा प्रययुः सर्वे मुनयो दिव्यदर्शनाः ॥ ७५ ॥

---

७२ । नरो० । मुनिसत्तमा मुनिश्रेष्ठाः । मुनयस्त्वां किमुक्तवन्त इत्याकाङ्क्षायामाह—उत्तिष्ठोत्तिष्ठेत्यादि । सत्समागम इति । साधुसमागमो निष्फलो न भवतीत्यर्थः । युष्मत्-समागमस्य किं फलमित्यपेक्षायामाह—उपदेक्ष्यामहे इत्यादि । तेनैव उपदेशेनैव ।

७३ । नरो० । सद्वृत्तानां मुनीनामसद्वृत्तस्य तव उपेक्षैवोचिता कथं सहसा उपदेक्ष्यामहे तुभ्यमिति प्रतिज्ञां कृतवन्त इत्यत आह—परस्परमित्यादि । समालोच्य विचार्य । दुर्वृत्तो दुश्चरित्रः । द्विजाधमो द्विजेभ्यो निकृष्ट इत्यर्थः । उपेक्ष्यस्त्याज्यः । सद्वृत्तैः सच्चरित्रैः । शरणं गत आश्रयं प्राप्तः ।

७४ । नरो० । एतादृशाय तुभ्यं कथमेतादृशं नाम दत्तमिति चेत्तत्राऽऽह—रामेत्यादि । व्यत्यस्तं व्यतिक्रमेण क्षिप्तम् अक्षरं यस्य तादृशं रूपं यस्य तत्तथा । एकाग्रमनसा अनन्यवृत्तिचेतसा ।

---

७२ । सतां साधूनां समागमः सफलो मोक्षरूपफलजनकः । तदेवाऽऽह—यदुपदेक्ष्यामहे तेनैव मोक्ष्यसे संसारदुःखादिति शेषः । रा० ।

७३ । यद्यपि दुर्वृत्तस्तथाऽपि रक्षणीय इत्युत्तरेणान्वयः । रा० ।

७४ । व्यत्यस्तानि विपरीतपौर्वापर्याणि अक्षराणि यस्मिन् तादृशं रूपं यस्य तत्, ते नाम जपेत्यन्वयः । तदाकारो मरेति । एकाग्रमनसेति जपेति कर्त्तव्यतोपदेशः । अत्र मनसः एकाग्रता वर्णविषयैव । रा० ।

[ व्यत्यस्तः राकारमकारयोः पौर्वापर्यवैपरीत्येन अननुरूपाक्षरस्वरूपं मकारमादौ पठित्वा राकारोच्चारणरूपमित्यर्थः । गो० ]

---

1. च 'व्यस्त तारकरूपकम्' । 2 ग '-रूपकम्' । 3 क छ '-र्यावत्तावत्' ।

अहं यथोपदिष्टं[1] तैस्तथाऽकरवमञ्जसा ।
जपन्नेकाग्रमनसा बाह्यं विस्मृतवानहम् ॥ ७६ ॥
एवं [2]बहुतिथे काले गते निश्चलरूपिणः ।
सर्वसङ्गविहीनस्य वल्मीकोऽभून्ममोपरि ॥ ७७ ॥
ततो युगसहस्रान्ते ऋषयः पुनरागमन् ।
मामूचु[3]र्निष्क्रमस्वेति तच्छ्रुत्वा तूर्णमुत्थितः ।
वल्मीकान्निर्गतश्चाहं नीहारादिव भास्करः ॥ ७८ ॥
[4]मामप्याहुर्मुनिगणा वाल्मीकिस्त्वं मुनीश्वर ।
वल्मीकात् सम्भवो यस्माद् द्वितीयं जन्म तेऽभवत् ॥ ७९ ॥
इत्युक्त्वा ते ययु[5]र्दिव्यगतिं रघुकुलो[6]त्तम ।
अहं ते राम नाम्नश्च प्रभावादीदृशोऽभवम् ॥ ८० ॥
अद्य साक्षात् प्रपश्यामि ससीतं लक्ष्मणेन च ।
रामं राजीव[7]ताम्राक्षं त्वां मुक्तो नात्र संशयः ।
आगच्छ राम भद्रं ते स्थलं [8]वै दर्शयाम्यहम्[9] ॥ ८१ ॥

---

७७ । नरो० । बहुतिथे इति । अत्र कर्मधारयसंज्ञकाद्बहुतिथिशब्दादर्श-आद्यतया अप्रत्ययः 'न कर्मधारयान्मत्वर्थीयः प्रत्ययो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः' इत्यस्य व्यभिचारोऽवश्य-मेव वक्तव्यः, अन्यथा रक्तकुण्डलवानित्यादिप्रयोगोऽपि न स्यात् । यद्वा बहुतिथे इति 'बहुगणपूग-सघात्तिथुक्' (पा० ५।२।५२) इति तिथुक् ।

७९ । नरो० । वल्मीकः 'उइढिल' इति ख्यातः । अपत्यत्वमध्यस्य वाल्मीकि-रित्युक्तम् । दिव्यगतिं विलक्षणस्वर्गम् ।

८१ । नरो० । राजीवे इव ताम्रे अक्षिणी यस्य तं तथा । चक्षुषो पद्मदलाकारत्व-

---

७६ । अल्पकालजपस्यैव फलमाह—बाह्यं विस्मृतवानिति । अनेन तच्छब्दस्यापि स्मरणपूर्वकं तदर्थभूतान्तर्यामिणं विषयतया लब्धवत् मे चित्तमिति सूचितम् । रा० ।

७७ । निश्चलरूपिणो निष्क्रियशरीरस्य । रा० ।

७९ । यस्मात्ते इदानीं वल्मीकात् सम्भवः, अत इदं ते द्वितीयं जन्म वल्मीकादभवत् अतस्त्वं वाल्मीकिरिति पूर्वेणान्वयः । रा० ।

८१ । एवम्भूतं रामं यत्त्वां प्रपश्यामि तत् सर्वथा मुक्तो भविष्यामि अत्र न संशयः । अयञ्च प्रचेतोवंशजो रामायणकर्तुर्वाल्मीकेरन्य एवेति बहवः । रा० ।

---

1. ग '-ष्टैस्तै-', च '-ष्टस्तै'। 2 च-टि '-बहुतीते'। 3 छ '-र्निर्गम-'। 4 ख 'ममाप्या-'। 5 छ '-र्देव-'। 6 छ '-द्वव'। 7 क-ख-ग-घ-ङ-च-छ '-पवाच'। 8 च 'तद्-'। 9. अतः परं ग पुस्तके 'श्रीमहादेव उवाच' इत्यधिकम् ।

एवमुक्त्वा मुनिः श्रीमाल्लक्ष्मणेन समन्वितः ।
शिष्यैः परिवृतो गत्वा [1]मध्ये पर्वतगङ्गयोः ॥ ८२ ॥
[2]तत्र शालां सुविस्तीर्णां कारयामास वासभूः ।
प्राक्पश्चिम[3]दक्षिणोदक्शोभनं मन्दिरद्वयम् ॥ ८३ ॥
जानक्या सहितो रामो लक्ष्मणेन समन्वितः ।
[4]तत्र ते देवसदृशा ह्यवसन् भवनोत्तमे ॥ ८४ ॥

सूचनाय राजीवेत्युक्तम् । तयोस्ताम्रवर्णत्वसूचनाय ताम्रेत्युक्तम् । 'राजीवपत्राक्षमि'ति पाठे राजीवपत्रे इव अक्षिणी यस्येति विग्रहः कार्यः ।

८२-८३ । नरो० । यतः पूर्वं पर्वतगङ्गयोर्मध्ये वासभूर्निरूपिता अत एवमुक्त्वा श्रीमान् मुनिः लक्ष्मणेन समन्वितः शिष्यैः परिवृतः सन् तत्र गत्वा सुविस्तीर्णां शालां प्राक्पश्चिमदक्षिणोदक्शोभनं मन्दिरद्वयञ्च कारयामासेत्यन्वयः । वासयोग्या भूर्वासभूः । प्राक् च पश्चिमञ्च दक्षिणञ्च उदक् च तानि शोभनानि यस्य तत्तथा । मुनिगणवासार्थं शाला, रामलक्ष्मणवासार्थं मन्दिरद्वयमिति बोध्यम् ।

८४ । नरो० । तत्र मन्दिरद्वये लक्ष्मणेन समन्वितो जानक्या सहितो रामोऽवसदिति, एकस्मिन् जानक्या सह श्रीरामोऽवसत, अपरस्मिन् लक्ष्मणोऽवसदित्यर्थः । ते वाल्मीकिप्रभृतयो देवसदृशा भवनोत्तमे अवसन्निति सम्बन्धः ।

८२ । चित्रकूटाद्रौ आश्रमनिर्माणपरिपाटी वाल्मीके —

अस्य शैलस्य पादे तु विविक्ते सलिलावृते ।
आश्रमं चक्रतुर्वीरौ भ्रातरौ रामलक्ष्मणौ ॥
गजभग्नान्युपाहृत्य दारूण्युपवनान्तरात् ।
लतावितानबद्धे द्वे चक्रतुः शरणे पृथक् ।
वृक्षपर्णैश्च बहुभिश्छादयामासतुस्ततः ॥
ते पर्णशाले कृत्वा तु शोधयामास लक्ष्मणः ।
मृदोपलेपनं चक्रे वैदेही तनुमध्यमा ॥ इति २।५६।१९-२१ ।

८३ । तत्र ऋषिदर्शितस्थाने शालां मन्दिरद्वयं च लक्ष्मणेन समन्वितो रामः कारयामास । तत्पर्वतवासिभिर्भिल्लैरिति शेषः । वासभूरिति रामविशेषणम् । संसारस्य वासस्थानमपि स्ववासस्थानं कारितवानित्याश्चर्योक्तिः । रा० ।

[ तत्र शालामित्यादि । गङ्गापर्वतयोर्मध्ये इति पूर्वेण सम्बन्धः । तत्र गत्वा यत्र वास-

1. क 'मध्यपर्वत-' । 2. ङ 'अव' । 3 क-ख ग-घ-ङ-च-छ '-म दक्षि-' । 4 च 'वयस्ते' ।

वाल्मीकिना [1]नित्यसुपूजितोऽयं
रामः ससीतः सह लक्ष्मणेन ।
देवैर्मुनीन्द्रैः सहितो मुदास्ते
स्वर्गे यथा देवपतिः स शच्या ॥ ८९ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अयोध्याकाण्डे
षष्ठोऽध्यायः ॥ ६ ॥

---

८९ । नरो० । यथा स्वर्गे देवैः सहितः स प्रसिद्धो देवपतिरिन्द्रः शच्या सह मुदास्ते तथा वाल्मीकिना नित्यसुपूजितः ससीतो लक्ष्मणेन सह मुनीन्द्रैः सहितोऽयं रामो मुदास्ते इत्यन्वयः ।

[ अयोध्याकाण्डे षष्ठाध्यायव्याख्या समाप्ता ॥ ६ ॥ ]

---

योग्या भूः, तत्र सुविस्तीर्णां शालां शालायोग्यां भुवं विलोक्येति शेषः । मन्दिरद्वयं कारयामास, तत्र एकं प्राक्पश्चिमायतम्, द्वितीयं दक्षिणोत्तरायतम् । गो० ]

८९ । स प्रसिद्धो देवपतिः शच्या देवैश्च सहितो यथा स्वर्गे आस्ते तथा ससीतो मुनीन्द्रैः सहितो रामस्तत्राऽऽस्त इत्यर्थः । रा० ।

---

1, क-ङ-छ 'तव स', ग 'नित्यप्रपू-' ।

# सप्तमोऽध्यायः



[1]सुमन्त्रोऽपि तदाऽयोध्यां दिनान्ते प्रविवेश ह ।
वस्त्रेण मुखमाच्छाद्य बाष्पाकुलितलोचनः ॥ १ ॥
बहिरेव रथं स्थाप्य राजानं द्रष्टुमाययौ ।
जयशब्देन राजानं स्तुत्वा तं प्रणनाम [2]ह ॥ २ ॥
ततो राजा नमन्तं त सुमन्त्रं विह्वलोऽब्रवीत्[3] ।
सुमन्त्र रामः कुत्राऽऽस्ते सीतया लक्ष्मणेन च ॥ ३ ॥
कुत्र त्यक्तस्त्वया रामः किं मां पापिनमब्रवीत् ।
[4]सीता वा लक्ष्मणो वाऽपि निर्दयं मां किमब्रवीत् ॥ ४ ॥

---

१ । नरो० । वस्त्रेणेति । वस्त्रेण मुखाच्छादनं लज्जातिशयसूचकम् । बाष्पेणाश्रुणा आकुलिते व्याप्ते लोचने यस्य स तथा । बाष्पव्याप्तलोचनत्वं शोकसूचकम् ।

---

१ । सप्तमे त्वथ राजा वै स्वशापोदन्तमादितः ।
संप्रोच्योपरतः पश्चाद् भरतागम ईर्यते ॥

सुमन्त्रोऽपीति । रामं विना कृतागमनाल्लज्जया वस्त्रेण मुखमाच्छाद्य प्रविवेश । रा० ।

रामनिर्वासकृतक्लेशसमुत्थरोदनध्वनिर्बहिर्व्यक्तीभविष्यतीति पुरुषप्रकृतिसुलभं सुमन्त्रस्य मुखाच्छादनम् । दिनान्ते सायकाले । एतेनास्य रामशोकखिन्नस्य रथचालनपाटवमपि विलुप्तमिवेति ध्वनितम् । वाल्मीकीयेऽपि—

अयोध्यामाजगामाऽऽर्त्तो निवृत्तेऽहनि सारथिः ॥ इति ।२।५७।४।

२ । तद्विधोऽपि न समुदाचारज्ञानरहित इत्याह—जयशब्देनेति ।

अत्राऽऽह वाल्मीकिः—

अभिगम्य स राजानं प्रणिपत्य च सारथिः ।
यथोक्तं रामवचनं कृताञ्जलिरवेदयत् ॥ इति ।२।५७।२३।

अत्र राज्ञा पृष्टः सुमन्त्रो रामवचनमवेदयत्, वाल्मीकीये अपृष्ट एव । तत्र अतः परं दशरथस्य जिज्ञासा, सुमन्त्रस्यापि विस्तृतविनिवेदनम् । तच्च अयोध्याकाण्डस्य अष्टपञ्चाशोनषष्टिसर्गयोः ।

४ । ज्येष्ठत्वाद् धर्मतो राज्यार्हस्य रामस्य निर्वासनं पापजनकमिति कृत्वा

---

1 अतः पूर्वं सर्गारम्भे ग-ङ-पुस्तकयोः 'श्रीमहादेव उवाच' इत्यधिकम् । 2 ग ङ-च 'च' । 3 अतः परं ग-पुस्तके 'राजोवाच' इत्यधिकम् । 4 ङ-पुस्तके इदं पादद्वयं नास्ति ।

हा राम हा गुणनिधे हा सीते प्रियवादिनि ।
दु:खार्णवे निमग्नं मां म्रियमाण न पश्यसि[1] ॥ ५ ॥
विलप्यैवं[2] चिरं राजा निमग्नो दुःखसागरे ।
एवं मन्त्री [3]रुदन्त त प्राञ्जलिर्वाक्यमब्रवीत् ॥ ६ ॥
राम• सीता च सौमित्रिर्मया नीता रथेन ते ।
[4]शृङ्गवेरपुराभ्यासे गङ्गाकूले व्यवस्थिता• ॥ ७ ॥
गुहेन किञ्चिदानीतं फलमूलादिकञ्च यत् ।
स्पृष्ट्वा हस्तेन सम्प्रीत्या नाग्रहीद्विससर्ज तत् ॥ ८ ॥

---

५ । नरो० । गुणनिधे गुणसम्पन्न इत्यर्थ• ।

७ । नरो० । शृङ्गवेरपुराभ्यासे शृङ्गवेरनामनगरसमीपे इत्यर्थ• ।

---

पापिनमित्युक्तम् । सीतालक्ष्मणयो रामानुगमनानुमोदनम् अतादृशमपि काठिन्यसूचकमिति निर्दयमित्युक्तम् ।

५ । दु:खार्णवे त्वद्वियोगदुःखार्णवे मग्नमत एव म्रियमाण न पश्यसि किम् ? पश्यसीत्यर्थ• । रा० ।

६ । एवं विलप्य दुःखसागरे निमग्नो रुदन् स्थित इति शेष• । एवं रुदन्तं मन्त्री अब्रवीत् । रा० ।

मन्त्री सुमन्त्र•, स एक एव सूतत्वे मन्त्रित्वे च व्यवस्थापित• । सूतत्वञ्चास्य रथचालनादिकार्यद्वारेण स्फुटम् । तस्य मन्त्रित्वमधिकृत्य वाल्मीकि•—

अष्टावन्ये बभूवुश्च तस्यामात्या महीपते• ।
शुचयश्चानुरक्ताश्च नित्य प्रियहिते रता• ॥
धृष्टिर्जयन्तो विजयः सिद्धार्थोऽप्यर्थसाधक ।
अशोको धर्मपालश्च सुमन्त्रश्चाष्टमोऽभवत् ॥ इति । १।७।२-३ ।

रामायणमञ्जर्यां पुन

सन्धिर्जयन्तो विजय• सिद्धार्थो राष्ट्रवर्द्धन• ।
अशोको धर्मपालश्च सुमन्त्रश्चाष्टमोऽभवत् ॥ १।४४। इति ।

८ । प्रीत्या गुहप्रीत्या हस्तेन स्पृष्ट्वा नाग्रहीत्, सम्भावितकैकेयीपुत्रराज्ये नाऽऽहारं करिष्यामीति प्रतिज्ञावशादिति भाव । रा० ।

---

1 ग '-ति' । 2 क '-व' । 3 चं 'वदन्त' । 4 ख 'शृङ्गिबेर-' ।

वटक्षीरं समानाय्य गुहेन रघुनन्दनः ।
जटामुकुटमाबध्य [1]मामाह [2]नृपते स्वयम् ॥ ९ ॥
सुमन्त्र ब्रूहि राजानं [3]शोकस्तेऽस्तु न मत्कृते ।
[4]निकेतादधिकं सौख्यं विपिने [5]नो भविष्यति ॥ १० ॥
मातुर्मे [6]वन्दनं ब्रूहि शोकं त्यजतु मत्कृते ।
आश्वासयतु राजानं वृद्धं शोकपरिप्लुतम्[7] ॥ ११ ॥
[8]सीता चाश्रुपरीताक्षी मामाह नृपसत्तम ।
दुःखगद्गदया वाचा रामं किञ्चि[9]द्वेक्षती ॥ १२ ॥

---

१० । नरो० । मत्कृते मदर्थम् । निकेतात् गृहात् । सौख्यं सुखम् । नः अस्माकम् ।
११ । नरो० । शोकपरिप्लुतं शोकव्याप्तम् ।
१२ । नरो० । अश्रुणा परीते व्याप्ते अक्षिणी यस्याः सा तथा ।

---

नाग्रहीत् प्रतिग्रहपराङ्मुखत्वादिति भावः । स्फुटमाह वाल्मीकिः—

यदिदं भवता किञ्चित् प्रीत्यर्थमुपकल्पितम् ।
सर्वं तदनुजानामि न हि वर्ते प्रतिग्रहे ॥ इति । २।४७।२०।

प्रतिग्रहे भोगफलके इति तट्टीकायां तिलकः । प्रतिग्रहे न वर्ते प्रतिग्रहधर्मं नाश्रितवानस्मि इति भाव इति गोविन्दराजः । यत् सर्वमुपकल्पितं प्रापित तत् सर्वं तु प्रतिजानामि मित्रधनत्वाद् ममैवेदं सर्वमिति प्रतिज्ञां करोमि, तथाऽपि प्रतिग्रहे राजभोग्यवस्तुग्रहणे न वर्ते अतो न गृह्णामीत्यर्थः । इति शिरोमणिः ।

९ । स्वयं न तु लक्ष्मणादिमुखेन । एतेनास्य वनवासजन्यदुःखदौर्मनस्यादि नास्ति, पितरि च पूर्वानुराग एवास्तीति सूचितम् ।

१० । राजानं ब्रूहि वक्ष्यमाणं वाक्यार्थमिति शेषः । साकेतमयोध्या । अधिकं सौख्यं त्वत्कृतशुभध्यानादिति शेषः । तच्च शोकत्याग एव सम्भवतीति सर्वथा शोकस्त्याज्य इति भावः । रा० ।

११ । भवती शोकं त्यजतु । राजानमाश्वासयतु भवती इति ब्रूहीत्यन्वयः । रा० ।

१२ । अत्रेदं जानकीवाक्यं वाल्मीकिना विसंवदति । तथा च—

जानकी तु विनिश्वस्य बाष्पच्छन्नस्वरा नृप ।
भूतोपसृष्टचित्तेव वीक्षमाणा समन्ततः ॥

---

1 ङ 'त्वामाहानुनय वच'। 2 ग-च-छ 'रघुनन्दन'। 3 च 'न शोकस्तेऽस्तु मत्कृते'। 4 क-ख-ग-घ ङ-छ 'साकेता-'। 5 घ 'नौ'। 6 च 'वचन'। 7 अत पर ग-पुस्तके 'तदाज्ञापालने शक्ता नानुशोच्या कदाचन', च-पुस्तके च 'वद पालनशक्ताना नानुशोच्य कदाचन' इत्यधिकम्। 8 ग- ङ 'सीताऽप्यश्रु-', छ 'सीता अस्र-'। 9. च-छ '-दधोमुखी'।

साष्टा[1]ङ्गं प्रणिपातं मे ब्रूहि [2]श्वश्र्वोः पदाम्बुजे ।
इति प्ररुदती सीता गता [3]किञ्चिदवाङ्मुखी ॥ १३ ॥
[4]ततस्तेऽश्रुपरीताक्षा नावमारुरुहुस्तदा ।
यावद् गङ्गां समुत्तीर्य गतास्तावदहं स्थितः ।
ततो दुःखेन महता पुनरेवाहमागतः[5] ॥ १४ ॥
ततो रुदन्ती कौशल्या राजानमिदमब्रवीत् ।
कैकेय्यै प्रियभार्यायै प्रसन्नो दत्तवान् वरम् ॥ १५ ॥
त्वं राज्यं देहि तस्यैव मत्पुत्रः[6] किं विवासितः ।
कृत्वा त्वमेव तत् सर्वमिदानीं किं नु रोदिषि ॥ १६ ॥
कौश[7]ल्यावचनं श्रुत्वा [8]क्षते स्पृष्ट इवाग्निना ।
पुनः शोकाश्रुपूर्णाक्षः कौशल्यामिदमब्रवीत् ॥ १७ ॥

---

१६ । नरो० । विवासितो निःसारितः, विरुद्धवाससम्बन्धी कृतो वा ।
१७ । नरो० । क्षते अङ्गे इति शेषः । अत्र दशरथं प्रति असूया । तल्लक्षणं यथा—
असूयाऽन्यगुणर्द्धीनामौद्धत्यादसहिष्णुता ।
दोषेक्षणभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत् ॥ इति । सा० द० ३।१६६ ।

---

अदृष्टपूर्वव्यसना राजपुत्री यशस्विनी ।
पर्यश्रुवदना दीना नैव मां किञ्चिदब्रवीत् ॥
उदीक्षमाणा भर्त्तारं मुखेन परिशुष्यता ।
मुमोच केवलं बाष्पं मां निवृत्तमवेक्ष्य सा ॥ इति ।२।५८।३४-३६ ।
१३ । श्वश्र्वोः श्वश्रूश्वशुरयोः । आर्षस्त्वेकशेषः । गता चलितेत्यर्थः । रा० ।
१४ । अत्राऽऽह वाल्मीकिः—
गुहेन सह कृत्स्नञ्च तत्रैव दिवसं स्थितः ।
आशया यदि रामो मां पुनरेवाऽऽह्वयेदिति ॥ इति ।२।५९।६।
पाश्चात्त्ये पुनर्दिवसान् बहूनित्युक्तम् । तथा च—
गुहेन सार्द्धं तत्रैव स्थितोऽस्मि दिवसान् बहून् । इति ।२।६०।३।
१६ । यदि त्वं कैकेय्यै वरं दत्तवान् तर्हि तस्यैव तत्पुत्रस्यैव राज्यं देहि, राज्यस्योपा-

---

1 गघ-ङ '-ङ्गप्र-' । 2 च 'श्वशुरयो पदे' । 3 ग 'किञ्चित प्रपश्यती' । 4 ङ-च-छ 'तत साश्रुपरीताक्षी' । 5 ग 'अत. पर 'कौशल्योवाच' इत्यधिकम् । 6 च '-त्रो विनिवासित' । 7. च '-ल्याया वच' । 8 च 'क्षतस्पृष्ट', छ 'क्षतस्पृष्ट' ।

दुःखेन म्रियमाणं मां किं पुनर्दुःखयस्यलम्[1] ।
इदानीमेव मे प्राणा उत्क्रमिष्यन्ति [2]निश्चयम् ।
[3]शप्तोऽहं बाल्यभावेन केनचिन्मुनिना पुरा ॥ १८ ॥
पुराऽहं [4]यौवनोद्रिक्तश्चापबाणधरो निशि ।
अचरं मृगयासक्तो नद्यास्तीरे महावने ॥ १९ ॥
तत्रार्द्धरात्रसमये मुनिः कश्चित्तृषाऽर्दितः ।
पिपासार्दितयो पित्रोर्जलमानेतुमुद्यतः ।
अपूरयज्जले कुम्भं तदा शब्दोऽभवन्महान् ॥ २० ॥

---

१८ । नरो० । उत्क्रमिष्यन्ति ऊर्द्ध्वं भित्त्वा गमिष्यन्तीत्यर्थः । अत्र को हेतुरित्याकाङ्क्षायामाह—शप्तोऽहमित्यादि । बाल एव बाल्य तस्य भावो बाल्यभावस्तेन बाल्यभावेन मूर्खत्वेनेत्यर्थ ।

१९ । नरो० । तस्य मुनेस्त्वया किमपराद्धमित्यपेक्षायामाह—पुराऽहमित्यादि । यौवनोद्रिक्तस्तारुण्येन प्राप्तोद्रेक इत्यर्थ ।

---

देयत्वात् । मत्पुत्रविवासने तु न कारणमिति भाव । तत् सर्वं कृत्वा निर्निमित्तमविचारितं तत् कृत्वेत्यर्थ. । रा० ।

१८ । वाल्मीकीये आर्तस्य दशरथस्य वचनेन प्रतिबुद्धाया पतिव्रताया. कौशल्याया-स्तत्क्षणमेवानुताप. । तथा च—

इति राज्ञोऽतिकरुण श्रुत्वा दीनस्य भाषितम् ।
पुत्रशोकं परित्यज्य कौशल्या पतिवत्सला ॥
शिरस्यञ्जलिमाधाय भृशं सन्तप्तमानसा ।
शिरसा नृपते. पादौ प्रणिपत्येदमब्रवीत् ॥ इत्यादि । २।६३।८९ ।

बाल्यभावेन निषिद्धाचरणरूपबालकर्मणा । रा० । उत्क्रमिष्यन्ति बहिर्गमिष्यन्ति ।

१९ । यौवनोद्रिक्त यौवनेन तत्कालोचितप्रकृत्या इत्यर्थ । उद्रिक्त उत्तेजितश्चञ्चल इति यावत् । नद्यास्तीरे सरयूनदीतटे । व्यक्तमाह वाल्मीकीये—

'एतस्मिन्नीदृशे काले वर्तमानेऽहमङ्गने ।
बद्ध्वा तूणौ धनुष्पाणि सरयूमगमं नदीम् ॥ इति २।६९।१७ ।

---

1 अत पर ग-पुस्तके 'राजोवाच' इत्यधिकम् । 2 ग 'नान्यथा', ख-घ 'निश्चय' । 3 ग 'शाप सुदारुणा दत्त' । 4 क ख घ ङ 'यौवने दृप्त' ।

गजः पिबति पानीयमिति मत्वा महानिशि ।
बाणं धनुषि सन्धाय शब्द[1]वेधनमन्तिपम् ॥ २१ ॥

हा हतोऽस्मीति तत्राभूच्छब्दो मानुषसूचकः ।
कस्यापि न कृतो दोषो मया केन हतो विधे ।
प्रतीक्षते [2]मां माता च पिता च जलकाङ्क्षया ॥ २२ ॥

तच्छ्रुत्वा भयसन्त्रस्तस्ततोऽहं पौरुषं वचः ।
शनैर्गत्वाऽथ तत्[3]पार्श्वं स्वामिन् दशरथोऽस्म्यहम् ॥ २३ ॥

अजानता मया [4]विद्धस्त्रातुमर्हसि मां मुने ।
इत्युक्त्वा पादयोस्तस्य पतितो गद्गदाक्षरः ॥ २४ ॥

[5]तदा मामाह स मुनिर्मा भैषीर्नृपसत्तम ।
ब्रह्महत्या स्पृशेन्न त्वां वैश्योऽहं तपसि स्थितः ॥ २५ ॥

---

२१ । नरो० । विधतीति वेधनः शब्देन वेधनः शब्दवेधनस्तम् । धातूनामनेकार्थत्वादस्य व्यधनार्थत्वम् ।

---

२२ । मानुषसूचको मनुष्यत्वसूचकः । केन हतोऽहमिति शेषः । रा० ।

२३-२४ । अहं तत् पौरुषं वचः श्रुत्वा भयसन्त्रस्तस्ततस्तत्पार्श्वं शनैर्गत्वा अब्रवमिति शेषः । रा० ।

तत् पौरुषं वचः श्रुत्वाऽहं भयसन्त्रस्तस्तत्पार्श्वं तस्य मुनेः समीपं गत्वा गद्गदाक्षरः स्वामिन् अहं दशरथः, अजानता मानुषमिति शेषः, मया त्वं विद्धः, मुने मां त्रातुमर्हसि इत्युक्त्वा तस्य पादयोः पतित इति पूर्वेण परेण चान्वयः ।

२५ । वैश्योऽहमिति । अत्र वाल्मीकिः—

ब्राह्मणेन त्वहं जातः शूद्रायां वसता वने । इति । २।६९।४३ ।

पाश्चात्ये पुनः—

शूद्रायामस्मि वैश्येन जातो नरवराधिप । इति २।६४।५० ।

ब्राह्मणेन शूद्रायां जातः, तेन पारशवापरनामा निषादोऽयमिति सूच्यते । 'शूद्रायाम् अस्मि वैश्येन' एतेन च करणोऽयमिति सूच्यते इति, तदत्र मूलग्रन्थस्य प्राच्यपाश्चात्त्यग्रन्थयोश्च मतासाम्ये सुधिय एव सुमीमांसकाः ।

---

1 क-ख-ग-घ '-वेधिन-', ङ-च छ '-भेदिन-' । 2 च 'च मा माता', छ 'च मे माता पिता च' । 3 च '-पार्श्वे' । 4 छ 'विद्ध त्रातुम-' । 5 ग 'ततो' ।

पितरौ मां प्रतीक्षेते क्षुत्तृड्भ्यां परिपीडितौ ।
तयोस्त्वमुदकं देहि शीघ्रमेवाविचारयन् ।
[1]न चेत्त्वां भस्मसात् कुर्यात् पिता मे यदि कुप्यति ॥ २६ ॥
जलं दत्त्वा तु तौ नत्वा कृतं [2]सर्वं निवेद्य ।
शल्यमुद्धर [3]मे देहात् प्राणांस्त्यक्ष्यामि पीडितः ॥ २७ ॥
इत्युक्तो मुनिना शीघ्रं बाणमुत्[4]पाट्य देहतः ।
सजलं कलसं धृत्वा गतोऽहं यत्र दम्पती ॥ २८ ॥
अतिवृद्धावन्धदृशौ क्षुत्पिपासार्दितौ निशि ।
नाऽऽयाति सलिलं गृह्य [5]पुत्रः किं [6]वाऽत्र कारणम् ॥ २९ ॥
अनन्यगतिकौ वृद्धौ [7]शोच्यौ तृट्परिपीडितौ ।
आवामुपेक्षते किं वा भक्तिमानावयोः सुतः ॥ ३० ॥

---

२६। नरो०। अविचारयन् विचारमकुर्वन्नित्यर्थः ।

२७। नरो०। पीडातिशयात् निश्चयाभावाद्वा शल्यमित्युक्तम् ।

२९। नरो०। तत्र गत्वा ताभ्यां कथं जलं न पीतं कथं वा निशि तदानेतुं पुत्रः प्रेरित इति चेत्तत्राऽऽह—अतिवृद्धावित्यादि । अतिवृद्धाविति हेतुगर्भविशेषणम् । अन्धा विषयग्रहणासमर्था दृशौ ययोस्तौ तथा । तथात्वेऽपि पिपासापीडां विना निशि जलाहरणार्थं पुत्रस्य प्रेषणमनुचितमिति चेत्तत्राऽऽह—क्षुत्पिपासार्दिताविति । दिन एव तदर्थं पुत्रः कथं न प्रेरित इति चेत्तत्राऽऽह—निशीति । तदानीं तयोः कीदृशी चिन्ता जाता इत्यपेक्षायामाह—नाऽऽयातीत्यादि ।

३०। नरो०। अनन्यः स एव गतिः पालको ययोस्तौ तथा ।

---

२६। 'यदि कुप्यति' अनेन तस्य कोप एव नास्ति अतिशान्तत्वात् । तथाऽप्यशीघ्रगमनेन तृट्पीडितो यदि कदाचित् कुप्यतीत्यर्थः । रा० ।

२७। सर्वं कृतं बाणनिक्षेपमद्वधादिकं निवेद्य, देहाच्छल्यं बाणमुद्धर चेति चकाराध्याहारेणान्वयः कार्यः ।

३०। किमुपेक्षते उपेक्षाऽनुचितेति भावः । अनौचित्ये हेतुः—भक्तिमानिति । रा० ।

---

1 ङ-च-छ 'नो चे-' । 2 च 'पूर्वं' । 3 ग 'मद्देहात्', च 'देहान्मे' । 4. ख '-पाद्य' । 5. क-ख-ग-ङ-च 'पुत्र' । 6 क 'चात्र' । 7 च 'श्रान्तौ' ।

इति चिन्ता[1]विचारौ तौ मत्पादन्यासजं ध्वनिम् ।
श्रुत्वा प्राह पिता [2]पुत्र किं विलम्बः[3] कृतस्त्वया ।
देह्यावयोः सुपानीयं पिब त्वमपि पुत्रक ॥ ३१ ॥
इत्येवं लप[4]तोर्भीत्या सकाश[5]मगमं शनैः ।
पादयोः प्रणिपत्याहमब्रवं विनयान्वितः ॥ ३२ ॥
नाहं पुत्रस्त्वयोध्याया[6] राजा दशरथोऽस्म्यहम् ।
पापोऽहं मृगयासक्तो रात्रौ मृगविहिंसकः ॥ ३३ ॥
[7]जलावताराद् दूरेऽहं स्थित्वा जलगतं ध्वनिम् ।
श्रुत्वाऽहं शब्द[8]वेधित्वादेकं [9]बाणमथात्यजम् ॥ ३४ ॥
हतोऽस्मीति ध्वनिं श्रुत्वा भयात्तत्राहमागतः ।
[10]जटा विकीर्य पतितं दृष्ट्वाऽहं मुनि[11]दारकम् ।
भीतो गृहीत्वा [12]तत्पादौ रक्ष रक्षेति चाब्रवम् ॥ ३५ ॥
मा भैषीरिति मां प्राह ब्रह्महत्याभयं न ते ।
मत्पित्रोः सलिलं दत्त्वा नत्वा प्रार्थय जीवितम् ॥ ३६ ॥
इत्युक्तो मुनिना तेन [13]ह्यागतो मुनिहिंसकः ।
रक्षेतां मां दयायुक्तौ युवां [14]हि शरणं गतम्[15] ॥ ३७ ॥

---

३१ । नरो० । इति चिन्ता । इति चिन्तात्मको विचारो ययोस्तौ तथा ।
३४ । नरो० । शब्देन विध्यतीति शब्दवेधी तस्य भावः शब्दवेधित्वम्, तस्मात्तथा ।
३५ । नरो० । मुनिदारकं मुनिपुत्रम् ।

---

३१ । इति चिन्ताव्याकुलौ तौ आसाते, तत्र तयोर्मध्ये तत्पिता मत्पादन्यासजं शब्दं श्रुत्वा पुत्र किं विलम्ब इत्यादि प्राह । रा० ।

अत्रायं प्रघट्टः संवदति वाल्मीकिना, तथा च—

श्रुत्वैव पदशब्दन्तु ततो मां सोऽभ्यभाषत ।
किन्ते चिरायितं पुत्र पानीयं क्षिप्रमानय ॥ इति । २।६६।९ ।

३२ । एवं लपतोरित्यनेन माताऽप्येवमेवाऽऽहेति सूचितम् । रा० ।
३६ । जीवितं प्रार्थय त्वमिति शेषः ।
३७ । तेन मुनिना इत्युक्तो मुनिर्हिंसकोऽहम् आगत इति शेषः ।

---

1 क-ख-घ-' '-व्याकुलौ', ग-ङ '-परीतौ'। 2 ग-छ 'पुत'। 3 ग '-स्त्वया कृत'। 4 क '-तोभी-'। 5 ख '-गमन'। 6 ङ '-या'। 7 छ 'जलाधाराच्च'। 8. ङ-च-छ '-भेदि-'। 9 ग-ङ 'बाणमथासृजम्', च 'बाण तथाऽ'। 10 ङ 'जटा प्रकीर्य'। 11. च '-पुत्रकम्'। 12. च 'चरणौ'। 13 ग छ 'आग-', च 'आगतोऽस्मि विहिंसक'। 14. ग-च 'त्वच्छरणागतम्', ङ-छ 'त्वच्चरणागतम्'। 15. अत परं 'मामाह वृद्धो निश्वस्य मरणे कृतनिश्चयः' इत्यधिकम्।

इति श्रुत्वा तु दुःखार्तौ विलप्य बहु[1]शोच्य तम् ।
पतितौ नौ सुतो यत्र नय तत्राविलम्बयन् ॥ ३८ ॥
ततो [2]नीतौ सुतो यत्र मया तौ वृद्धदम्पती ।
स्पृष्ट्वा सुतं तौ हस्ताभ्यां बहुशोऽथ विलेपतुः ॥ ३९ ॥
हा हेति क्रन्दमानौ तौ पुत्रपुत्रे[3]त्यवोचताम् ।
जलं देहीति पुत्रेति किमर्थं न ददास्यलम् ॥ ४० ॥
[4]ततो मामूचतुः शीघ्रं चितिं रचय भूपते ।
मया तदैव रचिता चितिस्तत्र निवेशिताः ।
त्रयस्तत्राग्निरुत्सृष्टो दग्धास्ते त्रिदिवं ययुः ॥ ४१ ॥
तत्र वृद्धः पिता [5]प्राह [6]त्वमप्येवं भविष्यसि ।
पुत्रशोकेन मरणं प्राप्स्यसे वचनान्मम ॥ ४२ ॥

---

३९ । नरो० । वृद्धौ च तौ दम्पती चेति तौ तथा ।

---

३८ । पतितौ भूम्याम्, ततो मामूचतुरिति शेषः । किमूचतुस्तदाह—नौ सुत इति । आवयोः सुतो यत्र तत्राऽऽवां नयेत्यर्थः । रा० ।

४१ । चितिं चिताम् । तत्र चितौ । त्रयः—पुत्रो मातापितरौ च, तस्य तत्र, तदाज्ञया अग्निरुत्सृष्टो दत्तः । रा० ।

चितिरचनम् एकचितायां त्रयाणामेषां दाहादिकं वाल्मीकीयाद् नवीनम् ।

अपापोऽसि यथा पुत्र निहतः पापकर्मणा ।
त्वमाप्नुहि तथा लोकाञ्छूराणामनिवर्तिनाम् ॥ २।६६।३९ ।

इत्यादिना

सोऽपि कृत्वोदकं तस्य पुत्रस्य सह भार्यया ।
तपस्वी मामुवाचेदं कृताञ्जलिमुपस्थितम् ॥ २।६६।५० ।

इत्यादिना च नानेन सह तयोरेकस्यापि मरणदाहादिकमिति व्यक्तमेव प्रतीतम् ।

एवं शापमहं लब्ध्वा स्वपुरं पुनरागतः ।
सोऽप्यृषिः पुत्रशोकेन न चिरादिव संस्थितः ॥ २।६६।५५ ।

इत्यनन्तरोक्तेन च पद्येन पितुरचिरमरणमनुमातुं शक्यते, मातुस्तु न तदपि । पाश्चात्त्येऽपि नैकचितायामेषां त्रयाणां दाहः, परं पुत्रार्थोदकदानाद्दशरथशापाच्च परं तयोर्दम्पत्योश्चितारोहणम् ।

---

1 ग ङ-छ '-शोऽधमम्' । 2 च 'मृत' । 3 ग ङ-छ '-त्यशोचताम्' । 4 छ 'तौ च मामूचतुः' । 5 ख घ 'आह' । 6 च 'त्वमिवन्तं' ।

स इदानीं मम प्राप्त शापकालोऽनिवारित ।
इत्युक्त्वा विललापाथ राजा शोकसमाकुलः ॥ ४३ ॥
हा राम पुत्र हा सीते हा लक्ष्मण गुणा[1]कर ।
त्वद्वियोगादहं प्राप्तो मृत्यु [2]कैकेयिसम्भवम् ।
वदन्नेव दशरथ प्राणांस्त्यक्त्वा दिव गत ॥ ४४ ॥
कौशल्या च सुमित्रा च [3]तथाऽन्या राजयोषित ।
चुक्रुशुश्च विलेपुश्च उरस्ताडनपूर्वकम् ।
वशिष्ठ प्रययौ तत्र प्रातर्मन्त्रिभिरावृत । ४५ ॥
तैलद्रोण्यां दशरथ क्षिप्त्वा दूतानथाब्रवीत् ।
गच्छत त्वरित साश्वा युधाजिन्नगर प्रति ॥ ४६ ॥

---

तथा च तत्रैव— 'एव शाप मयि न्यस्य विलप्य करुण बहु ।
चितामारोप्य देह तन्मिथुनं स्वर्गमभ्ययात् ॥ इति २।६४।५७ ।

४३ । अनिवारितोऽशक्यनिवारण । भावे क्त । रा० ।

४४ । प्रत्येकविवक्षया त्वद्वियोगादित्येकवचनम् । रा० ।

अत्राऽऽह वाल्मीकि·—

तथा स दीन कथयन् नराधिप प्रियस्य पुत्रस्य विवाससंकथाम् ।
गतेऽर्द्धरात्रे शयनीयसस्थितो जहौ प्रिय जीवितमात्मनस्तदा ॥ इति । २।६६।६८

४६ । नारीणामार्त्तस्वरश्रवणेन अनावृतद्वारो वशिष्ठ सत्वरं प्रविश्य पौरजनसाहाय्येन मृत दशरथं तैलद्रोण्यां क्षिप्त्वा दूतानब्रवीदिति स्फुटार्थ ।

व्यक्तमाह वाल्मीकीये—

सर्वत्रानावृतद्वारो वशिष्ठो भगवानृषि ।
व्यादिश्य नाययामास राजस्त्रीभिर्बलादित ॥
ततस्तद् विजनीकृत्य मन्त्रिभि सह निश्चयम् ।
कृत्वा वशिष्ठो भगवान् प्राप्तकालमकारयत् ॥
शरीरं कोशलेन्द्रस्य तैलद्रोण्यां निवेश्य तत् ।
मन्त्रयामास सहितो मन्त्रिभिस्तदनन्तरम् ॥ २।६८।४४-४७ ।

भरतानयनार्थं दूतप्रेरणादिकमपि तत्रैव । तथा च—

---

1 ग ङ-छ '-र्णव', च '-म्बुवे'। 2 च छ '-कैकयी-'। 3 ग छ 'याश्च ता', ङ 'याश्चान्या'।

तत्राऽऽस्ते भरतः श्रीमाञ् शत्रुघ्नसहितः प्रभुः ।
उच्यतां भरतः [1]शीघ्रमाग[2]च्छेति ममाऽऽज्ञया ।
अयोध्यां प्रति राजानं कैकेयी[3]ञ्चापि पश्यतु ॥ ४७ ॥
इत्युक्तास्त्वरितं[4] दूता गत्वा भरतमातुलम् ।
युधाजितं प्रणम्योचुर्भरतं सानुजं प्रति ॥ ४८ ॥
वशिष्ठ[5]स्त्वाऽब्रवीद्राजन् भरतं सानुजः [6]प्रभुः ।
शीघ्रमागच्छतु पुरीमयोध्यामविचारयन् ॥ ४९ ॥
इत्याज्ञप्तोऽथ भरतस्त्वरितं भयविह्वलः ।
आययौ गुरुणादिष्टः [7]सह दूतैस्तु सानुजः ॥ ५० ॥
राज्ञो वा राघवस्यापि दुःखं किञ्चिदुपस्थितम् ।
इति चिन्तापरो मार्गे चिन्तयन्नगरं ययौ ॥ ५१ ॥
नगरं भ्रष्टलक्ष्मीकं जनस[8]बाधवर्जितम् ।
उत्सवैश्च परित्यक्तं दृष्ट्वा चिन्तापरोऽभवत् ॥ ५२ ॥

---

तेषां तद्वचनं श्रुत्वा वशिष्ठः प्रत्युवाच तान् ।
सुमन्त्रप्रभृतीन् सर्वान् ब्राह्मणांस्तानिदं वचः ॥
योऽसौ मातामहकुले कुमारः श्रीमतां वरः ।
भरतो वसति भ्रात्रा शत्रुघ्नेन गतः सह ॥
तमितः शीघ्रगैर्गत्वा नराः प्रजवितैर्हयैः ।
इहाऽऽनयन्तु वचनान्नृपस्यात्ययवादिनः ॥ इति । २।७०।१-३ ।

पाश्चात्ये पुनस्तैलद्रोणीस्थापनादिकम् अमात्यैः कृतमित्याह । तथा च—

व्यपनिन्युः सुदुःखार्त्तां कौशल्यां व्यावहारिकाः । इति २।६६।१३ ।
तैलद्रोण्यां तदाऽमात्याः संवेश्य जगतीपतिम् ॥ इति च २।६६।१४ ।

४७ । ममाऽऽज्ञया भरतसमीपं गत्वा शीघ्रमागच्छेति भरत उच्यताम् । अयोध्यां प्रति आगत्य कैकेयी राजानञ्च भवान् पश्यतु इति चोच्यताम् । रा० ।

५१ । राज्ञा रामेण वा माऽऽहूतः परं वशिष्ठेन इत्यतस्तयोः सम्बन्धिनी चिन्ता, वाल्मीकीये नृपाज्ञाज्ञापनपूर्वकाह्वाने दुःस्वप्नादिदर्शनजन्या सा ।

---

1 ग ङ च 'श्रीमाना-'। 2 ग-ङ-च-छ '-च्छतु'। 3 च '-यीमपि'। 4 ग '-ता'। 5 च 'स्त्वत्र' 6. च 'प्रभो'। 7 च 'दूतैस्तूर्णं सहानुजः'। 8 ङ '-वाद-'।

प्रविश्य राजभवनं राजलक्ष्मीविवर्जितम्
अपश्यत् [1]कैकेयीं तत्र एका[2]मेवासने स्थिताम् ।
ननाम शिरसा पादौ मातुर्भक्तिसमन्वितः ॥ ५३ ॥
आगतं भरतं दृष्ट्वा कैकेयी प्रेमसम्भ्रमा[3]त् ।
उत्थायाऽऽलिङ्ग्य [4]रभसात् स्वाङ्कमारोप्य संस्थिता ॥ ५४ ॥
मूर्ध्न्यवघ्राय पप्रच्छ कुशलं [5]स्वकुलस्य सा ।
पिता मे कुशली भ्राता [6]माता [7]च शुभलक्षणा ।
दिष्ट्या [8]त्वमद्य कुशली मया दृष्टोऽसि पुत्रक ॥ ५५ ॥

---

५३ । एकां न तु राजसहिताम् । कैकेय्या राज्ञा सहावस्थानं स्वाभाविकं विपरीतावस्थावलोकनेन भरतस्य उद्वेगवृद्धिरभूदिति भावः । परमोद्विग्नस्यापि तस्य कर्तव्यानुष्ठानपारतन्त्र्यं दर्शयन्नाह—ननामेति ।

तत्रेत्यनेन राजभवनस्य कैकेयीभवनस्य च एकत्वमत्र निरूपितम् । वाल्मीकीये विभिन्नमनयोर्भवनम् । भरतः प्रथमं पितुर्गृहं प्रविवेश, ततश्च पितरन्तत्रानवलोक्य मातुर्गेहमिति । तथा च—

महेन्द्रभवनप्रख्यं श्रीमदद्भुतदर्शनम् ।
प्रविश्य भवनं सोऽथ पितरं नाभ्यपश्यत ॥
अनीक्षमाणः पितरं स तत्र पितुरालये ।
जगाम निःसृत्य ततो भरतो मातुरालयम् ॥ इति । २।७४।१-२ ।

पाश्चात्येऽपि— अपश्यस्तु ततस्तत्र पितरं पितुरालये ।
जगाम भरतो द्रष्टुं मातरं मातुरालये ॥ इति । २।७२।१ ।

५४ । प्रेमसम्भ्रमात् प्रेम प्रीतिस्तस्य सम्भ्रमः संवेगस्तस्मात् । 'सम्भ्रमो भीतौ संवेगादरयोरपि' इति हेमः, स्नेहावेगादित्यर्थः । यद्वा प्रेम्णः सम्भ्रमस्त्वरा तस्मात् स्नेहोत्थत्वरयेति भावः । रभसाद् वेगेन । स्नेहवेगेनोत्थाय वेगेनैव आलिङ्ग्य इत्यर्थः । रभसा इति पाठे वेगवती सतीत्यर्थः । रभसशब्दात् अस्त्यर्थे अत्, ततस्त्रियाम् आप् ।

५५ । स्वकुलस्य स्वपितृवंशस्येत्यर्थः । अत्र मातृप्रश्नानां सम्बन्धे भरतो निरुत्तरः । वाल्मीकीये—

इति पृष्टोऽथ कैकेय्या भरतो दीनमानसः ।
शशंस मातुः स क्षिप्रं गमनागमनक्रमम् ॥

---

1 ङ 'तत्र कैकेयी'। 2 छ '-मेकासने'। 3 ग-ङ-च-छ '-मा'। 4 क-ख-ग-ङ च छ 'रभसा'। 5 ग 'तव पुत्रक'। 6 ङ 'मातरं शुभलक्षणाम्'। 7 ग छ 'वा'। 8 च 'त्वमेव'।

इति पृष्ट स भरतो मात्रा चिन्ताकुलेन्द्रिय ।
दूयमानेन मनसा मातरं समपृच्छत ॥ ५६ ॥
मातः पिता मे कुत्राऽऽस्ते एका त्वमिह सस्थिता ।
त्वया विना न मे तात. कदाचिद्रहसि स्थित ॥ ५७ ॥
इदानीं दृश्यते नैव कुत्र तिष्ठति मे वद ।
[1]अदर्शनात् पितुर्मेऽद्य भय दु खञ्च जायते ॥ ५८ ॥
अथाऽऽह कैकेयी [2]पुत्र किं दु खेन तवानघ ।
या गति[3]र्धर्मशीलानामाश्वमेधादियाजिनाम् ।
तां गतिं गतवानद्य पिता ते पितृवत्सल ॥ ५९ ॥
तच्छ्रुत्वा निपपातोर्व्यां भरत शोकविह्वल ।
हा तात क्व गतोऽसि त्व त्यक्त्वा मां वृजिनार्णवे ।
अस[4]मर्प्यैव रामाय राज्ञे मां क्व गतोऽसि भो ॥ ६० ॥
इति विह्वलित पुत्र पतित मुक्तमूर्द्धजम् ।
उत्थाप्याऽऽमृज्य नयने कैकेयी पुत्रमब्रवीत्[5] ।
समाश्वसिहि भद्र ते सर्व सम्पादितं मया[6] ॥ ६१ ॥

---

५९ । नरो० । गति स्वर्ग ।

६० । नरो० । शोकविह्वल शोकव्याकुलचित्त इत्यर्थ । वृजिनार्णवे दु खसमुद्रे ।

---

अद्य मे दिवसा सप्त नि.सृतस्य गिरिव्रजात् ।
अम्बाया कुशली तातो युधाजिन्मातुलश्च मे ॥ २।७४।८९ ।

इत्यादिना सोत्तर सत्वरश्च दृश्यते । पाश्चात्त्ये न त्वराऽपि—

'एव पृष्टस्तु कैकेय्या प्रिय पार्थिवनन्दन ।
आचष्ट भरत. सर्वं मात्रे राजीवलोचन ॥ इत्यादि । २।७२।७ ।

५९ । तां गतिमुत्तमलोकम् । एतेन तत्कृते शोकाद्यनुचितमिति सूचितम् ।

६० । वृजिनार्णवे दु खार्णवे । रामाय राज्ञे मामसमर्प्य अयं मद्वत्त्वयाऽपि पालनीय इत्यनुक्त्वैव । रा० ।

वृजिनार्णवे पापजलधौ । 'वृजिन कल्मषे क्लीबं केशे ना कुटिले त्रिषु' इति मेदिनी ।

---

1 क ख-घ 'अदृष्ट्वा पितर मेऽद्य' । 2 च 'पुत्र' । 3 च '-र्यज्ञ-' । 4 च '-मर्प्य च' । 5 अत पर च-पुस्तके 'इदानीं धर्मतो राजा किं शोकेन तवानघ' । इत्यधिकम् । 6 अत. परं च-पुस्तके 'तवाधुना कृत्यतम कर्त्तव्य नास्ति सुव्रत' । इत्यधिकम् ।

तामाह भरतस्तातो म्रियमाण किमब्रवीत्[1] ।
तमाह कैकेयी देवी भरत भयवर्जिता ॥ ६२ ॥
हा राम राम सीतेति लक्ष्मणेति [2]पुन पुन ।
विलपन्नेव सुचिर [3]देह त्यक्त्वा दिव ययौ ॥ ६३ ॥
तामाह भरतो [4]हेऽम्ब राम सन्निहितो न किम् ।
तदानीं लक्ष्मणो वाऽपि सीता वा कुत्र ते गता ॥ ६४ ॥

कैकेय्युवाच—

रामस्य यौवराज्यार्थं पित्रा ते सम्भ्रमः कृत ।
तव राज्यप्रदानार्थं [5]तदाऽह विघ्नमाचरम् ॥ ६५ ॥
राज्ञा दत्त हि मे पूर्व वरदेन वरद्वयम् ।
याचितं तदिदानीं मे तयोरेकेन तेऽखिलम् ।
राज्य रामस्य चैकेन [6]वनवासो मुनि[7]व्रतम् ॥ ६६ ॥
तत सत्यपरो राजा राज्यं दत्त्वा तवैव हि ।
राम सम्प्रेषयामास वनमेव पिता तव ॥ ६७ ॥
सीताऽप्यनुगता राम पातिव्रत्यमुपाश्रिता ।
सौभ्रात्र दर्शयन् राममनुयातो[8]ऽपि लक्ष्मण ॥ ६८ ॥
वन गतेषु सर्वेषु राजा तानेव चिन्तयन् ।
प्रलपन् राम रामेति ममार नृपसत्तम ॥ ६९ ॥
इति मातुर्वच श्रुत्वा [9]वज्राहत इव द्रुम ।
पपात भूमौ नि सञ्ज्ञस्तं दृष्ट्वा दु खिता तदा ॥ ७० ॥

---

६३ । नरो० । पूर्वोक्तश्रीरामवाक्यस्मरणादाह—हा रामेत्यादि ।

---

६५ । सम्भ्रम आदरपूर्वकोपक्रम । राज्यप्रदानाय तव राज्यं प्रदापयितुम् । अन्तर्भावितण्यर्थो ददाति । विघ्नमाचर रामयौवराज्याभिषेकस्येति शेष । रा० ।

७० । त दृष्ट्वा नि सञ्ज भरत दृष्ट्वा । अनेन भर्तृशोकादपि पुत्रशोको गरीयानिति दर्शितम् । रा० ।

---

1 अत पर च-पुस्तके 'श्रीरामेण किमुक्त हि सर्व ब्रूहि ममानघे' । इत्यधिकम् । 2 क 'ममार ह' । 3 च 'त्यक्त्वा देह' । 4 च-क 'देवि' । 5 च 'ततोऽह' । 6 ङ-क 'मुनि-' । 7 ङ '-व्रत' । 8 क '-तो हि' । 9 क 'वज्राघात' ।

कैकेयी पुनरप्याह वत्स शोकेन किं तव ।
राज्ये महति सम्प्राप्ते दुःखस्यावसरः कुतः ॥ ७१ ॥
इति ब्रुवन्तीमालोक्य मातरं प्रदहन्निव ।
असम्भाष्याऽसि [1]पापे मे घोरे [2]त्वं भर्तृघातिनि ॥ ७२ ॥
पापे त्वद्गर्भजातोऽहं पापवानस्मि साम्प्रतम् ।
अहमग्निं प्रवेक्ष्यामि विषं वा भक्षयाम्यहम् ॥ ७३ ॥
खड्गेन [3]वाऽथ चाऽऽत्मानं हत्वा यामि यमक्षयम् ।
भर्तृघातिनि दुष्टे त्वं कुम्भीपाकं गमिष्यसि ॥ ७४ ॥
इति निर्भर्त्स्य [4]कैकेयीं कौशल्याभवनं ययौ ।
साऽपि तं भरतं दृष्ट्वा [5]मुक्तकण्ठा रुरोद ह ॥ ७५ ॥
पादयोः पतितस्तस्या भरतोऽपि [6]तदा रुदन् ।
आलिङ्ग्य भरतं साध्वी राममाता यशस्विनी ॥ ७६ ॥
कृशाऽतिदीनवदना साश्रु[7]नेत्रेदमब्रवीत्[8]
पुत्र त्वयि गते दूरमेवं सर्व[9]मभूदिदम् ।
उक्तं मात्रा श्रुतं सर्वं त्वया ते मातृचेष्टितम् ॥ ७७ ॥

पुत्रः सभार्यो वनमेव यातः
सलक्ष्मणो[10] मे रघुरामचन्द्रः ।
चीराम्बरो बद्धजटाकलापः
सन्त्यज्य मां दुःखसमुद्रमग्नाम् ॥ ७८ ॥

---

७२। चक्षुषा प्रदहन्निव पश्यन्नाहेति शेषः। असंभाष्यत्वे हेतुः—भर्तृघातिनीत्वम्। रा०।

७५। तं स्वसुतस्य वनवासकारणस्वरूपम्। स्वसुतवद् भरतेऽपि स्नेहपरायणायास्तस्यास्तद्दर्शनक्षण एव शोकावेगो दुर्दमनीय आसीदिति भावः।

७८। रघुरामचन्द्रः रघुकुलजातो रामचन्द्र इत्यर्थः। रा०।

---

1 च 'पापिष्ठे'। 2 छ 'पितृविघातिनि'। 3 च 'वाऽपि'। 4 च 'भरतः कौशल्याया गृहं'। 5 ग-ङ 'मुक्तकण्ठी,' छ 'शुष्क-'। 6 च 'तदाऽरुदत'। 7 ङ '-नेत्रा तमब्रवीत'। 8 अत परं ग-पुस्तके 'कौशल्योवाच' इत्यधिकम्। 9 च '-मभूत्तदा'। 10, ङ '-गश्चापि स रामचन्द्रः'।

हा राम हा मे रघुवंशनाथ जातोऽसि मे त्वं परतः परात्मा ।
तथाऽपि दुःखं न जहाति मां वै विधिर्बलीयानिति मे मनीषा ॥ ७९ ॥
[1]स एवं भरतो वीक्ष्य विलपन्तीं भृशं शुचा ।
पादौ गृहीत्वा प्राहेदं शृणु मातर्वचो मम ॥ ८० ॥
कैकेय्या यत् कृतं कर्म रामराज्याभिषेचने[2] ।
अन्यद्वा यदि जानामि सा मया [3]चोदिता यदि ।
पापं मेऽस्तु तदा मातर्ब्रह्महत्याशतोद्भवम् ॥ ८१ ॥
हत्वा वशिष्ठं खड्गेन अरुन्धत्या समन्वितम् ।
भूयात्तत्पापमखिलं मम जानामि [4]यद्यहम् ॥ ८२ ॥
इत्येवं शपथं कृत्वा रुरोद भरतस्तदा ।
कौशल्या तं[5]मथाऽऽलिङ्ग्य पुत्र जानामि मा शुचः ॥ ८३ ॥
एतस्मिन्नन्तरे श्रुत्वा भरतस्य समागमम् ।
वशिष्ठो मन्त्रिभिः सार्द्धं प्रययौ [6]राजमन्दिरम् ॥ ८४ ॥
रुदन्तं भरतं दृष्ट्वा वशिष्ठः प्राह सादरम् ।
वृद्धो राजा दशरथो ज्ञानी सत्यपराक्रमः ॥ ८५ ॥

---

७९ । नरो० । परतः परात्मेति, परतः कारणस्य ब्रह्मादेरपि कारणात्मेत्यर्थः । प्रकृतेर्वारणाय आत्मेत्युपादानम् । विधिर्नियतिः । मनीषा निश्चयः ।

८१ । नरो० । चोदिता प्रेषिता तत् कर्म कर्त्तुमिति शेषः ।

८२ । नरो० । पत्नीसहितगुरुवधजन्यपापादधिकं पापं नास्तीति हृदि निधायाऽऽह—हत्वेत्यादि । अन्य[द्वारक]वधापेक्षया साक्षाद्वधस्य गुरुत्वमित्यभिप्रेत्याऽऽह—खड्गेनेति ।

८५ । नरो० । असमये मृतत्वात् पितुः शोच्यत्वमिति चेत्तत्राऽऽह—वृद्ध इति । ज्ञान-

---

७९ । परमात्मा मे पुत्रो जातोऽसि यद्यपि तथाऽपि मां दुःखं न जहाति अतो विधिर्बलवानिति मे मनीषा बुद्धिः । दुःखनिवर्त्तकसामग्र्यां सत्यामपि दुःखानिवृत्तिर्विधिबलीयस्त्वकृतैवेति भावः । रा० । परतः सर्वस्य परतः, सर्वतोऽधिक इति यावत् ।

८१ । रामराज्यस्याभिषेचने यत् कृतं तद्वा अन्यद्वा मद्राज्ययाचनारूपं यदि जानामि यदि वा सा एतदर्थं मया नोदिता प्रेरिता तदेत्यन्वयः । रा० ।

८२ । यद्यहमिमं वृत्तान्तं जानामि तदा तदखिलं पापं मम भूयादित्यन्वयः । रा० ।

---

1 ङ 'तामिव' । 2 ङ '-नम्' । 3 क-ख-ग-घ-ङ च-छ 'नोदिता' । 4 ग-ङ-च छ 'यद्यपि' । 5 च '-मथोवाच' । 6 च 'राम-' ।

भुक्त्वा मर्त्यसुखं सर्वमिष्ट्वा विपुलदक्षिणैः ।
अश्वमेधादिभिर्यज्ञैर्लब्ध्वा [1]राम सुतं हरिम् ॥ ८६ ॥
अन्ते जगाम त्रिदिव देवेन्द्रार्द्धासन [2]प्रभुः ।
तं शोचसि वृथैव त्वमशोच्य मोक्ष[3]भाजनम् ॥ ८७ ॥
आत्मा नित्यो[4]ऽव्ययः शुद्धो जन्मनाशादिवर्जित. ।
शरीरं जडमत्यर्थमपवित्र विनश्वरम् ।
विचार्यमाणे शोकस्य नावकाशः कथञ्चन ॥ ८८ ॥
पिता वा तनयो वाऽपि यदि मृ[5]त्युवशं गतः ।
मूढास्तमनुशोचन्ति स्वात्मताडनपूर्वकम् ॥ ८९ ॥

---

मनुत्पाद्य मृतत्वात् शोच्यत्वमिति चेत्तत्राऽऽह—ज्ञानीति । भुव्यगीतकीर्त्तित्वात् शोच्यत्वमिति चेत्तत्राऽऽह—सत्यपराक्रम इति । 'शौर्योद्यमौ पराक्रमौ' इत्यमर ।

८६ । नरो० । अप्राप्तैहिकाशेषविषयभोगत्वात् शोच्यत्वमिति चेत्तत्राऽऽह—भुक्त्वेत्यादि । इष्ट्वा प्रीणयित्वा देवानिति शेष । विपुलदक्षिणै प्रचुरदक्षिणै. ।

८७ । नरो० । प्रभुरन्ते त्रिदिवं गत्वा देवेन्द्रार्द्धासनं जगामेति सम्बन्ध. । त्रिदिवं स्वर्गम्, गत्वेति शेषः । आसनस्यार्द्धम् अर्द्धासनम्, देवेन्द्रस्यार्द्धासनं देवेन्द्रार्द्धासनम् । जगाम प्राप्तवान् ।

८८ । नरो० । देहात्मनोरशोच्यत्वप्रदर्शनं विनाऽस्य वचनशतैरपि अज्ञानजशोकनिवृत्तिर्न भविष्यतीति हृदि कृत्वा तयोरशोच्यत्व त दर्शयति—आत्मेत्यादिना । शुद्धो रागादिदोषरहितः । जन्मनाशादिवर्जितत्वान्नित्यत्वम् । जडम् अचेतनम् । अत्यर्थमपवित्रं रेतोविण्मूत्राद्याधारत्वादत्यशुद्धम् । अवकाशोऽवसर । जन्मनाशादिरहितत्वादात्मनोऽशोच्यत्वम्, शरीरस्य जडत्वादिना हेयत्वादशोच्यत्वम् । यद्वा देहात्मनोर्विवेकं विना शोकनिवृत्तिर्न भविष्यतीति तद्विवेकार्थमाह—आत्मेति ।

८९ । नरो० । तर्हि लोका पित्रादीन् कथमनुशोचन्तीति चेत्तत्राऽऽह—पिता वेत्यादि । मूढा देहात्मविवेकशून्या. ।

---

८७ । अशोच्यत्वे हेतुगर्भविशेषण मोक्षभाजनमिति । रा० ।

८८ । प्रकारान्तरेणाप्यशोच्यत्वमाह—आत्मेति । नित्योऽव्यय इत्यस्यैव जन्मनाशादिवर्जित इति विवरणम् । शरीरस्य जडत्वान्नश्वरत्वादेव अशोच्यतेत्याह—शरीरमिति । रा० ।

---

1 ग-ङ 'राम हरि सुतम्', च 'काम हरि सुतम्' । 2 ङ-च 'प्रति' । 3 च '-गामिनम्' । 4 च 'त्योऽद्वय,', क '-त्योऽदय' । 5. ङ च 'त्योर्वं' ।

निःसारे खलु संसारे वियोगो ज्ञानिनां [1]सदा ।
भवेद् वैराग्य[2]हेतुत्व शान्तिसौख्यं तनोति च ॥ ९० ॥
जन्मवान् यदि [3]लोकेऽस्मिंस्तर्हि [4]त मृत्युरन्वगात् ।
तस्मादपरिहार्योऽयं मृत्युर्जन्मवतां सदा ॥ ९१ ॥
स्वकर्मवशतः सर्व[5]जन्तूनां प्रभवा[6]प्ययौ ।
विजान[7]न्नपि विद्वान् [8]कः कथं शोचति बान्धवान् ॥ ९२ ॥

---

९० । नरो० । पित्रादिवियोगो यदि मूढानामेव शोकस्य हेतुस्तर्ह्यन्येषां कस्य हेतुरित्यपेक्षायामाह—निःसारे इत्यादि । ज्ञानिनां पित्रादीनां वियोगो निःसारे ससारे खलु निश्चित सदा वैराग्यहेतुत्वं भवेदित्यन्वय । निर्नास्ति सार स्थिरांशो यस्य तस्मिन् तथा । संसारे दारादिरूपे, वैराग्यहेतुत्व वैराग्यहेतुरेवेत्यर्थ. । वैराग्य किं विदधातीत्यपेक्षायामाह—शान्तिसौख्य तनोति चेति । सौख्य सुखमेवेत्यर्थ ।

९१ । नरो० । यद्यपि शरीरजन्मनि तदवच्छिन्नजीवस्यापि जन्माङ्गीकरोषि तथाऽपि तव शोको नोचित इत्याह—जन्मवानित्यादिना । उपसहरति—तस्मादिति ।

९२ । नरो० । तदेव द्रढयति—स्वकर्मवशत इत्यादिना । स्वकर्मवशत. सर्वजन्तूनां प्रभवाप्ययौ विजानन्नपि विद्वान् क कथं शोचति बान्धवानिति, सर्वजन्तूनां स्वकर्मवशत. प्रभवाप्ययौ विजानन् न कोऽपि विद्वान् केनापि प्रकारेण बान्धवान् शोचतीत्यर्थ । स्वकर्मवशत स्वपूर्वार्जितकर्मायत्तत्वादित्यर्थ । प्रभवाप्ययौ जन्मनाशौ ।

---

९० । ज्ञानिनां संसारमसारत्वेन जानतां यदा केनचिद्वियोगो भवति तदा स वैराग्यहेतुर्भवेत् भवतीत्यर्थ., शान्त्यादिकृत्तों च । रा० ।

९१ । अथ जातस्य ध्रुवो मृत्युरित्याह—जन्मवानिति । अन्वगाद् अनुगच्छत्येवेत्यर्थ । रा० ।

[ जन्मवानिति । यदि यदा अस्मिन् लोके जन्मवान् जन्मयुक्तो भवति, तर्हि तदानीमेव तं जनं मृत्युरन्वगाद् अनुगतो भवति, विधात्रा नियमितत्वात् । गो० ]

जन्मवानिति ।

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च । ( गीता २।२७ ) इत्युक्ते.,
मृत्युर्जन्मवतां वीर देहेन सह जायते । ( भागवत १०।१।३८ ) इत्याद्युक्तेश्च ।

९२ । य. अविद्वानपि अतत्त्वज्ञोऽपि स उत्पत्तिप्रलययोः सर्वजन्तूनां कर्माधीनत्वं विजानन् कथं बान्धवान् शोचति, किं पुनस्तत्त्वज्ञ इति भाव । रा० ।

---

1 क-ख-घ 'यदा'। 2. क ख-घ '-हेतु' स'। 3 च 'लोकोऽ-'। 4 ङ 'तन्मृत्युम-'। 5 ग '-प्राणिना'। 6 च '-तययौ'। 7. क-ख-घ-ङ '-न्नप्यवि-'। 8 क-ख-घ-ङ 'य'।

ब्रह्माण्डकोटयो नष्टाः सृष्टयो बहुशो गताः ।
शुष्यन्ति सागराः सर्वे [1]कैवाऽऽस्था क्षणजीविते ॥ ९३ ॥
[2]चलपत्रान्तलग्नाम्बुबिन्दुवत् क्षणभङ्गुरम् ।
आयु[3]स्त्यजत्यवेलायां कस्तत्र प्रत्ययस्तव ॥ ९४ ॥
देही प्राक्तनदेहोत्थकर्मणा देहवान् [4]पुनः ।
तद्देहोत्थेन च पुनरेव देहः सदात्मनः ॥ ९५ ॥
यथा त्यजति वै जीर्णं वासो गृह्णाति नूतनम् ।
तथा जीर्णं [5]परित्यज्य देही देहं पुनर्नवम् ।
[6]भजत्येव सदा तत्र शोकस्यावसरः कुतः ॥ ९६ ॥

---

९७ । नरो० । यस्मिन् प्राणे स्थिते इन्द्रियादिचलनं भवति तमेवानुशोचामीति चेत्तत्राऽऽह—ब्रह्माण्डकोटय इत्यादि । क्षणभङ्गुरं जीवितं क्षणजीवितं तस्मिन् ।

९४ । नरो० । आयुषि रक्षित एव प्राणरक्षा भवतीति आयूरक्षायां यत्नः कार्य इति चेत्तत्राऽऽह—चलपत्रान्तलग्नाम्बुबिन्दुवदित्यादि । चलं चञ्चलं यत् पत्रं तस्यान्ते प्रान्तभागे लग्नो योऽम्बुबिन्दुस्तद्वत् ।

९५ । नरो० । ननु आत्मनोऽविनाशित्वेऽपि तदीयशरीरनाशं पर्यालोच्यानुशोचामीति चेत्तत्राऽऽह—देहीत्यादि । तद्देहोत्थेन तद्देहजन्येनेत्यर्थः, कर्मणेति शेषः । देहस्यातिसुलभत्वमिति भावः ।

९६ । नरो० । दृढप्रतीत्यर्थं तदेव सदृष्टान्तमाह—यथेति ।

---

[ यदि वर्त्तमानदेहे गते देहान्तरं न स्यात्तदा शोको युज्यत एव, तत्तु न सम्भवति, कर्मवशात् पुनर्देहान्तरप्राप्तेः । गो० ]

९३ । शुष्यन्ति वर्त्तमानसामीप्ये लट् । क्षणजीविते क्षणभङ्गुरे जीविते इत्यर्थः । रा० ।

९४ । चलं चञ्चलं यत् पत्रं तदन्ते लग्नो योऽम्बुबिन्दुस्तद्वत् क्षणभङ्गुरम् । अवेलायां बाल्येऽपि । प्रत्ययो विश्वासः । रा० ।

९५ । देही जीवः प्राक्तनदेहसम्पादितकर्मणाऽयं देहः एतद्देहसम्पादितकर्मणा च पुनर्देह इति देहवियोगो न कदाचिदात्मन इति देहशोको वृथेति भावः । रा० ।

९६ । [ किञ्च जीर्णं देहं परित्यज्य नवदेहप्राप्तौ हर्ष एव युज्यते न तु शोक इत्याह—यथा त्यजतीति । गो० ]

---

1. क 'कैवाऽऽस्था' । 2 ङ 'चलत्पत्रान्त', च 'चलत्पत्राग्र-', क 'चलपत्राग्र' । 3 ग 'स्तस्य तु रक्षाया', ङ '-स्तस्य च रक्षाया', च 'स्त्यजति वे-' । 4. च 'सुतः' । 5 च 'तथा देहं' । 6. च 'त्यजत्येव सदा', क -त्यजत्येवासक्तत्' ।

आत्मा न म्रियते जातु जायते [1]न च वर्द्धते ।
[2]षड्भावरहितोऽनन्तः सत्यप्रज्ञानविग्रहः ।
आनन्दरूपो बुद्ध्यादिसाक्षी लयविवर्जितः ॥ ९७ ॥
एक एव परो ह्यात्मा ह्यद्वितीयः [3]समः [4]स्थितः ।
इत्यात्मानं दृढं ज्ञात्वा त्यक्त्वा शोकं कुरु क्रियाम् ॥ ९८ ॥

---

९७ । नरो० । तत्र जीर्णदेहविनाशे देहात्मनोरत्यन्तवैलक्षण्यं स्वरूपञ्च दर्शयन्नुपसंहरति—आत्मेति । षड्भावशून्यत्वम् 'आत्मा न म्रियते' इत्यादिना । नास्ति नापक्षीयते परिणमते इति चकारः समुच्चिनोति । षड्भिर्भावैर्भवविकारैर्जन्मजन्मान्तरास्तित्ववृद्धिविपरिणामापक्षयनाशैः रहितः षड्भावरहितः । अनन्त इत्यनेन देशकालाद्यपरिच्छिन्नत्वमुक्तम् । सत्यं कालत्रयेऽबाधितं प्रज्ञानं विग्रहः स्वरूपं यस्य स तथा । आनन्दो रूपं स्वरूपं यस्य स तथा । आनन्दांशस्वीकारो मुख्यप्रयोजनपरमानन्दावाप्तिसिद्ध्यर्थः । बुद्ध्यादिसाक्षी अन्तःकरणादिद्रष्टेत्यर्थः । एतेन सर्वप्राण्यन्तर्यामित्वं सूचितम् । लयलक्षणं यथा—'स्वकारणे सूक्ष्मरूपेणावस्थानं लयः' इति ।

९८ । नरो० । यतो लयविवर्जितः, अतः परो मूलकारणम् । एकः केवलः निर्धर्मिकः

---

९७ । आदिमध्यान्तभावविकाराभावेन सर्वभावविकारराहित्यमित्याह—षड्भावरहितः, अनन्तः देशतः परिच्छेदरहितः, प्रज्ञानं निर्विषयज्ञानं तदेव विग्रहः शरीरं यस्य सः, बुद्ध्यादिसाक्षी निश्चयादिरूपसकलान्तःकरणवृत्तिः साक्षी । लयो नाशस्तद्रहितः । रा० ।

[ किञ्च आत्मनः स्वरूपं बुद्ध्वाऽपि शोको निर्विषय इत्याह—आत्मेति । आत्मा जातु कदाचिद् देहमरणेऽपि न म्रियते नित्यत्वात्, न जायते अजत्वात्, न वर्द्धते परिपूर्णत्वात् । चकाराद् जन्मान्तरास्तित्वापक्षयविपरिणामानां ग्रहणम् । षड्भावरहित इति । यतः षड्भावरहितः अतोऽनन्तः देशकालापरिच्छिन्नः, सत्यः सर्वदा सन् स चासौ प्रज्ञानविग्रहः, ज्ञानमेव विग्रहो यस्य इति । आनन्दरूपः नित्यानन्दमूर्त्तिः । यद्वा एतैर्विशेषणैः अस्तित्वादिहीनः, नित्यत्वाद् अस्तित्वस्य, आनन्दरूपत्वाद् अपक्षयस्य, ज्ञानरूपत्वाद् विपरिणामस्याभावात् । अनासक्तत्वमाह—बुद्ध्यादिसाक्षी बुद्ध्यादीनां द्रष्टा । अतो लयविवर्जितः सुषुप्त्यादावपि प्रकाशमानः । गो० ]

९८ । समस्थितः सर्वत्र समतया स्थितः, स एवाहमित्यात्मानं ज्ञात्वा शोकं त्यक्त्वा क्रियां कुरु । रा० ।

---

1 ग-ङ-च 'वर्द्धते न च', क 'वर्द्धते न वा' । 2 च 'सम्भोग-' । 3 ख-घ 'समाहित' । 4 ग-ङ 'स्थिर' ।

तैलद्रोण्यां[1] पितुर्देहमुद्धृत्य सचिवैः सह ।
कृत्यं कुरु यथान्यायमस्माभिः कुलनन्दन[2] ॥ ९९ ॥
इति सम्बोधितः साक्षाद् गुरुणा भरतस्तदा ।
विसृज्याज्ञानजं शोकं चक्रे [3]स विधिवत् [4]क्रियाम् ॥ १०० ॥
गुरुणोक्तप्रकारेण आहिताग्नेर्यथाविधि ।
[5]संस्कृत्य स पितुर्देहं विधिदृष्टेन कर्मणा ॥ १०१ ॥

---

इति यावत् । समो रागद्वेषादिरहितः । एतेनान्तःकरणाद्युपाधिसम्बन्धशून्यत्वं सूचितम् । एतत् सर्वं विशेषणम् अविद्यातत्कार्यनिवृत्तौ जीवस्यापि सम्भवतीति नास्ति विरोधः ।

९९ । नरो० । तैलद्रोण्यां स्थितमिति शेषः ।

---

[ ननु ज्ञानरूपश्चेदात्मा तदा ज्ञानस्य नीलपीतत्वादिरूपग्रहणभेदेन यथा नानात्वं तथा तस्यापीत्याह—एक एवेति । आत्मा एक एव विजातीयभावरहितः । तर्हि घटज्ञानमस्तु नेत्याह—अद्वितीयः । अयं भावः—वैषयिकज्ञानं हि विषयभेदेन पृथग् भवति न तु निर्विकल्पज्ञानं तथेति । परः देहादिभ्यो भिन्नः । समः सर्वत्र तुल्यः । स्थिरोऽचलः । गो० ]

१०१ । संस्कारसम्भारमवलम्ब्याऽऽह वाल्मीकीये—

होतारस्ते पितुरिमे वेदवेदाङ्गपारगाः ।
अग्निहोत्रमुपादाय जाबालिप्रमुखाः स्थिताः ॥
गन्धकाष्ठानि चेमानि संस्कारार्थं पितुस्तव ।
उपादायाग्रतः प्रेष्याः सप्रतीक्षमुपासते ॥
सर्पिस्तैलवसाः कुम्भाः सज्जिताश्चापि ते पितुः ।
अग्नेः समेधनार्थाय गन्धमाल्यञ्च पुष्कलम् ॥
गन्धतैलानि गन्धाश्च धूपाश्चागुरुसम्भवाः ।
सज्जिता शिविका चेयं पितुस्ते रत्नभूषिता ॥ इत्यादि । २।८३।४-७ ।

सत्कारप्रकारमाह वाल्मीकीये—

अथास्य सरयूतीरे विविक्ते मृदुशाद्वले ।
चन्दनागुरुकाष्ठैस्ते राज्ञश्चक्रुश्चितां तदा ॥

---

1. क-ख-घ-च '-ण्या' । 2 अतः परं ग-च-पुस्तकयोः 'श्रीमहादेव उवाच' इत्यधिकम् । 3 ग 'सर्वविधक्रियाः' । 4 ङ-च 'क्रियाः' । 5 क 'सत्कृत्य' ।

[1]एकादशेऽहनि प्राप्ते ब्राह्मणान् वेदपारगान् ।
भोजयामास विधि[2]वच्छतशोऽथ सहस्रशः ॥ १०२ ॥

१०२ । नरो० । एकादशे इति । एकश्च एकश्च एकश्च एकानि च दश च तेषां पूरणे [ त्रयोदशदिवसे ] इत्यर्थः । दाहदिवसादिति शेषः ।

कालीयकमृणालैश्च बालकोशीरपद्मकैः ।
चितां तां विधिवच्चक्रुर्विपुलामथ ते जनाः ॥
तस्यां चितायां नृपतेः शरीरं तत् सुहृज्जनः ।
आशीशयत् समुत्क्षिप्य शोकव्याकुललोचनः ॥
तां चितां पृथिवीपालमारोप्य क्षौमवाससम् ।
यज्ञपात्रचयं चक्रुस्ततस्तस्योपरि द्विजाः ॥
यथास्थानेषु विन्यस्य त्रीनग्नीन् विधिवद्धुतान् ।
मन्त्रानन्तर्मनोभिस्तु जपन्तोऽभ्युद्यतस्रुवाः ॥
होतारो यज्ञपात्राणि पवित्रैर्ममृजुस्तदा ।
प्रमृज्यानन्तरं तस्यां चितायां परिचिक्षिपुः ॥
स्रुक्पात्राणि चषालानि मुषलोदूखलं तथा ।
अरणीसहितं चैव पवित्राणि च सर्वशः ॥
विशस्य च पशुं मेध्यं मन्त्रसंस्कारसंस्कृतम् ।
अन्वास्तरणिकं राज्ञः समन्तात् परिचिक्षिपुः ॥
प्राग्लाङ्गलविकृष्टाञ्च चिताभूमिं समन्ततः ।
कृत्वा विधानतो धेनुं सवत्सामत्यवासृजत् ॥
सर्पिस्तैलवसाभिश्च समन्तात् परिषिच्य ताम् ।
चितां प्रज्वालयामास भरतः सह बन्धुभिः ॥
प्रजज्वाल ततो वह्निः सहसैव समेधितः ।
सोऽर्चिष्मानदहद्राज्ञश्चितारूढं कलेवरम् ॥ इति । २।८३।२९-३९ ।

१०२ । [ एकादशेऽहनि प्राप्ते इत्यादि । एकादशेऽहनि अशौचान्तद्वितीयदिवसे । दशरात्रपदेन स्वस्वजात्युक्ताशौचकालस्य ग्रहणात् । गो० ]

एकादशेऽहनीति । एकादशेऽहनि अर्थादशौचान्तद्वितीयदिवसे । ब्राह्मणान् भोजयामासेति श्राद्धादीन् कृत्वेति शेषः ।

1. ङ 'त्रयोदशे' । 2 ग 'वद यतशो-' ।

उद्दिश्य पितरं तत्र ब्राह्मणेभ्यो धनं बहु ।
ददौ गवां सहस्राणि ग्रामान् रत्नाम्बराणि च ॥ १०३ ॥

अवसत् स्वगृहे तत्र राममेवानुचिन्तयन् ।
वशिष्ठेन सह भ्रात्रा मन्त्रिभिः परिवारितः ॥ १०४ ॥

---

शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥ मनु० ५।८३

इत्यादिवचनेन क्षत्रियाणां द्वादशदिवसात् परं त्रयोदशदिवसे अर्थादशौचान्तद्वितीयदिवसे एव श्राद्धादेर्युक्तत्वात् कथमुक्तमेकादशेऽहनि इति पर्यनुयोगमुपलभ्यैव नरोत्तमेन 'एकश्च एकश्च एकश्च एकानि च दश च इत्युक्तम् । एतेन त्रयोदशाह एवावगम्यते । अन्यतमेन टीकाकृता गोपालचक्रवर्त्तिनाऽपि विरोधस्यास्य सामञ्जस्यसंसाधनार्थं 'दशरात्रपदेन स्वस्वजात्युक्ताशौच-कालस्य ग्रहणादि' त्युक्तम् । निबन्धकृता रघुनन्दनेनापि शुद्धितत्त्वे 'दशाहपदमशौचकालोपलक्षणम्' ( २२० पृ० ) इत्युक्तम् । अनया दिशा न कश्चिद्विरोधः ।

यत्तु वाल्मीकीये—

समतीते दशाहे तु कृतशौचो नृपात्मजः ।
चक्रे द्वादशिकं श्राद्धं त्रयोदशिकमेव च ॥ ३।८६।१

इत्याद्युक्तम्, तत्रापि रघुनन्दन 'दशाहपदमशौचकालोपलक्षणम् । द्वादशिकं द्वादशाहेन निवृत्तम्, त्रयोदशाहविधेयमित्यर्थं । एवं त्रयोदशिकं चतुर्दशाहविधेयमित्यर्थः । इति श्राद्ध-विवेक' ( शुद्धितत्त्व० २२० पृ ) 'समतीते दशाहे स्वजात्युक्ताशौचकाले अतीते सति' इति तट्टीकायां काशीरामः । गोस्वामिपादास्तु—'दशाहे समतीते एकादशाहे विधानतः कृतशौचः कृतदाहादिसंस्कारः भरतेन मातामहगृहादागतेन तदानीमेव तैलद्रोणीस्थापितदशरथशरीरस्य दाहादित्युन्नीयते । द्वादशाहे तु तद्दिनविहितं पिण्डदानादि चक्रे, त्रयोदशाहे तद्दिनविहितं श्राद्धं चक्रे इत्यर्थ ।' इति । इत्यादिना च सर्वमतसामञ्जस्येनैव त्रयोदशाहश्राद्धं सम्पन्नम् इति प्रतिपादितम् ।

यच्च 'वङ्गवासी'मुद्रिते पाश्चात्यपाठसंवलिते वाल्मीकीये—

ततो दशाहेऽतिगते कृतशौचो नृपात्मजः ।
द्वादशेऽहनि संप्राप्ते श्राद्धकर्माण्यकारयत् ॥ २।८७।१ ।

इत्यस्य व्याख्यायां 'दशाहेऽतिगते एकादशेऽहनि कृतशौच अनुष्ठितप्रेतविमुक्तिदैकादशाहश्राद्ध', श्राद्धकर्माणि द्वितीयमासिकसपिण्डीकरणश्राद्धानि' इत्यादि यदुक्तं रामायणतिलकाख्यायाम् एतट्टीकायां तस्योपपत्तिः सुधीभिः करणीया ।

रामेऽरण्यं प्रयाते सह जनकसुतालक्ष्मणाभ्यां सुघोर
माता मे राक्षसीव प्रदहति हृदय दर्शनादेव सद्य ।
गच्छाम्यारण्य[1]मद्य स्थिरमतिरखिल दूरतोऽपास्य राज्य
राम सीतासमेतं स्मितरुचिरमुख नित्यमेवानुसेवे ॥ १०५ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अयोध्याकाण्डे
सप्तमोऽध्याय. ॥ ७ ॥

---

१०९ । नरो० । सुघोरम् अतिभयानकम् । आत्मनो दृढप्रतिज्ञत्वसूचनाय स्थिरमति-रित्युक्तम् । दूरतो दूरे । अपास्य त्यक्त्वा ।

[ अयोध्याकाण्डे सप्तमाध्यायव्याख्या समाप्ता ॥ ७ ॥ ]

---

१०९ । अनुचिन्तनप्रकारमाह—राम इति । सुघोरमरण्यं प्रयाते इत्यन्वय । मे माता राक्षसीव दर्शनाद् हृदयं प्रदहति । अत आरण्यम् अरण्यवन्त देशं रामवासभूत गच्छामी-त्यन्वय । रा० ।

[ रामेऽरण्यमिति । आरण्यं राज्यमिति सम्बन्ध । यद्वा वायसचाण्डालादिवत स्वार्थे टन् । गो० ]

---

1 ग-च '-मेव'।

# अष्टमोऽध्यायः

—— o ——

श्रीमहादेव उवाच—

वशिष्ठो मुनिभिः सार्द्धं मन्त्रिभि[1]परिवारितः ।
राज्ञ· सभां देवसभासन्निभामविशद् विभुः ॥ १ ॥
तत्राऽऽसने समासीनश्चतुर्मुख इवापरः ।
आनीय भरत तत्र उपवेश्य सहानुजम् ॥ २ ॥
अब्रवी[2]द्वचन देशकालोचितमरिन्दमम् ।
वत्स राज्येऽभिषेक्ष्या[3]मस्त्वामद्य पितृशासनात् ॥ ३ ॥

---

१ । अष्टमे तु वशिष्ठेन प्रोक्तोऽपि भरत किल ।
अनादृत्याधिराज्यं च जगाम भ्रातृसन्निधौ ॥

देवसभासन्निभां तत्सदृशीम् । रा० ।

राजसभां विशिनष्टि वाल्मीकीये—

भरतेन ततः सार्द्धं वशिष्ठो वेदवित्तम ।
प्रविवेश सभां राज्ञस्तदा मन्त्रयितुं हितम् ॥
शातकुम्भै· कुम्भशतैर्मणिचित्रैर्विभूषितम् ।
बृहस्पतिरिवेन्द्रेण सुधर्मां सहित सभाम् ॥
भद्रासने रत्नचित्रे स्पर्द्ध्यास्तरणसंवृते ।
उपविश्य तत· सर्वानानाययत मन्त्रिण· ॥ इति ।२।८२।८-१० ।

वशिष्ठस्य राजसभाप्रवेशादिकमेतत् सर्वं वाल्मीकीये राज्ञो दाहात् पूर्वं दृश्यते । मन्त्रिभि· सुमन्त्रादिभि —

सुमन्त्र जैमिनिश्चैव सुमन्तुं विजय तथा ।
मन्त्रिणो नैगमांश्चान्यान् प्रधानांश्च तथा जनान् ॥ २।८२।११

इत्यादिना वाल्मीकीये तथैव व्यक्तत्वात् ।

२ । आसने समासीन स वशिष्ठ सानुजं सशत्रुघ्नं भरतम् आनीय तत्र सभायाम् उपवेश्य आसनान्तरे इति शेष ।

३ । देशकालोचितं राजहीने देशे तादृश एव च काले यदुचितम् । तदेवाऽऽह—वत्स

---

1 ग-ङ 'पुरवासिभि', च-छ 'पौरवासिभि,' । 2, च '-द्भरतस्तव देशकालोचित वच' । 3 छ '-मि ला-' ।

कैकेय्या याचित राज्य त्वदर्थे पुरुषर्षभ ।
सत्यसन्धो दशरथ· प्रतिज्ञाय ददौ किल ।
अभिषेको भवत्वद्य मुनिभिर्मन्त्रपूर्वकम् ॥ ४ ॥
तच्छ्रुत्वा भरतोऽप्याह मम राज्येन किं मुने ।
रामो राजाऽधिराजश्च वय तस्यैव किङ्कराः ॥ ५ ॥
श्व प्रभाते गमिष्यामो[1] राममानेतुमञ्जसा ।
अह यूय मातरश्च कैकेयीं राक्षसीं विना ॥ ६ ॥
हनिष्याम्यधुनैवाहं कैकेयीं [2]मातृ[3]गन्धिनीम् ।
किन्तु मां नो रघुश्रेष्ठ स्त्रीहन्तारं सहिष्यते ॥ ७ ॥
[4]तच्छ्वोभूते गमिष्यामि पादचारेण दण्डकान् ।
शत्रुघ्नसहित[5]स्तूर्णं यूय[6]मायात वा न वा ॥ ८ ॥

---

७ । नरो० । मातृगन्धिनी मात्राभासीभूताम् ।

---

इत्यादिना । राज्येऽभिषेक्ष्याम इति । 'राज्यमदत्त्वैव राज्ञि मृते राजपुत्राय पुरोहितमन्त्रिभिरपि राज्य दातव्यं वैदिकलौकिककर्मसु राजप्रातिनिध्यात् ।' (राजनीतिरत्ना० ७९ पृ०) इत्यादिवचनेन वशिष्ठादेरपि राज्याभिषेकसामर्थ्यदर्शनात् त एव भरतमभिषेक्तुं कृतयत्ना बभूवु ।

४ । प्रतिज्ञाय ददौ अस्मान् सर्वान् प्रतिज्ञापयित्वा ददौ । मुनिभि· क्रियमाणोऽभिषेक· अद्य भवतु इत्यन्वय । रा० ।

५ । राजा राज्यस्य, अधिराज· सार्वभौमः साम्राज्यस्येति शेष· ।

६ । अञ्जसा त्वरितम् ।

७ । हनिष्यामीति । तादृशवधस्यैवोचितत्वादिति भाव । मातृगन्धिनीं तादृशीमपि मातृसम्बन्धवतीमपीत्यर्थ । नो इति प्रतिषेधे । नो सहिष्यत इत्यन्वय । रा० ।

[ मातृगन्धिनीं लौकिकसम्बन्धवन्मातृत्वेन युक्तां न तु तत्त्वेन मातरम् । अत एव स्त्रीहन्तारमित्युक्तम्, न तु मातृहन्तारम् । गो० ]

८ । पादचारेणेत्याद्यंशो वाल्मीकीयविरोधी । तत्र भरतस्य गमनार्थं मार्गसंस्कारप्रभृतीनां बहूनां कार्याणां समारम्भोऽयोध्याकाण्डस्य सप्ताशीतितमसर्गे, भरतानुयायिनाञ्च वर्णनं नवतितमसर्गे ।

---

1. ग-च-छ '-मि' । 2. क-घ-च-छ 'राज्य-' । 3 क-छ '-गर्द्धिनीम्' । 4 ङ 'श्वोभूतेऽहं गमि-', च 'श्वोभूते चाऽऽगमि-' । 5. ग-च '-स्तूर्णमपरे या-' । 6 क-ख-घ-ङ-छ '-मायान्तु' ।

रामो यथा [1]वने यातस्तथाऽह वल्कलाम्बरः ।
फलमूलकृताहारः शत्रुघ्नसहितो मुने ।
भूमिशायी जटाधारी यावद्रामो निवर्त्तते ॥ ९ ॥
इति निश्चित्य भरतस्तूष्णीमेवावतस्थिवान् ।
साधु साध्विति त सर्वे प्रशशंसुर्मुदाऽन्विताः ॥ १० ॥
ततः प्रभाते भरतं गच्छन्तं सर्वसैनिकाः ।
अनुजग्मुः सुमन्त्रेण [2]नोदिताः साश्वकुञ्जराः ॥ ११ ॥
कौश[3]ल्याद्या राजदारा वशिष्ठप्रमुखा द्विजाः ।
छादयन्तो भुवं सर्वे पृष्ठतः पार्श्वतोऽग्रतः ॥ १२ ॥
[4]शृङ्गवेर[5]पुरं गत्वा गङ्गाकूले समन्ततः ।
उवास महती सेना [6]शत्रुघ्नपरिचोदिता ॥ १३ ॥

---

सज्ज तु तद्बल ज्ञात्वा भरतो गुरुसन्निधौ ।
रथ मे त्वरयस्वेति सुमन्त्र पार्श्वतोऽब्रवीत् ॥ २।८९।८।

इत्यादिना भरतस्य सुमन्त्र प्रति रथसज्जाज्ञापनम् ।

ततः श्वेतैर्हयैर्युक्तमास्थाय स्यन्दनोत्तमम् ।
प्रययौ भरतः श्रीमान् रामदर्शनकाङ्क्षया ॥ २।९०।१।

इत्यादिना च रथारोहणेन गमनं स्पष्टम् । वङ्गवासिमुद्रितेऽपि—

ततः समुत्थितः कल्यमास्थाय स्यन्दनोत्तमम् ।२।८३।१ इत्यादि ।

९ । यावद्रामो निवर्त्तते तावदेव तत्समानव्रतो भविष्यामीत्यर्थः । रा० ।

१० । तूष्णीमवस्थानेन तस्य वचोयाथार्थ्यं सूचितम्, तेन च भरते श्रद्धान्विताम्तत्रस्थाः सर्वे साधु साध्विति तं प्रशशंसुरिति भावः । मुदा सोऽस्माकं हृदयाह्लादको रामः प्रत्यावर्त्तिष्यते अस्मान् पुत्रवत् पालयिष्यतीति हर्षेणान्विताः । यद्वा भरतस्य महिमसूचकवचःश्रवणेन तेषां हर्षः समुत्पन्न इत्याह मुदाऽन्विता इति ।

११ । सुमन्त्रेण नोदिताः साश्वकुञ्जराः सर्वसैनिकाः गच्छन्तं भरतमनुजग्मुरित्यन्वयः ।

१२ । पृष्ठतः पार्श्वतोऽग्रतः भरतस्येति शेषः ।

१३ । गङ्गाकूले समन्ततः गङ्गाकूलस्य चतुर्दिक्षु इत्यर्थः । पूर्वं सुमन्त्रेण नोदिताः (६।८।११) इत्युक्तम्, इदानीं शत्रुघ्नपरिचोदिता इत्युच्यते, कथमेतत् सङ्गच्छते इति विप्रश्ने

---

1 ग-ङ-च-छ 'वन'। 2 ग ङ-च-छ 'चोदिताः'। 3 ग '-ल्या राजदाराश्च', छ '-ल्यादिराः-'। 4 ख 'शृङ्गिवे'। 5 ग 'पुरे'। 6 ग ङ 'शत्रुघ्नपरिपालिता', छ 'शत्रुघ्नेनाभिपालिता'।

आगतं भरतं श्रुत्वा गुह शङ्कितमानसः ।
महत्या सेनया सार्द्धमागतो भरतः किल ।
पाप कर्त्तुं न [1]वा याति राम[2]स्याविदितात्मनः ॥ १४ ॥
[3]गत्वा तद्धृदय ज्ञेयं यदि शुद्धस्तरिष्यति ।
गङ्गां नो चेत् समाकृष्य नावस्तिष्ठन्तु सायुधा· ।
ज्ञातयो मे [4]समायत्ताः पश्यन्तः[5] सर्वतो दिशम् ॥ १५ ॥
इति सर्वान् समादिश्य गुहो भरतमागतः ।
उपायनानि सगृह्य विविधानि [6]बहून्यपि ॥ १६ ॥
प्रययौ ज्ञातिभिः सार्द्धं बहुभिर्विविधायुधै· ।
निवेद्योपायनान्यग्रे भरतस्य [7]समन्तत· ॥ १७ ॥

एव समाधेयम्—पूर्वं सुमन्त्रेणैकेनैव परिणोदिता· सेनाप्रभृतयो भरतमनुजग्मु, ततश्च सैन्यानां बाहुल्यात् पथि पथिचराणां बाधा मा भूदिति शत्रुघ्नोऽपि सेनाप्रेरणादौ नियुक्त आसीदिति शत्रुघ्नपरिचोदिता इत्युक्तौ न दोष । शत्रुघ्नेनापि परिचोदिता इति तदर्थ इति । यद्वा, सुमन्त्रेण नोदिता· साश्वकुञ्जरा अश्वारूढा कुञ्जरारूढाश्च राजदारा अनुजग्मुरित्यन्वय । युक्तश्चातिविश्वस्तस्य प्रवयस सुमन्त्रस्यान्यनिरासेन राजदारनोदनम् । साश्वकुञ्जरा इति भरतस्य पादचारित्वकथनात्तेषामपि तथात्वप्राप्तिव्युदासायेति न कश्चिद्दोष । यद्वा, भूतार्थकथनमात्र-मेतदिति नास्त्यणीयानप्यनुयोगावसर इति ।

१४ । शङ्कितमानस किमयं वने स्थितस्यापि रामस्य वधार्थं यातीति शङ्का । तदेवाऽऽह—महत्येति । अविदितात्मन अविदितैतद्वृत्तान्तस्य रामस्य पापं कर्त्तुं याति न वा यातीति शङ्कितमानस इत्यर्थ । रा० ।

१५ । यदि शुद्धस्तदा तरिष्यति गङ्गामित्यर्थ· । नो चेत् यद्यशुद्धस्तदा मे ज्ञातयो नाव आकृष्य सर्वतो दिशं पश्यन्त· समायत्ता· सावधानास्तिष्ठन्तु तदुत्तरणप्रतिबन्धायेति शेष । रा० ।

गत्वा भरतसमीपमिति शेष । तद्धृदय भरतस्य चित्तवृत्ति· ज्ञेयम् । यदि हृद्वृत्ति-विचारेण स शुद्ध· पवित्र· रामे वैरहीन इति यावत् स्यात् तदा स तरिष्यति गङ्गामिति द्वितीयार्द्धेनान्वय ।

एतेन नीचजातीयस्यापि गुहस्य सामर्थ्यातिशय· सूचित· । वाल्मीकीयेऽत्र बहु वीरायितं गुहेन (२।९१) ।

1 च 'चाऽऽयाति'। 2 ग-ङ-छ '-स्य विदि-'। 3 ग 'मया', च 'तथा', छ 'मया तद्धृदय ज्ञात्वा'। 4· छ 'समायान्तु'। 5· छ '-न्तु'। 6 च 'बहूनि च'। 7· च 'समीपत '।

दृष्ट्वा भरतमासीनं सानुजं [1]सह मन्त्रिभिः ।
चीराम्बरं घनश्यामं जटामुकुट[2]धारिणम् ॥ १८ ॥
राममेवानुशोचन्तं राम रामेति वादिनम् ।
ननाम शिरसा भूमौ गुहोऽहमिति चाब्रवीत् ॥ १९ ॥
शीघ्रमुत्थाप्य भरतो गाढमालिङ्ग्य सादरम् ।
पृष्ट्वाऽनामयमव्यग्रः[3] सखायमिदमब्रवीत्[4] ॥ २० ॥
भ्रातस्त्वं राघ[5]वेणात्र समेत समवस्थितः ।
रामेणाऽऽलिङ्गितः[6] सार्द्र[7]नयनेनामलात्मना ॥ २१ ॥
धन्योऽसि कृतकृत्योऽसि [8]यत्त्वया परिभाषितः ।
रामो राजीवपत्राक्षो लक्ष्मणेन च सीतया ॥ २२ ॥
यत्र रामस्त्वया [9]दृष्टस्तत्र मां नय सुव्रत ।
सीतया सहितो यत्र सुप्तस्तद्दर्शयस्व [10]मे ।
त्वं रामस्य प्रियतमो भक्तिमानसि भाग्यवान् ॥ २३ ॥
इति संस्मृत्य संस्मृत्य रामं साश्रुविलोचनः ।
गुहेन सहितस्तत्र यत्र रामः स्थितो निशि ।
ययौ ददर्श शयन[11]स्थलं कुश[12]समास्तृतम् ॥ २४ ॥

---

१७ । उपायनानि राजयोग्यानि भक्ष्यादीनि स्वदेशस्थानि भरतस्याग्रे निवेद्य समन्ततो दृष्ट्वेति शेषः । सैनिकेषु विकाराविकारपरीक्षणाय समन्ततो निरीक्षणम् । रा० ।

२० । भरतः गुहं शीघ्रमुत्थाप्य सादरं गाढमालिङ्ग्य अव्यग्रः अनामयं पृष्ट्वा तं सखायम् इदं वक्ष्यमाणमब्रवीदित्यन्वयः । रामस्य सखित्वेन सखायमिति ।

२१ । अमलात्मना रामेण आलिङ्गितः सार्द्रनयनेन प्रीत्याऽवलोकित इत्याशयः ।

२३ । एतेन रामोपवेशनादिस्थानदर्शनेनापि रामे परानुरक्तस्य भरतस्य कथञ्चिन्निर्वृतिर्भविष्यतीति सूचितम् ।

२४ । इति उक्त्वा रामं संस्मृत्य संस्मृत्य साश्रुविलोचनो भरतो रामो यत्र निशि स्थितः, गुहेन सहितस्तत्र ययौ, सीताभरणसंलग्नस्वर्णबिन्दुभिरञ्चितं कुशसमास्तृतं शयनस्थलं ददर्श चेत्युत्तरेणान्वयः ।

---

1 क 'सह यन्त्रिभिः'। 2 च '-मण्डितम्'। 3 च '-ग्र'। 4 अतः परं ङ-पुस्तके 'भरत उवाच' इत्यधिकम्। 5 च '-वो ह्यत्र सानुज समुपस्थित'। 6 च '-तश्चाऽऽर्द्र-', ङ '-तः सार्द्र-'। 7 क '-ममलेन'। 8. ग-ङ-च 'यस्त्वया'। 9 ग 'स्पृष्ट-'। 10. क 'माम्'। 11. ङ '-न पर्णदर्भसमाचितम्'। 12 च '-समावृतम्'।

सीता[1]भरणसंलग्नस्वर्ण[2]बिन्दुभिरञ्चितम् ।
दुःखसन्तप्तहृदयो भरतः पर्य[3]देवयत् ॥ २५ ॥
[4]अहोऽतिसुकुमारी या सीता जनकनन्दिनी ।
प्रासादे रत्नपर्यङ्के कोमलास्तरणे शुभे ॥ २६ ॥
रामेण सहिता शेते सा कथं कुश[5]विष्टरे ।
[6]सीता रामेण सहिता दुःखेन मम दोषतः ॥ २७ ॥
धिङ् मां जातोऽस्मि कैकेय्यां पापराशि[7]समन्वित ।
मन्निमित्तमिदं क्लेशं रामस्य परमात्मनः ॥ २८ ॥
अहोऽतिसफलं जन्म लक्ष्मणस्य महात्मनः ।
राममेव सदाऽन्वेति वनस्थमपि हृष्टधीः ॥ २९ ॥
अहं रामस्य दासा ये तेषां दासस्य किङ्करः ।
यदि स्यां सफलं जन्म मम भूयान्न संशयः ॥ ३० ॥
भ्रातर्जानासि यदि तत् कथयस्व ममाखिलम् ।
यत्र तिष्ठति[8] तत्राहं गच्छाम्यानेतुमञ्जसा ॥ ३१ ॥

---

२५ । नरो० । सीताभरणेति । सीताया यान्याभरणानि तेषु संलग्ना ये स्वर्णबिन्दवस्तैरञ्चितं शोभितम् । पर्यदेवयद् विलापं कृतवानित्यर्थः ।

२८ । नरो० । अहं निमित्तं कारणं यस्य तत्तथा । उक्तलिङ्गं क्वचिद्व्यभिचरतीति क्लेशमित्यस्य क्लीबत्वम् । परमात्मनोऽन्तःकरणाद्युपाधिसम्बन्धशून्यत्वेन ज्ञाने सत्यपि धृतस्य सुखदुःखादिभाजनमनुष्यशरीरस्य दर्शनात् तत्र दुःखमध्यस्य 'मन्निमित्तमिदं क्लेशं रामस्य परमात्मनः' इत्युक्तम् ।

---

२५ । सीताभरणघर्षणेन संलग्ना ये स्वर्णबिन्दवस्तदाकारचिह्नानि तैरञ्चितं युक्तं शयनस्थलं दृष्ट्वा पर्यदेवयत् शुशोचेत्यर्थः । रा० ।

२७ । सा कथं मम दोषतः कुशविष्टरे शेते । रामेण सहितेति पुनरुक्तिः शोकमेव पुष्णाति । रा० ।

२८ । पापराशिसमानत पापराशिसमानायाम् । सार्वविभक्तिकस्तसिः । तादृश्यां कैकेय्यां जातोऽस्मि, तस्मात् मां धिक् । इदं क्लेशम्, क्लेशशब्दोऽर्धर्चादिः । रा० ।

---

1 क 'चरण-' । 2 च '-बिन्दुविराजितम्', ग-ङ '-बिन्दुभिरञ्जितम्' । 3 च 'देवत' । 4 च 'अहोऽतिसुन्दरी रामा', छ 'अतीव सु-' । 5 ङ-च छ '-विस्तरे' । 6 च-पुस्तके इदमर्द्धं नास्ति । 7 क-ख-घ '-समानत' । 8 क '-न्ति' ।

गुहस्तं शुद्धहृदयं ज्ञात्वा सस्नेहमब्रवीत् ।
देव त्वमेव धन्योऽसि [1]यस्य ते भक्तिरीदृशी ।
रामे राजीवपत्राक्षे सीतायां लक्ष्मणे तथा ॥ ३२ ॥
चित्रकूटाद्रिनिकटे मन्दाकिन्याविदूरत· ।
मुनीनामाश्रमपदे रामस्तिष्ठति सानुजः ॥ ३३ ॥
जानक्या सहितो[2] नन्दात् सुखमास्ते किल प्रभु· ।
तत्र गच्छामहे शीघ्रं गङ्गां तर्त्तुमिहार्हसि ॥ ३४ ॥
इत्युक्त्वा त्वरितं गत्वा नावः पञ्चशतानि [3]च ।
समानयत् [4]ससैन्यस्य तर्त्तुं गङ्गां महानदीम् ।
स्वयमेवानिनायैकां [5]राजनावं गुहस्तदा ॥ ३५ ॥

---

३४ । नरो० नन्दात् सुखमतिसुखमित्यर्थ ।

---

३२ । अत्र विनैव गुहप्रश्न भरतेन स्वहृदयमुट्टङ्कितम्, वाल्मीकीये पुनर्गुहप्रश्नोत्तर-व्याजेन । तथा च—

कच्चिन्न दुष्टो व्रजसि रामस्याक्लिष्टकर्मण· ।
अतिभीमा हि सेनेयं शङ्कां जनयतीव मे ॥ २।९२।१६ ॥

इति गुहप्रश्ने,

मा भूत् स कालो धिक् कष्टं न मां शङ्कितुमर्हसि ।
राघवार्थं स हि भ्राता ज्येष्ठ· पितृसमो मम ॥
उपावर्त्तयितुं यामि काकुत्स्थं वनवासिनम् ।
बुद्धिरन्या न ते कार्या सत्यमेतद् ब्रवीम्यहम् ॥ २।९२।१८-१९ ।

इति भरतस्योत्तरम् ।

३३ । मन्दाकिन्या अविदूरत इति च्छेद । आर्षो दीर्घः । समीप इत्यर्थ· । चित्रकूटमन्दाकिन्योर्मध्ये इति यावत् । रा० ।

[ मन्दाकिन्या विदूरत इति अविदूरत, छान्दस सन्धि । गो० ]

३४ । नन्दात् समृद्धे· फलमूलादिसमृद्धेरिति यावत् । 'टु-नदि समृद्धौ' इति धात्वनुसारात् । रा० ।

[ जानक्या सहितो नन्दात् आनन्दादित्यर्थ । गो० ]

३५ । ससैन्यस्य भरतस्य तर्त्तुं तरणार्थमत्यादरदर्शनाय भरतोत्तारणाय राजनावं राजयोग्या नाव स्वयमेवानिनाय । रा० ।

---

1 ङ 'यतसे' । 2 क '-त स्वर्गात्' । 3 ख घ-ङ 'ह' । 4. क 'स सैन्य-' । 5 ग-च 'राजा नाव' ।

आरोप्य भरतं तत्र शत्रुघ्नं राममातरम् ।
वशिष्ठश्च [1]तथाऽन्यत्र कैकेयीं [2]चान्ययोषितः ॥ ३६ ॥
तीर्त्वा गङ्गां ययौ शीघ्रं भरद्वाजाश्रमं प्रति ।
दूरे स्थाप्य [3]महासैन्यं भरतः सानुजो ययौ ॥ ३७ ॥
आश्रमे मुनिमासीनं ज्वलन्तमिव पावकम् ।
दृष्ट्वा ननाम भरतः साष्टाङ्गमतिभक्तितः ॥ ३८ ॥
ज्ञात्वा दाशरथिं प्रीत्या पूजयामास [4]मौनिराट् ।
पप्रच्छ कुशलं दृष्ट्वा जटावल्कलधारिणम् ॥ ३९ ॥
राज्यं प्रशासतस्तेऽद्य किमेतद्वल्कलादिकम् ।
आगतोऽसि किमर्थं त्वं [5]विपिनं मुनिसेवितम्[6] ॥ ४० ॥
[7]भरद्वाजवचः श्रुत्वा भरतः साश्रुलोचनः[8] ।
सर्वं जानासि भगवन् सर्वभूता[9]शयस्थितः ।
[10]तथाऽपि पृच्छसे किञ्चित्तदनुग्रह एव मे ॥ ४१ ॥

---

३८ । नरो० । साष्टाङ्गं यथा स्यात् । अतिभक्तितोऽतिभक्त्या ।

४१ । नरो० । सर्वभूताशयस्थितः सर्वप्राणिचित्तस्थितः सर्वप्राणिचित्तज्ञ इति पर्यवसितार्थः । जीवन्मुक्तत्वं पर्यालोच्येदमिति नास्ति विरोधः ।

---

राजनावं विशिनष्टि वाल्मीकिः—

तत स्वस्तिकचिह्नाङ्कां पाण्डुकम्बलसंवृताम् ।
आनन्दघोषां कल्याणीं गुहो नावमनाययत् ॥ इति २।९७।१८ ।

३६ । तथा कैकेयीमन्ययोषितश्चान्यत्रान्यराजनावीत्यर्थः । रामे दुष्टत्वाचरणप्रयुक्तोऽयं कैकेय्या अनादरः । अतारयदिति शेषः । रा० ।

३७ । भरद्वाजाश्रमपर्यन्तं सेनया सह गत्वा ततः सेनया आश्रमोपरोधो मा भूदिति तां किञ्चिद्दूरे संस्थाप्य स्वयं सानुजो ययौ । भरद्वाजाश्रमद्वारं प्रतीति शेषः । रा० ।

४१ । सर्वभूताशयस्थितः सर्वभूताशयस्थेनान्तर्यामिणा तत्त्वज्ञतया अभेदादिति भावः । रा० ।

---

1 च 'तथाऽन्यच्च' । 2 ग 'चापि', ङ 'राज-' । 3 ग-ङ 'महत् से-' । 4 ग-ङ 'तं मुनि' । 5 ग 'वनं मुनिनिषेवितम्', च 'आश्रमं' । 6 अतः परं ग छ पुस्तकयोः 'श्रीमहादेव उवाच' इत्यधिकम् । 7 घ 'भार-' । 8 अतः परं ग च-पुस्तकयोः 'कृताञ्जलिरुवाचेदं विनीतो नतकन्धरः' । इत्यधिकम् । 9 च '-शये स्थितः' । 10 ग 'तथापि' ।

कैकेय्या यत् कृतं कर्म राम[1]राज्यविघातनम् ।
वनवासादिकं वाऽपि [2]न हि जानामि किञ्चन ॥ ४२ ॥
[3]भवत्पादयुग मेऽद्य प्रमाणं मुनिसत्तम ।
इत्युक्त्वा पादयुगलं मुनेः स्पृष्ट्वार्त्तमानसः ।
ज्ञातुमर्हसि मां देव [4]शुद्धो वाऽशुद्ध एव वा ॥ ४३ ॥
मम राज्येन किं स्वामिन् रामे तिष्ठति राजनि ।
किङ्करोऽहं मुनिश्रेष्ठ रामचन्द्रस्य [5]शाश्वत· ॥ ४४ ॥
अतो [6]गत्वा मुनिश्रेष्ठ रामस्य चरणान्तिके ।
पतित्वा राज्यसम्भारान् समर्प्यात्रैव राघवम् ॥ ४५ ॥
अभिषेक्ष्ये वशिष्ठाद्यैः पौरजानपदैः सह ।
नेष्येऽयोध्यां रमानाथ दास· सेवेऽतिनीचवत् ॥ ४६ ॥
इत्युदीरितमाकर्ण्य भरतस्य वचो मुनि· ।
आलिङ्ग्य मूर्ध्न्यवघ्राय प्रशशंस [7]सविस्मयः ॥ ४७ ॥
वत्स ज्ञातं पुरैवैतद्भविष्यं[8] ज्ञानचक्षुषा ।
मा शुचस्त्वं परो भक्त श्रीरामे लक्ष्मणादपि ॥ ४८ ॥
आतिथ्यं कर्त्तुमिच्छामि ससैन्यस्य तवानघ ।
अद्य भुक्त्वा ससैन्यस्त्वं श्वो गन्ता रामसन्निधिम् ।
यथा[9]ज्ञापयति भवांस्तथेति भरतोऽब्रवीत् ॥ ४९ ॥
भरद्वाजस्त्वप· स्पृष्ट्वा मौनी होमगृहे स्थित ।
दध्यौ कामदुघां कामवर्षिणीं कामदो मुनि· ॥ ५० ॥

---

४३ । नरो० । अशुद्धोऽसूयादिदोषाश्रय ।
४५ । नरो० । राज्यसम्भारान् राजत्वोचितसाधनानीत्यर्थ ।

---

४६ । दासोऽहमतिनीचवद् अतिनम्र सन् सेवे सेविष्ये इत्यर्थ । वर्त्तमानसामीप्ये लट् । रा० ।
४७ । भरतस्येत्युदीरित वच इत्यन्वय· । शेषे षष्ठी । रा० ।
४९ । यथाज्ञापयतीति च्छन्दोभङ्ग आर्ष· । रा० ।
५० । वाल्मीकीये भरद्वाजाश्रम प्राप्तस्य ससैन्यपरिजनस्य भरतस्य आतिथ्यार्थं सुरसानां

---

1 च '-राज्याभिघा-'। 2 ग-च 'नाह '। 3 च 'भवत पादयुगल'। 4 च 'शद्ध वाऽशुद्धमेव वा'। 5 क 'शासत,'। 6 क 'मत्वा'। 7 ग च 'मुदान्वित '। 8 च '-ष्यज्ज्ञान-'। 9 च 'यदा-'।

असृजत् कामधुक् सर्वं यथाकाममलौकिकम् ।
भरतस्य ससैन्यस्य यथेष्टञ्च मनोरथम् ।
तथा ववर्ष सकलं तृप्तास्ते सर्वसैनिकाः ॥ ५१ ॥
वशिष्ठं पूजयि[1]त्वाऽग्रे शास्त्रदृष्टेन कर्मणा ।
पश्चात् ससैन्यं भरत [2]तर्पयामास [3]योगिराट् ॥ ५२ ॥
उषित्वा दिनमे[4]कन्तु आश्रमे स्वर्गसन्निभे ।
अभिवाद्य पुनः प्रातर्भरद्वाज सहानुज ।
भरतस्तु कृतानुज्ञ प्रययौ रामसन्निधिम् ॥ ५३ ॥
चित्रकूटमनुप्राप्य दूरे संस्थाप्य सैनिकान् ।
रामसन्दर्शनाकाङ्क्षी प्रययौ भरत' स्वयम् ॥ ५४ ॥
शत्रुघ्नेन सुमन्त्रेण गुहेन च परन्तप' ।
तपस्विमण्डलं सर्वं [5]विचिन्वानो [6]न्यवर्त्तत ॥ ५५ ॥

---

सरसानाञ्च द्रव्यसम्भाराणां तथा समावेश परिदृश्यते, यथा निरन्तरशुष्कहृदयानामपि तत्तद्वस्तुसग्रहे मनो नितरा लोलुप भवति । पर सत्यपि दुर्निवारे लोभे विपुलत्वात् पाठकजनविरागभीत्या न तत्सम्भारससृष्टांशा अत्र निवेशिता । यदि केचन आग्रहान्विता· स्युस्तदा तैरयोध्याकाण्डीयैकाधिकशततम सर्गोऽन्वेष्टव्य ।

अत्र भरतातिथ्योपयोगिद्रव्यसम्भारसंग्रहाय भरद्वाजस्य कामदुघाध्यानं वाल्मीकीये तु तेन विश्वकर्मण आह्वानम् । तथा च—

अग्निशालां प्रविश्याथ पीत्वाप· परिमृज्य च ।
आतिथ्यार्थी भरद्वाजो विश्वकर्माणमाह्वयत् ॥
आहूय विश्वकर्माणं स्वय त्वष्टारमब्रवीत् ।
आतिथ्य कर्तुमिच्छामि तत्तु मे सविधीयताम् ॥ इत्यादि ।२।१००।१०-११

५१ । यस्य यन्मनोरथविषयमिष्ट तत् सर्वमलौकिकं लौकिकसामग्रीजन्यविलक्षणमसृजत् । रा० ।

५५ । गुहेन इति । गुहस्य भरतानुगमनं न गोरेसियोसम्मतम् । तत्र—

निविष्टायान्तु सेनायां यथोद्दिष्ट विनीतवत् ।
भरतो भ्रातरं वाक्यं शत्रुघ्नमिदमब्रवीत् ॥ १
गुहो ज्ञातिसहस्रेण शरचापासिधारिणा ।
वने मार्गतु काकुत्स्थमस्मिन् परिवृतस्त्वया ॥ ३

---

1 ग 'त्वा तु' । 2 छ 'पूजयामास' । 3 च-छ 'मौनिराट्' । 4 च '-मेक वै,' ग-ङ '-मेकन्तु' ।
5· ङ 'विदित्वाऽतो न्य-' । 6 क-ग-ङ 'न्यवर्त्तयन' ।

अदृष्ट्वा रामभवनमपृच्छ[1]दृषिमण्डलम् ।
कुत्राऽऽस्ते सीतया सार्द्धं लक्ष्मणेन रघूत्तमः ॥ ५६ ॥
ऊचु[2]स्ते गिरेः पश्चाद् गङ्गाया उत्तरे तटे ।
विविक्तं राम[3]सदनं[4]रम्यं काननमण्डितम् ॥ ५७ ॥
सफलैराम्रपनसैः कदली[5]षण्ड[6]संवृतम् ।
चम्पकैः कोविदारैश्च पुन्नागै[7]र्वकुलैस्तथा ॥ ५८ ॥

---

५८। नरो०। कदलीषण्डसंवृत कदलीसमूहवेष्टितम्। कोविदारै रक्तकाञ्चनैः।

---

इत्यादयो हस्तलिखितादर्शपुस्तकधृताः श्लोका न सन्निवेशिताः। प्राच्यरामायणसम्पादकेन श्रीमदमरेश्वरवेदान्तशास्त्रिणाऽप्ययं सर्गो लघ्वक्षरेण, सर्गसङ्ख्याङ्कासयोजनेन प्रक्षिप्तनामाक्षरेण च सप्ताधिकशततमात् सर्गात् परतः सन्निवेशितः। तट्टिप्पन्यां च 'बहुष्वादर्शपुस्तकेषु समुपलभ्यमानोऽपि लोकनाथेन कृतव्याख्यानोऽपि सप्तदशश्लोकात्मकोऽयं सर्गः प्रक्षिप्त इति वङ्गीयपाठपर्यालोचनया मन्यामहे।' इत्युक्तम्। बीजमत्रानयोः गोरेसियोशास्त्रिणोरयोध्याकाण्डीयाष्टनवतितमसर्गस्य वक्ष्यमाणश्लोकयोरालोचनम्। तयोर्हि—

भरतेनाभ्यनुज्ञातो गुहस्तु ज्ञातिभिः सह ।
ययौ संपूज्य भरतं सोपाध्यायपुरोहितम् ॥
ततः प्रतिगते नौभिर्गुहे ज्ञातिगणैः सह ।
जगाम सेनया सार्द्धं प्रयागं भरतो वनम् ॥ १३-१४।

इति गुहस्य स्वनगरप्रत्यावर्त्तनं वर्त्तते। पाश्चात्ये नैतौ श्लोकौ स्तः। परं—

'गुहो ज्ञातिसहस्रेण शरचापासिधारिणा ।
समन्वेषतु काकुत्स्थावस्मिन् परिवृतः स्वयम् ॥ २।९८।४।

इत्यादिना गुहस्य भरतानुयायित्वमेव दृश्यते। एवञ्च हस्तलिखितेषु सर्वेष्वादर्शपुस्तकेषु सर्गस्यास्य सत्तादर्शनात्, पाश्चात्यपाठसवादित्वात् प्राचीनेन टीकाकृता लोकनाथेन व्याख्यातत्वाच्च तेषां तेषां सम्मतं वेदव्याससम्मतञ्च गुहस्य भरतानुगमनमेव प्रमाणतया प्रतिभातीति दिक्।

शत्रुघ्नादिभिः सह सर्वतपस्विमण्डलं तपस्विनामाश्रममण्डलं विचिन्वानो रामाश्रममलब्ध्वा न्यवर्त्तत निवृत्तव्यापार एवाऽऽसीत्।

५८। कदलीषण्डसंवृतं कदलीनां षण्डः समूहस्तेन संवृतं व्याप्तम्। 'षण्डः पद्मादिसघाते न स्त्री स्याद् गोपतौ पुमान्' इत्यमरः।

---

1 च 'द्विजम-'। 2 ग-ङ-छ '-रच'। 3. च-छ '-भवन'। 4. ग 'रम्यका-'। 5 क-ख-घ-ङ च '-खण्ड'। 6 क-च 'मण्डितम्', ङ 'सयुतम्'। 7 क ख घ 'विपुलैस्तथा'।

एव दर्शितमालोक्य मुनिभिर्भरतोऽग्रत॰ ।
हर्षाद् ययौ रघुश्रेष्ठभवनं मन्त्रिणा सह ॥ ५९ ॥
ददर्श दूरादतिभासुरं शुभं रामस्य गेहं मुनिवृन्दसेवितम् ।
वृक्षाग्रसंलग्नसुवल्कलाजिन रामाभिरामं भरत॰ सहानुज॰ ॥ ६० ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसवादे अयोध्याकाण्डे
अष्टमोऽध्याय॰ ॥ ८ ॥

---

६० । नरो० । वृक्षाग्रे लग्ने वल्कलाजिने यस्य तत्तथा । रामाभिरामं मनोहरादपि मनोहरमित्यर्थ॰ ।

[ अयोध्याकाण्डे अष्टमाध्यायव्याख्या समाप्ता ॥८॥ ]

---

वाल्मीकीयेऽपि—

एष रामाश्रमो दूराद्दृश्यते कदलीवृतम् ।
क्रियतां तत् सखे शीघ्र यदर्थं वयमागता ॥ ३।४८।१० ।

इत्यारण्यकाण्डे रावणमुखेन रामाश्रमस्य कदलीषण्डमण्डितत्व व्यक्तम् ।

५९ । एवं मुनिभिर्दर्शितं रघुश्रेष्ठभवनमग्रतो भरत॰ समालोक्य मन्त्रिणा सह हर्षाद् ययाविति सम्बन्ध॰ । रा० ।

६० । रामाभिराम रामेण रामवासेनाभिरामम् । रा० ।

[ वृक्षाग्रेत्यादि । रामाभिराम रामस्याभिराम॰ मन॰प्रीतिर्यस्मिन् रामेणाभिरमणीयं वा । गो० ]

# नवमोऽध्यायः

[1]अथ गत्वाश्रमपदसमीपं[2] भरतो[3] मुदा।
सीतारामपदैर्युक्तं पवित्रमतिशोभनम्॥ १॥
स तत्र वज्राङ्कुशवारिजाञ्चितध्वजादिचिह्नानि पदानि सर्वतः।
ददर्श रामस्य भुवोऽतिमङ्गलान्यचेष्टयत्[4]पादरजःसु सानुजः॥ २॥
अहो सुधन्योऽहममूनि राम[5]पादारविन्दाङ्कितभूतलानि।
पश्यामि यत्पादरजो विमृग्यं ब्रह्मादिदेवैः श्रुतिभिश्च नित्यम्॥ ३॥
[6]इत्यद्भुतप्रेम[7]रसाप्लुताशयो विगाढचेता रघुनाथभावने[8]॥
आनन्दजाश्रुस्नपितस्तनान्तरः शनैरवापाऽऽश्रमसन्निधिं हरेः॥ ४॥

---

१। नरो०। आश्रमपदसमीपम् आश्रमस्थाननिकटम्।

२। नरो०। वज्रश्च अङ्कुशश्च वारिजश्च तैरञ्चितं ध्वजादिचिह्नं येषु तानि तथा। पदानि पदचिह्नानि। अचेष्टयत् चेष्टां कृतवानित्यर्थः, ग्रहीतुमिति शेषः।

४। नरो०। अद्भुतोऽपूर्वो यः प्रेमरसः प्रेमद्रवस्तेन आप्लुतः सिक्तः आशयश्चित्तं यस्य

---

१। नवमे भरतो गत्वा श्रीरामस्यैव सन्निधौ।
तेन सार्द्धं गन्तुमना नागमद् गुरुबोधितः॥

सीतारामपदयुक्तत्वादिविशिष्टमाश्रमपदसमीपमाश्रमस्थानसमीपदेशं गत्वा। रा०।

२। तत्र वज्राङ्कुशकमलपूजितध्वजादिचिह्नयुतानि पदानि ददर्श। ध्वजे पूजितत्वं स्पष्टरेखत्वम्। दृष्ट्वा च तत्पादचिह्नितदेशरजःसु अचेष्टयत् लुलुठे। रा०।

[ददर्श रामस्य भुव इति। अतिमङ्गला अतिपुण्या भुवो ददर्श। अतिमङ्गलत्वे हेतुः—यतो रामस्य तत्र तासु भूमिषु सर्वतो ध्वजादिचिह्नानि पदानि पदचिह्नानि सन्ति। दर्शनानन्तरं पादरजःसु सानुजः सशत्रुघ्नोऽचेष्टयत् लुलोठ। गो०]

३। वचनव्यत्ययेन भूतलानीत्यत्रापि ब्रह्मादिदेवैर्विमृग्याणीति योज्यम्। श्रुतिभिर्वेदोक्तविधिभिरित्यर्थः।

४। अद्भुतो यः प्रेमरसः प्रीतिरसस्तेनाप्लुतो व्याप्त आशयोऽन्तःकरणं यस्य। रघुनाथभावने विगाढचेतास्तत्परिचित्त इत्यर्थः। रा०।

---

1. क-पुस्तके 'श्रीमहादेव उवाच' इत्यधिकम्। 2. ङ '-पे'। 3 छ '-तस्तदा'। 4. ङ-च-छ 'पादरजः सहानुजः'। 5 ङ '-पदार-'। 6 च 'अत्यद्भुत-'। 7. च-छ '-रसप्लुता-'। 8 ग '-वन'।

स तत्र दृष्ट्वा रघुनाथमास्थितं दूर्वादलश्यामलमायतेक्षणम् ।
जटा[1]किरीटं नववल्कलाम्बरं प्रसन्नवक्त्रं तरुणारुणद्युतिम् ॥ ५ ॥
[2]विनोदयन्तं जनकात्मजां [3]शुभां [4]सौमित्रिणा सेवितपादपङ्कजम् ।
[5]तदाऽभिदुद्राव रघूत्तमं शुचा हर्षाच्च तत्पादयुगं [6]त्वराऽग्रहीत् ॥ ६ ॥
रामस्तमाकृष्य सुदीर्घ[7]बाहुदोर्भ्यां परिष्वज्य सिषिञ्च नेत्रजैः ।
जलैरथाङ्कोपरि [8]सन्न्यवेशयत् पुनः [9]पुनः सम्परिषस्वजे विभुः ॥ ७ ॥

अथ ता मातरः सर्वाः समाजग्मुस्त्वरान्विताः ।
राघवं द्रष्टुकामास्तास्तृषार्त्ता गौर्यथा जलम् ॥ ८ ॥
रामः स्वमातरं वीक्ष्य द्रुतमुत्थाय पादयोः ।
ववन्दे [10]साश्रु सा पुत्रमालिङ्ग्यातीव दुःखिता ॥ ९ ॥

---

स तथा । विगाढं मग्नं चेतो यस्य स तथा । रघुनाथभावने रामध्याने । आनन्दजाश्रुणा स्नपितं स्तनान्तरं वक्षःस्थलं यस्य स तथा ।

६ । नरो० । त्वरा त्वरयेत्यर्थः ।

७ । नरो० । अङ्कोपरि क्रोडोपरि ।

९ । नरो० । स्वमात्मीयम् (?) । पादयोरिति सम्बन्धविवक्षायां षष्ठी ।

---

६ । शुचा शोकेन मनस्तापेनेति यावत् । शुगत्र स्वनिमित्तरामस्यावस्थाविपर्यय-दर्शनोद्भवा । हर्षात् आनन्देन च । हर्षो रामदर्शनसमुत्थः । शुचोपलक्षितो भरतो हर्षात् तत्पादयुगं रामचरणद्वन्द्वम् अग्रहीत् । अत्र वाल्मीकिः —

इत्यसौ विलपन् दीनः प्रस्विन्नमुखपङ्कजः ।
पादावुपेत्य रामस्य प्रापतद् भरतो वशी ॥
दुःखाभितप्तो भरतो राजपुत्रो महाबलः ।
उक्त्वार्येति सकृद्दीनः पुनर्नोवाच किञ्चन ॥
बाष्पापिहितकण्ठो हि रामं प्रेक्ष्य यशस्विनम् ।
आर्येत्येवं समाभाष्य व्याहर्त्तुं न शशाक सः ॥ इति । २।१०८।३९-३७ ।

८ । तृषार्त्ता गौर्यथा जलं प्रति गच्छति एवं मातरो राघवं प्रति जग्मुः । रा० ।

९ । साश्रु यथा तथा ववन्दे । सा पुत्रमालिङ्ग्य भर्तृवियोगस्मरणेनातीव दुःखिता आसीदिति शेषः । रा० ।

स्वमातरं कौशल्यामित्यर्थः । पादयोरिति तस्या इति शेषः ।

---

1 च '-कलाप' । 2 क-ख-घ 'विलोकयन्त' । 3 ग-ङ छ 'तदा', च 'मुदा' । 4 ङ 'सौमित्रिससी-' । 5 ग-ङ 'तचाभि' । 6 च 'तदाऽग्र-' । 7 ग-ङ '-बाहु दो-' । 8 ग 'सन्निवेश्यन्' । 9 ग 'पुनस्त परि-' । 10 क-च 'साऽश्रुणा' ।

इतराश्च[1] तथा नत्वा जननी रघुनन्दनः ।
ततः समागतं [2]दृष्ट्वा वशिष्ठं [3]मुनिपुङ्गवम् ॥ १० ॥
साष्टाङ्ग[4] प्रणिपत्याऽऽह धन्योऽस्मीति पुन पुन. ।
यथार्हमुपवेश्याऽऽह सर्वानेव रघूद्वह ॥ ११ ॥
पिता मे कुशली किं वा मां किमाहातिदुःखित' ॥ १२ ॥
वशिष्ठस्तमुवाचेद पिता ते रघुनन्दन ।
त्वद्वियोगाभितप्तात्मा त्वामेव परिचिन्तयन् ।
राम रामेति सीतेति लक्ष्मणेति ममार ह ॥ १३ ॥
श्रुत्वा तत् कर्णशूलाभ गुरोर्वचनमञ्जसा ।
हा हतोऽस्मीति पतितो रुदन् राम' सलक्ष्मणः ॥ १४ ॥

---

१३ । नरो० । त्वद्वियोगेन त्वद्विच्छेदेन अभितप्त आत्मा मनो यस्य स तथा ।

१४ । नरो० । कर्णशूलाभ श्रुत्यतिदु खावहमित्यर्थ । अञ्जसा तथ्यमित्यर्थ ।

---

१० । इतरा अन्याश्च सुमित्राद्या जननीस्तथा साश्रु एव नत्वा ।

११ । धन्योऽस्मि त्वद्दर्शनादिति भावः । यथार्हं यथायोग्यम् । रा० ।

साष्टाङ्गमिति ।

पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा ।
वचसा मनसा चेति प्रणामोऽष्टाङ्ग ईरित ॥

( 'वङ्गवासी'मुद्रिततन्त्रसार. १९० पृ० )

इत्येतल्लक्षणलक्षितेन अङ्गाष्टकेन सह वर्त्तमान यथा स्यात् तथा प्रणिपत्य अष्टावङ्गानि भूमौ पातयित्वा नमस्कृत्येत्यर्थ ।

१२ । पिता मे कुशलीति प्रश्न' । स्ववियोगे कुशलमसंभाव्यमित्याशयेनाऽऽह—किं वेति । तथैव सम्भावनयाह—अतिदु खित प्राणवियोगजनकपीडया पीडित किमाह । रा० ।

१३ । अत्र वशिष्ठेन दशरथोपरतिवृत्तान्तवर्णनम् । वाल्मीकीये भरतेनैव । तथा च भरतमुखेन वाल्मीकेर्वाग्वैशिष्ट्यम्—

त्वामेव शोचस्तव दर्शनेप्सुस्त्वय्येव सक्तामनिवार्य बुद्धिम् ।
त्वया विहीनस्तव शोकरुग्णस्त्वदर्थमेवास्तमित पिता न ॥ इति । २।१०९।७० ।

आर्य राज्यं परित्यज्य कृत्वा कर्म सुदुष्करम् ।
गत स्वर्गं महाराज पुत्रशोकाभिपीडित ॥ इति च । २।११०।९ ।

१४ । कर्णशूलाभं कर्णयो शूलरोगतुल्यम् । रा० ।

---

1, च छ 'गात्' । 2 च 'वीक्ष्य' । 3 ग-ड च 'रघुनन्दन' । 4 ख '-ङ्गप्रणि-'

ततोऽनु रुरुदुः सर्वा मातरश्च तथाऽपरे ।
हा तात मां परित्यज्य क्व गतोऽसि [1]घृणाकर ।
अनाथोऽस्मि महाबाहो मां को वा [2]पालयेदितः ॥ १५ ॥

सीता च लक्ष्मणश्चैव विलेपतुरतो भृशम् ।
वशिष्ठ शान्तवचनैः [3]शमयामास तां शुचम् ॥ १६ ॥

ततो मन्दाकिनीं गत्वा [4]स्नात्वा ते वीतकल्मषा ।
राज्ञे ददुर्जल [5]तत्र सर्वे ते जलकाङ्क्षिणे ॥ १७ ॥

पिण्डान्निर्वापयामास रामो लक्ष्मणसंयुत ।
इङ्गुदीफलपिण्याकरचितान् [6]मधुसंप्लुतान् ॥ १८ ॥

---

१८ । नरो० । निर्वापयामास निरुवापेत्यर्थ । लक्ष्मणसयुतो लक्ष्मणसहकृत । इङ्गुदीफलञ्च पिण्याकश्च ताभ्या रचितास्तान् तथा । इङ्गुदी 'जियापुता' इति ख्याता । पिण्याक फलविशेष (?)। मधुसप्लुतान् मधुसिक्तान् । वाल्मीकिकृतरामायणे अयोध्याकाण्डे (२।४१।१०) दशरथशापाद् भरतेन कृतस्यापि पिण्डदानस्याकृतत्वात् श्रीरामस्य पुनस्तत्करणमिति नास्ति विरोध ।

---

अञ्जसा झटिति । 'स्रागझटित्यञ्जसाह्नायद्राङ्मङ्क्षुसपदि द्रुते' इत्यमर । उत्थाय इति शेष ।

१५ । ततोऽनु तत परमित्यर्थ । सर्वा मातर तथा अपरे भरतेन सहागता पौरजन-प्रभृतय इत्यर्थ, रुरुदु । घृणाकर दयासमुद्र । रा० ।

हा तात इत्यादि रामपरिदेवनम् । इत अत पर तव लोकान्तरप्रस्थानानन्तरमित्यर्थ । पालकस्य तवाभावे अन्य क पालयेदित्याशय । घृणाकर घृणाया आकर करुणाधार । अथवा घृणां करोतीति घृणाकरस्तस्य सम्बोधनम्, करुणाकारिन् । 'जुगुप्साकरुणे घृणा' इत्यमर ।

१६ । शान्तवचनै पूर्वराजवियोगचरित ससारानित्यताप्रतिपादकैर्वचनैस्तत्त्वज्ञानोप-देशैश्च । रा० ।

अतो रामक्रन्दनादप्यधिकमित्यर्थ । शान्तवचनै सान्त्वनावाक्यै ।

१८ । इङ्गुदी तापसतरु ।

---

1 च 'गुणा'। 2 क-ख-घ 'लालये-'। 3 च 'शान्तयामास'। 4 छ 'ते सर्वे वीत-'। 5 च 'सर्वे तत्र'। 6 क 'मधुमयुतान्', ग 'समधुप्लुतान्', ङ 'मधुना प्लुतान्', च 'समधुप्लुतान्', छ 'मधुरप्लुतान्'।

वयं [1]यदन्नाः पितरस्तदन्नाः [2]स्मृतिनोदिताः ।
[3]इति दुःखाश्रुपूर्णाक्षः पुन. स्नात्वा गृहं ययौ ॥ १९ ॥
सर्वे रुदित्वा सुचिरं स्नात्वा ज[4]ग्मुस्तथाश्रमम् ।
तस्मिंस्तु दिवसे सर्वे उपवास प्रचक्रिरे ॥ २० ॥
तत परेद्युर्विमले स्नात्वा मन्दाकिनीजले ।
उपविष्टं समागम्य भरतो राममब्रवीत् ॥ २१ ॥
राम राम महाभाग [5]स्वात्मा[6]नमभिषेचय ।
राज्य पालय [7]पित्र्य ते ज्येष्ठस्त्व मे पिता [8]यथा ।
क्षत्रियाणामयं धर्मो यत् प्रजा[9]परिपालनम् ॥ २२ ।

---

१९ । ननु राजायोग्यमेतत्तत्राऽऽह—वयमिति । रा० ।

वाल्मीकीयेऽपि—

ततो मन्दाकिनीतीरे शुचौ देशे नराधिप ।
पितुर्न्यवर्त्तयच्छ्रीमान् निवाप भ्रातृभि. सह ॥
ऐङ्गुद बदरोन्मिश्र पिण्याकं दर्भसस्तरे ।
न्युप्य राम सुदु खार्त्त इद वचनमब्रवीत् ॥
इदं भुङ्क्ष्व महाराज प्रीतो यदशना वयम् ।
यदन्न पुरुषो नून तदन्ना पितृदेवता ॥ इत्यादि ।२।१११।३४-३६ ।

सद्य' श्रुतपितृवियोगवार्त्तस्य श्रीरामस्य पिण्डदानाधिकारमाश्रित्याऽऽह वाल्मीकि टीकायां तिलक —'न च यदा कदाचित पितुर्मरणश्रवणे पुत्रस्य दशाहाशौचतायाः स्मृतिषूक्तत्वेन कथं कृतक्रियस्य पितु प्रथमदिन एव पिण्डदानमिति वाच्यम्, तस्या. स्मृते क्षत्रियेतरविषयत्वात् कलिविषयत्वाद्वा न दोष. ।' इति ।

२२ । पित्र्य पितुरागतम् । यथा पिता ज्येष्ठस्त्व मे तथा पितृसदृश । एवञ्च पितरि जीवति यथा राज्यानधिकारस्तथा त्वयि जीवत्यपीति भाव । रा० ।

---

1 क 'यदर्था पितरस्तदर्था'। 2 च 'स्मृतिचोदिता', क 'स्मृतिरब्रवीत'। 3 ङ 'इत्थ'। 4 ग 'ग्मु स्तमाश्रमम्', ङ-च क '-ग्मुस्तमाश्रमम्'। 5 च 'आत्मा-'। 6 क '-न परि-'। 7 क 'पित्र', ग घ 'पैत्र'। 8 ख-घ 'तथा'। 9 ग '-पालनं भृशम्', ङ '-प्रतिपालनम्', च '-पालन विभो'।

इष्ट्वा यज्ञैर्बहुविधैः पुत्रानुत्पाद्य [1]तन्तवे ।
राज्ये पुत्र समारोप्य गमिष्यसि [2]ततो वनम् ॥ २३ ॥
इदानीं वनवासस्य कालो नैव प्रसीद मे ।
मातुर्मे [3]दुष्कृत किञ्चित् स्मर्तु नार्हसि पाहि न· ॥ २४ ॥
इत्युक्त्वा चरणौ भ्रातु शिरस्याधाय भक्तित ।
रामस्य पुरत [4]साक्षाद्दण्डवत् पतितो भुवि ॥ २५ ॥
उत्थाप्य राघव शीघ्रमारोप्याङ्के[5]ऽतिभक्तित· ।
उवाच भरत राम· स्नेहार्द्रनयन· शनै ।
शृणु वत्स प्रवक्ष्यामि त्वयोक्त यत्तथैव तत् ॥ २६ ॥
किन्तु मामब्रवीत्तातो नव वर्षाणि पञ्च च ।
उषित्वा दण्डकारण्ये पुर पश्चात् समाविश ।
इदानीं भरतायेद राज्य दत्त मयाऽखिलम् ॥ २७ ॥
[6]तत पित्रैव सुव्यक्त राज्य दत्तं तवैव हि ।
दण्डकारण्यराज्य मे [7]दत्त पित्रा तवैव च ।
अत· [8]पितुर्वच कार्यमावाभ्यामतियत्नत ॥ २८ ॥

---

२३ । नरो० । तन्तवे सन्तानाय ।

२५ । नरो० । पुरतोऽग्रे साक्षादिति यावत् । साक्षाद्दण्डवत् प्रत्यक्षदण्डवत्, साक्षादित्यनेन दण्डप्रतिनिधिरत्र वारित ।

२७ । नरो० । शनैरद्रुतम् ।

---

२३ । तन्तवे वंशाविच्छेदाय । रा० ।

२६ । अतिभक्तित भरतस्येति शेष । स्नेहार्द्रनयन स्नेहस्निग्धनेत्र स तन्मुखमवलोक्य उवाच इत्याशय ।

२७ । त्वदुक्त तथैव सत्यमेव । तथाऽपि पित्राज्ञापालन मे आवश्यकमितीत्याह—किन्त्विति । नव पञ्च चतुर्दश । रा० ।

२८ । अतियत्नत पितृवचनकर्तव्यत्वे हेतुमाह—पितुरिति । स्वतन्त्र स्वच्छाचारी । रा० ।

---

1 च-छ 'यत्नत' । 2 छ 'तपोवनम्' । 3 क 'दुष्कार' । 4 च 'सोऽथ दण्ड-' । 5 ग 'ऽतिसादरम्' । 6 ङ 'अत' । 7 च 'पिता दत्त' । 8 छ 'पितृवच' ।

पितुर्वचनमुल्लङ्घ्य स्वतन्त्रो यश्च वर्त्तते ।
स जीवन्नेव मृतको देहान्ते निरयं व्रजेत् ।
तस्माद्राज्य प्रशाधि त्व वयं दण्डकपालकाः ॥ २९ ॥
भरतस्त्वब्रवीद्राम कामुको मूढधी[1] पिता ।
स्त्रीजितो भ्रान्तहृदय उन्मत्तो यदि वक्ष्यति ।
[1]तत् सत्य[2]मिति न ग्राह्य भ्रान्तवाक्य यथा सुधी ॥ ३० ॥

श्रीराम उवाच—

न स्त्रीजित पिता ब्रूयान्न कामी [3]नैव मूढधी ।
पूर्व प्रतिश्रुत तस्यै सत्यवादी ददौ भयात् ॥ ३१ ॥
असत्याद् भीतिरधिका [4]महती नरकादपि ।
करोमीत्यहमप्येतत् सत्य [5]तस्यै प्रतिश्रुतम् ॥ ३२ ॥

---

३० । नरो० । मूढा विवेकशून्या धीरन्त करण यस्य स तथा । यद्वा मूढा विपरीता धीर्बुद्धिर्यस्य स तथा । उन्मत्त उन्मत्तवत् । कामुकत्वात् स्त्रीजितत्वम्, स्त्रीजितत्वाद् भ्रान्त-हृदयत्वम्, भ्रान्तहृदयत्वाद् मूढधीत्वमिति । यथा सुधीर्न गृह्णातीति शेष ।

३१ । नरो० । पिता मूढधी सन्नैव ब्रूयाद् यतो न स्त्रीजित । कथं न तस्य स्त्रीजितत्वमिति चेत्तत्राऽऽह—न कामीति । तदेवोपपादयति—पूर्वमिति । भयात् प्रतिज्ञा-भङ्गजादिति शेष ।

३२ । नरो० । नन्वसत्यवादित्वभीत्या पूर्वं प्रतिश्रुत राजा निरूढवान्, त्वं कथमेतत् कर्म करोषीत्यत आह—असत्याद् भीतिरित्यादि । नन्वसत्य किं करिष्यति, तस्मात् कुतो भयमित्यत आह—महती नरकादपीति । नरकजनकत्वादसत्याद्भयमिति भाव । इति-शब्दोऽत्र हेतौ ।

---

३० । कामुकत्वादेव मूढधी । यदि वक्ष्यति यद् वक्ष्यतीत्यर्थ । सुधी पुरुषो यथा भ्रान्तवाक्यं सत्यमिति न गृह्णाति तथा त्वयोक्तविशिष्टपितृवाक्य न ग्राह्यमित्यर्थ । रा० ।

३१ । ब्रूयात् उक्तवानित्यर्थ । नञ्त्रयम् एकैकमपि तत्रासम्भवि किं पुन समुदितमिति बोधयितुम् । प्रतिश्रुत प्रतिज्ञातम् । भयात् प्रतिज्ञाभङ्गभयात् । रा० ।

३२ । यतो महतां नरकादप्यधिका असत्याद् भीति, तेषा फलतोऽप्युपाये अतिभय-मित्यर्थ । रा० ।

---

1 ख 'त'। 2 ङ 'मिव'। 3 ग 'न च'। 4 क-ख-घ-ङ-च-छ 'महता'। 5 क-ङ-छ 'कस्मै'।

कथ [1]वाक्यमह कुर्यामसत्य राघ[2]वोऽपि सन् ।
[3]इतीरितं समाकर्ण्य रामस्य भरतोऽब्रवीत् ॥ ३३ ॥
[4]तथैव चीरवसनो वने वत्स्यामि सुव्रत ।
चतुर्दश समास्त्वन्तु राज्यं कुरु यथासुखम् ॥ ३४ ॥

[5]श्रीराम उवाच—

पित्रा दत्त तवैवैतद्राज्य मह्य वनं ददौ ।
व्यत्ययं यद्यह कुर्यामसत्य पूर्ववत् स्थितम् ॥ ३५ ॥

भरत उवाच—

अहमप्यागमिष्यामि सेवे त्वां लक्ष्मणो यथा
नो चेत् प्रायोपवेशेन त्यजाम्येतत् कलेवरम् ॥ ३६ ॥

---

३३ । नरो० । राज्यपालनासमर्थस्य मम प्रार्थनया यदि राज्यपालनं स्वीकरोषि, तदा त्वां पापं न स्पृशेदिति चेत्तत्राऽऽह—कथमित्यादि । रघुवशस्यासत्यवादित्वमेव महान् दोष इति भाव । श्रीरामेण इत्युक्ते भरत किमब्रवीदित्यपेक्षायामाह—इतीरितं समाकर्ण्येत्यादि ।

३४ । नरो० । चीरं वल्कखण्ड वसनमाच्छादनं यस्य स तथा । यस्य प्रतिनिधिना यत् कृत तस्यैव तत् कृतं भवतीति मम वनवासेनैव तव वनवाससिद्धिर्भविष्यतीत्यभिप्राय· ।

३५ । नरो० । तत श्रीराम किमब्रवीदित्यपेक्षायामाह—पित्रेत्यादि । व्यत्ययं विपर्ययम् । ददौ स एवेति शेष । सत्यपालने यदि सामर्थ्यं न स्यात्तदैव त्वद्द्वारा सत्यपालनं स्यादिति भाव· ।

३६ । नरो० । तदनन्तर भरत किमब्रवीदित्यपेक्षायामाह—अहमपीत्यादि । प्राया‍य मृत्युजनकानशनाय उपवेश प्रायोपवेश , तेन प्रायोपवेशेन ।

---

३३ । अहमपि राघव एव सन् तस्यै कैकेय्यै सत्यं 'करोमि वनवासादिकमि'त्येतत् प्रतिश्रुत वाक्यं कथमसत्यं कुर्यामित्यर्थ । रा० ।

३४ । तथैव त्वत्प्रतिनिधितया त्वद्वदेवेत्यर्थ । रा० ।

३६ । प्रायोपवेश·—प्राय सन्न्यासवत्यनशने । सन्न्यास सम्यग् न्यास· आत्यन्तिकस्त्यागस्तद्युक्तेऽनशने । 'सन्न्यासवत्यनशने पुमान् प्राय ' इत्यमर । तदर्थमुपवेश उपवेशनम् , रामस्य राज्यग्रहणास्वीकारे भरतस्य प्राणपरित्यागार्थं सन्न्यासपूर्वकमनशनेनोपवेशनमित्यर्थ· । यद्वा प्रायो मरण तदर्थमुपवेश , 'प्रायश्चानशने मृत्यौ प्रायो बाहुल्यतुल्ययोः' इति विश्व· ।

---

1 क-ख-घ 'वाच्य-' । 2. क-ख-घ '-वो हि' । 3. क-ख-ग-घ-च-छ 'इत्युदीरितमाकर्ण्य' । 4 छ 'यथैव' । 5 क-पुस्तके 'श्रीराम उवाच' इति नास्ति ।

इत्येवं निश्चय कृत्वा दर्भानास्तीर्य [1]चाऽऽतपे ।
मन[2]साऽपि विनिश्चित्य प्राङ्[3]मुखोपविवेश सः ॥ ३७ ॥
भरतस्या[4]तिनिर्बन्धं दृष्ट्वा [5]रामोऽतिविस्मितः ।
नेत्रान्तसंज्ञां गुरवे चकार रघुनन्दनः ॥ ३८ ॥
एकान्ते भरतं प्राह वशिष्ठो ज्ञानिनां वर॰ ।
वत्स गुह्य शृणुष्वेद मम [6]वाक्यात् सुनिश्चितम् ॥ ३९ ॥

---

३७। नरो० । इत्युक्त्वा भरत॰ किं विहितवान् इत्यपेक्षायामाह—इत्येवं निश्चय कृत्वेति । आतपे छायारहितस्थले । प्राङ्मुखोपविवेश इत्यत्र सन्धिरार्ष॰ ।

३८। नरो० । तत श्रीराम॰ किं कृतवान् इत्यपेक्षायामाह—भरतस्यातिनिर्बन्धमित्यादि । अतिनिर्बन्धम् अतिनिश्चयम् । नेत्रान्तसज्ञाम् अपाङ्गार्थसूचनामित्यर्थ । नेत्रान्तशब्दसमभिव्याहारसत्त्वे 'संज्ञा'शब्दोऽत्र हस्तादिकरणकार्थसूचनारूपस्य स्वार्थस्यैकदेशेऽर्थसूचनायां निरूढलाक्षणिक । यद्वा वक्तुरन्याङ्गवारणाय नेत्रान्तेत्युक्तम् ।

३९। नरो० । श्रीरामेण नेत्रान्तेन प्रयोजन बोधित सन् वशिष्ठ किमुक्तवानित्यपेक्षायामाह—वत्सेत्यादि ।

---

३७। निश्चय कृत्वोवाचेति शेष॰ । आतपे इत्यनेन सर्वथा जीविताशापरित्याग । प्राङ्मुखे उपविवेश । सन्धिरार्ष । रा० ।

३८। नेत्रान्तसंज्ञां नेत्रान्तेन अस्योत्थापन कुर्विति सूचनाम् । रा० ।

३९। अत्र प्रासेङ्गितेन वशिष्ठेन रामस्य परब्रह्मत्वख्यापनपुर सरं प्रायोपवेशनत॰ प्रतिनिवर्त्तयितुं भरताय वाक्प्रबोधादिकम् । वाल्मीकीये नैतदेवम्, न च तत्र रामेङ्गितम्, न वा प्रतिनिधीभूतस्य गुरोस्तादृग्रामतत्त्वप्रकटन गौरवावहम् । तत्र रामवाक्येनैव भरतस्य प्रायोपवेशभङ्ग । तथा च—

पुनरुक्तं ब्रवीमि त्वां भरत प्रतिगम्यताम् ।
इहावश्य हि वस्तव्य प्रतिज्ञां रक्षता मया ॥
शापित खल्वसि मया किमर्थमवलम्बसे ।
सम्यगूचुरिमे सर्वे सुहृदो नो हितैषिण॰ ॥
किमस्मांस्ते परिक्लिश्य भरत प्रतिगम्यताम् ।
महार्णव शोषयितुं भवेच्छक्यो नदीपति ॥

---

1 छ 'चाऽऽसनम्' । 2 छ '-सा परि-' । 3 ङ '-मुखीभूय आविशत' । 4 क ख-ग-घ-ङ-च-छ '-पि नि-' । 5 च 'रामोऽपि वि ' । 6. च-छ 'वाक्य ' ।

रामो नारायण' साक्षाद् ब्रह्मणा [1]याचित' पुरा ।
रावणस्य वधार्थाय जातो दशरथात्मजः ॥ ४० ॥
योगमायाऽपि सीतेति जाता जनकनन्दिनी ।
शेषोऽपि लक्ष्मणो जातो राममन्वेति सर्वदा ।
रावण हन्तुकामास्ते गमिष्यन्ति न संशय ॥ ४१ ॥

४० । नरो० । असत्यबोधवारणाय साक्षादित्युक्तम् ।
४१ । नरो० । योगमायाऽपि अचिन्त्यशक्तिरेवेत्यर्थ । शेषोऽपि अनन्त एवेत्यर्थः ।

विन्ध्यो वा वसुधाकीर्ण· शक्यश्चालयितु क्षिते· ।
अहन्तु शासनं वीर न करिष्येऽनृतं पितु· ॥
एतच्च प्रतिजानामि सत्येन च शपाम्यहम् ।
एतच्चैवोभयं श्रुत्वा सम्यक् संपश्य राघव ॥
एव तद्वचन श्रुत्वा भरत पार्थिवात्मज ।
विवर्णवदनो भूत्वा पर दैन्यमुपागत ॥
स दर्भशयनात्तस्मादुत्थाय भरतस्तदा ।
उपस्पृश्योदक वीरो वाक्यमेतदुवाच ह ॥ इति । २।१२१।४-१० ।

स्वदेशप्रत्यागमनप्रवृत्तिस्तु तत्राऽऽगतानां मुनीनामुपदेशपरम्परया रामस्योत्तेजकवाक्येन च । तथा च—

ततो मुनिगणा सर्वे दशग्रीववधैषिण ।
भरत राजशार्दूलमूचुस्ते ख-गता वच ॥
कुले जात महाप्राज्ञ महावृत्त महायश· ।
ग्राह्यं रामस्य वचनं पितरं यद्यवेक्षसे ॥
तेनानृनमिम रामं वयमिच्छामहे पितुः ।
सत्यप्रतिज्ञ कैकेय्या स्वर्गस्थं पितरञ्च ते ॥ इत्यादि ।२।१२२।४-६ ।

भरतप्रतिगमनाय पुनरपि राम·—

शापितोऽसि मया वीर सीतया लक्ष्मणेन च ।
न च त्वामभिभाषेय यद्ययोध्यां न गच्छसि ॥ इति । २।१२३।१० ।

एवमुक्तवति रामे अयोध्यां प्रतियास्यन् भरत·—

एवमुक्तस्तु भरत· प्रमृज्याश्रुहतं मुखम् ।
पूर्वमुक्त्वा प्रसीदेति राघव स ततोऽब्रवीत् ॥
अलं शपेन यास्यामि यद्येवं परितप्यसे ।
अह हि जीवितेनापि प्रिय कुर्यां तव प्रभो ॥ इति २।१२३।११-१२ ।

1. क 'चोदित' ।

कैकेय्या वरदानादि [1]यद् यन्निष्ठुरभाषणम् ।
सर्वं [2]देवकृतं नो चेदेवं सा [3]भाषते कथम् ॥ ४२ ॥
तस्मात्त्यजाऽऽग्रह तात रामस्य विनिवर्त्तने ।
निवर्त्तस्व महासैन्यै[4]र्मातृभि सहित पुरम् ।
रावणं सकुल हत्वा शीघ्रमेवाऽऽगमिष्यति ॥ ४३ ॥
इति श्रुत्वा गुरोर्वाक्यं भरतो विस्मयान्वित ।
गत्वा समीप रामस्य विस्मयोत्फुल्ललोचनः ॥ ४४ ॥
पादुके देहि राजेन्द्र राज्याय तव [5]पूजिते ।
तयो सेवां [6]करोम्येव यावदागमनं तव ॥ ४५ ॥
इत्युक्त्वा पादुके दिव्ये योजयामास पादयो ।
रामस्य ते ददौ रामो भर[7]तायातिभक्तित ॥ ४६ ॥

---

४२ । नरो० । वरयोर्दान येन तद्वादिर्यस्य तत्तथा । नो चेदेव सा भाषते कथमिति अन्त प्रविष्टदेवताप्रेरणं विना सा एव न भाषेतेत्यर्थ ।

४३ । नरो० । उपसहरति—तस्मादिति ।

४४ । नरो० । श्रीरामस्य परमात्मत्वेन ज्ञानसत्त्वेऽपि इदानीं तस्य रावणवधार्थं जन्मश्रवणात्, योगमायात्वेन सीताया ज्ञानात्, शेषत्वेन लक्ष्मणस्य ज्ञानात्, कैकेय्या निष्ठुर-वचनस्य देवकृतत्वश्रवणाच्च भरतस्य विस्मय ।

---

४५ । राज्याय राज्यपालनसामर्थ्यलाभाय । रा०

पादुकोपस्थितिर्वाल्मीकीये आकस्मिकी । तत्राकारणोपस्थितस्य पादुकायुगलस्य भरतेन रामपादे परिधापनम्, वशिष्ठेन तयोर्ग्रहणोपदेश । तथा च—

एतस्मिन्नन्तरे शिष्या शरभङ्गस्य धीमत ।
उपायनमनुप्राप्ता गृहीत्वा कुशपादुके ॥
ते गृहीत्वा तु भरत पादुके मुनिनाहृते ।
राघवस्याऽऽशु पादाभ्यामददत् कुशपादुके ॥
अब्रवीच्च तदा वाक्यं जनौघै परिवारित ।
वशिष्ठो वाक्यकुशलो दैन्यं हर्षञ्च वर्द्धयन् ॥
अधिरोप्याऽऽर्यपादाभ्यामिमे गृह्णीष्व पादुके ।
एते हि सर्वलोकस्य योगक्षेमं करिष्यत ॥ इत्यादि ।२।१२३।१६, १८-२०।

---

1 ग ङ छ 'यच्च नि'। 2 च 'दैव-'। 3 क-ख-घ 'भाषयेत'। 4 क-ख-घ छ '-र्भात-'। 5 क 'पूजित'। 6 च 'करिष्यामो'। 7 छ '-ताय च भक्ति-'।

गृहीत्वा पादुके दिव्ये भरतो रत्नभूषिते ।
रामं पुन॰ परिक्रम्य प्रणनाम पुन॰ पुन॰ ।
भरत पुनराहेदं भक्त्या गद्गदया गिरा ॥ ४७ ॥

नव[1]पञ्चसमान्ते तु प्रथमे दिवसे यदि ।
नाऽऽगमिष्यसि चेद्राम [2]प्रविशामि महा[3]नलम् ॥ ४८ ॥

बाढमित्येव तं रामो भरतं सन्नयवर्त्तयत् ।
ससैन्य॰ सवशिष्टश्च शत्रुघ्नसहित॰ सुधीः ।
मातृभिर्मन्त्रिभि॰ सार्द्धं गमनायोपचक्रमे ॥ ४९ ॥

कैकेयी राममेकान्ते [4]स्रवन्नेत्रजलाकुला ।
प्राञ्जलि॰ प्राह हे राम तव [5]राज्याभिघातनम् ॥ ५० ॥

कृतं मया [6]दुष्टधिया [7]मायया ते विमोहिता ।
क्षमस्व मम दौरात्म्य क्षमासारा हि साधव॰ ॥ ५१ ॥

---

४७ । नरो० । गद्गदया गिरा काकूक्त्येत्यर्थ ।

५० । नरो० । तदानीं कैकेयी कीदृशी सती किमर्थं किमब्रवीदित्यपेक्षायामाह—कैकेयी राममेकान्ते इत्यादि । एकान्ते निर्जने । ब्रुवद्द दु॰खं प्रकटयत् नेत्रजलं यस्या सा तथा । प्रकृष्टोऽञ्जलिर्यस्या सा तथा ।

५१ । नरो० । यतस्ते तव मायया विमोहिता अतो दुष्टधिया मया तव राज्यविघातनं कृतमित्यन्वय॰ । क्षमस्व सहस्व, दौरात्म्यं दुश्चारित्र्यम् । अर्थान्तरन्यासमाह—क्षमासारा हि साधव इति । क्षमासाराः क्षमाप्रधाना इत्यर्थ ।

---

५० । स्रवन्नेत्रजला सती आकुला कृतापराधत्वादतिव्याकुलेत्यर्थ । राज्यविघातनं राज्यविघात॰ । रा० ।

अत्रत्यमिदं कैकेयीविनिवेदन वाल्मीकीये नास्ति ।

५१ । मायामोहितचेतसेत्यनेन वस्तुतो ममापराध एव नेति सूचितमङ्गीकृत्यापि स्वापराधमाह—क्षमस्वेति । क्षमैव सार सर्वगुणप्रधानं येषामित्यर्थ॰ । रा० ।

---

1 ङ '-पञ्चाब्दके पूर्णे' । 2 क-ग-ङ 'प्रविश्यामि' । 3 ग-ङ '-वनम्' । 4 क ख ग घ ङ-च छ 'स्रव' । 5 क 'राज्यवि-' । 6 छ 'मोह' । 7 क-ख-व 'मायामोहितचेतसा', ग ङ 'मायया ते विमुग्धया', च 'माययाऽतिविमोहिता' ।

त्वं साक्षाद्विष्णुरव्यक्तः परमात्मा सनातनः ।
मायामानुषरूपेण [1]मोहयस्यखिलं जगत् ॥ ५२ ॥
त्वयैव प्रेरितो लोकः कुरुते साध्वसाधु वा ।
त्वदधीनमिदं विश्वमस्वतन्त्रं करोति किम् ॥ ५३ ॥
यथा कृत्रिमनर्तक्यो नृत्यन्ति कुहकेच्छया ।
त्वदधीना तथा माया नर्तकी बहुरूपिणी ॥ ५४ ॥

---

५२ । नरो० । स्तुतिं विना कस्यापि प्रसादो न भवेदिति हृदि कृत्वा श्रीरामं स्तौति—त्वं साक्षाद्विष्णुरित्यादिना । यः सनातनः अनादिरव्यक्तश्चक्षुराद्यगोचरः परमात्मा स त्वमेव, यश्च साक्षाद्विष्णुः प्रत्यक्षनारायणः सोऽपि त्वमेवेत्यर्थः । तर्हि परमेश्वरत्वेन मां सर्वे जनाः कथं न जानन्तीति चेत्तत्राऽऽह—मायामानुषरूपेणेत्यादि । मोहयसि स्वस्मिन् मानुषबुद्धिं कारयसीत्यर्थः ।

५३ । नरो० । लोकस्य यत् सुकर्मकुकर्माचरणं तत्र त्वत्प्रेरणैव कारणमित्याह—त्वयैवेत्यादिना । मत्प्रेरणामुल्लङ्घ्य सुकर्मैव कथं न करोतीति चेत्तत्राऽऽह—त्वदधीनमिति । त्वदधीनत्वादिदं विश्वं स्वातन्त्र्येण किमपि कर्त्तुं न शक्नोतीत्यर्थः ।

५४ । नरो० । ननु मायाधीनत्वात् तत्प्रेरणयैव साधून्यसाधूनि च कर्मणि लोकः प्रवर्त्तते, कुतो मत्प्रेरणयेत्यत आह—यथेत्यादि । कृत्रिमनर्त्तक्य इति कृत्रिमाश्च ता नर्तक्यश्चेति विग्रहः । कुहको नृत्य(?) कारयिता तस्येच्छया । मायाया जगदाकारेण परिणममानत्वं पर्यालोच्य बहुरूपिणीत्युक्तम् । यद्वा मायैव श्री-भारतीत्यादिस्त्रीरूपेणाविर्भवतीति पर्यालोच्य बहुरूपिणीत्युक्तम् । तवाधीनाया मायाया अधीनो लोकस्तवाधीनो भवत्येवेति त्वत्प्रेरणयैव कर्मणि प्रवर्त्तते इति भावः ।

---

५२ । सम्प्रति मायापगमं ध्वनयति—त्वमिति । नन्वहं मनुष्यो न परमात्मेति चेत्तत्राऽऽह—मायेति । एषा ते मायैवेति भावः । रा० ।

५३ । त्वयैवेति । तस्मादन्तर्याम्येव त्वमिति भावः । एवं त्वत्प्रेरणयैव तथा कृतवत्या मे नापराध इति ध्वनिः । तदेवोपपादयति—त्वदिति । स्वतोऽस्वतन्त्रं त्वत्प्रेरणां विना किं करोति न किमपि करोतीति भावः । रा० ।

५४ । कुहको विस्मापकः, गुप्ततया तत्सूत्रचालनेन तन्नर्तनाद् विस्मयोत्पादक इति भावः । त्वदधीनेति । अनेन मायायास्तत्कार्यस्यातिजडत्वं सूचितम् । रा० ।

---

1 क 'मोहयन्नखिल' ।

त्वयैव प्रेरिताऽहञ्च देवकार्यं [1]करिष्यता ।
पापिष्ठ[2] पापमनसा [3]कर्माऽऽचरमरिन्दम ॥ ५५ ॥
अद्य प्रतीतोऽसि मम देवानामप्यगोचरः ।
पाहि विश्वेश्वरानन्त जगन्नाथ नमोऽस्तु ते ॥ ५६ ॥
छिन्धि स्नेहमयं पाशं पुत्र[4]वित्तादिगोचरम् ।
[5]त्वज्ज्ञानामलखड्गेन त्वामहं शरणं गता ॥ ५७ ॥
कैकेय्या वचनं श्रुत्वा रामः सस्मितमब्रवीत् ।
[6]यदाह मां महाभागे [7]नानृतं सत्यमेव तत् ॥ ५८ ॥
मयैव प्रेरिता वाणी तव वक्त्राद् विनिर्गता ।
देवकार्यार्थसिद्ध्यर्थमत्र दोषः कुतस्तव ॥ ५९ ॥
[8]गच्छ [9]त्वं हृदि मां नित्यं भावयन्ती दिवानिशम् ।
सर्वत्र विगतस्नेहा मद्भक्त्या मोक्ष्यसेऽचिरात् ॥ ६० ॥

---

५५ । नरो० । उपसंहरति—त्वयैवेत्यादिना ।

५६ । नरो० । पूर्वं कथं न ज्ञात इति चेत्तत्राऽऽह—देवानामप्यगोचर इति । विश्वेश्वर विश्वनियन्तः, अनन्त देशकालाद्यपरिच्छिन्न, जगन्नाथ जगत्पते ।

५९ । नरो० । न च 'एतस्मिन्नन्तरे देवा दैवीं वाणीमचोदयन् ( २।२।४० श्लो० ) इत्यनेन 'मयैव प्रेरिता वाणी तव वक्त्राद्विनिर्गते'त्यस्य विरोध इति वाच्यम्, श्रीरामेण स्वांशभूतदेवैः सह आत्मनोऽभेदस्याङ्गीकारात् । देवकार्यार्थसिद्ध्यर्थमिति देवानां यत् कार्यं

---

५५ । नन्वेवं दुःखफलकं त्वत्प्रेरणं मया कथं कर्तव्यम्, तत्राऽऽह—देवकार्यं करिष्यतेति ।

५६ । मम मया । शेषे षष्ठी । प्रतीतोऽसि वास्तवस्वरूपेण ज्ञातोऽसि । इदमपि त्वत्प्रसादादेवेति भावः । अन्यथा देवानामप्यविषयस्य कथं मज्ज्ञानविषयता स्यादिति भावः । अतः प्रार्थयते—पाहीति । रा० ।

५७ । पुत्रवित्तादिविषयस्नेहरूपं पाशमित्यर्थः । रा० ।

६० । मद्भक्त्या सर्वविषयेषु स्नेहत्यागपूर्वकमहर्निशं मद्भावनमेव मद्भक्तिः, तया । रा० ।

---

1 ग 'चिकीर्षता' । 2 च '-ष्ठा' । 3 छ 'कर्माचाररता सदा' । 4 च '-मिवादि' । 5 च 'तत्त्वज्ञानेन खड्गेन' । 6 च 'यथार्थं त्व', छ यदात्थ' । 7 ख 'न नृत' । 8 ग ङ-छ 'गच्छस्व' । 9 ज 'स्वहृदि' ।

अहं सर्वत्र समदृग् द्वेष्यो वा प्रिय एव वा ।
नास्ति मे [1]कल्पकस्येव भजतोऽनुभजाम्यहम् ॥ ६१ ॥
मन्मायामोहितधियो [2]हे अम्ब मनुजाकृतिम् ।
सुखदुःखाद्यनुगतं जानन्ति न तु तत्त्वतः ॥ ६२ ॥
दिष्ट्या मद्[3]गोचरं ज्ञानमुत्पन्नं ते [4]भवापहम् ।
स्मरन्ती तिष्ठ भवने लिप्यसे न [5]च कर्मभिः ॥ ६३ ॥
इत्युक्ता सा परिक्रम्य [6]रामं सानन्दविस्मया ।
प्रणम्य शतशो भूमौ ययौ गेहं मुदाऽन्विता ॥ ६४ ॥

---

रावणवधादिरूपम्, तस्य योऽर्थः कारणं वनगमनादिरूपन्तस्य या सिद्धिस्तदर्थमित्यर्थः । देवानां कार्यं कर्तुं योग्यो यो रावणवधादिरूपोऽर्थः प्रयोजनं तस्य या सिद्धिस्तदर्थो वा ।

६१ । नरो० । समदृक्त्वं विवृणोति—द्वेष्य इत्यादिना । कल्पकस्य अनात्मनि देहादौ आत्मत्वारोपकस्य, आत्मानात्मविवेकशून्यस्येति यावत् ।

६२ । नरो० । ममाधीना माया मन्माया, तया मोहिता मत्स्वरूपावगाहनासमर्थीकृता धीर्येषां ते तथा । यद्वा मन्मायया मोहिता पिहिता धीर्बुद्धिर्येषां ते तथा । हे अम्ब हे मातः, मनुजस्येवाऽऽकृतिर्मूर्त्तिर्यस्य तं तथा । अथवा मनुजाकृतिरिवाऽऽकृतिर्यस्य तं तथा । तत्त्वतः स्वरूपतः याथार्थ्येन वा ।

६४ । नरो० । सानन्दविस्मयेति श्रीरामप्रसादादानन्दः, असावेव परमेश्वर इति विस्मयः ।

---

६१ । मम रागद्वेषाभावान्मत्तो भयं माऽस्तु इत्याह—अहमिति । मम द्वेष्यो वा प्रियो वा नास्ति कल्पकस्येव, मायाविनो यथा स्वमायाकल्पितपदार्थेषु द्वेषप्रीतिराहित्यं स्वकल्पितत्वेन मिथ्यात्वनिश्चयात्, तथा ममापि सर्वत्र मिथ्यात्वनिश्चयात् न द्वेषरागाविति न मत्तस्ते भयमिति भावः । तथाऽप्ययं मे स्वभाव इत्याह—भजतोऽन्विति । अतो न वैषम्यनैर्घृण्ये । रा० ।

[ कल्पकस्येव कल्पवृक्षस्येव । गो० ]

६२ । न तु तत्त्वतोऽहं तादृश इति शेषः । रा० ।

६३ । भवापहमित्यनेन भयान्तरस्यावकाश एव नेति सूचितम् । मां स्मरन्ती तिष्ठ मां जगत्प्रेरकत्वेन संस्मरन्ती तिष्ठ । एवञ्च स्वस्मिन् स्वतन्त्रत्वाभिमानापगमान्न कर्मभिर्लिप्यसे, सोऽभिमान एव कर्मलेपक इति भावः । रा० ।

---

1 ग 'कल्पतरुवद्', छ 'कल्पकस्येह' । 2 क-ख-ग-घ-ङ-च-छ 'मामम्ब' । 3 च '-गोचरज्ञान-' 4 ग-च-छ 'भया-' । 5. च 'तु' । 6. ग 'राममानन्द-', च 'राममालिङ्ग्य वि-' ।

भरतस्तु सहामात्यैर्मातृभिर्गुरुणा सह ।
अयोध्यामगमच्छीघ्रं राममेवानुचिन्तयन् ॥ ६५ ॥
पौरजानपदान् सर्वानयोध्याया[1]मुदारधीः ।
स्थापयित्वा यथान्यायं नन्दिग्रामं ययौ स्वयम् ॥ ६६ ॥
तत्र सिंहासने नित्य पादुके स्थाप्य [2]भक्तित· ।
पूजयित्वा [3]यथा रामं गन्धपुष्पाक्षतादिभि· ।
राजो[4]पचारैरखिलै· प्रत्यहं नियतव्रत· ॥ ६७ ॥
फलमूलाशनो दान्तो जटावल्कलधारकः ।
अध·शायी ब्रह्मचारी शत्रुघ्नसहितस्तदा ॥ ६८ ॥
राज[5]कार्याणि सर्वाणि यावन्ति पृथिवीतले ।
तानि पादुकयोः सम्यङ्निवेदयति राघव· ॥ ६९ ॥
गणयन् दिव[6]सान्येव रामागमनकाङ्क्षया ।
स्थितो रामार्पितमना· साक्षाद् ब्रह्ममुनिर्यथा ॥ ७० ॥
रामस्तु चित्रकूटाद्रौ वसन् मुनिभि[7]रावृतः ।
सीतया लक्ष्मणेनापि [8]कञ्चित् काल[9]मुपावसत् ॥ ७१ ॥

---

६७ । नरो० । नियतव्रत कृतनियम· ।

६८ । नरो० । नियतव्रतत्वं विवृणोति—फलमूलाशन इत्यादिना ।

---

६७ । स्थाप्य स्थापयित्वा । आर्षो ल्यप् । राजोपचारै राजयोग्यै पुष्पादिभि राममिव ते पूजयित्वेत्यर्थ । रा० ।

६८ । भरतस्यापि रामसमव्रतत्वमाह—फलेति । दान्तो जितेन्द्रियः । रा० ।

६९ । अत्र वाल्मीकि —

पादुके त्वभिषिच्याथ नन्दिग्रामे वसंस्तदा ।
भरत· शासनं सर्वं पादुकाभ्यां न्यवेदयत् ॥ इति । २।१२७।१८ ।

७० । ब्रह्ममुनिर्ब्रह्मर्षि । रा० ।

७१ । रामश्चित्रकूटाद्रौ मुनिभि सीतया लक्ष्मणेनाऽऽवृतो वसन्नपि किञ्चित् कालमेवोपावसदित्यन्वय । एवेत्यस्याध्याहार , न बहुकालमित्यर्थ । रा० ।

---

1 च '-मनन्यधी '। 2 च 'यव्रत '। 3 ग-च 'यथान्याय'। 4 च '-पहारै-'। 5 छ 'कर्माणि यावन्ति करोति'। 6 च '-सखेव '। 7 ग 'राहृत.'। 8 ख-घ-ङ-च 'किञ्चित'। 9 ग '-ल मुदाऽवसत', च '-लं मुदाऽनयत्'।

नागराश्च सदा यान्ति रामदर्शनलालसाः ।
चित्रकू[1]टस्थित ज्ञात्वा सीतया लक्ष्मणेन [2]च ॥ ७२ ॥
दृष्ट्वा तज्जनसम्बाध रामस्तत्याज तं गिरिम् ।
दण्डकारण्यगमने कार्यमप्यनुचिन्तयन् ॥ ७३ ॥
अन्वगात् सीतया भ्रात्रा ह्यत्रेराश्रममुत्तमम् ।
सर्वत्र सुखसंवासं जनसम्बाधवर्जितम् ॥ ७४ ॥
गत्वा मुनिमुपासीनं भासयन्तं तपोवनम् ।
दण्डवत् प्रणिपत्याऽऽह रामोऽहमभिवादये ॥ ७५ ॥
पितुराज्ञां पुरस्कृत्य दण्ड[3]कानहमागतः ।
वनवासमिषेणापि [4]धन्योऽहं दर्शनात्तव ॥ ७६ ॥

---

७३ । नरो० । तज्जनसम्बाधं तज्जनसङ्कट तज्जनव्याप्तमित्यर्थ. ।

---

७३ । जनसम्बाधं दर्शनार्थिनां साकेताधिवासिनां सम्बाधं सङ्घर्षं बहुलीभूतानां तेषामेकत्रोपनिपातमिति यावत्, दृष्ट्वा । अनेनैव कारणेन राम त चित्रकूट तत्याजेति भाव । न केवलम् अनेनैव कारणेन, दण्डकारण्यगमने कार्यं रावणवधरूपं प्रयोजनमपि चिन्तयन् तत्याज । अत्र स्थिते दण्डकारण्यगमनजन्य खरशूर्पणखादिसवादो न स्यात्तदभावेन च स्वप्रयोजनस्य रावणवधस्य निमित्तादिक समुपस्थितं न स्यादिति निष्कर्ष । रामस्य चित्रकूटपरित्यागो वाल्मीकीये अरण्यकाण्डे । परित्यागकारणञ्च तत्रैवमाह—

राघवस्तु प्रयातेषु तपस्विषु च चिन्तयन् ।
न तत्रारोचयद् वास कारणैर्बहुभिस्तदा ॥
मयेह भरतो दृष्टो मातरो नागरास्तथा ।
महान् मे हृदये तापस्तान् नित्यमनुशोचत ॥
स्कन्धावारनिवेशे तु तेन चेह निवेशिते ।
हयहस्तिकरीषाभ्यामपमर्द कृतो महान् ॥
तस्मादन्यत्र गच्छाम इति निश्चित्य राघवः ।
प्रातिष्ठत स वैदेह्या लक्ष्मणेन च धीमता ॥ इति । ३।२।१-४ ।

७६ । प्रसङ्गादागत्यापि त्वद्दर्शनेनाहं धन्य', किं वक्तव्य त्वद्दर्शनोद्देशेनैवाऽऽगतो धन्य इति । रा० ।

---

1. ग ड-छ '-टे स्थित' । 2. ग 'तु', ड-च-छ 'ते' । 3 च-छ '-कारण्य-' । 4 ख 'वन्यो-' ।

श्रुत्वा रामस्य वचनं [1]रामं ज्ञात्वा हरिं परम् ।
पूजयामास विधिवद् भक्त्या परमया मुनिः ॥ ७७ ॥

वन्यैः फलैः कृतातिथ्यमुपविष्टं रघूत्तमम् ।
सीताञ्च लक्ष्मणञ्चैव सन्तुष्टो वाक्यमब्रवीत् ॥ ७८ ॥

भार्या मेऽतीव संवृद्धा ह्यनसूयेति विश्रुता ।
तपश्चरन्ती सुचिरं धर्मज्ञा धर्मवत्सला ॥ ७९ ॥

अन्तस्तिष्ठति तां सीता पश्यत्वरिनिषूदन ।
तथेति जानकीं प्राह रामो राजीवलोचनः ॥ ८० ॥

गच्छ देवीं नमस्कृत्य शीघ्रमेहि पुनः शुभे ।
[2]तथेति रामवचनं सीता चापि तथाऽकरोत् ॥ ८१ ॥

दण्डवत् पतितामग्रे सीतां दृष्ट्वाऽतिहृष्टधीः ।
अनसूया समालिङ्ग्य [3]वत्से सीतेति सादरम् ॥ ८२ ॥

---

७७। परं हरिमन्तर्यामिरूपम्। उपासनाभिस्तत्सारूप्यं ये गतास्तदव्यवच्छेदाय परमिति। रा०।

[ परं पूर्णं न त्वशम्। हरिमीश्वरम्। गो० ]

७९। अतीव संवृद्धा वृद्धतरा। धर्मवत्सला धर्मप्रिया। रा०।

अनसूयां विशिनष्टि वाल्मीकिः—

रामाय चाऽऽचचक्षे तां ब्राह्मणीं ब्रह्मचारिणीम् ।
मौनेन तपसा युक्तां नियमैश्चाप्यनुत्तमैः ॥
दशवर्षसहस्राणि यया तप्तं महत्तपः ।
अनसूया पुरा तात इयं मातेव तेऽनघ ॥
दशवर्षाण्यनावृष्ट्या दग्धे लोके निरन्तरम् ।
यया मूलफलं सृष्टं जाह्नवी च प्रवर्तिता ॥
देवकार्यनिमित्तञ्च यया सञ्चरमाणया ।
दशरात्रं कृता रात्रिः सेयं मातेव तेऽनघ ॥ इति। ३।२।९-१२।

८१। सीता रामवचनम् 'अवश्यम्' इत्यङ्गीकृत्य तथाऽकरोत् तत्समीपगमनमकरोत्। रा०।

८२। सीते इति च्छेदः, सन्धिरार्षः। रा०।

---

1. ग ड च-छ 'ज्ञात्वा रामं'। 2 च 'इति श्रुत्वा रामवाक्यं'। 3 च 'वत्सा'।

दिव्ये ददौ कुण्डले द्वे निर्मिते विश्वकर्मणा ।
दुकूले द्वे ददौ तस्यै निर्मले भक्तिसयुता ॥ ८३ ॥
अङ्गरागञ्च सीतायै ददौ दिव्यं शुभानना ।
न [1]त्यक्ष्यतेऽङ्गरागेण [2]शोभा त्वां कमलानने ॥ ८४ ॥
पातिव्रत्यं पुरस्कृत्य राममन्वेहि [3]जानकि ।
कुशली राघवो यातु त्वया सह पुनर्गृहम् ॥ ८५ ॥
भोजयित्वा यथान्यायं रामं सीतासमन्वितम् ।
लक्ष्मणञ्च [4]तदा रामं पुनः प्राह कृताञ्जलिः ॥ ८६ ॥

राम त्वमेव भुवनानि निधाय तेषां
सरक्षणाय सुरमानुषतिर्यगादीन् ।
देहान् बिभर्षि न च देहगुणैर्विलि[5]प्त-
[6]स्त्वत्तो बिभेत्यखिलमोहकरी[7] च माया ॥ ८७ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अयोध्याकाण्डे
नवमोऽध्याय ॥ ९ ॥

---

८७ । नरो० । देहगुणै सुखदु खजन्ममरणादिभिर्देहधर्मै , विलिप्तो युक्त इत्यर्थ. ।

[ अयोध्याकाण्डव्याख्या समाप्ता ॥ २ ॥ ]

---

८३ । भक्तिसयुता साक्षादीश्वरीयमिति भक्तिमतीत्यर्थ. ।

८७ । सुरदेहो वामनादि , मानुषदेहो रामादि , तिर्यग्देहो मत्स्यादि । न च देहेति, मायिकत्वादिति भाव. । त्वत्तो बिभेतीति, त्वज्ज्ञाननाश्यत्वादिति भाव । रा० ।

अयोध्याकाण्डं समाप्तम् ॥

---

1. च 'त्यचत्यङ्ग-' । 2. क ग-ङ 'शोभा' । 3 च 'शोभने' । 4 ग-छ 'तथा' । 5. छ '-प्त' । 6. छ 'त्वत्तो' 7. छ '-रीवि' ।

# अध्यात्मरामायणम्

—— ० ——

## अरण्यकाण्डम्

## प्रथमोऽध्यायः

— ० :—

श्रीमहादेव उवाच—

अथ तत्र दिनं स्थित्वा प्रभाते रघुनन्दनः ।
स्नात्वा मुनिं समामन्त्र्य प्रयाणायोपचक्रमे ॥ १ ॥
मुने गच्छामहे सर्वे मुनिमण्डलमण्डितम् ।
विपिनं दण्डकं यत्र त्वमा[1]ज्ञातुमिहार्हसि ।
मार्गप्रदर्शनार्थाय शिष्यानाज्ञप्तुमर्हसि ॥ २ ॥
श्रुत्वा रामस्य वचनं प्रहस्यात्रिर्महायशाः[2] ।
सर्वस्य मार्गद्रष्टा त्वं तव को मार्गदर्शकः ।
तथाऽपि दर्शयिष्यन्ति तव लोकानुसारिणः ॥ ३ ॥

३ । नरो० । सर्वस्य मार्गद्रष्टेति । सर्वप्राण्यन्तर्यामिणस्तव हृदि 'अनेन पथा गच्छ' इत्याकारिकां प्रेरणां विना कोऽपि कुत्रापि न गच्छतीति त्वं सर्वस्य मार्गद्रष्टा सर्वस्य प्राणिनो मार्गस्य दर्शयितेत्यर्थः । सर्वस्य मार्गप्रदर्शकस्य तव मार्गदर्शनमनर्थकमिति भावः । यद्वा सर्वत्र स्थितत्वाद् दण्डकस्य तदितरस्य च पथदर्शनकर्तेत्यर्थः । एतादृशस्य तव मार्गप्रदर्शनमनर्थकमिति भावः । तथाऽपि तादृशत्वेऽपि, लोकानुसारिणो लोककर्मानुवर्तिन इत्यर्थः ।

१ । अथ अत्रेः सत्स्तवानन्तरम् । मुनिमत्रिं समामन्त्र्य नमस्कारादिभिः सम्भाव्य प्रयाणाय दण्डकं प्रति गमनायेत्यर्थः ।

२ । सर्वे वयं सीता लक्ष्मणोऽहञ्च इत्यर्थः । यत्र यस्मिन् प्रदेशे दण्डकं दण्डकं नाम विपिनमरण्यम्, तत्रेति शेषः ।

३ । मार्गद्रष्टा मार्गदर्शयिता । लोकानुसारिणः लोकवदज्ञत्वं नाटयतः । रा० ।

1 ग ड च छ 'ज्ञातुमि-' । 2 अत पर घ-पुस्तके प्राह तत्र रघुश्रेष्ठ राम राम सराश्रय । इत्यधिकम् ।

इति शिष्यान् समादिश्य स्वयं किञ्चित्तमन्वगात् ।
रामेण वारितः प्रीत्या अत्रिः स्वभवनं ययौ ॥ ४ ॥

क्रोशमात्रं ततो गत्वा ददर्श महतीं नदीम् ।
अत्रेः शिष्यानुवाचेदं रामो राजीवलोचनः ॥ ५ ॥

नद्याः सन्तरणे कश्चिदुपायो [1]विद्यते न वा ।
ऊचुस्ते विद्यते नौका सुदृढा रघुनन्दन ॥ ६ ॥

तारयिष्यामहे युष्मान् वयमेव क्षणादिह ।
ततो [2]नावि समारोप्य सीतां राघवलक्ष्मणौ ॥ ७ ॥

क्षणात् [3]सन्तारयामासुर्नदीं मुनिकुमारकाः ।
रामाभिनन्दिताः सर्वे जग्मुरत्रे[4]स्थाऽऽश्रमम् ॥ ८ ॥

[5]तावद्रिविपिनं घोरं [6]झिल्लीझङ्कारनादितम् ।
[7]नानामृगगणाकीर्णं सिंहव्याघ्रादिभीषणम् ॥ ९ ॥

राक्षसैर्घोररूपैश्च सेवितं [8]रोमहर्षणम् ।
प्रविश्य विपिनं घोरं रामो लक्ष्मणमब्रवीत् ॥ १० ॥

---

८ । नरो० । रामाभिनन्दिता रामप्रशंसिता ।

९ । नरो० । अद्रिविपिनं पर्वतवनम् । घोरं भयानकम् । झिल्लीझङ्कारनादितं झिल्लीनां 'झिल्ली'तिख्यातानां झङ्कारैर्नादितं शब्दितम् । नानामृगगणाकीर्णं नाना नानारूपा ये मृगगणा हरिणसमूहास्तैराकीर्णं व्याप्तम् ।

१० । नरो० । घोरं भीषणं रूपं येषां तैस्तथा । रोमाणि हर्षयतीति रोमहर्षणम् । रामादयो ददृशुरिति शेषः ।

---

४ । स्वयमत्रिस्तं राममन्वगात् । रामेण वारितः अनुगमनादित्यर्थः । स्वभवनं स्वाश्रममित्यर्थः ।

५ । ततः अत्रिप्रत्यागमनात् परम्, राजीवलोचनो रामः महतीं नदीं ददर्श । दृष्ट्वा च इति शेषः, अत्रेः शिष्यान् स्वमनुगतान् उवाच वक्ष्यमाणमित्यर्थः ।

८ । रामाभिनन्दिता रामेणानन्दपूर्वकं 'गच्छते'ति दत्तानुमतयः । रा० ।

---

1 च 'वर्त्तते'। 2 च 'नाव'। 3 क-ग 'सन्तर'। 4 च '-स्तथा-'। 5 क-ख ङ 'तावेत्य', ग घ-च-छ 'ततोऽतिवि'। 6 ग 'रामो लक्ष्मणमब्रवीत'। 7 ग पुस्तके दशमश्लोकेन सहेदमर्द्धं न दृश्यते। 8 ङ 'लोम'।

इतः पर प्रयत्नेन गन्तव्यं [1]सहितेन मे ।
धनुर्गुणेन सयोज्य [2]शरानपि करे [3]धृतः ॥ ११ ॥
अग्रे यास्याम्यहं पश्चात्त्वमन्वेहि धनुर्धरः ।
आवयोर्मध्यगा सीता [4]मायेवाऽऽत्मपरात्मनोः ॥ १२ ॥
चक्षुश्चारय सर्वत्र [5]दुष्टं रक्षोभयं महत् ।
विद्यते दण्डकारण्ये [6]श्रुतपूर्वमरिन्दम ।
इत्येवं भाषमाणौ तौ जग्मतु' सार्द्धयोजनम् ॥ १३ ॥
तत्रैका पुष्करिण्यास्ते कह्लारकुमुदोत्पलैः ।
[7]अम्बुजैः शीतलोदेन शोभमाना[8] व्यदृश्यत ॥ १४ ॥

---

११ । नरो० । गुणेन धनु· सयोज्य शरान् करे धृतो मे मम सहितेन गन्तव्यमिति सम्बन्ध । मे इति सम्बन्धविवक्षायां षष्ठी ।

१२ । नरो० । उपमामाह—मायेवेति । आत्मपरात्मनोर्जीवब्रह्मणो' ।

१३ । नरो० । चारय गमय ।

१४ । नरो० । कह्लारेति । कह्लारपदमत्र रक्तसन्ध्यकपरम् । उत्पलपदं नीलोत्पलपरम् ।

---

११ । सहितेन युवाभ्यां मिलितेन गन्तव्यमित्युक्तमिति शेष· । धृधदादधदित्यर्थ' । रा० । इत परं तस्मात् स्थानादित्यर्थ· । प्रयत्नेन अवधानेनेत्यर्थ' । अत्र नरोत्तमव्याख्याकौशलदर्शनेन धृत इति क्विबन्त-धृधातो रूपं मे इत्यस्य विशेषणमिति प्रतिभाति, एवं सति शरानित्यत्र द्वितीया कृल्लक्षणषष्ठ्या अनित्यत्वस्वीकारेणोपपाद्या । वस्तुतस्तु 'गन्तव्यं सहितेन मे' इत्येकं वाक्यम्, 'शरानपि करे धृत यास्याम्यहमि'त्यपरम् । अत्रापि पक्षे धृत इति सकर्मकादपि धृधातोः कर्त्तरि क्तप्रत्ययस्वीकारेणाहमित्यस्य विशेषणपरतया व्याख्येयम् । शरानिति क्तान्तकर्मणि द्वितीया । सर्वथा दधदित्येव पाठ· साधीयान् । अत्रापि वाक्यद्वयमेव ।

१२ । साहित्यप्रकारमेवाह—अग्र इति । आत्मपरात्मनोर्जीवेशयोर्मध्यगा । आश्रयत्वविषयत्वाभ्यां सम्बद्धा मायेवेत्यर्थ' । रा० ।

१३ । दृष्टमपशकुनै सूचितम् । ननु शकुनादिषु को विश्वासस्तत्राऽऽह—श्रुतपूर्वमिति । दण्डकारण्यं पूर्वमृषीणां मुखात् श्रुतं रक्षोभयं विद्यते, शकुनैश्च तन्निश्चितमित्यर्थ । रा० ।

चक्षु· चारय सञ्चालय । एतेन दूरस्थितानामपि भयकारणानामन्वेषणपुर·सरं गन्तव्यमिति ध्वनितम् ।

१४ । कह्लारशीतोदकादियुक्ता पुष्करिणी तत्राऽऽस्ते । रा० ।

सा पुष्करिणी व्यदृश्यत इत्यर्थ' ।

---

1. छ 'सबलेन' । 2. ङ 'धृत्वा च विशिखान् करे' । 3 क ख घ-ङ 'दधत' । 4 च 'कायेवा' । 5. ङ 'दुष्टरक्षो' । 6 च छ 'श्रुत पू-' । 7. च 'अम्बुजैः शीतलोदेन' । 8 घ 'नाऽप्यदृश्यत' ।

तत्समीपमथो गत्वा [1]पीत्वा तत्सलिलं शुभम्[2] ।
[3]ऊषुस्ते सलिलाभ्यासे क्षण छायामुपाश्रिता[3] ॥ १५ ॥
ततो ददृशुरायान्त महासत्त्व भयानकम् ।
[4]करालदंष्ट्रवदन भीषयन्तं स्वगर्जितैः ॥ १६ ॥
वामांसे न्यस्त[5]शूलाग्रग्रथितानेक[6]मानुषम् ।
भक्षयन्तं [7]गजव्याघ्रमहिष वनगोचरम् ।
ज्यारोपित[8] धनुर्धृत्वा रामो लक्ष्मणमब्रवीत् ॥ १७ ॥

---

१६ । नरो० । महासत्त्व बृहज्जन्तुम् । कराला भीमा दंष्ट्रा यत्र तादृश वदन यस्य त तथा ।

१७ । नरो० । वामांसे स्कन्धे न्यस्तं क्षिप्तं यत् शूलं तस्याग्रे ग्रथितोऽनेको मानुषो येन त तथा । यद्वा न्यस्त· शूलाग्रग्रथितोऽनेको मानुषो येन त तथा । वनमेव गोचर

---

१६ । विराध विशिनष्टि वाल्मीकि —

वने च तस्मिन् काकुत्स्थो घोरे पक्षिगणावृते ।
ददर्श गिरिशृङ्गाभ पुरुषादमवस्थितम् ॥
दीर्घजङ्घं महाकाय मृगव्यालनिवर्हणम् ।
वक्रनास विरूपाक्ष दीप्तास्य निर्णतोदरम् ॥
अष्टौ सिहानुपादाय शूलाग्रे रुधिरोक्षितान् ।
सविषाण वसादिग्धं गजस्य च शिरो महत् ॥
वसानं चर्म वैयाघ्र सपादं रुधिरोक्षितम् ।
त्रासन सर्वभूतानां व्यात्ताननमिवान्तकम् ॥ इति । ३।७।५-८ ।

१६-१७ । करालदंष्ट्रायुत वदनं यस्य तत् । वामांसे वामस्कन्धे न्यस्तशूलाग्रे ग्रथिता अनेकमानुषा येन तत् । गजव्याघ्रमहिषमिति समाहारद्वन्द्व । ज्या आरोपित यस्मिन् तत् । रा० ।

पाश्चात्त्ये वाल्मीकीये अत्रायं विशेष ।

त्रीन् सिहांश्चतुरो व्याघ्रान् द्वौ मृगौ पृषतान् दश ।
सविषाण वसादिग्ध गजस्य च शिरो महत् ॥ इति । ३।२।७ ।

---

1 ग-ङ-च छ 'प्राश्य' । 2 अत पर ङ-पुस्तके 'अनु सीता जल प्राशत्यविघ्न दृश्यते भवान् । शोणिते शोणितभ्रान्त्या पिपासुरपि जानकी ॥ पाणौ पानीयमानीय विजहाति पुन पुन ।' इत्यधिक दृश्यते । किन्तु अधिकस्यास्य पाठस्याऽऽश्रयाधिगमो नास्माकमिति । 3 क ख ग ङ च छ 'ऊनु' । 4 च 'दंष्ट्राकरालवदन' । 5 ग च 'शूलाग्रे ग' । 6 छ '-मस्तकम्' । 7 ग-ङ-च 'गज व्याघ्र म' । 8 ग-ङ '-तधनु-' ।

पश्य भ्रातर्महाकायो [1]राक्षसोऽयमुपागतः ।
आयात्यभि[2]मुखं [3]नोऽग्रे [4]भीरूणां भयमावहन् ॥ १८ ॥
[5]सज्जीकृतधनुस्तिष्ठ मा भैर्जनकनन्दिनि ।
इत्युक्त्वा बाणमादाय स्थितो राम इवाचलः ॥ १९ ॥
स तु दृष्ट्वा रमानाथं लक्ष्मणं जानकीं [6]तदा ।
अट्टहासं ततः कृत्वा भीषयन्निदमब्रवीत् ॥ २० ॥
कौ युवां [7]चापतूणीरजटावल्कलधारिणौ ।
मुनिवेशधरौ बालौ स्त्रीसहायौ सुदुर्मदौ ॥ २१ ॥

---

चक्षुर्विषयो यस्य स तथा । आरोपितं ज्या यत्र तच्च तद्धनुश्चेति तत्तथा । 'आहिताग्न्यादिर्वाऽग्न्यादे'रित्यनेनात्र परनिपातः ।

१८ । नरो० । महाकाय इत्यनेन अस्मिन्न तुच्छबुद्धिः कर्त्तव्येति सूचितम् । 'भीरूणां भयमावहन्नि'त्यनेन आवयोर्भयं नास्तीति सूचितम् । आवहन् जनयन् ।

१९ । नरो० । प्रमादोऽनर्थहेतुरिति सूचनाय सज्जीकृतधनुस्तिष्ठ इत्युक्तम् । अल्पभयहेतोरपि स्त्रिया महद्भयं भवतीति हृदि कृत्वा सीतामाश्वासयति—मा भैरित्यादिना । 'स्थितो राम इवाचल' इत्यनेन श्रीरामस्य त्रासाभावः सूचितः ।

२० । नरो० । अट्टहासम् अट्टशब्दयुक्तमुखविकाशम् । रामलक्ष्मणयोरत्युपहसनीयबुद्ध्या अट्टहासकरणम् ।

२१ । नरो० । यद्यमू मुनी स्यातां तदा चापतूणीरधारिणौ न स्यातामिति हृदि कृत्वा मुनिवेशधरावित्युक्तम् । चापतूणीरधारित्वे हेतुः—सुदुर्मदाविति, अतिदुर्दमावित्यर्थः । अत्राऽऽगमने स्त्रीसहायत्वे च हेतुः—बालाविति, अज्ञावित्यर्थः । यद्वा बालौ अप्राप्तयौवनौ । तत्रापि स्त्रीसहायाविति स्त्रीसहगमने पदे पदे आपदिति भावः ।

---

१८ । अग्रे सम्मुखदेशे वर्त्तमानोऽस्मदभिमुखमायाति । रा० ।

२० । स कृत्वा भैरवं नादं चालयन्निव मेदिनीम् ।
अङ्केनाऽऽदाय वैदेहीमपाक्रम्य ततोऽब्रवीत् ॥
युवां जटाचीरधरौ सभार्यौ क्षणजीवितौ ।
प्रविष्टौ दण्डकारण्यं शरचापासिधारिणौ ॥ ३।७।१०-११

इत्यादिना वाल्मीकीये विदेहतनयां सीतामपहृत्यैव विराधः कथां प्रावर्त्तयदिति दृश्यते । पाश्चात्यरामायणसंवादोऽपि प्राच्यमेव मतं द्रढयति । ( पाश्चात्ये ३।२।१० ) ।

---

1 ङ 'महासत्त्वोऽयमा-' । 2 ग '-मुखे' । 3 ग 'नोग्रो', च-छ 'सोऽग्रे' । 4 च 'भीषण' । 5 च 'सज्य कृत्वा' । 6 ग-ङ-च छ 'तथा' । 7 क ख घ 'नाग-' ।

सुन्दरौ बत मे वक्त्रप्रविष्टौ[1] कवलोपमौ।
किमर्थमागतौ घोरं वनं व्यालनिषेवितम् ॥ २२ ॥
श्रुत्वा रक्षोवचो रामः स्मयमान उवाच तम्।
अहं रामस्त्वयं भ्राता लक्ष्मणो [2]मम सम्मतः ॥ २३ ॥
एषा सीता मम प्राणवल्लभा वयमागताः।
[3]पितृवाक्यं पुरस्कृत्य [4]संक्षयार्थं भवादृशाम् ॥ २४ ॥
श्रुत्वा तद्रामवचनमट्ट[5]हासमथाकरोत्।
व्यादाय वक्त्रं बाहुभ्यां शूलमादाय सत्वरः ॥ २५ ॥
मां न जानासि राम त्वं विराधं लोकविश्रुतम्।
मद्भयान्मुनयः सर्वे त्यक्त्वा वनमितो गताः ॥ २६ ॥

---

२२। नरो०। बत खेदे। तत्र हेतुः—सुन्दराविति। सुन्दराविति मनोहराविस्यर्थः। प्रविष्टौ प्रविष्टप्रायौ, तत्र हेतुः—कवलोपमाविति, ग्रासतुल्याविस्यर्थः। एतेनातिक्षुद्रत्वं सूचितम्। घोरं भीमम्। भयानकत्वे हेतुः—व्यालनिषेवितमिति। व्यालः खलः व्यालः श्वापदः व्यालः सर्पस्तैर्निषेवितम्।

२३। नरो०। स्मयमानः ईषद्धसन्। विराधस्य विकृतवाक्यं श्रुत्वा श्रीरामस्य ईषन्मुखविकाशः, तस्य च उपहसनीयत्वज्ञानरूपो हासो व्यङ्ग्यः। कौ युवामित्यादिप्रश्नस्योत्तरमाह—अहमित्यादि। रामः रामनाम्ना ख्यातः।

२४। नरो०। स्त्रीसहायाविति यदुक्तं तत् समाधातुमाह—एषेत्यादि। प्राणादपि वल्लभा प्रिया प्राणवल्लभा। क्षणार्द्धमप्येतां त्यक्तुं नोत्सहे इति भावः। किमर्थमित्यादिप्रश्नोत्तरं वयमागता इत्यादि। भवादृशां सक्षयार्थम् आगता इति।

२५। नरो०। विकृतवाक्यं श्रुत्वा विराधस्याट्टहासः।

---

२२। वक्त्रप्रविष्टकवलोपमावितीत्यनेन सुकरवधत्वं ध्वनयति। व्याला दुष्टा हिंस्रजीवाः। रा०।

२६। विराधपरिचयवर्णनं वाल्मीकीये—

पुत्रः किलाहं कालस्य माता मम शतह्रदा।
विराध इति मामाहुः पृथिव्यां सर्वराक्षसाः ॥ इति ।३।७।२०।

पाश्चात्त्ये तत्र विराधपरिचयो न दृश्यते।

---

1 क-ख-ग-घ-ङ च '-ष्टकव'। 2 ग-ङ 'मयि सङ्गत', च 'मम सङ्गत.'। 3 ग छ 'पितुर्वाक्यं'। 4 क ख-घ-च-छ 'शिक्षणार्थं'। 5 क 'हास्य-'।

यदि जीवितुमिच्छाऽस्ति त्यक्त्वा सीतां निरायुधौ ।
पलायत[1]न चेच्छीघ्रं भक्षयामि युवामहम् ॥ २७ ॥
इत्युक्त्वा राक्षसः सीतामादातुमभिदुद्रुवे ।
रामश्चिच्छेद [2]तद्बाहू शरेण प्रहसन्निव ॥ २८ ॥

२८। नरो०। प्रहसन्निव आयासमकुर्वन्निवेत्यर्थः।

२७। जीवितुमिच्छाऽस्ति युवयोरिति शेषः। शीघ्रं पलायतम्, नो चेद् भक्षयामीत्यन्वयः। रा०।

२८। अत्र रामेणैव विराधस्य युद्धम्। वाल्मीकीये प्रथमं लक्ष्मणेन पश्चाद्रामेण। तत्र विराधवधप्रकारस्यापि नवीनता। तथा च—

एवमुक्त्वा शरान् सप्त सुपर्णानिलरंहसः ।
रुक्मपुङ्खान् महावेगान् विराधे व्यसृजत्तदा ॥
ते शरीरं विराधस्य भित्त्वा बर्हिणलक्षणाः ।
निपेतुरसृजा दिग्धा धरण्यां पावकप्रभाः ॥
स विनद्य महानादं शूलमादाय सुप्रभम् ।
चिक्षेप परमक्रुद्धो लक्ष्मणायाभिसंहितम् ॥
तच्छूलं वज्रसङ्काशमन्तरीक्षगतं महत् ।
द्वाभ्यां शराभ्यां चिच्छेद रामः शस्त्रभृतां वरः ॥
ततस्तृतीयं विमलं रुक्मपुङ्खं शिलाशितम् ।
हृदि रामो विराधस्य निचखान शरोत्तमम् ॥
स विमुच्य कराग्राभ्यां वैदेहीं पर्वतोपमः ।
पपात शरनिर्भिन्नो विराधः कालचोदितः ॥ इत्यादि ।३।८।३-७ ।

पाश्चात्त्ये पुनः प्रथमं रामेण ततश्च उभाभ्याम्। तत्तु—

ततः सज्यं धनुः कृत्वा रामः सुनिशिताञ्छरान् ।
सुशीघ्रमभिसन्धाय राक्षसं निजघान ह ॥ ३।३।१० ।

इत्यादिना,

अथ तौ भ्रातरौ दीप्तं शरवर्षं ववर्षतुः ।
विराधे राक्षसे तस्मिन् कालान्तकयमोपमे ॥ ३।३।१९ ।

इत्यादिना च स्पष्टम्। विराधवधमवलम्ब्य अध्यात्मरामायणप्राच्यवाल्मीकीयरामायणाभ्यां विलक्षणा दृश्यते काचिदाख्यायिका पाश्चात्त्यवाल्मीकीयरामायणे। सा च वक्ष्यमाणरूपा।

1 ङ '-येत'। 2. च 'तद्बाहू'।

ततः क्रोधपरीतात्मा व्यादाय विकटं मुखम् ।
राममभ्यद्रवद्रामश्छिच्छेद परिधावतः ।
[1]पदद्वयं विराधस्य तदद्भुतमिवाभवत् ॥ २९ ॥

---

२९ । नरो० । ततो बाहुच्छेदानन्तरं क्रोधेन परीतो व्याप्त आत्मा शरीरं यस्य स तथा

---

रामलक्ष्मणाभ्यां प्रक्षिप्ता बाणा वरप्रभावेण जृम्भमाणस्य विराधस्य भिदामजनयन्त एव कायाच्चस्खलुः । तथा च—

स प्रहस्य महारौद्रं स्थित्वाऽजृम्भत राक्षसः ।
जृम्भमाणस्य ते बाणाः कायान्निष्पेतुराशुगाः ॥ ३।३।१६ ।

ततश्च रामलक्ष्मणौ खड्गाभ्यां त प्राहरताम्, प्रहृतश्च रौद्रः स राक्षसो भुजाभ्यां तौ परिगृह्य प्रस्थातुमैच्छत् । रामोऽपि तदन्वमोदत । तथा च तत्रैव—

स वध्यमानः सुभृशं भुजाभ्यां परिगृह्य तौ ।
अप्रकम्प्यौ नरव्याघ्रौ रौद्रः प्रस्थातुमैच्छत ॥
तस्याभिप्रायमाज्ञाय रामो लक्ष्मणमब्रवीत् ।
वहत्वयमलं तावत् पथाऽनेन तु राक्षसः ॥ इति । ३।३।२१-२२ ।

ततश्च स विराधो रामलक्ष्मणौ स्कन्ध आरोप्य गन्तुमारेभे । ( ३।३।२३-२६ ) एतत् सर्वमालोक्य भीता सीता 'रामलक्ष्मणौ रक्षसाऽपहृतौ, मां वृका व्याघ्रद्वीपिप्रभृतयो वा भक्षयिष्यन्ती'ति चुक्रोश ( ३।४।१-३ ) । ततस्तद्व्यग्रस्वरमाकर्ण्य रामलक्ष्मणौ तस्य वधे इच्छां प्रचक्रतु । ततश्च रामलक्ष्मणयोर्बाणादिप्रहारेण छिन्नबाहुद्वय परिक्षतो निष्पिष्टश्च राक्षसो भूमौ पपात, न ममार । मृतप्रायं तं दृष्ट्वा रामः 'अयं शस्त्रावध्य' इति कृत्वा पादेन तस्य कण्ठमाक्रम्य 'अस्य प्रोथनाय गर्त्तः खन्यतामि'ति लक्ष्मणायाऽऽदिदेश । तच्चाऽऽदेशमाकर्ण्य विराधः स्वशापवृत्तान्तं रामाय निवेद्य ( ३।५।४-२२ ) न्यस्तदेहः स्वर्गं गतः । तथा च—

एवमुक्त्वा तु काकुत्स्थं विराधः शरपीडितः ।
बभूव स्वर्गसंप्राप्तो न्यस्तदेहो महाबलः ॥ इति ३।४।२४

एवञ्चाध्यात्मरामायणेन प्राच्येन वाल्मीकीयरामायणेनापि महान् विरोधो महती नवीनता च पाश्चात्त्यरामायणस्य ।

यदा दाशरथी रामस्त्वां वधिष्यति सयुगे ।
तदा प्रकृतिमापन्नो भवान् स्वर्गं गमिष्यति ॥ ३।४।१८

इत्यादिश्लोकस्थशापवृत्तान्तेनापि पाश्चात्त्यरामायणे प्रकटितं विराधस्य बाणाद्यवध्यत्वम् अप्रकटयताऽनेनाध्यात्मरामायणेन सहास्मिन्नपि विषये कोऽप्यस्य विरोधः परिदृश्यते ।

२९ । ततः क्रोधपरीतात्मा विराध इति शेषः ।

---

1, ग-ङ-च-छ 'पाद' ।

ततः सर्प इवाऽऽस्येन ग्रसितुं राम[1]मापतत् ।
ततोऽर्द्धचन्द्राकारेण बाणेनास्य महच्छिरः ॥ ३० ॥
चिच्छेद रुधिरौघेण पपात धरणीतले ।
ततः [2]सीता समालिङ्गय प्रशशंस रघू[3]त्तमम् ॥ ३१ ॥
ततो दुन्दुभयो नेदुर्दिवि [4]देवगणार्दिताः ।
ननृतुश्चाप्सरः[5]सङ्घा जगुर्गन्धर्वकिन्नराः ॥ ३२ ॥
विराधकायादति[6]सुन्दराकृतिर्बिभ्राजमानो विमलाम्बरावृतः ।
प्रतप्तचामीकरचारुभूषणो व्यदृश्यताग्रे गगने रविर्यथा ॥ ३३ ॥

---

तत् । विराधस्य बाहुद्वयपादद्वयच्छेदनम् अद्भुतमिव विस्मयजनकमिव । एतत् कर्म परमेश्वरस्य न दुष्करमिति कृत्वा इवशब्दः प्रयुक्तः ।

३० । नरो० । चन्द्रस्यार्द्धम् अर्द्धचन्द्र , तस्येवाऽऽकारो यस्य तेन तथा ।

३१ । नरो० । रुधिरौघेण रक्तसमूहेन ।

३२ । नरो० । देवगणार्दिता देवसमूहताडिता ।

३३ । नरो० । विमलाम्बरावृतः परिहितनिर्मलवस्त्र इत्यर्थः । प्रतप्तचामीकरस्य द्रुतसुवर्णस्य चारूणि भूषणानि यस्य स तथा ।

---

३०-३१ । सर्प इवेति । उरसैवेति भावः । आपतत् कबन्ध इति शेषः । रामो बाणेनास्य महच्छिरश्चिच्छेद, रुधिरौघेण सह तच्छिरो धरणीतले पपात इत्यन्वयः ।

३३ । विराधकायान्निःसृत इति शेषः । विराधकायादित्यादि स्वर्गसमाप्त्यन्तं वृत्तं वाल्मीकेर्नवीनम् । तत्र विराधवधानन्तरं तस्यैवानुरोधेन तं गर्त्ते निक्षिप्य रामादीनां प्रस्थानम् । तथा च—

अवटे चापि मे राम प्रक्षिपेमं कलेवरम् ।
रक्षसां गतसत्त्वानामेष धर्मः सनातन ॥ इति ३।८।१८

स समुद्यम्य सौमित्रिर्विराधं पर्वतोपमम् ।
गम्भीरमवटं कृत्वा निचखान परन्तप । इति च ३।८।२०

---

1. च '-मागत' । 2 छ 'सीता' । 3. छ '-त्तमः' । 4 क-ख-ग घ च-छ 'देवगणेरिताः' । 5 घ 'सराः', क-ख-ग-च '-सरो हृष्टाः' । 6 छ '-भासुरा-' ।

प्रणम्य राम प्रणतार्त्तिहारिणं भव[1]प्रवाहोपरम [2]कृपाकरम् ।
प्रणम्य भूय प्रणनाम दण्डवत् [3]प्रपन्नसर्वार्त्तिहर प्रसन्नधीः ॥ ३४ ॥

[4]विराध उवाच—

श्रीराम राजीवदलायताक्ष [5]विद्याधरोऽहं विमलप्रकाश ।
दुर्वाससा[6]ऽकारणकोपमूर्त्तिना शप्त पुरा सोऽद्य विमोचितस्त्वया ॥ ३५ ॥
इतः परं त्वच्चरणारविन्दयो स्मृतिः सदा मेऽस्तु भवोपशान्तये ।
त्वन्नामसंकीर्त्तनमेव वाणी करोतु मे कर्णपुटं त्वदीयम् ॥ ३६ ॥
कथामृतं पातु करद्वय ते [7]पादारविन्दार्चनमेव कुर्यात् ।
शिरश्च ते पादयुगप्रणाम करोतु नित्यं भवदीय[8]मेव ॥ ३७ ॥

---

३४ । नरो० । प्रणतार्त्तिहारिणं प्रणतपीडाहरणशीलमित्यर्थ । भवप्रवाहस्य जन्मधाराया उपरमो निवृत्तिर्यस्मात्तं तथा । कृपाकर दयासम्पन्नमित्यर्थ । प्रथमविशेषणकीर्त्तन प्रणतानामाधुनिकपीडानिषेधकत्वबोधाय, द्वितीयविशेषणकीर्त्तनमन्ते मुक्तिकृत्त्वबोधाय, तृतीयविशेषणकीर्त्तनं झटिति प्रसन्नत्वबोधाय । प्रपन्नसर्वार्त्तिहरं शरणागतानां देहेन्द्रियमनसां पीडानाशकमित्यर्थ ।

३५ । नरो० । राजीवदले इव आयते अक्षिणी यस्य हे तादृश, राजीवं पद्मम् । अकारणः कोपो मूर्त्तिः स्वरूप यस्य तेन तथा । कोपकोपवतोरभेदोक्तिः कोपातिशयसूचनाय । यद्वा अकारणः कोपो यस्यां तादृशी मूर्त्तिर्यस्य तेन तथा । आत्मनो निरपराधत्वसूचनार्थम् अकारणेत्युक्तम् । विमोचितः शापादिति शेषः ।

३६-३७ । नरो० । शरीरे स्थिते एतादृश्यवस्था पुनरपि भविष्यति अत्यन्तशरीरत्यागस्तु अस्य नित्यचरणस्मरणादिकं विना न भविष्यतीति हृदि कृत्वा श्रीरामस्य नित्यचरणस्मरणादिक-

---

३४ । घृणाया दयाया आकरमुत्पत्तिस्थानम्, प्रपन्नानां शरणागतानां सर्वपीडानाशकम् । रा० ।

[ भवप्रवाहोपरममिति । भवप्रवाहस्य संसारधाराया उपरमो नाशो यस्मात्, मोक्षदमित्यर्थ । गो० ]

३५ । [ श्रीरामराजीवदलायताक्ष इत्यादि । कारणकोपमूर्त्तिना कारणेन ममापराधरूपेण कोपमयी मूर्त्तिर्यस्य । गो० ]

३६-३७ । मे कर्णपुटं त्वदीयं कथामृतं पात्वित्यन्वयः । पिबतु सादरं शृणोत्वित्यर्थः ।

---

1 च 'प्रवाहप्रशम' । 2 क ख-घ-च छ 'घृणा-' । 3 क छ 'प्रसन्न' च 'सम्भक्त-' ।
4 छ पुस्तके 'विद्याधर उवाच' इति । 5 क 'वैद्या-' । 6 ख '-सा कार-' । 7 ङ 'पदा-' ।
8, क ख-घ '-मेवम्' ।

मद्भक्तिर्दुर्लभा लोके जाता चेन्मुक्तिदा[1] यतः ।
अतस्त्वं भक्तिसम्पन्नः परं याहि ममाऽऽज्ञया ॥ ४२ ॥
रामेण रक्षो निधनं सुघोरं शापाद्विमुक्तिर्वरदान[2]मेवम् ।
विद्याधरत्वं पुनरेव लब्धं रामं गृणन्नेति नरोऽखिलार्थान् ॥ ४३ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अरण्यकाण्डे प्रथमोऽध्यायः ॥ १ ॥

---

सूचकम् अशेषमायादोषगुणा जिता इति । अशेषाश्च ते मायादोषगुणाश्चेति कर्मधारय । माया-जनिता दोषगुणा मायादोषगुणा । दोषा रागादय । गुणा सत्त्वादय. । अथवा दोषा विकारा देहेन्द्रियादय इति यावत् । गुणा गुणपरिणामा सुखदु खमोहादय. । मुक्त. शापादिति शेष. ।

४२ । नरो० । विराधस्य भक्तिसूचक 'इत. परं त्वच्चरणारविन्दयो स्मृति. सदा मेऽस्तु भवोपशान्तये' इत्यादिवाक्यजातश्रवणात् मद्भक्तिरित्याद्युक्तम् । पर याहि ब्रह्म प्राप्नुहि । वरोऽत्र ब्रह्मप्राप्तिरूप. ।

४३ । नरो० । विराधमरणादिभि श्रीरामस्य स्तुते फल दर्शयन्नाह—रामेत्यादि । रामेण रक्षो निधन लब्ध शापाद्विमुक्ति लब्ध वरदानं लब्ध पुनरेव विद्याधरत्वं लब्धमिति राम गृणन् स्तुवन् नरो अखिलार्थान् धर्मार्थकाममोक्षान् एति प्राप्नोति । लब्धमिति गौणगत्यर्थ-त्वादत्र कर्त्तरि क्त ।

[ अरण्यकाण्डे प्रथमाध्यायव्याख्या समाप्ता ॥ १ ॥ ]

---

४३ । रामेण रक्षोनिधन कृतं तेन निधने तस्य रक्षस शापाद्विमुक्ति. कृता, तस्यैवं वरदानञ्च कृतम्, यतस्तेन पुनरेव विद्याधरत्वं लब्धमतो रामं गृणन् नरोऽखिलार्थान् एति प्राप्नोति । रा० ।

यतस्तत्तत्कार्यसाधने रामस्य सामर्थ्यम् अतस्तदाराधनेन यदि तस्य प्रसादभागी स्यात्, तदा स निखिलमेवार्थजातं स्वशक्त्यैव वितरिष्यतीत्याशय. ।

---

1. छ '-दायिनी' । 2 च-छ '-मेव' ।

# द्वितीयोऽध्यायः



[1]श्रीमहादेव उवाच—

विराधे स्वर्गते रामो लक्ष्मणेन च सीतया ।
जगाम शरभङ्गस्य वनं सर्वसुखावहम् ॥ १ ॥

[2]शरभङ्गस्ततो दृष्ट्वा रामं सौमित्रिणा सह ।
[3]आयान्तं सीतया सार्द्धं सम्भ्रमादुत्थितः सुधीः ॥ २ ॥

अभिगम्य सुसम्पूज्य विष्टरेषूपवेशयत् ।
आतिथ्यमकरोत् तेषां कन्दमूलफलादिभिः ॥ ३ ॥

प्रीत्याह शरभङ्गोऽपि रामं भक्तपरायणम् ।
बहुकालमिहैवाऽऽसं [4]तपसे कृतनिश्चयः ॥ ४ ॥

---

१। नरो०। ततः श्रीरामः किं कृतवानित्यपेक्षायामाह—विराधे इत्यादि। सर्वसुखावहं सर्वसुखजनकमित्यर्थः।

२। नरो०। ततः शरभङ्गः किं कृतवानित्यपेक्षायामाह—शरभङ्ग इत्यादि। सम्भ्रमात् त्वरां प्राप्येत्यर्थः। शीघ्रोत्थानेन अत्यादरः सूचितः।

३। नरो०। विष्टरेषु आसनेषु। कन्दमूलफलादिभिरिति कन्दं शूरणादि, मूलं केमुकादि, फलं नारिकेलादि।

४। नरो०। ततः किमब्रवीदित्यपेक्षायामाह—प्रीत्याह शरभङ्गोऽपीतीत्यादि।

---

१। वाल्मीकीये सीतया लक्ष्मणेन सह शरभङ्गाश्रमप्राप्तेन रामेण साश्वस्य देवराजस्य दर्शनरूपं वस्तु उपन्यस्तम्। एतत्तु तत्रत्यारण्यकाण्डस्य नवमे सर्गे।

३। अभिगम्य सम्मुखागमनपूर्वकं तमानीय उपवेशयत्। अडभाव आर्षः। रा०।

४। आसं स्थितः। तपसे तपः कर्तुं कृतनिश्चयः। रा०।

---

1 ख-ग-पुस्तकयोः 'श्रीमहादेव उवाच' इति नास्ति। 2. क पुस्तके इदमर्द्धं नास्ति। 3 क ग 'आयात'। 4 क-च 'तपस'।

तव सन्दर्शनाकाङ्क्षी राम त्वं परमेश्वरः ।
अद्य [1]मे तपसः सिद्धं यत् पुण्यं [2]बहु विद्यते ।
तत् सर्वं तव दास्यामि ततो मुक्तिं व्रजाम्यहम् ॥ ५ ॥
समर्प्य [3]रामस्य महत् सु[4]पुण्यफलं [5]विरक्तः शरभङ्गयोगी ।
चितिं समा[6]रोपयदप्रमेयं रामं ससीतं सहसा प्रणम्य ॥ ६ ॥

५ । नरो० । पुण्यसत्त्वे मोक्षो न भविष्यतीति तपोऽर्जितं प्रचुरं यत् पुण्यं विद्यते तत् श्रीरामाय दास्यामीति निश्चित्याऽऽह—अद्य मे तपसः सिद्धमित्यादि । अद्येति दास्यामीत्यनेन योजनीयम् । सिद्धं निष्पन्नम् । ततः सकलपुण्यदानानन्तरम् । यद्वा ततः सकलपुण्यात् । यद्वा ततः ब्रह्मलोके श्रवणादिभिर्ब्रह्मसाक्षात्कारानन्तरम् । मुक्तिमानन्दात्मकब्रह्मावाप्तिम्, व्रजामीति वर्तमानसन्निहिते भविष्यति लड्विधानात् प्राप्स्यामीत्यर्थः ।

६ । नरो० । ततः किं कृतवानित्यपेक्षायामाह—समर्प्य रामस्येत्यादि । फलं तपसः

५ । तव सन्दर्शनाकाङ्क्षी इहैवाऽऽसमिति पूर्वेणान्वयः । यतस्त्वं परमेश्वरो मोक्षदः । रा० ।

अत्र मोक्षलाभाय तपोलब्धपुण्यादीनां न्यासः, वाल्मीकीये रामसत्कारादिनैव स्वर्गादिलोकप्राप्तिरवश्यम्भाविनीति स्वोपार्जितानां पुण्यादीनाम् अतिथिस्वरूपाय रामाय प्रतिपादनम् । तथा च—

अक्षया नरशार्दूल जिता लोका मया शुभाः ।
तान् गमिष्यामि सत्कृत्य भवन्तमिह राघव ॥
ब्राह्मांश्च नाकपृष्ठांश्च प्रतिगृह्णीष्व राम तान् ।
भवान् राजा च मान्यश्च गुरुः सत्कार्य एव च ॥
प्रतिगृह्य मया दत्तं धर्मं वर्षशतैश्चितम् ॥ इत्यादि । ३।९।२५-२७ ।

'भवन्तं सत्कृत्य भवतः सत्कारफलेनैवेत्यर्थः, तान् लोकानहं गमिष्यामि, ममानुष्ठितं तपो न तत्रापेक्ष्यते इति भावः ।' इति तट्टिप्पन्याम् । पाश्चात्त्येऽपि—

त्वयाऽहं पुरुषव्याघ्र धार्मिकेण महात्मना ।
समागम्य गमिष्यामि त्रिदिवञ्चावरं परम् ॥
अक्षया नरशार्दूल जिता लोका मया शुभाः ।
ब्राह्म्याश्च नाकपृष्ठ्याश्च प्रतिगृह्णीष्व मामकान् ॥ इति । ३।९।३०-३१ ।

६ । विरक्तः सन् शोभनं पुण्यं हिंसारहितत्वात् तपस्तत्फलं रामस्य समर्प्य दत्त्वा सहसा तत्क्षणमेव चितिं समारोहयत् समारुहत् । निवृत्तप्रेषणाण्णिच् । रा० ।

1. क-ख-घ-च 'मत्तपसा', छ 'मे तपसः सिद्धि' । 2 ङ 'विद्यते बहु' । 3 च 'रामाय' । 4 ग-ङ च-छ '-पुण्य' । 5. क-ख-ग-घ ङ 'विरक्त' । 6 क-ख-घ-ङ-छ '-रोहय-' ।

ध्यायंश्चिरं राममशेषहृत्स्थं दूर्वादलश्यामलमम्बुजाक्षम् ।
चीराम्बरं स्निग्धजटाकलापं सीतासहायं [1]श्रितलक्ष्मणं तम् ॥ ७ ॥
को वा दयालुः [2]स्मृतिकामधेनुरन्यो जगत्यां रघुनायकाद्दहो ।
[3]स्मृतो मया नित्यमनन्यभाजा ज्ञात्वा स्मृतिं मे स्वयमेव [4]जात ॥ ८ ॥
पश्यत्विदानीं देवेशो रामो दाशरथिः प्रभुः ।
दग्ध्वा स्वदेहं गच्छामि ब्रह्मलोकमकल्मषः[5] ॥ ९ ॥
अयोध्याधिपतिर्मेऽस्तु हृदये राघवः सदा ।
यद्[6]वामाङ्के स्थिता सीता मेघस्येव तडिल्लता ॥ १० ॥

---

इति शेषः । विविक्तो विवेकाश्रयः पूतो वा । सहसा चितिं काष्ठानि समारोपयदिति योजना, काष्ठानीति शेषः । अप्रमेयः प्रमातुमशक्यम् ।

७ । नरो० । ध्यानप्रकारमाह—अशेषहृत्स्थमिति । सर्वान्तर्यामिणमित्यर्थः । अम्बुजे इव अक्षिणी यस्य तं तथा । चीरमेवाम्बरं परिधेयवस्त्रं यस्य तं तथा । चीरं वस्त्रखण्डम् । स्निग्धश्चिक्कणो जटाकलापो यस्य तं तथा । श्रितो लक्ष्मणो येन तं तथा ।

८ । नरो० । शरभङ्गः स्वागतं प्रकटयति—को वा दयालुरित्यादिना । जगत्यां रघुनायकात् अन्यः स्मृतिकामधेनुर्दयालुः को वा कोऽपि नास्तीत्यर्थः । रघुनायकाद् रघुश्रेष्ठात्, स्मृतिकामधेनुः स्मृत्या कामधेनुवत् कामपूरक इत्यर्थः । स्वागतज्ञापकं स्वागतमाह—अहो इत्यादिना । 'अनन्यभाज' इति वा पाठः । साक्षादग्निप्रवेशेन मम मरणार्थम् अजस्य स्वयं जन्मेति विस्मयः ।

९ । नरो० । श्रीराममात्मनोऽकातरत्वं सूचयन् अनन्यमनस्कः कुर्वन्नाह—पश्यत्विदानीमित्यादिना । देवेशो देवानामपि नियन्तेत्यर्थः । प्रभुः स्वामी । अकल्मषोऽपाप इत्यर्थः ।

१० । नरो० । इदानीं श्रीरामस्य ध्यानमुचितमित्यभिप्रेत्याऽऽह—अयोध्याधिपतिरिति । यद्वामाङ्के यद्वामक्रोडे ।

---

७ । अशेषहृत्स्थः सर्वान्तर्यामिणम् । सहलक्ष्मणम्, समस्तत्वेऽपि 'वोपसर्जनस्य' (पा० ६।३।८२) इति सादेशाभावः । रा० ।

८ । स्मृतकामधेनुः स्मृतः सन् कामधेनुस्तत्तुल्यः, सर्वमनोरथपूरकत्वात् । यातः आगतः । रा० ।

---

1 क-ख-ग 'सह ल', च 'स्थितल-' । 2 क-ख-ग घ-ङ-च-छ 'स्मृत' । 3 ख 'स्मृतौ' । 4 क-ख-ग घ-ङ-च-छ 'यात' । 5 छ '-षम्' । 6 छ '-वामाङ्गे' ।

इति रामं चिरं ध्यात्वा दृष्ट्वा च पुरतः स्थितम् ।
प्रज्वाल्य सहसा वह्निं दग्ध्वा पञ्चात्मकं वपुः ।
दिव्यदेहधरः साक्षाद् ययौ लोकपतेः [1]पदम् ॥ ११ ॥

ततो मुनिगणाः सर्वे दण्डकारण्यवासिनः ।
आजग्मू राघवं द्रष्टुं शरभङ्गनिवेशनम् ॥ १२ ॥

दृष्ट्वा मुनिसमूहं[2] तं [3]जानकीरामलक्ष्मणाः ।
प्रणेमुः सहसा भूमौ मायामानुषरूपिणः ॥ १३ ॥

---

११ । नरो० । ततः किं कृतवानित्याकाङ्क्षायामाह—प्रज्वाल्येति । पञ्चात्मकं पञ्चीकृताकाशादिपञ्चमहाभूतात्मकम् । दिव्यदेहधर इति । देहस्य वैलक्षण्यमत्र सत्त्वप्रधानत्वम् । साक्षात् श्रीरामस्येति शेषः । लोकपतेः पदं ब्रह्मणः स्थानम् ।

१२ । नरो० । ततः किं वृत्तमिति प्रश्नादाह—ततो मुनिगणा इत्यादि ।

१३ । नरो० । श्रीरामादयो मुनिगणान् दृष्ट्वा किं कृतवन्त इत्यपेक्षायामाह—

---

११ । पञ्चात्मकं पाञ्चभूतं क्षित्यप्तेजोमरुद्व्योमात्मकं वपुः बाह्यशरीरमित्यर्थः ।

१२ । लोकपतेः कार्यब्रह्मणो हिरण्यगर्भस्य । शरभङ्गनिवेशनं तदाश्रममाजग्मुरित्यन्वयः । रा० ।

मुनीनाह वाल्मीकिः—

वैखानसा वालखिल्या ऋषयोऽथ मरीचिपाः ।
अश्मकुट्टाः सुबहवः पर्णाहाराश्च तापसाः ॥
दण्डोलूखलिनश्चैव दण्डकारण्यवासिनः ।
केचिच्च सलिलाहारा ज्वलितानलवर्चसः ॥
अभ्रावकाशिनश्चान्ये केचित् स्थण्डिलशायिनः ।
उपवासरताश्चैव जले कल्पान्तवासिनः ॥
तपोरता महात्मानः केचित् पञ्चतपोऽन्विताः ।
चतुर्मासकृताहारा निराहारास्तथाऽपरे ॥
वृक्षाग्रसक्तपादाश्च सदाऽवाक्शिरसः स्थिताः ।
अनाश्रिताः कर्मफलमाश्रिताश्चापरे तथा ।
स्थिता वसुमतीश्चान्ये कृत्वैकाङ्गुष्ठपीडिताम् ॥ इति । ३।१०।२-६ ।

---

1. च 'पुरम्' । 2 क '-हासे' । 3 ग-क 'जानकी रामलक्ष्मणौ' ।

आशीर्भि[1]रभिनन्द्याथ रामं सर्वहृदि स्थितम् ।
ऊचुः प्राञ्जलयः सर्वे धनुर्बाणधरं हरिम् ॥ १४ ॥
भूमेर्भारावताराय जातोऽसि ब्रह्मणाऽर्थित ।
जानीमस्त्वां हरिं लक्ष्मीं जानकीं लक्ष्मणं तथा ॥ १५ ॥
शेषांशं शङ्खचक्रे द्वे भरतं सानुजं तथा ।
[2]अतश्चाऽऽदावृषीणां त्वं दुःखं मोक्तुमिहार्हसि ॥ १६ ॥
आगच्छ यामो मुनिसेवितानि वनानि सर्वाणि रघूत्तम क्रमात् ।
द्रष्टुं सुमित्रासुतजानकीभ्यां तदा दयाऽ[3]स्मासु दृढा भविष्यति ॥ १७ ॥
इति विज्ञापितो रामः कृताञ्जलि[4]पुटो विभुः ।
जगाम मुनिभिः सार्द्धं द्रष्टुं मुनिवनानि [5]स ॥ १८ ॥
ददर्श तत्र पतितान्यनेकानि शिरांसि स ।
अस्थिभूतानि सर्वत्र रामो वचनमब्रवीत् ॥ १९ ॥

---

दृष्ट्वेत्यादि । नमस्या श्रीरामादयो नमस्कर्त्तार मुनिसमूह कथं नता इति चेत्तत्राऽऽह—माया-मानुषरूपिण इति, कपटेन धृतमनुष्यशरीरा इत्यर्थ ।

१४ । नरो० । ततो मुनयः किमब्रुवन् इत्यपेक्षायामाह—आशीर्भिरित्यादि । अभिनन्द्य प्रशस्य सन्तोष्य वा ।

१५ । नरो० । भारावताराय भारापनुत्तये । यथा त्वां हरिं जानीमस्तथा जानकीं लक्ष्मीं जानीम इति दिक् ।

१६ । नरो० । शेषांशमनन्तस्यांशमित्यर्थ, शेषसंज्ञमंशमित्यर्थो वा । शङ्खचक्रे द्वे भरतं सानुजमिति भरत शङ्खं शत्रुघ्न चक्रमित्यर्थ । मोक्तुं हर्तुम् ।

१७ । नरो० । दया कृपा परदुःखासहनमिति यावत्, दृढा अचला ।

१९ । नरो० । अविद्यमानमेक येषां तानि तथा ।

---

१६ । लक्ष्मण शेषांशमित्यन्वय । अतो भूमिदुःखहरणार्थम् अवतीर्णत्वात् आदौ खरादिवधेन अस्मद्दुःख मोक्तुम् अर्हसि । रा० ।

१९ । अस्थिभूतमुनिशरीरादिदर्शनं वाल्मीकीये नास्ति ।

---

1 च '-भिः प्रार्थयामास' । 2 ग ङ-र्क 'अत आदा', च 'ततस्त्वादा-' । 3 क-ख '-स्मतसु' । 4 ख-घ-च '-पुटैर्वि' । 5 छ 'च' ।

अस्थीनि केषामेतानि किमर्थ पतितानि वै ।
तमूचुर्मुनयो राम ऋषीणां मस्तकानि हि ॥ २० ॥
[1]राक्षसैर्भक्षितानीश प्रमत्तानां समाधित' ।
[2]अप्रायत्य मुनीनां ते पश्यन्तोऽनुचरन्ति हि ॥ २१ ॥
श्रुत्वा वाक्यं मुनीनां स भयदैन्यसमन्वितम् ।
प्रतिज्ञामकरोद्रामो वधायाशेषरक्षसाम् ॥ २२ ॥
पूज्यमानः सदा तत्र मुनिभिर्वनवासिभि ।
जनकया सहितो रामो लक्ष्मणेन [3]समन्वितः ॥ २३ ॥
उवास कतिचित् तत्र वर्षाणि रघुनन्दनः ।
एवं क्रमेण सम्पश्यन्नृषीणामाश्र[4]मान् विभुः ॥ २४ ॥

---

२०। नरो०। किमर्थमिति क्रियाविशेषणम्, किंकारणमित्यर्थ·। अस्थीनीत्यादि यदुक्तं तत्राऽऽह—ऋषीणामित्यादि ।

२१। नरो०। हे ईश हे प्रभो ! कुतो भक्षणमित्यत आह—प्रमत्तानामिति, प्रमादाश्रयाणामित्यर्थ । कुत प्रमाद इत्यत आह—समाधित इति। निगृहीतस्य मनस· श्रवणादौ तदनुगुणविषये च समाधानं समाधिः। यद्वा समाधितो ध्यानादित्यर्थ·। समाधिसमयं कथं राक्षसा जानन्तीति चेत्तत्राऽऽह—अप्रायत्यमिति, अयत्नाश्रयत्वमित्यर्थ, ते राक्षसा· पश्यन्तो निश्चिन्वन्तोऽनुचरन्ति भ्रमन्ति। हि निश्चितम् ।

२२। नरो०। तद्वाक्य श्रुत्वा श्रीराम· किं कृतवानित्यपेक्षायामाह—श्रुत्वेत्यादि। भयदैन्यसमन्वितमिति। भय प्रसिद्धम्, दैन्यमनौजस्यम् ।

---

२१। समाधित· समाधिना प्रमत्तानां तद्दर्शने पलायनाद्यसमर्थानाम् अन्तराय समाधिरूपम्। 'अप्रायत्यमि'ति पाठे समाधित· प्रमत्तानां हीनाना त्यक्तसमाधीनामित्यर्थ, अप्रायत्यं समाधित्यागरूपम्। समाधौ हि भगवदेकरूपत्वाद्रक्षांसि नाऽऽस्कन्दन्तीति भाव'। रा०।

[ समाधित· समाधिस्थितत्वाद् बहिर्ज्ञानाभावात्। प्रमत्तानाम् अनवहितानाम्। अप्रायत्य मुनीनामिति अप्रयत्नपरत्व सततं समाधिस्थितत्वात्। गो० ]

२४। उवास इति। संवादोऽय वाल्मीकिविरोधी,

एव स तेषामभयं महात्मा दत्त्वा मुनीनां वनमाश्रितानाम् ।
महर्षिभिस्तै· सहितो हि रामस्तत· सुतीक्ष्णाश्रममाजगाम ॥ ३।१०।२९ ।

इत्यनेन तदैव तेषां गमनवर्णनात् ।

---

1 क पुस्तके अय श्लोकौ नास्ति। 2 ख घ 'अन्तराय', ग 'अप्रमत्य', ङ 'अप्रात्येय', च 'अभिप्राय'। 3· च 'समाहृत,'। 4 क '-न'।

सुतीक्ष्णस्याऽऽश्रमं प्रागात् प्रख्यातमृषिसङ्कुलम् ।
सर्वर्त्तु[1]गुणसम्पन्नं सर्व[2]कालसुखावहम् ॥ २५ ॥
राममागतमाकर्ण्य सुतीक्ष्णः स्वयमागतः ।
[3]अगस्तिशिष्यो रामस्य मन्त्रोपासनतत्परः ।
विधिवत् पूजयामास भक्त्युत्[4]कलितलोचनः ॥ २६ ॥

सुतीक्ष्ण उवाच—

त्वन्मन्त्रजाप्यहमनन्तगुणाप्रमेय सीतापते [5]शिवविरिञ्चिसमाश्रिताङ्घ्रे ।
संसारसिन्धुतरणामल[6]पादपोत रामाभिराम सततं तव [7]दासदासः ॥ २७ ॥

२५ । नरो० । ऋषिसङ्कुलम् ऋषिव्याप्तम् । सर्वर्तुगुणसम्पन्नम् अशेषर्त्तुफलपुष्पसमृद्ध-मित्यर्थः । अत सर्वकालसुखावहं हेमन्तादिसर्वर्त्तुसुखजनकमित्यर्थः ।

२६ । नरो० । श्रीराममागतं श्रुत्वा सुतीक्ष्णः किं कृतवान् इत्यपेक्षायामाह—राम-मागतमित्यादि । मन्त्रोपासनतत्परो मन्त्रजपासक्त इत्यर्थः । भक्त्या उत्कलिते प्रफुल्ले लोचने यस्य स तथा ।

२७ । नरो० । स्वमाश्रममागतं श्रीरामं दृष्ट्वात्मानं कृतकृत्यं मन्यमानस्तं स्तौति—त्वन्मन्त्रजापीत्यष्टाभिः श्लोकैः । नास्ति अन्तो यस्य तादृशो गुणो यस्य हे तादृश, गुणापरिच्छिन्न-त्वाद् गुणिनोऽप्यपरिच्छिन्नत्वमिति भावः । अप्रमेय प्रत्यक्षादिपञ्चप्रमाणागम्य । शिवविरिञ्चिभ्यां समाश्रितौ अङ्घ्री यस्य हे तादृश, एतेन शिवविरिञ्चिभ्यामपि उत्कृष्टत्वं सूचितम् । संसारो जन्ममरणादि लङ्घयितुमशक्यत्वात् स एव सिन्धुस्तस्य तरणाय लङ्घनाय, नास्ति मलं पापं यस्मात्तादृशः पाद एव तरणहेतुत्वात् । पोतो 'डिङ्गे'ति ख्यातो यस्य हे तादृश, अथवा अमलो मलशून्यः पाद एव पोतो यस्य हे तादृश, एतेन तवैव मोक्षदातृत्वं नान्यस्येति सूचितम् । अमलत्वमन्यपोतस्यापि उचितम्, मलसत्त्वे ततः स्खलनं भवतीति । रामाभिरामेति मनोहरादपि मनोहरेत्यर्थः । तव दर्शनं ध्यानं न केवलं देहान्ते मुक्तिजनकम् अधुनाऽपि सुखजनकमिति भावः । साक्षाद्दासो भवितुं नार्हामीति सूचनाय 'दासदास' इत्युक्तम् । कादाचित्कदासत्वबोधवारणाय सततमित्युक्तम् ।

२६ । भक्त्या प्रेम्णा उत्कण्ठिते रामस्य पुनः पुनर्दर्शनेच्छावती लोचने यस्य सः । रा० ।

२७ । हे रामाभिराम परमसुन्दर राम, त्वन्मन्त्रजापी अहं सततं तव दासदासो भूया-समिति शेषः । अप्रमेय देशकालाद्यपरिच्छेद्य शिवब्रह्मसमाश्रितचरण संसारसमुद्रतरणे अमल-पोतरूपौ पादौ यस्य । तच्चरणाश्रितानां संसारसागरोत्तरणमकिञ्चित्करमेवेति भावः । रा० ।

1. च '-सुख-' । 2 छ '-काले सु-' । 3 ग-घ-ङ-च छ 'अगस्त्य-' । 4 क-ख-घ-ङ 'कम्पित', छ '-कुञ्चित-' । 5 च 'भव-' । 6 क ख-घ '-पीतपाद' । 7 छ 'पाददास' ।

मामद्य सर्वजगता[1]मविगोचरस्त्वं त्वन्मायया सुतकलत्रगृहान्ध[2]कूपे ।
मग्नं निरीक्ष्य [3]मलवद्गलपिण्डमोह[4]पाशानु[5]बद्धहृदयं स्वयमागतोऽसि ॥ २८ ॥
त्वं सर्व[6]भूतहृदयेषु कृतालयोऽपि त्वन्मन्त्रजा[7]प्यविमुखेषु तनोषि मायाम् ।
त्वन्मन्त्रसाधनपरेष्वपयाति माया सेवानुरूपफलदोऽसि [8]यथाऽमराग' ॥ २९ ॥

---

२८। नरो०। अद्येत्यस्य स्वयमागतोऽसीत्यनेनान्वय । सुताश्च कलत्रञ्च गृहञ्च तान्येव अन्धजनक· कूपस्तस्मिन् तथा। तत्रैव स्थातुं कथं नोत्सहसे इति चेत्तत्राऽऽह—अन्धेति। स्वयमुत्थीयतामिति चेत्तत्राऽऽह—मलवान् यो गल एव पिण्डाकारत्वात् पिण्डो लौहपिण्डस्तत्र बन्धहेतुत्वात् मोह एव पाशस्तेनानुबद्धं हृदय यस्य तम्। केनेत्यत आह—त्वन्माययेति। त्वदधीनया अविद्ययेत्यर्थः। अन्योऽपि लौहपिण्ड· पाशबद्धवक्ष स्थल कूपादौ मज्जतीति। यत्र बन्धन तमादाय उत्थीयतामित्यत आह—मलवदिति। यस्य मलवत्त्व तस्याति-गुरुत्वमिति भाव । ननु मद्दर्शन कथं तव विस्मयजनकमिति चेत्तत्राऽऽह—सर्वजगतामविगोचर इति। चक्षुराद्यविषय इत्यर्थ·। चिरकालत्वद्दर्शनाकाङ्क्षिणो ममाद्य तव दर्शनादेव चित्त शुद्ध जातमिति भाव ।

२९। नरो०। ननु सर्वभूतानां हृदयेषु स्थितत्वात् मम गोचरत्वमेव सम्भवति कथ-

---

[ त्वन्मन्त्रेत्यादि। त्वन्मन्त्रजपशीलताख्यापनेन ममेष्टदैवतमेव त्व साक्षाद्भूत अहो मम भाग्यमित्युक्तम्। हे अनन्तगुण, अप्रमेयगुण, अत एवाप्रमेय केनापि प्रकारेण ज्ञातुमशक्य, शिवविरिञ्चिभ्यां समाश्रितावङ्घ्री यस्य तत्सम्बोधनम्। एतेन सर्वाराध्यत्वमुक्तम्। ससार एव सिन्धुरपारत्वात्, तत्तरणाय अमल पाद एव पोतो नौर्यस्य। रामायाः सीतायास्तस्यां वा अभिरामो यस्य यस्मिन् वा। गो० ]

२८। सर्वजगतामगोचरोऽपि त्व मलभूतो य· पुद्गलपिण्ड· शरीर तत्र यो मोह अहं गौर इत्याद्यहन्ताबुद्धिस्तद्रूपपाशेनानुबद्ध चित्त यस्य तं मामद्य त्वन्मायया सुतकलत्रगृहरूपे अन्धकूपे निमग्न निरीक्ष्य स्वयमागतोऽसि इत्याश्चर्यम्। तेन करुणावत्त्वमित्याशय । रा०।

[ मला· पुद्गला· धातव तेषां पिण्ड पिण्डीभूत देहादि यस्मिन्। मोहोऽहबुद्धि 'मोहो देहाद्यहबुद्धिः' इति स्मृते । स एव पाशो रज्जुस्तेनानुबद्ध निबिडबन्धं हृदयं मनो यस्य तम्। गो० ]

२९। जाप्यं जपस्तद्विमुखेषु। यथा महीपो राजा सेवानुरूपफलदस्तथा त्वमसीत्यर्थ । रा०।

---

1 ग 'मधि'। 2 च 'कारे'। 3 क 'मलमुदगल', घ-ङ 'मलपुद्गल-', च छ 'मलमूत्रगलत-पिचित्त-'। 4 छ '-पापा-'। 5 ग '-रक्त-'। 6 च 'हृदनेऽपि'। 7 ग च-छ '-जाप-'। 8. क-ख-घ 'यथा महीप', ग 'यथाऽपराग.', च 'यथाऽनुराग.', छ 'यथा तवाङ्घ्रि'।

विश्वस्य सृष्टिलयसंस्थितिहेतुरेक[1]स्त्वं मायया त्रिगुणया [2]विधिरीश[3]विष्णू ।
भासीश मोहितधियां विविधाकृतिस्त्व [4]यद्वद्रवि सलिलपात्रगतो ह्यनेकः ॥ ३० ॥

मगोचरत्वमिति चेत्तत्राऽऽह—त्वमित्यादि । त्वन्मन्त्रस्य जाप्यं जप एव, तत्र विमुखेषु अनासक्तेषु त्वन्मन्त्रजाप्यविमुखानां त्वदधीनया मायया आवरणशक्त्या बुद्धे पिधानात् तेषां न तव साक्षात्कार इति भाव । पारिशेष्यलाभार्थमाह—त्वन्मन्त्रेति । त्वन्मन्त्रस्य साधन सिद्ध्यनुकूलव्यापार., स एव पर. परमपुरुषार्थो येषां तेषु तथा । अपयाति नश्यति । तर्हि कथ मन्मन्त्रोपासकेषु फलतारतम्य दृश्यते इत्यत आह—सेवानुरूपफलद इति, सेवायोग्यफलदातेत्यर्थ । दृष्टान्तमाह—यथाऽमराग इति । अमराग सुरतरु । तथा चामर.—'शैलवृक्षौ नगावगावि'ति ।

३० । नरो० । ननु यस्य विश्वस्य सृष्टिस्थित्यन्तकारित्व तस्यैव भवादृशाम् एवंविधत्वेन स्तोतव्यत्वमुचितम्, मम तदभावात् कथ तदित्यत आह—विश्वस्येति । एकस्त्व विश्वस्य सृष्टिस्थितिलयसंस्थितिहेतुरित्यन्वय । एकोऽसहाय । लयो नाश, संस्थिति पालनम् । तर्हि कथं ब्रह्मा स्रष्टा, विष्णु पालयिता, शिव. संहर्त्तेति लोके कथ्यते इति चेत्तत्राऽऽह—त्व माययेति । ब्रह्मादयस्तवैवावतारा इति भाव । तर्हि ममाद्वैतत्वभङ्गप्रसङ्ग. स्यादिति चेत्तत्राऽऽह

[ त्वं सर्वभूतेत्यादि । सर्वभूतहृदयेषु कृत आलयो येन अन्तर्यामित्वात् । तर्हि केषां स्फुट, केषामस्फुटोऽहम् इत्याह—त्वन्मन्त्र इत्यादि । त्वन्मन्त्रस्य जाप्ये जपे विमुखा पराङ्मुखा ये तेषु मायां तनोषि मायावृतत्वात् तेषां हृदि सन्नपि ते त्वां न जानन्तीति शेष । अतस्तेषामस्फुट इति । त्वन्मन्त्रसाधनपरेषु माया अपयाति तेभ्यो दूरे पलायते अतस्तेषा स्फुटः । ननु तर्हि मयि वैषम्यमस्ति ? नेत्याह—सेवेति । सेवानुरूपमेव फल ददासि । तदुक्त गीतायाम्—

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् । इति । ४।११ ।

तत्र दृष्टान्तो यथेति । सराग सापेक्षो जनो यथा अननुकूलमपि अनुकूलयति । ईश्वरस्य निरपेक्षत्वेऽपि सेवापरवशत्वे दृष्टान्त. । यद्वा असराग इत्यकारप्रश्लेष. । अयमर्थ —यथा असराग. निरपेक्ष· कश्चिदतिशयसेवमानमेव कमप्यनुगृह्णाति तद्वत् । सुरागः कल्पवृक्ष इति वा । गो० । ]

३० । विश्वसृष्ट्यादिहेतुस्त्वमेक एव त्रिगुणया माययोपाधिभूतया त्वमेव विधिरिति ईश इति शिव इति विष्णुरिति भासीत्यन्वय । विविधाकृतिस्त्वम् । तत्तद्ध्यानादौ प्रसिद्धमेव तेषां तथात्वम् । तच्चेदमनेकत्वं तव मिथ्यैवेत्याह—यद्वदिति ।

[ ननु मायेश्वरा ब्रह्मविष्णुशिवा एव प्रसिद्धा वरदा· कथं मायां तनोषीति मानुषं मां प्रत्युच्यते ?

1. ग-ङ '-त्वन्मायया' । 2. च 'भर्वविरिञ्चिविष्णु' । 3. ग-ङ '-विष्णु' । 4. क 'यद्वद्रवि' ।

प्रत्यक्षतोऽद्य भवतश्चरणारविन्दं पश्यामि राम [1]तपसः [2]परतः स्थितस्य ।
दृग्रूपतस्त्वमसतामविगोचरो[3]ऽपि त्वन्मन्त्रपूतहृदयेषु सदा प्रसन्नः ॥ ३१ ॥

---

—भासीशेति। त्रिगुणमाययेति अत्रापि योजनीयम्। ईशेति श्रीरामसम्बोधनम्। मोहितधियां पिहितबुद्धीनां विविधा आकृतिराकारो यस्य स तथा। दृष्टान्तमाह—यद्वदिति। सलिलानां पात्राणि भाजनानि गतः सलिलपात्रगत, अनेकोऽनेक इव भाति। रविर्यथा प्रतिजलपात्र प्रतिबिम्बितो भवति त्व तथा प्रत्यन्त करण प्रतिबिम्बितो भवसि। परमार्थतो रविर्यथा एकस्तथा त्वमपि एक एवेति भाव ।

३१। नरो०। यं परमात्मान योगाभ्यासजनितधर्मविशेषरूपसन्निकर्षेणापि साक्षात्कर्तु न शक्नोमि तस्य चरणारविन्दं चक्षुःसंयोगरूपसन्निकर्षात् साक्षात्करोमीति विस्मित्याऽऽह—प्रत्यक्षतोऽद्येति। यद्वा मनसोऽप्यगोचरो यस्तस्य चरणारविन्दं चक्षु संयोगरूपसन्निकर्षात् साक्षात्करोमीति विस्मित्याऽऽह—प्रत्यक्षतोऽद्येति। प्रत्यक्षत· प्रत्यक्षजनकचक्षु संयोगरूपसन्निकर्षात्। मच्चरणदर्शने कथ तव विस्मयस्तपसा किमसाध्यमिति चेत्तत्राऽऽह—तपस परत· स्थितस्येति, तपसोऽप्यगोचरस्येत्यर्थ·। परतो दूरे इत्यर्थ । 'तमस' इति पाठे तु ससारिणो मम चरणदर्शनं कथं तव विस्मयजनकमित्यापत्ति·। तमस· ससारस्य इत्यर्थ । संसारगन्धेनापि रहितस्येति समुदायार्थ·। मद्विधानामनुग्रहार्थमेव भवत साकारत्वम्, वस्तुतो निराकारस्त्वमिति भाव । ननु निर्गुणब्रह्मसाक्षात्कारस्यैव परमपुरुषार्थ हेतुत्वात् तदनुकूल श्रवणादिकमेव कर्तु युज्यते किमर्थं

---

तत्राऽऽह—विश्वस्येति। एक· अद्वितीयस्त्वमेव विश्वस्य सृष्ट्यादिहेतु । ननु ते ब्रह्मादय प्रसिद्धा इत्याह—त्वमित्यादि। त्वमेव मायया विधिर्ब्रह्मा ईशो विष्णुश्च सम्यग् भासि। ननु हैरण्यगर्भवैष्णवशैवा अन्ये च व्यक्तमेव भेदं वदन्ति कथमहमेक एवेति, तत्राऽऽह—मोहितधियां सम्बन्धे विविधाकृतिर्नानामूर्त्तिस्त्वमेव भासि न तु तत्त्वदृशाम्, अतो मूढबुद्धीनामेव भेदज्ञानम्। तत्र दृष्टान्तः—यद्वदिति। यथा अद्वितीयो गगनस्थो रवि· प्रतिबिम्बेन सलिलपात्रगत उदकयुक्तघटादिषु गत अनेको दृश्यते एवं मायास्थितस्त्वमिति शेष । गो० ]

३१। तमस परत·, तद्धीने शुद्धसत्त्वप्रधाने चित्ते स्थितस्येत्यर्थः। दृग्रूपतो दृग्रूपस्य दृष्टेरित्यर्थ·। सार्वविभक्तिकस्तसि·। प्रसन्नो दृग्विषयो भवसीति शेषः। रा०।

[ ननु मायायां प्रतिबिम्बस्थितत्वोक्त्या मम जीवत्वमापादयसि ? न हि न हीत्याह—प्रत्यक्षतोऽद्य इत्यादि। तमसः परत· प्रकृते· परे स्थितस्य। हे राम, एवम्भूतस्य भवतश्चरणारविन्दम् अद्य प्रत्यक्षतः साक्षात् पश्यामि अहो महद् भाग्यमित्यर्थ·। ननु प्रकृतेः परस्य बुद्ध्यादेरप्यगोचरत्वात् कथं प्रत्यक्षता तत्राऽऽह—त्वम् असतां दृग्रूपत । रूपशब्देनात्र

---

1. क ख ग घ ङ-च-छ 'तमस'। 2 च 'पुरत'। 3. छ '-ऽसि'।

पश्यामि राम तव रूपमरूपिणोऽपि मायाविडम्बनकृतं समनुष्यवेशम् ।
कन्दर्पकोटिसुभगं कमनीय[1]चाप[2]बाणं दयार्द्र[3]हृदयं स्मितचारुवक्त्रम् ॥ ३२ ॥
सीतासमेतमजिनाम्बरमप्रधृष्यं सौमित्रिणा नियतसेवितपादपद्मम् ।
नीलोत्पलद्युतिमनन्तगुणं प्रशान्तं [4]मद्भागधेय[5]मनिशं प्रणमामि रामम् ॥ ३३ ॥

---

सगुणस्य ममोपासनं भवादृशैः क्रियते इत्यत आह—दृग्रूपत इति। दृक् द्रष्टा त्वं रूपतः स्वरूपेण असतां त्वन्मन्त्रजापविमुखानाम् अविगोचरोऽपि त्वन्मन्त्रपूतहृदयेषु सदा प्रसन्न इत्यन्वयः। यद्वा दृग्रूपतो दृग्रूपेण। तथा च श्रुतिः—'न दृष्टेर्द्रष्टारं पश्ये' ( बृहदा० ३।४।२ ) इत्यादि। त्वन्मन्त्रेण पूतानि रागादिदोषरहितानि यानि हृदयानि तेषु तथा, प्रसन्नो भातः स्फुरति। सदेत्यनेन सकृत्स्फुरणं वारितम्। सगुणस्य तवोपासनमपि चित्तैकाग्र्यद्वारा निर्विशेषब्रह्मणस्तव साक्षात्कारहेतुरिति भावः। तथा च—

'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥
वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥' इति ।

३२-३३। नरो०। अतिविस्मयात् पुनराह—पश्यामीति। यद्यहं परमेश्वरः स्यां तदा भक्तानुग्रहार्थं विलक्षणशरीरधारणं कुर्यामिति चेत्तत्राऽऽह—मायेति। मायया कपटेन विडम्बनाय अर्थाल्लोकानां वञ्चनाय कृतं मायाविडम्बनकृतम् सुमनुष्यवेशमिति सुमनुष्यस्येव वेशः संस्थानं यस्येति, सुमनुष्यवेश एव वेशो यस्येति वा बहुव्रीहिः। अस्य नाना मूर्तयः सन्ति सन्तु,

---

बुद्धिमनसोरपि ग्रहणम्। दृष्टादीनामविगोचरोऽपि त्वन्मन्त्रेण पूतेषु हृदयेषु बुद्धिवृत्तिषु सदा प्रसन्नः स्फुरद्रूपः, वृत्तिगोचरत्वाद् ब्रह्मणः। यदुक्तम्—

फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्। पञ्चदशी ७।९०।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरिहेष्यते ॥ इति। पञ्चदशी ७।९२।

एतेन यस्त्वं हृदि दृश्यसे स एव बाह्ये प्रत्यक्षोऽभूरिति। तव एतद्रूपमपि मायाविडम्बनम्, रूपरहितत्वात्। तथा च श्रुतिः—'अपाणिपाद' ( श्वेताश्व० ३।१९ ) इत्यादि। गो० ]

३२। अरूपिणोऽरूपस्यापि। छान्दस इनिः। मायाविडम्बनेन मायाव्यवहारेण कृतम्। रा०।

---

1 च 'चाप'। 2. च 'रामं'। 3 च छ '-नयनं'। 4 ख घ 'तद्द-'। 5 ङ '-सुमुखं'।

[1]जानन्तु राम तव रूपमशेषदेशकालाद्युपाधिरहितं घनचित्प्रकाशम् ।
प्रत्यक्षतोऽद्य मम गोचरमेतदेव रूप विभातु हृदये न पर विकाङ्क्षे ॥ ३४ ॥
इत्येव स्तुवतस्तस्य रामः सस्मितमब्रवीत्[2] ।
मुने जानामि ते चित्तं निर्मलं मदुपासनात् ॥ ३५ ॥

---

किन्तु एतन्मूर्त्तिमानय मम सदा ध्येयो नमस्कार्यश्चेति हृदि कृत्वा ध्यायन् नमस्करोति—कन्दर्पकोटिसुभगमिति सार्द्धपद्येन । कन्दर्पकोटिसुभगमिति कन्दर्पकोटेरपि सुन्दरमित्यर्थः । कमनीयौ चापबाणौ यस्य तं तथा । अजिनं चर्म तदेव अम्बरं वस्त्र यस्य त तथा । अप्रधृष्यं प्रधर्षितुमशक्यम् । नीलोत्पलस्येव द्युति॰ कान्तिर्यस्य तं तथा । प्रशान्तं रागादिदोषरहितम् । श्रीरामे स्वभाग्यत्वमध्यस्य मद्भागधेयमित्युक्तम् ।

३४ । नरो० । उपसंहरति—जानन्त्विति पद्येन । हे राम, तव घनचित्प्रकाशं रूपं ये जानन्ति ते जानन्तु इति सम्बन्ध । रूप कीदृशं अशेषा देशकालादय ये उपाधयस्तैरहितम् आदिपदेन देहान्त॰करणादीनां ग्रहणम् । घनचित्प्रकाशं सान्द्रज्ञान स्वप्रकाशमित्यर्थ । कस्यापि तत्र प्रवेशसामर्थ्यं नास्तीति सूचनाय घनेति विशेषण दत्तम् । तव घनचित्प्रकाशं रूपं यदि देशकालाद्यन्यतमोपाधिपरिच्छिन्नं स्यात्तदाऽहं ज्ञातुं शक्नुयामिति भाव । परमन्यद् विकाङ्क्षे लब्धुमिच्छामीत्यर्थ ।

३५ । नरो० । मामद्येत्यादि यदुक्त श्रीरामस्तत्राऽऽह—मुने जानामीत्यादि । निर्मलं रागादिदोषरहितम् ।

---

३३ । नियतसेवितेति नियमेन सेवितेत्यर्थ । मद्भागधेयं मददृष्टारब्धं शरीरमिति यावत् । अनेन शरीराणां परादृष्टमात्रजन्यत्वं सूचितम् । रा० ।

३४ । जानन्तु अन्येऽपि योगिन इति शेषः । देशेत्यादि, देशकालाद्यपरिच्छिन्नमित्यर्थः । घनेति । चैतन्यमात्ररूपमित्यर्थ॰ । प्रत्यक्षत इति, मम तु परिदृश्यमानेऽत्रैव प्रीतिर्न तु परे वाङ्मनसागोचरे इत्यर्थ । रा० ।

[ ननु चैतन्यघनमेव तत्, कथ सविशेष परिच्छिन्नदेहरूपं मद्रूपत्वेन स्तौषीत्याह—जानन्त्विति । अशेषमपरिच्छिन्न देशकालादिकृतोपाधिरहित घनचिच् चिद्घनम् अत एव प्रकाश सर्वस्य चेतयितृ तव रूपम् अन्ये मुनय श्रुतयो वा जानन्तु मम पुनरद्य प्रत्यक्षगोचरं साक्षादृष्टम् एतदेव तव रूप हृदये भातु । न परमितोऽन्यत् न काङ्क्षे । गो० ]

---

1 ग 'जानामि' । 2 अत पर घ-पुस्तके 'श्रीराम उवाच' इत्यधिकम् ।

अतोऽहमागतो द्रष्टुं [1]मद्भृते नान्यसाधनम् ।
मन्मन्त्रोपासका [2]लोके मामेव शरणं गताः ।
निरपेक्षा नान्यगतास्तेषां दृश्योऽहमन्वहम् ॥ ३६ ॥
स्तोत्रमेतत् पठेद् यस्तु त्वत्कृतं मत्प्रियं सदा ।
[3]मद्भक्ति[4]र्मे भवेत्तस्य ज्ञान[5]ञ्च विमलं भवेत् ॥ ३७ ॥
त्वं ममोपासनादेव विमुक्तोऽसीह सर्वतः ।
देहान्ते मम सायुज्यं लप्स्यसे नात्र संशयः ॥ ३८ ॥
गुरुं ते द्रष्टुमिच्छामि ह्यगस्त्यं मुनिनायकम् ।
किञ्चित् कालं तत्र वस्तुं मनो मे त्वरयत्यलम् ॥ ३९ ॥
सुतीक्ष्णोऽपि तथेत्याह श्वो गमिष्यसि राघव ।
अहमप्यागमिष्यामि [6]चिराद्दृष्टो महामुनिः ॥ ४० ॥
[7]अथ प्रभाते मुनिना समेतो रामः ससीतः सह लक्ष्मणेन ।
[8]अगस्त्यसम्भाषणलोलमानसः शनैरगस्त्यानुजमन्दिरं ययौ ॥ ४१ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अरण्यकाण्डे
द्वितीयोऽध्यायः ॥ २ ॥

---

३६ । नरो० । मद्दृते नान्यसाधनं मां विना संसारसिन्धुतरणस्य अन्यत् कारणं नास्ति इत्यर्थः । शरणमाश्रयम् । निरपेक्षा यत्नं विना उपस्थितेऽप्यर्थे निस्पृहा । अनन्यगता मन्मात्रार्पितचित्ता इत्यर्थः ।

३७ । नरो० । तस्य मदभक्तिर्भवेत् मे मम ज्ञानञ्च विमलं भवेदित्यन्वयः ।

३८ । नरो० । सर्वत इति पञ्चम्यास्तसि । देहान्ते देहनाशे, मम सायुज्यं मद्भावमित्यर्थः ।

३९ । नरो० । मुनिनायकं मुनिश्रेष्ठम् ।

४१ । नरो० । अगस्त्यसम्भाषणाय लोलं चञ्चलं मानसं यस्य स तथा ।

अरण्यकाण्डे द्वितीयाध्यायव्याख्या समाप्ता ॥ २ ॥

---

३६ । [ मद्दृते नान्यसाधनमिति, मां विनाऽन्यत् साधनं मोक्षहेतुर्नास्ति,
तमेव विदित्वाऽतिमृत्युमेति ।
नान्यः पन्था विद्यतेऽयनाय ॥ ( श्वेताश्वतर० ३।८ )
इति श्रुतेः । गो० ]

४१ । अगस्त्यसंभाषणे लोलमत्युत्कटेच्छावन्मानसं यस्य स इत्यर्थः ।

---

1 च 'मामृते' । 2 छ 'लोका' । 3 क 'मद' । 4 ङ '-श्च', च छ '-वै' । 5 च '-मप्यतुलं' । 6 ग 'चिराद्दृष्टुं', ङ 'चिरं दृष्टो' । 7 ग 'अत' । 8 ख 'आगस्त्य-' ।

# तृतीयोऽध्यायः

—— ० ——

[1]श्रीमहादेव उवाच—

अथ रामः सुतीक्ष्णेन जानक्या लक्ष्मणेन च ।
अगस्त्यस्यानुजस्थानं मध्याह्ने समपद्यत ॥ १ ॥
तेन सम्पूजितः सम्यग् भुक्त्वा मूलफलादिकम् ।
परेद्युः प्रातरुत्थाय जग्मुस्तेऽगस्त्य[2]मण्डलम् ॥ २ ॥
सर्वर्तुफल[3]पुष्पाढ्यं नानामृगगणैर्युतम् ।
पक्षिसङ्घैश्च विविधैर्नादितं नन्दनोपमम् ॥ ३ ॥

---

३ । नरो० । अगस्त्यमण्डलं कीदृगित्यपेक्षायामाह—सर्वर्त्तुफलपुष्पाढ्यं सर्वर्त्तुफलपुष्पसम्पन्नमित्यर्थः । एतेन मुनेस्तपोमहिमा सूचितः । नानामृगगणैर्युतमित्यनेन पक्षिसंघैश्च विविधैर्नादितमित्यनेन च प्राणिमात्रकृतविश्वासत्वं सूचितम्, शोभातिशयो वा सूचितः ।

---

१ । अथेति । अगस्त्यस्यानुजोऽग्निजिह्वनामा ऋषिः । रा० ।

सुतीक्ष्णेनेति । विसंवदत्ययं वाल्मीकीयेन । तथा च प्राच्ये—

इति रामो मुनेः श्रुत्वा सह भ्रात्राऽभिवाद्य च ।
प्रतस्थेऽगस्त्यमुद्दिश्य सानुजः सह सीतया ॥ इति । ३।१६।१ ।

पाश्चात्येऽपि—

सुतीक्ष्णेनाभ्यनुज्ञातं प्रस्थितं रघुनन्दनम् ।
हृद्यया स्निग्धया वाचा भर्त्तारमिदमब्रवीत् ॥ इति ।३।९।१।

अगस्त्यस्यानुजस्थानं अगस्त्यस्यानुजः कनिष्ठस्तस्य स्थानम् आश्रममित्यर्थः ।

२ । तेन अगस्त्यानुजेन अग्निजिह्वेन रामः इति शेषः, सम्यक् सम्पूजितोऽभवदित्यर्थः । ततश्च ते रामादयश्चत्वारः इत्यर्थः, भुक्त्वा जग्मुरित्यन्वयः ।

३ । अगस्त्यमण्डलं विशिनष्टि—सर्वर्त्तुफलपुष्पाढ्यमित्यादिना । दृश्यतेऽत्र कश्चित् हृद्यः सहृदयवेद्यः प्रबन्धो वाल्मीकीये अगस्त्याश्रमागस्त्यमहिमवर्णनरूपः । स च गोरेसियोमुद्रिते आरण्ये सप्तदशसर्गे ।

---

1 क-ख-ङ-च पुस्तके 'श्रीमहादेव उवाच' इति नास्ति । 2 ङ '-मन्दिरम्' । 3 ङ 'शोभा' ।

ब्रह्मर्षिभिर्देवर्षिभिः सेवितं मुनिमन्दिरं ।
सर्वतोऽलङ्कृतं साक्षाद् ब्रह्मलोकमिवापरम् ॥ ४ ॥
बहिरेवाऽऽश्रमस्याथ स्थित्वा रामोऽब्रवीन्मुनिम् ।
सुतीक्ष्ण गच्छ [1]त्व शीघ्रमागत मां निवेदय ।
अगस्त्यमुनिवर्याय सीतया लक्ष्मणेन च ॥ ५ ॥
[2]महाप्रसाद इत्युक्त्वा सुतीक्ष्णः प्रययौ गुरो ।
आश्रम त्वरया तत्र ऋषिसङ्घसमावृतम् ॥ ६ ॥
उपविष्ट रामभक्तैर्विशेषेण समा[3]युतम् ।
[4]व्याख्यातराममन्त्रार्थं शिष्येभ्यश्चातिभक्तित ।
दृष्ट्वाऽगस्त्य मुनिश्रेष्ठं सुतीक्ष्णः प्रययौ [5]मुने ॥ ७ ॥

---

४ । नरो० । ब्रह्मर्षिभि सनकादिभि, देवर्षिभिर्नारदादिभिर्मुनिभिर्मननशीलै । साक्षाद्ब्रह्मलोकमिवेति । इवशब्दोऽत्र उत्प्रेक्षाद्योतक ।

---

४ । देवर्षिभिरिति छन्दोभङ्ग आर्ष । मुनिमन्दिरे सर्वतोऽलङ्कृतमित्यन्वय· । रा० ।

५ । प्राच्ये वाल्मीकीये रामस्य अगस्त्यसकाशे स्वागमननिवेदनाय लक्ष्मण प्रत्यादेश । तेन च कस्यचिदगस्त्यशिष्यस्य सकाशे रामागमनविनिवेदनम् । तथाच—

स्थितस्त्वमरसंकाशो महाबलपराक्रम· ।
राघव सह वैदेह्या लक्ष्मणं वाक्यमब्रवीत् ॥
सप्राप्ता स्माऽऽश्रमपदं सौमित्रे प्रविशाग्रत· ।
निवेदय च मां प्राप्तमृषये सह सीतया ॥
स प्रविश्याऽऽश्रमपदं लक्ष्मणो राघवाज्ञया ।
अगस्त्यशिष्यमासाद्य वाक्यमेतदुवाच ह ॥
राजा दशरथो नाम ज्येष्ठस्तस्य सुतो बली ।
रामो नाम महाभाग मुनिं द्रष्टुमिहेच्छति ॥ इत्यादि ।३।१८।१-४।

६ । महाप्रसाद महाननुग्रह मयीति शेष । चिरवाञ्छितगुरुदर्शनेन धन्यो भविष्यामीत्याशय । एतेन गुरुदर्शनं महापुण्यजनकमिति सूचितम् ।

७ । व्याख्यातो राममन्त्रार्थो येन तम् । प्रययौ मुने· समीपमिति शेष· । रा० ।

विशेषेण रामभक्त· समायुतम्, अतिभक्तित शिष्येभ्यो व्याख्यातराममन्त्रार्थं व्याख्यातो

---

1. ङ-च 'शीघ्र' त्व'। 2. ग 'मयि प्रसीद'। 3 च-छ '·वृतम्'। 4. ग-ङ-च-छ 'व्याख्यान राम-'। 5 ग-ङ-च छ 'मुनि.'।

दण्डवत् प्रणिपत्याऽऽह विनयावनतः सुधीः ।
रामो दाशरथिर्ब्रह्मन् सीतया लक्ष्मणेन च ।
आगतो दर्शनार्थं ते बहिस्तिष्ठति साञ्जलिः ॥ ८ ॥

अगस्त्य उवाच—

शीघ्रमानय भद्रं ते रामं मम हृदि स्थितम् ।
तमेव ध्यायमानोऽहं काङ्क्षमाणोऽत्र संस्थितः ॥ ९ ॥

इत्युक्त्वा स्वयमुत्थाय मुनिभिः सहितो द्रुतम् ।
अभ्ययात् परया भक्त्या गत्वा राममथाब्रवीत् ॥ १० ॥

आगच्छ राम भद्रं ते दिष्ट्या तेऽद्य समागमः ।
प्रियातिथिर्मम[1] प्राप्तोऽस्यद्य मे सफलं दिनम् ॥ ११ ॥

रामोऽपि मुनिमायान्तं दृष्ट्वा हर्षसमाकुलः ।
सीतया लक्ष्मणेनापि दण्डवत् पतितो भुवि ॥ १२ ॥

---

९ । नरो० । काङ्क्षमाणस्तद्दर्शनमिति शेषः ।

---

रामस्य मन्त्रार्थो येन तम् । उपविष्टं मुनिश्रेष्ठमगस्त्यं दृष्ट्वा सुतीक्ष्णो मुनेः सकाशं प्रययौ इत्यन्वयः ।

८ । ते दर्शनार्थमागतः साञ्जलिर्बहिस्तिष्ठतीत्यन्वयः ।

१० । चित्तौत्सुक्यप्रकटनार्थमाह—इत्युक्त्वेति । सुतीक्ष्णं शीघ्रमानय इत्युक्त्वाऽपि विलम्बमसहमानः स स्वयमेव द्रुतम् अभ्ययात् गन्तुमारेभे इत्यर्थः । गत्वा रामसकाशमिति शेषः । अथ रामसकाशगमनानन्तरमित्यर्थः ।

१२ । अगस्त्यं विशिनष्टि प्राच्ये वाल्मीकीये—

तं दृष्ट्वा चोग्रतपसं प्रज्वलन्तमिवानलम् ।
अगस्त्यं स मुनिश्रेष्ठं रामो लक्ष्मणमब्रवीत् ॥
अयमग्निरयं सोम एष धर्मः सनातनः ।
अस्मानिहागतानेष निष्क्रम्याभ्युपगच्छति ॥
औदार्येणावगच्छामः सोऽगस्त्योऽयं न संशयः ।
निधानं तपसामेष तेजोराशिर्विभावसो ॥ इत्यादि ।३।१८।२३-२५ ।

---

1. ग ड च छ 'मया प्राप्तो ह्यद्य' ।

द्रुतमुत्थाय [1]मुनिराड् राममालिङ्ग्य भक्तितः ।
तद्गात्रस्पर्श[2]जाह्लादश्रवन्नेत्रजलाकुलः ॥ १३ ॥
गृहीत्वा [3]राममेकेन करेण रघुनन्दनम् ।
जगाम [4]स्वाश्रमं हृष्टो मनसा मुनिपुङ्गवः ॥ १४ ॥
सुखोपविष्टं सम्पूज्य [5]पूजया बहु[6]विस्तरम् ।
भोजयित्वा [7]यथान्यायं भोज्यै[8]र्वन्यैरनेकधा ॥ १५ ॥
सुखोपविष्टमेकान्ते रामं शशिनिभाननम् ।
कृताञ्जलिरुवाचेदमगस्त्यो भगवा[9]नृषिः ।
त्वदागमनमेवाहं प्रतीक्ष्य[10] समवस्थितः ॥ १६ ॥
यदा क्षीरसमुद्रान्ते ब्रह्मणा प्रार्थितः पुरा ।
भूमेर्भारापनुत्त्यर्थं रावणस्य वधाय च ॥ १७ ॥
तदादि दर्शनाकाङ्क्षी तव राम तपश्चरन् ।
वसामि मुनिभिः सार्धं त्वामेव परिचिन्तयन् ॥ १८ ॥

---

१३ । नरो० । तद्गात्रस्पर्शेन जनितो य आह्लादः सुखं तेन स्रवन्ति यानि नेत्रजलानि तैराकुलो व्याप्तः ।

१७ । नरो० । भारापनुत्त्यर्थं भारखण्डनार्थम् ।

---

१३ । तद्गात्रस्पर्शजाह्लादेन स्रवद् यन्नेत्रजलं तेनाऽऽकुलः ।

१४ । गृहीत्वा करमेकेनेति पाठे—रघून् पूर्वपुरुषान् नन्दयति तर्पणादिनेति रघुनन्दनस्तं करमित्यर्थः ।

१६ । सुखोपविष्टं राममित्यर्थः ।

१७-१८ । यदा पुरा भूमेर्भारापनुत्त्यर्थं रावणस्य वधाय च क्षीरसमुद्रान्ते ब्रह्मणा त्वं प्रार्थितस्तदादि तत प्रभृति हे राम तव दर्शनाकाङ्क्षी अहं तपश्चरन् मुनिभिः सार्धं त्वामेव परिचिन्तयन् वसामीति द्वाभ्यामन्वयः । क्षीरसमुद्रान्ते इति, एतत्तु वाल्मीकीयान्नवीनम् । तत्र प्रस्तुतयज्ञस्य दशरथस्य यज्ञागारे अयोध्यायां समागतो विष्णुर्ब्रह्मणा अन्यैर्देवगणैश्च सह प्रार्थित इत्युक्तत्वात् । तथाच—

एतस्मिन्नन्तरे विष्णुस्तत्रागाद् भगवान् स्वयम् ।
ब्रह्मणा मनसा ध्यातस्तद्वधायामितद्युतिः ॥
अब्रवीत् तं ततो ब्रह्मा विष्णुं देवगणैः सह । इति १।४।२२-२३ ।

हे राम, तव दर्शनाकाङ्क्षी तपश्चरन् तदादि तत्कालमारभ्य वसामीत्यन्वयः । रा० ।

---

1 छ 'निकटाद्' । 2 ग-ङ-च-छ '-नाह्लाद-' । 3 क-ख ग घ ङ च 'कर-' । 4 ङ-च 'आ' । 5 ग 'प्रणयाद्' । 6 ग ङ '-विष्टरम्' । 7. च 'बहुविधैर्भो' । 8. ग-च '-रन्यै' । 9. च '-न्मुनि' । 10 क ख 'प्रतीक्षन्' ।

सृष्टेः प्रागेक एवाऽऽसीर्निर्वि[1]कल्पोऽनुपाधिकः ।
त्वदाश्रया त्वद्विषया माया ते शक्तिरुच्यते ॥ १९ ॥
त्वामेव निर्गुणं शक्तिरावृणोति यदा तदा ।
अव्याकृत[2]मिति प्राहुर्वेदान्तपरिनि[3]ष्ठिता ॥ २० ॥

---

१९। नरो०। सृष्टे॰ प्राक् निर्विकल्पोऽनुपाधिक एवाऽऽसीरित्यन्वय॰। निर्विकल्पकोऽद्वैत॰। तत्र प्रमाण 'शिवमद्वैत चतुर्थं मन्यन्ते' (माण्डूक्य७) इत्यादिश्रुति । अनुपाधिक उपाधिरहित इत्यर्थ॰। त्वमाश्रयो यस्याः सा तथा। त्व विषयो गोचरो यस्या सा तथा।

२०। नरो०। निर्गुणं गुणातीतम्। आवृणोति अवलोकयितृबुद्धिपिधायकतया आच्छादयतीवेत्यर्थ । अव्याकृतमितीति। सृष्टेः प्राग् अवलोकयित्रभावात् तद्बुद्धिपिधायकत्वाभावादावरकत्वाभावाच्छक्तेस्तदानीमव्याकृतसंज्ञा नास्तीति भाव । वेदान्तपरिनिष्ठिता उपनिषद्भिरता इत्यर्थ ।

---

१९। अथ भगवत्स्वरूपं शिष्यान् बोधयितुमन्यथात्वशङ्कावारणाय भगवदग्र एवाऽऽह—सृष्टे॰ प्रागिति। त्वमेक एवाऽऽसी निर्विकल्पो विकल्परूपसकलप्रपञ्चहीन । तत्र हेतु—अनुपाधिक इति। उपाध्यसंबद्ध इत्यर्थ । ननु किं सर्वथोपाधिर्नास्त्येवेति, नेत्याह—त्वदिति। अस्त्येव सा, परन्तु स्वकल्पितत्वसबन्धहीना सा। अतस्त्वमनुपाधिक इत्याशय । रा०।

[ ननु मनुष्यमात्रोऽहं कथमेवमुच्यते ? न, त्वमेव जगदादिकारणम् त्वत्तो जगज्जात न तु त्व मानुष इति। वासुदेवो वा इदमग्र आसीदित्यनुसारेण। सृष्टे प्रागेक आसीदित्यादि। सृष्टे प्राक् प्रलये त्वमेकोऽद्वितीयो भवानेव आसीत् प्रकृतेरपि तदा तस्मिन् लीनत्वात्। ततो निर्विकल्प दृश्यद्रष्टृभावरहितोऽतोऽनुपाधिक द्रष्टृत्वाद्युपाधिरहित । ननु 'अजामेकाम्' (श्वेताश्व० ४।५) इत्यादिश्रुते प्रकृतेरप्यजात्वेन नित्यत्वाद् विद्यमानत्वे कथमेक एवोच्यते, न, तस्या अपि त्वयि स्थितत्वादित्याह—मायेत्यादि। माया प्रकृति सा च तव शक्तिरुच्यते श्रुत्या, न हि शक्तिशक्तिमतोर्भेदोऽस्तीति भाव । अत एव त्वदाश्रया त्वदाधारा, त्वद्विषया त्वद्विषयत्वेनैव विषयो बोधो यस्या॰ सा। तदुक्त शैवागमे—

अव्यक्तो व्यक्ततां नैति प्रकृत्या ज्ञायते ध्रुवम्।

इति तटस्थलक्षणेन तस्या ज्ञेयत्वात्। गो० ]

२०। अथ सृष्टिमुपक्रमते त्वामिति। त्वां निर्गुणमेव सन्तं यदा सा शक्ति स्वकल्पितसम्बन्धेन त्वामावृणोति त्वत्सम्बद्धमात्मानं मनुते न तु कदाचिदपि त्वं त्वत्सम्बद्धमात्मानं मनुषे, अतो निर्गुणमेवेत्युक्तम्। तदा तां मायामव्याकृतमित्याहुः। रा०।

---

1. क '-कल्पे'। 2. च '-मिद'। 3. ङ '-ष्ठिता.'।

मूलप्रकृतिरित्येके प्राहुर्मायेति केचन ।
अविद्या संसृ[1]तिर्बन्ध इत्यादि बहुधोच्यते ॥ २१ ॥
[2]त्वया संक्षोभ्यमाणा सा महत्तत्त्वं प्रसूयते ।
महत्तत्त्वादहङ्कारस्त्वया [3]सञ्चोदिताद्भूत् ॥ २२ ॥

२१ । नरो० । कार्यकारणयोरभेदमङ्गीकृत्य संसृतिर्बन्ध इत्युक्तम् ।
२२ । नरो० । संक्षोभ्यमाणा विकारं प्राप्यमाना । प्रसूयते इति दिवादित्वात् यक् । संचोदितात् प्रयुक्तादित्यर्थः ।

[ तामेव मायाशक्तिं बहुधा वादिनो वदन्तीत्याह—त्वामेवेत्यादि । स्वरूपतो निर्गुण त्वां यदा सा शक्तिरावृणोति त्वत्तो नि स्यूय त्वत्पुरोवर्त्तिनी भवति, तदा तां वेदान्तपरिनिष्ठिता वेदान्तिनोऽव्याकृत प्रधानमित्याहुः । गो० ]

२१ । तस्यास्तदवस्थायां नामान्तराण्यप्याह—मूलप्रकृतिरित्यादि । तदुक्तं कपिलेन—( साङ्ख्यका० ३ का० ) 'मूलप्रकृतिरविकृतिरि'त्यादिना । रा० ।

एके साङ्ख्या मूलप्रकृतिरित्याहु । तथाच तन्मतम् 'मूलप्रकृतिरविकृतिर्महदाद्या प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष ' ( सा० का० ३ का० ) इति । केचन पौराणिका मायेत्याहु । तथाच श्रीभागवतम्—

'तन्मायाफलरूपेण द्विधा समभवद् बृहत्' (भागवत० ११।२४।३ ) इति ।

फल पुरुष , बृहद् ब्रह्म । केचिदविद्येति । केचित् संसृति ससारहेतुत्वात् , संसृतिः ससार प्रकृतत्वात् सर्वेषाम् । केचिद् बन्ध इति बन्धहेतुत्वात्, एके बहुधोच्यते । प्रकृते सकाशात् सृष्टिरिति त्वदधीनेति वदन्ति । गो० ]

२२ । सा त्वत्सम्बद्धमात्मानं मन्वाना अत एव त्वया संक्षोभ्यमाणा, सक्षोभश्चात्र तत्कल्पितसम्बन्ध एवेति बोध्यम् । महत्तत्त्वमिति ।

सविकारात् प्रधानात्तु महत्तत्त्वमजायत ।
महानिति यतः ख्यातिर्लोकानां जायते सदा ॥ ( मत्स्यपु० ६।१७ )

इति स्मृतेः । निश्चयोऽस्य असाधारणी वृत्तिः । एतदभिमानिनि हिरण्यगर्भेऽपि महानिति शब्द । सर्वेषां स्वस्वबुद्धिरूपा प्रतिनियतोपाधयश्चास्यैव महत्तत्त्वस्यांशा अस्थाने कुबुद्धिमण्डलरूपत्वादिति बोध्यम् । त्वया संचोदितात् प्रेरितान्महत्तत्त्वादहङ्कारोऽभूत् । स चाह ममेत्यभिमानवृत्तिकमन्त करणद्रव्यम् ।

अहङ्कारोऽभिमानश्च कर्त्ता मन्ता च स स्मृतः । पूर्वभाग ४।२९ ।

इति कौर्मोक्ते । अभिमानोऽभिमानवृत्तिक इत्यर्थ ।

[ अहङ्कार इति । महत्तत्त्वसंवृतो महत्तत्वेनावेष्टित । त्रैविध्यमाह—सात्त्विक इति । गो० ]

1, च-कृ 'सृतेर्ब्र-' । 2 क-ख-पुस्तकयोरय श्लोको नास्ति । 3. ङ 'सनोदि-' ।

अहङ्कारो महत्तत्त्व[1]संवृतस्त्रिविधोऽ[2]भवत् ।
सात्त्विको राजसश्चैव तामसश्चेति [3]भण्यते ॥ २३ ॥
तामसात् सूक्ष्मतन्मात्राण्यासन् भूतान्यतः परम् ।
स्थूलानि क्रमशो राम क्रमोत्तरगुणानि हि[4] ॥ २४ ॥

---

२४ । नरो० । त्रिगुणात्मकमायाप्रसूतत्वान्महत्तत्त्वस्यापि त्रिगुणात्मत्वम् अतस्तज्जन्याहङ्कारस्यापि सत्त्वाद्यशभेदेन त्रैविध्यं दर्शयति—अहङ्कार इत्यादिना । महत्तत्त्वसंवृत महत्तत्त्वाच्छादित इत्यर्थ ।

२५ । नरो० । सूक्ष्मतन्मात्राणि सूक्ष्मापञ्चीकृतानि । क्रमेण उत्तरोऽधिको गुणो भागो यत्र तानि तथा । तथा हि पञ्चीकरणप्रकारश्चेत्थम्—आकाशमादौ द्विधा विभज्य तयोरेकं भागं पुनश्चतुर्धा विभज्य तेषां चतुर्णामंशानाम् आकाशादिषु सयोजनम् । एवं वायुतेजोऽब्भूनामपि । तदेवमेकैकस्य भूतस्यार्द्धं स्वांशात्मकमर्द्धान्तर चतुर्विधभूतमयमिति पृथिव्यादौ स्वांशाधिक्यात्

---

२३ । महत्तत्त्वसंवृतस्तदुपादानकत्वात्, यथा घटो मृदा । सत्त्वाद्युपाधिकत्वेन त्रैविध्यम् । मूलप्रकृतेस्त्रिगुणत्वेन तत्कार्यत्वान्महत्तत्त्वस्य त्रिगुणत्वम् ।

सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् । ( विष्णुपु० १।२।३३ ) इति स्मृते । तत्कार्यत्वाच्चाहङ्कारस्य त्रैविध्यम् । एवमग्रेऽपि बोध्यम् ।

२४ । [ तामसादित्यादि । त्रिविधाहङ्कारस्य तामसाहङ्कारकार्यमाह, भूतसूक्ष्माणि शब्दादीनि । अत परं भूतसूक्ष्मद्वारा स्थूलानि भूतानि आकाशादीनि क्रमोत्तरगुणानि पृथिव्यादिक्रमेण दशदशोत्तरगुणानि महदन्तानि । तदय क्रम —महतोऽहङ्कार , तामसाहङ्कारात् शब्दतन्मात्रं शब्दद्वारा आकाशस्तस्य शब्द एव गुण , आकाशात् स्पर्शतन्मात्रं स्पर्शद्वारा वायुरभूत् तस्यासाधारणो गुण स्पर्श कारणान्वयात् शब्दश्चेति गुणद्वयम्, वायो रूपतन्मात्रमभूत् रूपद्वारा तेजस्तस्य रूपमसाधारणो गुण कारणगुणस्य परम्परान्वयात् शब्दस्पर्शौ चेति गुणत्रय तेजस , तेजस सकाशात् रसतन्मात्र तद्द्वारा जलम्, तस्यासाधारणो गुणो रस , पूर्ववत् कारणगुणान्वयात् [ शब्दस्पर्शरूपाणीति चत्वारो गुणा जलस्य, जलाद् गन्धतन्मात्रम्, गन्धद्वारा पृथिवी, तस्या असाधारणो गुणो गन्ध , कारणगुणान्वयात् ? ] शब्दस्पर्शरूपरसाश्चेति पञ्चगुणा पृथिवीति पौराणिकी व्यवस्था । गो० ]

सूक्ष्मतन्मात्राणि शब्दस्पर्शरूपरसगन्धतन्मात्राणि, तत सूक्ष्मतन्मात्रेभ्य स्थूलानि भूतानि । तत्र शब्दतन्मात्रादाकाशम्, स्पर्शतन्मात्रात् पूर्वसहिताद्वायु', ताभ्यां सहिताद्रूपतन्मात्रात्तेज , तै सहिताद्रसतन्मात्राज्जल एतै सहिताद् गन्धतन्मात्रात् पृथिवीत्याद्यगुरुकृतसांख्यतन्त्रवृत्तौ विस्तर । तदेवाऽऽह—क्रमोत्तरगुणानीति । क्रमेणाधिकगुणानि आकाशं शब्दमात्रगुणम्,

---

1, ङ क्ष '-त्त्व स '। 2. ङ-क्ष '-धो भवेत' । 3 ङ 'गद्यते' । 4 क ख-घ 'ह' ।

राजसानीन्द्रियाण्येव सात्त्विका देवता [1]मनः ।
तेभ्योऽभवत् [2]सूत्ररूपं लिङ्गं सर्वगतं महत् ॥ २५ ॥
ततो विराट् समुत्पन्नः स्थूलाद् भूतकदम्बकात् ।
विराजः[3] पुरुषात् सर्वं जगत् स्थावरजङ्गमम् ।
देवतिर्यङ्मनुष्याश्च कालकर्मक्रमेण तु ॥ २६ ॥

पृथिव्यादिव्यवहार'। तदुक्तम्—'वैशेष्यात्तु तद्वादस्तद्वाद' ( वेदान्त० २।४।२२ ) इति । तेभ्यो मायामहत्तत्त्वाहङ्कारतन्मात्रपञ्चभूतेन्द्रियेभ्य• ।

२५ । नरो० । लिङ्ग हिरण्यगर्भस्य लिङ्गशरीरम् , महत् महत्तत्त्वम् ।

२६ । नरो० । विराट् हिरण्यगर्भस्य स्थलशरीरम् । स्थूलाद् भूतकदम्बकात् पञ्चीकृताकाशादिभूतसमूहादित्यर्थ । विराज• पुरुषाद् हिरण्यगर्भादित्यर्थ•,

वायु शब्दस्पर्शगुण , तेज शब्दस्पर्शरूपगुणम्, जल शब्दस्पर्शरूपरसगुणम्, भू• शब्दस्पर्शरूपरसगन्धगुणेति ।

२५ । राजसादहङ्कारादिन्द्रियाणि राजसाहङ्कारोपादानकानीत्यर्थ• । तानि च—वाक्पाणिपादपायूपस्थरूपाणि कर्मेन्द्रियाणि पञ्च, चक्षु श्रोत्रत्वग्रसनघ्राणाख्यानि ज्ञानेन्द्रियाणि पञ्चेत्येव दश । वचनादानविहरणानन्दोत्सर्गाश्च कर्मेन्द्रियाणां वृत्तय , ज्ञानेन्द्रियाणाञ्च सविकल्पकनिर्विकल्पकोभयरूपज्ञानरूपा वृत्ति । तत्र निर्विकल्पकं किञ्चिदिदमिति ज्ञानम् । देवता मनश्च सात्त्विका• सात्त्विकाहङ्कारोपादाना इत्यर्थः । ताश्च देवताः—चक्षुषो रवि•, श्रोत्रस्य दिक्, त्वचो वायु , रसनस्य वरुणः, घ्राणस्य अश्विनौ, वाचोऽग्नि', पाण्योरिन्द्र', पादयोरुपेन्द्र', पायोर्मित्र', उपस्थस्य को ब्रह्मेति । मन इन्द्रियमपि अवान्तरत्वात् पृथगुक्तम् । सूत्ररूपं प्राणादि, क्रियाशक्तेः प्राणादेरेव सूत्रव्यवहारात् , तदात्मकं हिरण्यगर्भरूपं लिङ्गं सर्वकार्यकर्तृत्वात् सर्वसूक्ष्मसमष्टिरूपमभवदित्यर्थ । रा० ।

[ राजसानीत्यादि । एवकारो ज्ञानेन्द्रियाणां सात्त्विकत्वशङ्कानिरासार्थ• । सात्त्विकाहङ्काराद्देवता । इन्द्रियाधिष्ठातृदेवता दश । तदुक्तं श्रीभागवते—

दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रका• । इति । २।६।३०

मन सात्त्विकाहङ्कारात् । तेभ्य इति । तेभ्यो महदादिभ्यो लिङ्गं समष्टिदेह लिङ्गशरीरं सूत्ररूपं पटसूत्रवत् सर्वानुस्यूतम् अत सर्वगतम् अतो महदपरिच्छिन्नम् अभूत् । गो० ]

२६ । ततो विराट्, स्थूलसमष्टिरयम् । तदाह—स्थूलाद्भूतकदम्बकादिति । इदमिन्द्रियादेरप्युपलक्षणम् । तस्मादेव विराज• पुरुषात् सर्वं स्थावरं जङ्गम चाभिव्यक्तमित्यर्थ । तत्र जङ्गममाह—देवेत्यादि । कालकर्मक्रमेण । कालक्रमेण यथा—हेमन्ते व्रीहयो वसन्ते यवादि । कर्मक्रमेण कालसहकृतेन तिर्यङ्मनुष्यदेवत्वप्राप्तिः । रा० ।

1. ङ-च 'मता' । 2 च 'सूक्ष्म-' । 3 ङ-छ '-जपुरु-' ।

त्वं रजोगुणतो ब्रह्मा [1]जगत्सर्गस्य कारणम् ।
सत्त्वाद्विष्णुस्त्वमेवास्य पालकः सद्भिरुच्यते ।
लये रुद्रस्त्वमेवास्य त्वन्मायागुणभेदतः ॥ २७ ॥
जाग्रत्स्वप्नसुषुप्त्याख्या वृत्तयो [2]बुद्धिजा गुणाः ।
तासां विल[3]क्षणो राम [4]त्वं साक्षी चिन्मयोऽव्ययः ॥ २८ ॥

---

स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्तत ॥ इति स्मृते ,
( मार्कण्डेयपु० ४९ अ० ३४ श्लो० )

'हिरण्यगर्भः समवर्तताग्रे' ( ऋक्संहितामन्त्र० १०।१२१ ) इत्यादिश्रुतेश्च ।

२७ । नरो० । अस्य जगतो लये नाशे अस्य कारणमित्यनुषज्यते ।

२८ । नरो० । ननु जाग्रदाद्यवस्थावतो मम कथं परमेश्वरत्वमित्यत आह—जाग्र-

---

[ तत इत्यादि । विराडन्तर्यामीत्यर्थः । यद्वा सूत्रं हिरण्यगर्भः प्राणश्च, प्राणस्य सूत्रवत् सर्वत्रानुगतत्वात् । तदुक्तं वेदान्तसारकृद्भिः—एतत् समष्ट्युपहितं चैतन्यं सूत्रात्मा हिरण्यगर्भः प्राण इति चोच्यते । तदा लिङ्गं जीवितस्य गमकम्, यदुक्तं 'विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जगत् सृजेदि'ति । ततस्तस्माद्धेतोर्जीवस्य भोगार्थमेव सृष्टिकरणात् स्थूलाद् भूतकदम्बकात् आकाशादेर्विराड् ब्रह्माण्डमुत्पन्नं, ब्रह्माण्डदेहो ब्रह्मा, तस्यापि भौतिकदेहत्वात् । विराजः पुरुषाद् वैराजात् । कालकर्मक्रमेण, कालः परिणामहेतुः क्षोभकः, कर्म जीवादृष्टम्, तत्क्रमेण—यो यस्यावसरः, यादृग् यस्य कर्म उच्चनीचयोनिहेतुस्तदनुसारेण, संसारधारायाः प्रवाहवत् प्रवृत्ते । सर्वं स्थावरजङ्गमात्मकं जगत् कर्मवशाद् देवादिरूपमभवदित्यर्थः । गो० ]

२७ । उपाधिभेदेन ब्रह्मादिरूपोऽपि त्वमेवेत्याह—रजोगुणतस्तद्रूपोपाधेः, जगतः सर्वकारणम्, सर्वस्य जगतः कारणमित्यर्थः । आर्षत्वात् समासः । अस्य लये नाशनिमित्तं त्वमेव रुद्रस्तमउपाधिक इत्यर्थः । एवं त्वन्मायाया गुणभेदैः सत्त्वरजस्तमोभिरेव तत्तत्प्राधान्येन बुद्धेर्जाग्रदादयो वृत्तय इत्यर्थः । रा० ।

[ त्वं रजोगुणत इति । रजोगुणतो रजोगुणेन त्वमेव ब्रह्मा सन् जगत्सर्गस्य कारणम्, सत्त्वात् सत्त्वगुणाश्रयात् अस्य जगतः पालको विष्णुरिति सद्भिरुच्यते, अस्य जगतो लये प्रलयार्थं त्वन्मायागुणभेदतः गुणविशेषस्तमोगुणस्तस्मात्तदाश्रयात् त्वमेव रुद्र इत्युच्यते । गो० ]

२८ । त्वं त्वेतदवस्थात्रयरहित इत्याह तासामिति । स्वप्नसुषुप्त्योरभावात्तत्प्रतिद्वन्द्विजाग्रदवस्थाया अप्यभाव इति भावः । रा० ।

---

1 क ख घ 'जगतः सर्वका-' । 2 क-ख घ 'बुद्धिजैर्गुणैः' । 3 ग 'क्षण, साक्षी' । 4 ग-ङ 'रामस्त्वं चिन्म' ।

सृष्टिलीलां यदा कर्तुमीहसे रघुनन्दन ।
अङ्गीकरोषि मायां [1]त्वं तदा [2]वै गुणवानिव ॥ २९ ॥
राम माया द्विधा भाति विद्याऽविद्येति ते सदा ।
प्रवृत्तिमार्गनिरता अविद्यावशवर्त्तिनः ।
निवृत्तिमार्गनिरता वेदान्तार्थविचारका' ॥ ३० ॥

---

दित्यादि । वृत्तय परिणामा । बुद्धिजा अन्त करणजन्या वैलक्षण्यहेतव । साक्षी चिन्मयोऽव्यय इति । साक्षी द्रष्टा, चिन्मयश्चित्स्वरूप , अव्ययोऽपक्षयशून्य ।

२९ । नरो० । एवञ्चेत् तर्हि कथ मम सृष्टादिकारणत्वमित्यत आह—सृष्टिलीलामित्यादि । गुणवानिवेति परमार्थतो निर्गुण इति भाव ।

३० । नरो० । इदानी मायाया द्वैविध्यमाह—राम मायेति । प्रवृत्तिमार्गनिरता

---

[ ननु मायागुणग्रहणाद् जीवान्मम को विशेष इत्यत आह—जाग्रदित्यादि । जाग्रत्-स्वप्नसुषुप्तिसञ्ज्ञा बुद्धिजा वृत्तयो गुणा गुणनिमित्ता । तथा च स्मृति —

सत्त्वाज्जागरण विद्याद् रजस· स्वप्नमादिशेत् ।
प्रस्वाप तमसा जन्तोस्तुरीय त्रिपु सन्ततम् ॥ इति । ( भागवत० ११।२५।१९ । )
'बुद्धेर्जागरण निद्रा सुषुप्तिरिति वृत्तय' इति च ।

हे राम, त्वं तासां वृत्तीनां विलक्षणस्ताभ्यो भिन्न·, यत· साक्षी अवस्थात्रयद्रष्टा । तत्र हेतु·—चिन्मयो नित्यज्ञानमय , अतोऽव्ययो लयादिशून्योऽप्रच्युतस्वरूप इत्यर्थ । अयं भाव·—जीवो हि बुद्धिवृत्तिग्रहणे अवस्थात्रयवान् भवति, त्वन्तु तासां साक्षित्वेन वर्तमानस्तुरीयो नित्यप्रबुद्धैकरूप इति महान् भेद । गो० ]

२९ । सृष्टिलीलामित्युपलक्षण स्थित्यादेरपि । यदा ईहसे इच्छसि तदा मायामङ्गीकरोषि तत्कल्पित तत्कृतसम्बन्ध मन्यसे । तदा वस्तुतोऽगुणोऽपि गुणवानिवाऽऽभासीति शेष । रा० ।

[ननु यद्यहमप्रच्युतस्वरूपस्तुरीयस्तर्हि किं मायावलोकनाद्यै ? तया विना अविकारिणस्ते सृष्टिकरणादेरसम्भवादित्याह—सृष्टिलीलामित्यादि । सृष्टिलीलां कर्त्तुं यदेहसे इच्छां करोषि तदा त्व मायामङ्गीकरोषि ईक्षसे, तदैव प्रच्युतस्वरूपस्त्व गुणवानिव भासि । गो० ]

३० । तव मायैव संसारस्य मोक्षस्य च दाने समर्थेत्याह—रामेति । विद्या तत्त्वज्ञानम् । अविद्या संसारस्थूलकारणम् । तदुक्त मार्कण्डेयेन—

---

1 ग-ङ-छ 'वै', च 'च' । 2 ग-ङ-च-छ 'त्व' ।

त्वद्भक्तिनिरता ये [1]च ते वै विद्या[2]मयाः स्मृताः ।
अविद्यावशगा ये तु नित्यं संसारिणश्च ते ।
विद्याऽ[3]भ्यासरता ये तु नित्यमुक्तास्त एव हि ॥ ३१ ॥
लोके त्वद्भक्तिनिरतास्त्वन्मन्त्रोपासकाश्च ये ।
विद्या प्रादुर्भवेत् तेषां नेतरेषां कदाचन ॥ ३२ ॥

---

प्रवृत्तेरुपायो यो मार्गस्तत्राऽऽसक्ता इत्यर्थः । प्रवृत्तिरूपे मार्गे आसक्ता इत्यर्थो वा । निवृत्तेरुपायो यो मार्गस्तत्र निरता निवृत्तिमार्गनिरता, यद्वा निवृत्तिरूपे मार्गे निरता निवृत्तिमार्गनिरता ।

३१ । नरो० । विद्यामया विद्याप्रचुरा प्रचुरविद्या वा । अविद्यावशवर्तित्वे का हानिरिति चेत्तत्राऽऽह—अविद्यावशगा इति । विद्याप्राचुर्येण किमित्यत आह—विद्याभ्यासरता इति । 'नाहं देहश्चिदात्मे'ति बुद्धेः पुनः पुनः करणं विद्याभ्यासः ।

३२ । नरो० । ननु तर्हि सर्वैरेव विद्याऽभ्यस्यतामित्यत आह—लोके इत्यादि ।

---

सा विद्या परमा मुक्तेर्हेतुभूता सनातनी ।
संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी ॥ इति । देवीमाहात्म्य० १अ॰, ४४ श्लो० । रा० ।

[ मायाप्रवृत्तेर्द्विधात्वमाह—रामेति । माया द्विप्रकारा भाति—विद्याऽविद्येति । विद्याविद्ययोर्मायाकार्यत्वेऽपि अभेदान्मायेत्युक्तम्, वृत्तिरूपत्वात् । तथा च भागवतम्—

'विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् । ११।११।३ । इति ।

अत्राविद्यावशवर्तिनो ये जीवास्ते प्रवृत्तिमार्गनिरता भवन्ति कर्मकाण्डाधीनत्वात्, यदुक्तम्—'अविद्यावद्विषयो वेद' इति । ये विद्यायुक्तास्ते वेदान्तार्थस्य परब्रह्मणो विचारका विवेचनापराः, तल्लिङ्गं निवृत्तिमार्गनिरता इति । गो० ]

३१ । विद्यामयास्तत्त्वज्ञानप्रधानाः सन्तोऽपि प्रारब्धकर्मणो विक्षेपेण पुनः पुनस्तदनुसन्धानवन्त इत्यर्थः । रा० ।

[ वै निश्चये, विद्यामयाः स्मृता उक्ता ऋषिभिः । अविद्यायाः संसारहेतुत्वं विद्याया मुक्तिहेतुत्वमाह—अविद्येति । ये जीवा अविद्यावशगास्ते संसारिणः निरन्तरजन्ममरणादिदुःखभाजः । ये तु विद्याभ्यासरतास्ते नित्यमुक्ताः । तदुक्तं श्रीभागवते—

योऽविद्यया युक् स च नित्यबद्धो
विद्यामयो यः स तु नित्यमुक्तः ।११।११।७ । इति ।

एव हीति द्वाभ्यामतिनिश्चय उक्तः । गो० ]

३२ । [ विद्योत्पत्तिश्च त्वद्भक्तिं विना न भवतीत्याह—लोके इत्यादि । गो० ]

---

1. ङ 'तु' । 2. ङ '-समाश्रिताः' । 3. क 'भ्यासे रता' ।

अतस्त्वद्भक्तिसम्पन्ना मुक्ता एव न संशयः ।
त्वद्भक्त्यमृतहीनानां मोक्षः स्वप्नेऽपि नो भवेत् ॥ ३३ ॥
किं राम बहुनोक्तेन सारं किञ्चिद् ब्रवीमि ते ।
साधुसङ्गतिरेवात्र मोक्षहेतुरुदाहृतः[1] ॥ ३४ ॥
साधवः समचित्ता ये निस्पृहा [2]विगतैषणाः ।
दान्ताः प्रशान्तास्त्वद्भक्ता निवृत्ताखिलकामनाः ।
इष्टप्राप्तिविपत्त्योश्च समाः सङ्गविवर्जिताः ॥ ३५ ॥

---

३४ । नरो० । सारं न्याय्यम् । साधुसङ्गतिः साधुसङ्गः ।

३५ । नरो० । के साधवः इत्यपेक्षायामाह—साधव इति । समं मित्रशत्रुविषयरागद्वेषरहितं चित्तं येषां ते । निस्पृहा यत्नं विना उपस्थितेऽप्यर्थे स्पृहाशून्या इत्यर्थः । विगतैषणा विद्यमानेऽपि स्वत्वास्पदीभूते उपादेयपदार्थे गतभोगेच्छा इत्यर्थः । दान्ता दमाश्रया, दमो बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्त्तनम् । प्रशान्ता शमाश्रया । श्रवणादिविषयेभ्यो मनसो निग्रहः शमः । यद्वा प्रशान्ता रागादिदोषरहिता । इष्टप्राप्तिविपत्त्योश्च समा इति, इष्टप्राप्तौ हर्षशून्या विपत्तौ च विषादशून्या इत्यर्थः ।

---

३३ । मुक्ता एव । तेषां तत्त्वज्ञानस्यावश्यम्भावित्वादिति भावः । व्यतिरेकमप्याह—त्वद्भक्तीति । रा० ।

३४ । भक्तिरेव कथमिति चेत्तस्या अपि किञ्चिद् गुप्तं कारणमस्तीत्याह—किं रामेति । ते इत्यस्याग्रत इति शेषः । स्वशिष्यविश्वासार्थं भगवदग्रत एतदुक्तिः । रा० ।

[ अलं साधनापेक्षया सत्सङ्गतिरेवात्र मोक्षस्य प्रधानं हेतुरित्याह—किं रामेत्यादि । तदुक्तं श्रीभागवते—

संयोगः संसृतेर्हेतुरसत्सु विहितो धिया ।
स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥ इति । गो० ]

३५ । साधुस्वरूपज्ञान एव तत्सङ्गतिः शक्येत्यतस्तल्लक्षणमाह—साधव इति । समचित्ताः शत्रुमित्रयो रागद्वेषहीनचित्ताः, अत एव निस्पृहा रागद्वेषकारणीभूतस्पृहाहीनाः, विगतैषिणस्त्यक्तपुत्रवित्तादीच्छाः, दान्ता बहिरिन्द्रियनिग्रहवन्तः, शान्ता अन्तरिन्द्रियान्तःकरणनिग्रहवन्तः, विगतैषिण इत्यस्यैव व्याख्यानं निवृत्ताखिलकामना इति । समा हर्षविषादरहिताः, सङ्गवर्जिताः दुःसङ्गरहिताः । रा० ।

---

1. क-ख-घ-ङ '-हृता' । 2. क-ख-ग 'विगतैषिणः' ।

सन्न्यस्ताखिलकर्माणः सर्वदा ब्रह्मतत्पराः ।
[1]यमादिगुणसम्पन्नाः सन्तुष्टा येन केनचित् ॥ ३६ ॥
सत्सङ्गमो भवेद् यर्हि त्वत्कथाश्रवणे रतिः ।
समुदेति ततो भक्तिस्त्वयि राम सनातने ॥ ३७ ॥
[2]त्वद्भक्तावुपपन्नायां विज्ञानं विपुलं स्फुटम् ।
उदेति मुक्तिमार्गोऽयमाद्यश्चतुरसेवितः ॥ ३८ ॥

---

३६ । नरो० । यतो निवृत्ताखिलकामना अतः सन्न्यस्ताखिलकर्माणः । यद्वा [पूर्वत्र] निवृत्ताखिलकामना इत्यनेन काम्यकर्मत्यागः सूचितः । सन्न्यस्ताखिलकर्माणः इत्यनेन नित्यनैमित्तिककर्मत्यागः सूचितः । ब्रह्मतत्परा वेदासक्ता इत्यर्थः । यमादिगुणसम्पन्ना इति । आदिपदेन नियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधीनां ग्रहणम् । तत्र—अहिंसासत्यास्तेय ब्रह्मचर्यापरिग्रहा यमाः । शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः । करचरणादिविशेषलक्षणानि पद्मस्वस्तिकादीनि आसनानि । रेचकपूरककुम्भकलक्षणाः प्राणनिग्रहोपायाः प्राणायामाः । इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः । अद्वितीयवस्तुनोऽन्तरिन्द्रियधारणं धारणा । निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधानं समाधिः । सन्तुष्टा येन केनचिदिति, यथालाभसन्तुष्टा इत्यर्थः ।

३७ । नरो० । साधुसङ्गतेः परम्परया मुक्तिहेतुत्वं दर्शयन् आह—सत्सङ्गम इत्यादि । सत्सङ्गमो यर्हि भवेत् तर्हि त्वत्कथाश्रवणे रतिः समुदेतीत्यन्वयः । सत्सङ्गमः साधुसङ्गतिरित्यर्थः । सनातने सदैकरूपे ।

३८ । नरो० । विपुलं बृहत् । स्फुटं प्रव्यक्तम् । मुक्तेरुपायो मार्गो मुक्तिमार्गः । आद्यः प्रथमः, चतुरसेवितोऽनलससेवितः ।

---

[ प्रसङ्गात् साधुलक्षणमाह—साधव इत्यादिसार्द्धद्वयेन । समचित्ताः शत्रुमित्रादिबुद्धिहीनाः, दान्ता जितेन्द्रियाः, प्रशान्ताश्चित्तविक्षेपरहिताः, निवृत्ताखिलकामना ऐहिकामुष्मिककार्यरहिताः, अभीप्सितप्राप्तिनाशयोस्तुल्याः, स्त्रीपुत्रादिष्वलम्पटाः । गो० ]

३६ । यमादयः—यम-नियमासन-प्राणायाम-प्रत्याहार-ध्यान-धारणा-समाधयो योगशास्त्रोक्ताः । रा० ।

३७ । यर्हि यदा तेषां सत्सङ्गमो भवेत्तदा त्वत्कथाश्रवणे रतिः समुदेतीत्यर्थः । रा० ।

[ ननु साधनं विना साधुसङ्गमात्रेण कथं मोक्षः ? तत्सङ्गात् सर्वसाधनानां क्रमेण स्वयमुत्पत्तेरित्याह—सत्सङ्गम इत्यादि । गो० ]

३८ । अयमाद्यो मुख्यश्चतुरैः कुशलैः सेवितो मुक्तेर्मार्गः । रा० ।

---

1. ङ 'चमादि-', छ 'शमादि-' । 2 ग ङ-च-छ 'त्वद्भक्त्यासुप-' ।

तस्माद्राघव सद्भक्तिस्त्वयि मे प्रेमलक्षणा ।
सदा भूयाद्धरे' सङ्गस्त्वद्भक्तेषु विशेषत. ॥ ३९ ॥
अद्य मे सफल जन्म भवत्सन्दर्शनादभूत् ।
अद्य मे क्रतव सर्वे बभूवु' सफलाः [1]प्रभो ॥ ४० ॥
दीर्घकाल मया तप्तमनन्य[2]मतिना तप ।
[3]तस्येह तपसो राम फल तव [4]यदर्चनम् ॥ ४१ ॥
सदा मे सीतया [5]सार्द्धं हृदये वस राघव ।
गच्छतस्तिष्ठतो वाऽपि स्मृति' स्यान्मे सदा त्वयि ॥ ४२ ॥
इति स्तुत्वा रमानाथमगस्त्यो मुनिसत्तम ।
ददौ [6]चापं महेन्द्रेण रामार्थे स्थापित पुरा ॥ ४३ ॥

---

३९ । नरो० । उपसंहरति तस्मादिति ।

---

[ त्वद्भक्तावुपपन्नायामित्यादि । विपुलं यथा स्यात्तथा चतुरै ससारविचारनिपुणै सेवित. परिशीलित । गो० ]

३९ । तस्माद् हे राघव, त्वयि प्रेमलक्षणा सद्भक्तिर्मे सदा भूयात् । हे हरे, त्वद्भक्तेषु विशेषत सङ्गो भूयादित्यनुषङ्ग । रा० ।

४० । क्रतव सफला बभूवु त्वत्प्रीतिरेव क्रतूनां मुख्यं फलम्, सा च मदाश्रमे आगमनात् त्वया व्यक्तीकृता । रा० ।

४३ । चापादिदानमाह वाल्मीकीये—

'धनुर्वरमिदं दिव्यं वज्रहेमपरिष्कृतम् ।
वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा ॥
अमोघा इषवश्चेमे ब्रह्मदत्ता सुतेजस ।
दत्ता मह्यं महेन्द्रेण तूणौ चाक्षयसायकौ ॥
संपूर्णौ निशितैर्बाणैर्ज्वलद्भिरिव पन्नगै. ।
महाकोषनिवासी च महासिर्हेमविग्रह. ॥ इति । ३।१८।३७—३९ ।

रामार्थे इति । व्यक्तमाह वाल्मीकीये—

'पुरा चोक्तोऽहमिन्द्रेण सहस्राक्षेण राघव ।
यदा राम इहाऽऽगच्छेत् तस्मै देयमिदं धनु ॥ इति । ३।१८।४२ ।

---

1 ग 'विभो' । 2 ग '-मनसा' । 3. ग 'तस्य भोत्तप-', ङ 'तस्य मत्तप ', च 'तस्य तत्तप-', तस्मात्त तप-' । 4 ग ङ-च-छ 'पदा ' । 5 ग 'राम' । 6. छ 'माघ' ।

[1]अक्षय्यौ बाणतूणीरौ खड्गो रत्नविभूषित‍ः ।
जहि राघव भूभारभूतं राक्षसमण्डलम् ॥ ४४ ॥
यदर्थमवतीर्णोऽसि मायया मनुजाकृतिः ।
इतो योजनयुग्मे तु पुण्यकाननमण्डितः ।
अस्ति पञ्चवटी नाम्ना आश्रमो [2]गौतमीतटे ॥ ४५ ॥
नेतव्यस्तत्र ते कालः शेषो रघुकुलोद्वह ।
तत्रैव [4]बहुकार्याणि देवानां कुरु सत्पते ॥ ४६ ॥
श्रुत्वा तदाऽगस्त्यसुभाषितं वचः स्तोत्रञ्च तत्त्वार्थसमन्वितं विभुः ।
मुनिं समाभाष्य मुदाऽन्वितो ययौ प्रदर्शितं मार्गमशेषविद्धरिः ॥ ४७ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वर-संवादे अरण्यकाण्डे तृतीयोऽध्यायः ॥ ३ ॥

---

४४ । नरो० । बाणपूर्णौ तूणीरौ । राक्षसमण्डलं रक्षः समूहम् ।
४७ । नरो० । अशेषवित् सर्वज्ञः ।

[ तृतीयाध्यायव्याख्या समाप्ता ॥ ३ ॥

---

४५ । योजनयुग्मे इति । तथाच वाल्मीकीये—
इतो द्वियोजने राम स्वादुमूलफलैर्युतः ।
देशः शुचिजलः श्रीमान् पञ्चवटीति विश्रुतः ॥ इति । ३।१९।१४ ।
गौतमीतटे गोदावरीतीरे । तथाच वाल्मीकीये—
'स देशः श्लाघनीयश्च नातिदूरे च राघव ।
गोदावर्याः समीपे च तत्र सीताऽभिरंस्यते ॥ ३।१९।१९ ।

---

1 ग-च छ 'अचयौ', ङ 'तूणीरावचयशरौ खड्गौ रत्नविभूषितौ'। 2 ङ 'गोमती-'। 4. ग 'दैव-'।

# चतुर्थोऽध्यायः

[1]श्रीमहादेव उवाच—

मार्गे व्रजन् ददर्शाथ शैलशृङ्गमिव स्थितम्।
वृद्धं जटायुषं रामः किमेतदिति विस्मितः॥ १॥
[2]धनुरानय सौमित्रे राक्षसोऽग्र पुरः स्थितः।
इत्याह लक्ष्मणं रामो हनि[3]ष्याम्यृषिभक्षकम्॥ २॥
तच्छ्रुत्वा रामवचनं गृध्रराड् भयपीडितः।
वधा[4]र्होऽहं न ते राम पितु[5]स्तेऽहं प्रियः सखा॥ ३॥

१। रामो शैलशृङ्गमिव स्थितं वृद्धं जटायुषं ददर्श। अथानन्तरं दर्शनानन्तरमित्यर्थः, स रामः, एतत् किम् इति विस्मितोऽभवदिति शेषः। जटायुषि राक्षसभ्रमः पाश्चात्त्ये वाल्मीकीये दृश्यते, न तत्र तस्य वधार्थं धनुरानयनादिकम्। प्राच्ये राक्षसभ्रमोऽपि न। तथा च पाश्चात्त्ये—

अथ पञ्चवटीं गच्छन्नन्तरा रघुनन्दनः।
आससाद महाकायं गृध्रं भीमपराक्रमम्॥
तं दृष्ट्वा तौ महाभागौ वनस्थं रामलक्ष्मणौ।
मेनाते राक्षसं पक्षिं ब्रुवाणौ को भवानिति॥ इत्यादि ३।१४।१-२।

प्राच्ये पुनः—

पञ्चवटीन्तु गच्छन्तमन्तरा रघुनन्दनम्।
आससाद महान् गृध्रो जटायुरिति विश्रुतः॥
स रामं श्लक्ष्णया वाचा सौम्यया प्रीयमाणया।
उवाच वत्स मां विद्धि वयस्यं पितुरात्मनः॥ इत्यादि ३।२०।१-२।

२। [ धनुरानय सज्यं कुरु। गो० ]

विस्मयानन्तरं यदा राक्षसोऽयमिति ज्ञानं तदैवाऽऽह—धनुरानय इति। हे सौमित्रे, पुरोऽग्रतोऽयं राक्षसः स्थितः, अतो धनुरानय आनीय मह्यं देहीत्यर्थः। ऋषिभक्षकं हनिष्याम्यह-मिति रामो लक्ष्मणम् आह।

३। भयपीडितो गृध्रराड् जनककन्या सीता मे रक्षितव्या इत्यन्तमाह।

1 क-ख 'सूत उवाच', ङ 'श्रीमहादेव उवाच' इति नास्ति। 2 ङ 'धनुष्मान् भव', च छ 'धनुरालम्ब्य'। 3 ङ '-ष्यत्यृषि-'। 4 ङ '-ह्योऽयं'। 5 च '-रेव'।

जटायुर्नाम भद्रं ते गृध्रोऽहं प्रियकृत् तव ।
पञ्चवट्यामहं वत्स्ये तवैव [1]प्रियकाम्यया ॥ ४ ॥
[2]मृगयायां कदाचित्तु प्रयाते लक्ष्मणे[3]ऽपि च ।
सीता जनककन्या [4]मे रक्षितव्या प्रयत्नतः ।
श्रुत्वा तद् गृध्रवचनं रामः सस्नेहमब्रवीत् ॥ ५ ॥
साधु गृध्रमहा[5]राज तथैव कुरु मे प्रियम् ।
अत्रैव मे समीपस्थो नातिदूरे वने [6]वसन् ॥ ६ ॥
इत्याम[7]न्त्र्य तमालिङ्ग्य ययौ पञ्चवटीं [8]प्रभुः ।
लक्ष्मणेन [9]सह भ्रात्रा सीतया रघुनन्दनः ॥ ७ ॥

---

४ । वत्स्ये वसामीत्यर्थः । आर्षप्रयोगः । रा० ।
अत्र रामप्रश्नेन जटायुषः स्ववंशवर्णनं वाल्मीकीये, तच्चारण्यकाण्डे विंशसर्गे ।

५ । कदाचित् त्वयि लक्ष्मणेऽपि च मृगयायां प्रयाते प्रस्थिते शून्ये आश्रमे इत्यर्थः । जनककन्या सीता मे मम रक्षितव्या भविष्यतीत्यर्थः ।

६ । गृध्रमहाराजेति षष्ठीतत्पुरुषः । अत्रैव वने वसन् मे प्रियं कुर्विति सम्बन्धः । रा० ।
हे गृध्रमहाराज, मे समीपस्थो भव, अत्रैव वने नातिदूरे वसन् मे प्रियं कुर्वित्यन्वयः ।

७ । इति आमन्त्र्य सम्भाष्य आलिङ्ग्य च तं यथास्थानं वासम् उपदिशन् प्रभुः रामः पञ्चवटीं ययौ इत्यर्थः । एतेन लेखेन 'स्नानं कुर्वन्त्यनुदिनं त्रयस्ते गौतमीजले' इति वक्ष्यमाणेन च जटायुषं परित्यज्यैवैतेषां गमनमिति सम्भाव्यते । किन्तु वाल्मीकीये—

स तत्र सीतां परिदाय मैथिलीं सहैव तेनातिबलेन पक्षिणा ।
जगाम पञ्चावटमाश्रमं ततो जटायुषा तेन समेत्य वीर्यवान् ॥ ३।२०।३७ ।

इत्यादिना जटायुषा सहैव तेषां गमनम्,

'कथाः कथयतस्तस्य सह भ्रात्रा महात्मनः ।
गृध्रराजः समागम्य राघवं वाक्यमब्रवीत् ॥
महेष्वास महाभाग महाबल महाभुज ।
आपृच्छे त्वां नरश्रेष्ठ गमिष्यामि स्वमालयम् ॥ ३।२३।४-५ ।

---

1 क 'हित-' । 2 च 'प्रयाते मृगयाया वै कदाचिल्लक्ष्मणेन च' । 3 ङ 'त्वयि' । 4. क 'च' । 5. च '-भाग' । 6. ङ-च 'वस' । 7 क-ख-घ '-न्त्रितमा-' । 8 ग 'विभुः' । 9. च 'सम' ।

गत्वा [1]ते [2]गौतमी[3]तीरं पञ्चवट्यां सुविस्तरम् ।
मन्दिरं कारयामास लक्ष्मणेन सुबुद्धिना ॥ ८ ॥
तत्र ते न्यवसन् सर्वे [4]गङ्गाया उत्तरे तटे ।
[5]कदलीपनसाम्रादिफलवृक्षसमाकुले ॥ ९ ॥

९ । नरो० । कदलीपनसाम्रादयश्च ते फलोपलक्षितवृक्षाश्च तैः समाकुले व्याप्ते ।

तमुवाच ततो रामो लक्ष्मण च खगेश्वरम् ।
गम्यतां पतगश्रेष्ठ पुनः सन्दर्शनाय न ॥
गृध्रराजे गते तस्मिन् राघव प्रियदर्शन ।
पर्णशालामुपागम्य प्राविशत् सह सीतया ॥ ३।२३।८-९ ।

इत्यादिना च पञ्चवट्या आश्रमत एव तस्य प्रतिनिवर्तनम् । पाश्चात्ये ३।१६-१७ सर्गयोर्जटायुषा सहाऽऽगमन दृश्यते, किन्तु तस्य विसर्जन न दृश्यते ।

८ । ते गौतमीतीर गोदावरीतीरं गत्वा पञ्चवट्यां पञ्चवटीसमीपे स्थिता , ततस्तत्र रामो लक्ष्मणेन मन्दिरं कारयामास । रा० ।

गौतम्यत्र गोदावरी । व्यक्तमाह वाल्मीकीये—

'इयमादित्यसङ्काशैः पद्मैः सुरभिगन्धिभि ।
अदूरे दृश्यते रम्या पुण्या गोदावरी सरित् ॥ इति ३।२१।११ ।

मन्दिरं पर्णशालाम् । वाल्मीकीये—

पर्णशालां स मतिमांश्चकार विपुलां तदा ।
मनोज्ञां राघवस्यार्थे प्रेक्षणीयां मनोरमाम् ॥ इति । ३।२१।२३ ।

पाश्चात्ये पुनः—

एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा ।
अचिरेणाऽऽश्रमं भ्रातुश्चकार सुमहाबल ॥
पर्णशालां सुविपुलां तत्र सङ्घातमृत्तिकाम् ।
सुस्तम्भां मस्करैर्दीर्घैः कृतवंशां सुशोभनाम् ॥
शमीशाखाभिरास्तीर्य दृढपाशावपाशिताम् ।
कुशकाशशरैः पर्णैः सुपरिच्छादितां तथा ॥

1. च 'च' । 2 ङ 'गोमती-' । 3. च '-तीरे' । 4 ङ 'गोमत्या' । 5. क-ख-घ 'वादस्व ' ।

विविक्ते जनसम्बाधवर्जिते [1]नीरुजस्थले ।
विनोदयञ् जनकजां लक्ष्मणेन विपश्चिता ॥ १० ॥
अध्युवास सुखं रामो देवलोक इवा[2]मरः ।
कन्दमूलफलादीनि लक्ष्मणोऽनुदिनं तयोः ॥ ११ ॥
आनीय प्रददौ रामसेवातत्परमानसः ।
धनुर्बाणधरो नित्यं रात्रौ जागर्त्ति सर्वतः ॥ १२ ॥
स्नानं कुर्वन्त्यनुदिनं [3]त्रयस्ते [4]गौतमीजले ।
[5]उभयोर्मध्यगा सीता कुरुते च गमा[6]गमौ ॥ १३ ॥
आनीय सलिलं नित्यं लक्ष्मणः [7]प्रीतमानसः ।
सेवतेऽहरहः प्रीत्या एवमासन् सुखं त्रयः ॥ १४ ॥
एकदा लक्ष्मणो राममेकान्ते समुपस्थितम् ।
विनयावनतो भूत्वा पप्रच्छ परमेश्वरम् ॥ १५ ॥
भगवञ् श्रोतुमिच्छामि मोक्षस्यैकान्तिकीं गतिम् ।
त्वत्तः कमलपत्राक्ष सङ्क्षेपाद्वक्तुमर्हसि ॥ १६ ॥

---

१० । नरो० । विविक्ते विजने । तत्र हेतु —जनसम्बाधवर्जित इति । निर्गास्ति रुजा रोगो यत्र तादृशं स्थलं यत्र तस्मिन् तथा । विनोदयन् आनन्दयन्, विपश्चिता पण्डितेन ।

१२ । नरो० । रामसेवायां तत्परम् आसक्तं मानसं यस्य स तथा ।

१६ । नरो० । ऐकान्तिकीम् अव्यभिचारिणीं गतिं स्वरूपम् ।

---

समीकृततलां रम्यां चकार सुमहाबलः ।
निवासं राघवस्यार्थे प्रेक्षणीयमनुत्तमम् ॥ इति । ३।१५।२०-२३ ।

१० । जनसम्बाधो जनसमूहः, निष्क्रान्ता रुजा पीडा यस्मात्तादृशस्थले लक्ष्मणेन सह अध्युवासेति सम्बन्धः । रा० ।

[ विविक्ते जनसचाररहिते । नीरुजस्थले निरुपद्रवस्थाने, उपद्रवभिन्ने वा । गो० ]

१४ । सेवते रामं सीतां च । एवं पूर्वपूर्वकार्याणि कुर्वन्तः सुखम् आसन् ।

१६ । ऐकान्तिकीं गतिमव्यभिचारि कारणमित्यर्थः । रा० ।

त्वत्तः श्रोतुमिच्छामि, त्वं सक्षेपात् सङ्क्षेपेण वक्तुमर्हसीत्यर्थः ।

---

1. ङ 'जलसन्निधौ'। 2. '-पर'। 3 च 'ततस्ते'। 4. ङ 'गौमती-'। 5 च 'तयोर्मध्यगता'। 6 क '-गमम्'। 7. ङ-च 'प्रीतिमा-'।

ज्ञानं विज्ञानसहितं भक्तिवैराग्य[1]बृंहितम् ।
आचक्ष्व [2]मे रघुश्रेष्ठ वक्ता [3]नान्योऽस्ति भूतले ॥ १७ ॥

श्रीराम उवाच—

शृणु वक्ष्यामि ते [4]वत्स गुह्याद् गुह्य[5]तमं परम् ।
यद् विज्ञाय नरो जह्यात् [6]सद्यो वैक[7]ल्पिकं भ्रमम् ॥ १८ ॥

आदौ मायास्वरूपं ते वक्ष्यामि तदनन्तरम् ।
ज्ञानस्य[8] साधनं पश्चाज् [9]ज्ञानविज्ञानसं[10]युतम् ।
ज्ञेयञ्च परमा[11]नन्दं यज् ज्ञात्वा [12]मुच्यते[13] भयात् ॥ १९ ॥

---

१७ । नरो० । मोक्षस्वरूपमात्रमभिधाय यदि श्रीरामो विरमेत्तदा ज्ञानादिकं कथमहं जानीयामित्याशङ्क्याऽऽह—ज्ञानमित्यादि । भक्तिवैराग्यबृंहितमिति, भक्तिवैराग्याभ्यां बृंहितं वर्द्धितमित्यर्थः । एतत्पदकीर्त्तनेन आत्मनो भक्तिवैराग्यजिज्ञासाऽपि सूचिता । मामेव कथं पृच्छसीति चेत्तत्राऽऽह—वक्ता नान्योऽस्ति भूतले इति ।

१८ । नरो० । त्वया यत् पृष्टं तद् यस्मैचित् कस्मैचित् न वक्तव्यमिति सूचयन्नाह—शृणु वक्ष्यामीति । गुह्याद् गुह्यतमं गुह्यतमादपि गुह्यतममित्यर्थः । परमुत्कृष्टं यज्ज्ञानं विज्ञाय शिक्षित्वा सद्यस्तत्क्षणात्, वैकल्पिकं द्वैतभवमित्यर्थः ।

१९ । नरो० । मोक्षस्तावदनर्थनिवृत्तिर्निरतिशयब्रह्मानन्दावाप्तिश्च । अनर्थस्तावत्

---

१७ । ननु मोक्षकारणं ज्ञानमिति प्रसिद्धमेवेति चेत्तत्स्वरूपमेव प्रश्नविषय इत्याह—ज्ञानमिति । ज्ञानं श्रवणमननजन्यम्, विज्ञानं निदिध्यासनजम् । भक्तिर्ज्ञानविषये प्रेम उक्तस्वरूपम्, वैराग्यं तदतिरिक्ते प्रेमाभावरूपम् । रा० ।

[ ज्ञानं विज्ञानसहितमिति । वक्ता नान्योऽस्ति भूतले इति त्वामीश्वरं विनाऽन्येषां निश्चयज्ञानाभावात् । गो० ]

१८ । वैकल्पिकं भ्रमम्—विकल्पमेव वैकल्पिकम्, विनयादित्वाट्ठक् । 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प' इति योगसूत्रोक्तविकल्परूपं भ्रमम् । यथा—शशशृङ्गादि । यद्यपि तदलीकमेव तथाऽपि शशशृङ्गादिशब्दप्रयोगस्ततो बोधश्च भवत्येव तद्वदेव सर्वोऽपि व्यवहारः संसाररूपस्तं यज्ज्ञाने जह्यात्तद् गुह्यं वक्ष्यामीत्यन्वयः । रा० ।

१९ । तदुपयोगितया वक्ष्यमाणान्यन्यानि नाममात्रेण क्रमत उद्दिशति—आदाविति । रा० ।

---

1 च 'सम्मतम्' । 2 ग 'मा' । 3 ङ 'त्वत्तोऽस्ति नापर' । 4 छ 'षण्ड' । 5 क-ख-ग घ-च छ '-तर । 6 च 'मनो-' । 7 घ छ '-ल्पित' । 8 छ '-ञ्च' । 9 क ख ग घ 'ज्ञान वि' । 10 च '-मतम्' । 11 क-ख-घ-ङ-च-छ '-त्मानं' । 12. च 'मोत्स्यसे' । 13 छ '-तेऽशुभात्' ।

अनात्मनि शरीरादावात्मबुद्धिस्तु[1] या भवेत् ।
सैव माया [2]तयैवासौ संसारः परि[3]कल्प्यते ॥ २० ॥
[4]रूपे द्वे [5]निश्चिते पूर्वं मायायाः कुलनन्दन ।
[6]विक्षेपावरणे तत्र [7]प्रथम कल्पयेज्जगत् ॥ २१ ॥

---

संसारकारणं मायैव । तत्स्वरूपज्ञानं विना तन्निवृत्तिज्ञानं न भवेदिति ज्ञानजिज्ञासायां तस्य कारण विषयांश्च वक्तुं युज्यते इति हृदि कृत्वा प्रश्न विनाऽपि मायास्वरूपनिरूपणं ज्ञानसाधननिरूपण ब्रह्मस्वरूपनिरूपणञ्चाङ्गीकरोति—आदावित्यादिना । आदौ मायास्वरूपं ते वक्ष्यामि, तदनन्तर ज्ञानविज्ञानसयुत ज्ञानस्य साधनम्, पश्चाद् ज्ञेयञ्च परमानन्दमिति योजना । ज्ञेयञ्चेति चकारो भक्तिवैराग्ये समुच्चिनोति । भयात् ससारभयात् ।

२० । नरो० । इदानीं क्रमेणाङ्गीकृतानि निर्वहति—अनात्मनीत्यादि—ततो मुक्तिमवाप्नुयात् ( ४८ श्लो० ३४९ पृ० ) इत्यन्तेन । शरीरादावित्यादिपदेन इन्द्रियादेर्ग्रहणम् । सैवेत्येवकार इतरयोगव्यवच्छेदार्थ । संसारस्यान्यत् कारण नास्तीति सूचनाय तयैवेत्युक्तम् ।

२१ । नरो० । हे कुलनन्दन, मायाया विक्षेपावरणे द्वे रूपे पूर्वं निश्चिते इत्यन्वय ।

---

[ मायाञ्च ज्ञानहेतुञ्च ज्ञानविज्ञानमेव च ।
ज्ञेयञ्च परमं ब्रह्म समासात् प्राह राघवः ॥

ज्ञानं शास्त्रोत्थम्, विज्ञानमपरोक्षम् । पश्चात्तत्कथनानन्तर ज्ञानविज्ञानयुक्तं ज्ञेयं ताभ्यां बोध्यं परमानन्द ब्रह्म 'नित्यं विज्ञानमानन्दं ब्रह्मे'ति ( बृहदार० ३।९।२८ ) श्रुते' । एतज्ज्ञानफलमाह—यज्ज्ञात्वेति । भयात् संसारात् । गो० ] ।

२० । तत्र मायास्वरूपमाह—अनात्मनीति । आत्मबुद्धिरहमिति बुद्धि· । परिकल्प्यते अवस्तुभूत एव दृश्यते । रा० ।

[ तत्र प्रथम मायास्वरूपमाह—अनात्मनीति । सच्चिदानन्दरूपात्मनो भिन्ने शरीरादौ यया आत्मेति बुद्धिर्भवेत् सैव माया । साक्षाद्वक्तुमशक्यत्वाद् यत्तत्पदाभ्यां निरुच्यते । 'बुद्धिस्तु या भवे'दिति पाठे सैव बुद्धिर्माया । अविनाशित्वात् मायेत्युपचार·, तयैव मायया असौ ससार· परिवर्त्तते पुन· पुनर्भवतीत्यर्थ· । गो० ]

२१ । अथ तादृशशक्तिमत्त्वं मायाया दर्शयति—रूपे इति । पूर्वमित्यनेन तयो रूपयोरनादित्वं दर्शयति । के ते रूपे तत्राऽऽह—विक्षेपावरणे इति । विक्षेपशक्तिरावरणशक्तिश्चेत्यर्थ । प्रथमं विक्षेपरूपम् । रा० ।

---

1 च-छ '-श्च' । 2 छ 'तयैवा-' । 3 ग-ङ '-वर्त्तते', च 'कीर्तित.', छ '-कीर्त्त्यते' । 4. च-छ 'द्वे रूपे' । 5. च 'निर्मिते' । 6 च 'निक्षेपा-' । 7. च-छ 'प्रथम.' ।

लिङ्गाद्याब्रह्मपर्यन्तं स्थूल[1]सूक्ष्मविभेदतः ।
अपरं त्वखिलं ज्ञानं रूपमावृत्य तिष्ठति ॥ २२ ॥

मायया कल्पितं विश्वं परमात्मनि [2]केवले ।
रज्जौ भुजङ्गवद् भ्रान्त्या विचारे नास्ति किञ्चन ॥ २३ ॥

---

शक्तिशक्तिमतोरभेदमङ्गीकृत्येदमुक्तमिति नास्ति विरोधः। तयोः किं किं करोतीत्यपेक्षायामाह—तत्र प्रथममित्यादि। प्रथमं विक्षेपाख्यं रूपम्, कल्पयेत् सृजेदित्यर्थः।

२२। नरो०। स्थूलसूक्ष्मविभेदतः कार्यकारणभेदेनेत्यर्थः। तदुक्तम्—'विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जगत् सृजेदि'ति (वाक्यसुधा १३)। अपरं त्वखिलं ज्ञानं रूपमावृत्य तिष्ठतीति। अपरमावरणाख्यं रूपम् अवलोकयितुर्ज्ञानस्यैकदेशमपि अनाच्छाद्य न तिष्ठतीत्यर्थः। तथाच—

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा निष्प्रभं मन्यते चातिमूढः ।
तथा बद्धवद् भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ इति ।

हस्तामलक० १० श्लो०

२३। नरो०। तर्हि द्वैतापत्तिरित्यत आह—माययेति। केवले निर्धर्मके परमात्मनि विश्वं कल्पितमित्यन्वयः। कल्पितमारोपितम्। दृष्टान्तमाह—रज्जौ भुजङ्गवद् भ्रान्त्येति। यथा

---

२१-२२। [रूपे द्वे इति। पूर्वं जगदुत्पत्तिकाल एव मायाया द्वे रूपे स्वभावभूते विनिश्चिते वेदे इत्यर्थः। द्वैरूप्यमाह—विक्षेपावरणे इति। तत्र विक्षेपोऽन्यस्मिन् अन्यावभासः। शुक्तौ रजतवत। आवरणं शक्तिज्ञानाभाव इव (?)। यद्वा यथा मेघो विलोकयितृलोचनमपिधायाऽऽदित्यमण्डलं न दर्शयति, तथा प्रकाशमानमप्यखण्डं ब्रह्म न बुद्धिविषयीकरोति। तत्र तयोर्मध्ये प्रथमं विक्षेपरूपम् लिङ्गादि लिङ्ग सूत्र ब्रह्म ब्रह्माण्डगतं जगत् स्थूलसूक्ष्मरूपेण कल्पयेत्। एकमेवाखण्डचैतन्यरूपं ब्रह्म, विक्षेपशक्तिस्तु तद्रूपेण कल्पयेत्। यदुक्तं वेदान्तग्रन्थे—'विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्त जगत् सृजेदि'ति। अपरं रूपमावरणरूपम् अखिलं समस्तं ज्ञानमावृत्याऽऽच्छाद्य तिष्ठति। अतः स्वरूपबोधाभावात् असत्ये सत्यभ्रमाच्च संसारोऽपि माययैव पुनरावर्त्तते। गो० ]

२२। लिङ्गं महत्तत्त्वमाद्यं यस्य तच्च तद् ब्रह्मपर्यन्तम्। चतुर्मुखब्रह्मान्तमित्यर्थः। अपरमावरणरूपम्। तस्यान्वर्थत्वमाह—अखिलमिति। सर्वज्ञानरूपावरकत्वादावरणव्यवहारस्तत्रेति भावः। रा०।

२३। ननु माया कुत्राधिष्ठाने इदं जगत् कल्पितवती तत्राऽऽह—परमात्मनीति। तद्रूपं

---

1. ङ 'सूक्ष्मावि', क '-सूक्ष्माणि भेद-'। 2 ङ 'केवलम्'।

श्रूयते दृश्यते यद् यत् स्मर्यते वा नरैः सदा ।
असदेव हि तत् सर्वं यथा स्वप्नमनो[1]रथौ ॥ २४ ॥

देह एव हि संसारवृक्षमूलं दृढं स्मृतम् ।
तन्मूलः पुत्रदारादिबन्धः [2]सोऽप्यन्यथात्मनः ॥ २५ ॥

---

रज्जुसत्यतया सर्पसत्यत्वप्रतीतिस्तथा परमात्मसत्यतया विश्वसत्यत्वप्रतीतिरिति भावः । विचारे तत्त्वपरीक्षायाम् ।

२४ । नरो० । तदेवोपपादयति श्रूयते इति पद्येन । दृष्टान्तमाह—यथेति ।

२५ । नरो० । बन्धे ज्ञाते एव मोक्षज्ञानं भवतीति हृदि कृत्वाह—देह एवेति ।

---

चैतन्यमाच्छाद्य जगद्रूपं दर्शितमित्यर्थः । तत्र दृष्टान्तमाह—रज्जाविति । रज्ज्वज्ञानं यथा रज्जुमाच्छाद्य भुजङ्गं कल्पयति तद्वत् । विचारे विचारणे अधिष्ठानतत्त्वज्ञाने । रा० ।

[ प्रस्तुतमाह—माययेति । केवले निर्विकारे परमात्मनि उपादानरूपे मायया निमित्तभूतया विश्वं कल्पितं नानारूपतया बुद्धौ प्रकाशितम् । विचारे परमार्थे विचारे क्रियमाणे किञ्चन नास्ति, परमात्मन एव शेषत्वात् । अन्यस्मिन् अन्याधभासे दृष्टान्तमाह—भ्रान्त्येति । भ्रान्त्या भ्रमेण रज्जौ भुजङ्गवत्, यथा भ्रमविजृम्भितबुद्ध्या रज्जौ भुजङ्गज्ञानं भवति, विचारे तु रज्जुरेव । तथाच—

भ्रान्तिर्विपर्ययज्ञानं द्विधा साऽपि निगद्यते ।
अतत्त्वे तत्त्वरूपा सा तत्त्वे चातत्त्वरूपिणी ॥ इति । गो० ]

२४ । सर्वस्य मिथ्यात्वे दृष्टान्तौ । स्वप्ने श्रुतं दृष्टं स्मृतञ्च सर्वं मिथ्या, जागरे अनुभवात्तद्वत् । रा० ।

[ श्रूयते इत्यादि । ननु, प्रज्ञानगुणसत्ताकमध्यारोप्यते वा न वा,

'अध्यास्यते खपुष्पत्वमसत् कथमवस्तुनि'

इति भागवतोक्ते । सदेवाध्यस्यते भुजङ्गवत्, अत्यन्तमसज्जगद् भ्रान्त्याऽपि कथमध्यासयोग्य भवतु । तस्माद्विश्वमपि प्रसिद्ध तदस्तीत्याह श्रूयत इत्यादि । यथा स्वप्ने स्वप्नोपस्थित यत्किञ्चिन्मनोरथश्च मनसा कल्पितं सर्वमसत् तथा श्रूयते स्वर्गादि देवादि यद्दृश्यते इह लोके यत् स्मर्यते चिन्त्यते तत् सर्वमसदेव हीति । पुनरुक्त्या निश्चयं बोधयति । गो० ]

२५ । देह एवेति । तस्यैव सर्वसंसारकारणकर्मोत्पादकत्वादिति भावः । तदाह—तन्मूल इति । अन्यथा देहाभावे पुत्रादय आत्मनः किं भवन्ति, न किमपीत्यर्थः । रा० ।

---

1. ग-ङ च-छ '-रथ' । 2 क-ख-घ-ङ-च 'किन्तोऽन्यथा-', ग-छ 'शैतेऽन्यथा-' ।

जीवश्च परमात्मा च पर्यायो [1]नात्र भेदधी । 
[2]मानाभावस्तथा [3]देहे हिंसादिपरि[4]वर्जनम् ॥ २९ ॥
पराक्षेपादिसहनं सर्वत्रावक्रता तथा ।
मनोवाक्काय[5]सद्भक्त्या सद्[6]गुरो परिषेवणम् ॥ ३० ॥

---

व्यवस्थया स्थूलशरीरसूक्ष्मशरीरघटकावयवेभ्य इत्यर्थः। तयोर्वैलक्षण्ये हेतुर्निरामय इति, व्याधिशून्य इत्यर्थः।

२९। नरो०। नात्र भेदधीरिति, जीवपरमात्मनोर्भेदबुद्धिर्न कर्त्तव्येत्यर्थ । देहे मानाभाव, 'मनु बोधन' इत्यस्य प्रयोगात्। हिंसादिपरिविर्जनमिति, आदिपदेन असूयादे परिग्रहः। यद्वा मानाभावः स्वगुणश्लाघाभावः। देहे हिंसादिपरिविर्जनमिति, हिंसा प्राण-वियोगफलको व्यापारः, आदिपदेन प्रहारादेः परिग्रह , परिवर्जन सर्वतोभावेन त्याग ।

३०। नरो०। पराक्षेपादिसहनम् अन्यकर्तृकनिन्दादिक्षान्तिरित्यर्थ । आदिपदेन भर्त्सनापमानादेः परिग्रहः। अवक्रता आर्जवम्। मनोवाक्कायसद्भक्त्या मनसा वाचा कायेनाव्यभिचारिण्या भक्त्येत्यर्थः। सद्गुरोराचार्यस्य।

---

[ ननु 'द्वा सुपर्णा सयुजा सखाया समान वृक्षं परिषष्वजाते' इति (तृतीयमुण्डक० १।१) श्रुतेरेकदेहाश्रितत्वात् परमात्माऽपि जीववत् ससारी, न हि न हीत्याह—परमात्मा निरामय इति। निरामयो निर्लेप', 'अनश्नन्नन्योऽभिचाकशीति' ( तृतीयमुण्डक० १।१ ) श्रुते 'अन्यो निरन्नोऽपि बलेन भूयान्' ( भागवत० ११।११।६ ) इति स्मृतेश्च, ज्ञानमयत्वेन निरपेक्षत्वात् न क्वाप्यासक्त इत्यर्थ । ज्ञानसाधनान्याह—तस्येत्याद्यष्टभि । गो० ]

२९। अत्र जीवे परमात्मनि च तथाऽत्र मानाभाव देशत कालतश्च परिच्छेदाभाव । अथ तद्विज्ञानसाधनान्याह—दम्भेत्यादि। रा०।

[ अत्र जीवपरमात्मनोरैक्यावलोकनं मुख्यम्, अन्ये तदुपाया इत्याह—जीव इत्यादि। पर्याय एक एव, तस्यैव प्रतिबिम्बत्वात्। अत्र भेदधीर्भेदबुद्धिर्न। उपायानाह—मानाभाव इति। देहे अहंमानाभावस्ततो हिसादे परिवर्जनम्, देहाहमाने देहहिंसासम्भवात्। गो० ]

३०। परेति। परकृताक्षेपादि निन्दादि तत्सहनम्। मनोवाक्कायकृतसद्भक्त्या प्रेम्णा सद्गुरुसेवनम्। रा०।

[ परस्याऽऽक्षेपो निन्दा, आदिना परपरिभवादिस्तस्य सहनम्। अवक्रता ऋजुता। मनो-वागित्यादि। मन-आदिभिर्मयि भक्त्या सद्गुरोः परित सेवनम्। गो० ]

---

1 ङ 'नास्ति'। 2 च 'नानाभावस्तथा', क 'मनोभावस्तथा'। 3 क ख-घ 'दम्भहि-'। 4 च '-वर्जितम्'। 5 च 'सम्भक्त्या'। 6 ङ 'गुरुपरि-'।

बाह्याभ्यन्तरसंशुद्धिः स्थिरता सत्क्रियादिषु ।
मनोवाक्कायदण्डश्च विषयेषु निरीहता ॥ ३१ ॥
निरहङ्कारता जन्मजराद्यालो[1]चनं तथा ।
असक्तिः स्नेहशून्यत्वं पुत्रदारधनादिषु ॥ ३२ ॥
इष्टानिष्टागमे नित्य चित्तस्य [2]समता तथा ।
मयि सर्वात्मके रामे ह्यनन्यविषया मति· ॥ ३३ ॥

---

३१ । नरो० । बाह्याभ्यन्तरसंशुद्धिरिति, बाह्यस्य मरण(मल ?)राहित्यं सशुद्धि , अभ्यन्तरस्य रागादिदोषराहित्यं सशुद्धि , स्थिरता एकान्तनिष्ठता, सत्क्रियादिषु सत्कर्मादिषु । मनोवाक्कायदण्डश्चेति, मनसो वाच कायस्य च दण्डो निग्रह सयम इति यावत् । विषयेषु निरीहतेति, स्रक्चन्दनादिषु चेष्टाशून्यतेत्यर्थ ।

३२ । नरो० । निरहङ्कारता अहङ्कारशून्यता । असक्ति· प्रीतित्याग·, स्नेहशून्यत्वं स्नेहरूपरतिशून्यत्वम् ।

३३ । नरो० । समता हर्षविषादशून्यता ।

---

३१ । बाह्याभ्यन्तरसशुद्धि उक्तरूपैव, सत्क्रियादिषु स्थिरता अवश्यकर्त्तव्यताबुद्धि , परानिष्टाचिन्तनं मनोदण्ड , पराक्षेपाकरण वाग्दण्ड , पराहिंसा कायदण्ड·, निरीहता इच्छाराहित्यम् । रा० ।

[ बाह्यशुद्धिर्मृ जलाभ्याम्, अन्त·शुद्धिर्मन शुद्धता । तदुक्तं नारदीये—

मृज्जलाभ्यां बहि शुद्धिरन्त·शुद्धिर्मनस्तथा । इति ।

सत्क्रिया ईश्वरपूजादि तत्र स्थिरता अचञ्चलत्वम् । मनोदण्डोऽसदालापत्याग , कायदण्डोऽसद्व्यापारत्यागः । निरीहता विषयसुखार्थम् अन्वेषणाराहित्यम् । गो० ]

३२ । जन्मजराद्यालोचन परेषां तदालोचनमूलकं वैराग्यं पुत्रादिष्वसक्ति· । तस्यैव व्याख्यानं स्नेहशून्यत्वम् । रा० ।

[ निरहङ्कारता आत्मसम्भावनाराहित्यम् । पुत्रपिण्डादिदृष्टान्तेनाऽऽत्मनो देहस्य जन्मजरादीनां मृत्योश्चाऽऽलोचन विमर्षणम् । असक्तिरभिनिवेशाभाव , पुत्रादिषु समतया स्नेहराहित्यम् । गो० ]

३३ । चित्तस्य समता हर्षविषादराहित्यम् । अनन्यविषया तन्मात्रविषया । रा० ।

[ इष्टेति । सुखदु खप्राप्तौ नित्यं तुल्यता । सर्वात्मके सर्वस्वरूपे रामे परब्रह्मणि मयि निष्कामा मति । गो० ]

---

1 छ '-कन' । 2 ङ 'ममता' ।

जनसम्बाधरहि[1]तं शुद्धदेशनिषेवणम् ।
प्राकृतैर्जनसङ्घैश्च ह्यरतिः सर्वदा भवेत् ॥ ३४ ॥
आत्मज्ञाने सदोद्योगो वेदान्तार्थावलोकनम् ।
उक्तैरेतैर्भवेज्ज्ञानं विप[2]रीतैर्विपर्ययः ॥ ३५ ॥
बुद्धिप्राणमनोदेहाहङ्कृतिभ्यो विलक्षणः ।
चिदा[3]त्माऽहं नित्यशुद्धो [4]बुद्ध एवेति [5]निश्चयम् ॥ ३६ ॥
येन ज्ञानेन [5]सवेत्ति तज्ज्ञानं निश्चितञ्च मे ।
विज्ञानञ्च [6]तदेवैतत् साक्षादनुभवेद् [7]यथा ॥ ३७ ॥

---

३४ । नरो० । जनसंबाधरहितं लोकसङ्कटरहितम् । शुद्धश्चित्तप्रसन्नताजनकः, स चासौ देशश्चेति तस्य निषेवणं तत्तथा । अरतिरप्रीतिः ।

३५ । नरो० । विपरीतैर्विरुद्धैर्विपर्ययो विपरीतज्ञानम् ।

३६-३७ । नरो० । स्थूलोऽहं कृशोऽहमित्याद्यनुभवो येन ज्ञानेन भवति न तज्ज्ञान-

---

३४ । जनसम्बाधो जनसमूहः । प्राकृतैः सांसारिकैः । अरतिरप्रीतिः । रा० ।

[ जनानां गमागमरहितश्चासौ शुद्धः कीटकादिरहितो यो देशस्तस्य निषेवणं निरन्तरं तत्र स्थितिः । गो० ]

३५ । आत्मज्ञाने तत्साधने श्रवणादावुद्योग आदरपूर्वको यत्नः, वेदान्तार्थस्यावलोकनं श्रवणं विचारश्च । विपर्ययः संसारः । रा० ।

[ वेदान्तस्य उपनिषदोऽर्थो ब्रह्म तस्य ध्यानेनावलोकः, यद्वा वेदान्तस्यार्थ आत्मानात्मनोर्विवेकस्तस्यावलोकनं पुनः पुनरनुशीलनम् । उक्तैरूनविंशतिसंख्यैर्ज्ञानं भवति । प्रसङ्गादज्ञानसाधनमपि निरूपयति—उक्तविपरीतैर्देहाहम्मानादिभिर्विपर्ययोऽज्ञानं भवति । गो० ]

३६ । बुद्ध्यादिभ्यो विलक्षण इत्यादिनिश्चयम् । रा० ।

[ ज्ञेयं निरूपयति—बुद्धीत्यादि । बुद्ध्यादिभ्यो विलक्षणो भिन्नः । अयं नित्यप्रत्यक्ष आत्मा । इदंशब्देन 'सर्वं खल्विदं ब्रह्म' ( छान्दोग्य० ३।१४।१ ) इति श्रुत्यर्थ उक्तः । नित्यः, 'अविनाशी वा अरे अयमात्मा' ( बृहदा० ४।५।१४ ) इति श्रुतेः, स चासौ शुद्धोऽसङ्गः 'असङ्गो ह्ययमात्मे'ति ( नृसिंहोत्तरता० ९ ) श्रुतेः । तत्र हेतुः—बुद्धः उद्रिक्तबोधरूपः 'विज्ञानमानन्दं ब्रह्मे'ति ( बृहदा० ३।९।२८ ) श्रुतेः । एवकारेण सुषुप्तिप्रलययोर्लयाभाव उक्तः । निश्चय इति, नात्र हेतुरनुसन्धेयः । गो० ]

---

1. क ख ग घ ङ-च 'तशुष्क-' । 2. ङ '-रीते वि' । 3. ग 'त्माय' । 4. छ 'बुद्धिरेवेति' । 5. ग 'निश्चितम्' । 5 क ख-ङ-च छ 'सवित्ति', घ 'सविक्ते' । 6. छ 'तथै-' । 7 क-ख-घ 'यद्वा' ।

आत्मा सर्वत्र पूर्ण' स्याच्चिदानन्दात्मकोऽव्ययः ।
बुद्ध्याद्युपाधिरहित· परिणामादिवर्जित' ॥ ३८ ॥

मित्याशयेनाऽऽह—बुद्धीत्यादि । बुद्धिप्राणमनोदेहाहङ्कृतिभ्यो विलक्षणोऽहं चिदात्मा नित्यशुद्धो बुद्ध एवेति निश्चय यथा स्यात्तथा येन ज्ञानेन सवेत्ति तज्ज्ञानमित्यन्वय । अथवा तादृश निश्चयं येन ज्ञानेन सवेत्ति करोति तज्ज्ञानमित्यर्थ· । बुद्धिरन्त करणम् । चिदात्मा चित्स्वरूप । नित्यश्चासौ शुद्धश्चान्त करणाद्युपाधिरहितो रागादिदोपरहितो वा, स तथा । बुद्ध स्वप्रकाश सत्त्वमन्त करणज्ञो वा (?) । एतदेवेत्याह—निश्चित मे इति । इदानी विज्ञानमाह—विज्ञानञ्चेत्यर्द्धेन । यथा येन साक्षाद् यथा स्यात्तथा अनुभवेदेतद् विज्ञानमित्यन्वय । अथवा येन साक्षादनुभवेत् साक्षादनुभवमुत्पादयेत् एतद्विज्ञानमित्यर्थ ।

३८—३९ । नरो० । इदानीमात्मस्वरूपमाह—आत्मेति त्रिभि । सर्वत्र स्थूल-

३७ । येन ज्ञानेन यया शब्दादिजवृत्त्या सविन्ते लभते तज्ज्ञानमिति मे निश्चित निश्चय' । तदैवैतत् यदा साक्षादनुभवेत् निदिध्यासनपरीपाके अपरोक्षमनुभवेत्तदा विज्ञान-मित्युच्यते । रा० ।

[ज्ञानमाह—येनेति । तमात्मानमेव येन ज्ञानेन वेत्ति तदेव ज्ञान न तु गोतमाद्युक्त-षोडशपदार्थादिज्ञानम् । ननु नानामुनिभिर्नानाप्रकारं ज्ञानमुच्यते । कैश्चित् षोडशपदार्थविवेचनम् । कैश्चित् षट्पदार्थज्ञानम्, कैश्चित् सप्तपदार्थज्ञानम्, कैश्चित् सप्तदश(?)पदार्थज्ञानम् इत्याह—मे निश्चितमिति । मे मया निश्चित निर्णीतमित्यर्थ । विज्ञानमाह—तदैवैतदिति । तत् उपनिषत्-प्रतिपादितं ब्रह्म, एतदेव तदिति यथा साक्षात्तथैतच्छब्दार्थम् अनुभवेद् यत्तदेव विज्ञानमित्यर्थ· । एतेन विशिष्टं ज्ञान विज्ञानम् । विशिष्टता तु परोक्षा, परोक्षयो पदार्थयोरैक्यानुभवात् । गो० ]

३८ । अथाऽऽत्मन उक्त बुद्ध्यादिभ्यो वैलक्षण्यं दर्शयति—आत्मेति । चिदेवानन्दस्त-दात्मकः । यद्वा चित् आनन्दसमृद्धिस्तदात्मक· । बुद्ध्याद्युपाधिभिस्तद्धर्मैं रागादिभी रहितो हीन , परिणामो रूपान्तरापत्तिस्तद्वर्जित । आदिपदेन जडत्वाभास्यत्वादि । रा० ।

[इदानी विज्ञानमुक्त्वा विज्ञाने यादृश आत्मनोऽनुभवो भवेत् तदात्मस्वरूपमाह—आत्मेति । आत्मा सर्वत्र स्थूलसूक्ष्मदेहे पूर्णो ह्रासवृद्धिरहित । नन्वह म्रिये अह सुखी अह दु खी अहमज्ञ· अहं नाऽऽसमित्याद्यभिधानात् कथ पूर्णत्वम्, तत्राऽऽह—सच्चिदानन्द इति । अव्यय· नाशापक्षय-शून्य· । स्यादिति क्रियापदं नित्यसत्त्वाबोधकम् । बुद्ध्याद्युपाधिभिर्हीनः, अज्ञत्वात् सुखि-दु खित्वाभिमानो बुद्धेरेव । आदिना देहादेर्ग्रहणम् । देहस्यैव मृत्यु । स तु तत्त्वत उपाधिरहित· परिणामरहित· । आदिपदेन जन्मादिविकाराणां ग्रहणम्, तेषां देहधर्मत्वात् । गो०]

स्वप्रकाशेन देहादीन् भास[1]यन्ननपावृतः ।
एक एवाद्वितीयश्च सत्य[2]ज्ञानादिलक्षण· ।
[3]असङ्ग· [4]स्वप्रभो द्रष्टा विज्ञानेनावगम्यते ॥ ३९ ॥

शरीरे सूक्ष्मशरीरे च । यद्वा मच्छरीरे इतरशरीरे च । चिच्च आनन्दश्च चिदानन्दौ तावात्मानौ स्वरूपे यस्य स तथा । पूर्णत्वे हेतु, अद्वितीय इति सत्यज्ञानादिलक्षण इति च । सत्यज्ञाने आदि यस्य तल्लक्षण स्वरूप यस्य स तथा । आदिपदेन अनन्तादे· परिग्रह । तथाच श्रुति·—'सत्य ज्ञानमनन्त ब्रह्म' ( सर्वोपनिषच्छास्त्र ३ ) इत्यादि । एकत्र सर्वस्वरूपज्ञानार्थं ज्ञानस्यापि पुनरुक्तिरिति । अथवा स्वरूपापेक्षया ज्ञानानन्दयो प्राधान्यसूचनार्थं पृथगपि तयोरुक्ति कृता । बुद्ध्याद्युपाधिरहित इति जीवत्व निराकरोति । आदिपदेन प्राणमनोदेहाहङ्कृतीनां परिग्रह । यद्वा जीवस्यापि एतद्वास्तव रूपमिति नास्ति विरोध । परिणामादिवर्जित इति आदिपदेन नाशापक्षयादे परिग्रह । तत्र हेतुरव्यय इति, नित्य इत्यर्थ । भासयन् दीपयन् । तथाच श्रुति —'स एष इह प्रविष्ट आ नखाग्रेभ्य' ( बृहदा० १।४।७ ) 'तत् सृष्ट्वा तदेवानुप्राविशत्' ( तैत्तिरीय० २।६।१ ) इति, 'तमेव भान्त-मनुभाति सर्वं तस्य भासा सर्व'मित्यादिभ्यश्च ( द्वितीयमुण्डक० १० ) । अनपावृत इति । अनपावृतत्व तस्य कुत इत्यत आह—असङ्ग इति, सङ्गशून्य इत्यर्थ । भासने तस्य सामर्थ्यं कुत इत्यत आह—स्वप्रभ इति ।

३९ । स एव सर्वभासक इत्याह—स्वप्रकाशेनेति । सत्यज्ञानादीति, 'सत्यज्ञानमनन्तं ब्रह्म' ( सर्वोपनिषच्छास्त्रम् ३ ) इत्यादिश्रुत्युक्तलक्षण । स्वप्रभ स्वभासने इतरभासकानपेक्ष, द्रष्टा सर्वसाक्षी, विज्ञानेन प्रागुक्तेन अवगम्यते विषयीक्रियते । रा० ।

[ स्वप्रकाशेन स्वभासया भासयन् चेतनीकुर्वन् । ननु तर्हि किं देहादिभि परिच्छिन्नो गृहोदरस्थदीपवन्नेत्याह—अनपावृत, देहाद्यैरनावृत 'एतावानस्य महिमाऽतो ज्यायांश्च पूरुष' ( ऋक् स० १०।९ ) इति श्रुते । एको द्वैतवर्जित । नन्वहप्रत्ययवेद्य· शरीरभिन्न आत्मे-त्युक्तत्वात् कथमेकस्तत्राऽऽह—अद्वितीय सजातीयभेदेनापि हीन·, 'एकमेवाद्वितीय ब्रह्मे'ति ( छान्दोग्य० ६।२।१ ) श्रुते· । आदिना आनन्दस्य ग्रहणम् । नित्यानन्दस्वरूप सच्चिदानन्द इत्यर्थ । असङ्गो निर्लेप, स्वप्रभो निरन्तरं स्वप्रकाशसहित । प्रभा चिच्छक्ति· । द्रष्टा साक्षी विज्ञानेनावगम्यते बुध्यते । गो० ]

1 छ '-यत्वन-' । 2 क-ख ग-घ-ङ-च-छ '-ज्ञानादल-' । 3 छ 'तस्याङ्ग' । 4 ग 'सर्वतो व्यापी', च सर्वतो व्यादि' ।

[1]विचार्यशास्त्रोपदेशादैक्यज्ञानं यदा भवेत् ।
आत्मनोर्जीवपरयो[2]र्मूलाविद्या तदैव हि ॥ ४० ॥
लीयते कार्यकरणै· [3]सहैव परमात्मनि ।
साऽवस्था मुक्तिरित्युक्ता ह्युप[4]चारोऽहमात्मनि ॥ ४१ ॥

४० । नरो० । इदानीं मोक्षस्वरूपमाह—विचार्येति द्वाभ्याम् । विचार्यञ्च तच्छास्त्रञ्चेति तस्योपदेशस्तस्मात्तथा ।

४१ । नरो० । कार्यकरणैः स्थूलसूक्ष्मशरीरेन्द्रियैरित्यर्थ ।

४० । तस्य ज्ञानस्य मुख्यं कारणमाह—आचार्येति । आचार्यकृततत्त्वमस्यादिशास्त्रोपदेशाज्जीवपरयोरात्मनोर्यदैक्यज्ञानं तदपरोक्षानुभवो भवेत्, तदैव मूलाविद्या कार्यं स्थूलम्, करणमिन्द्रियं तै सह परमात्मनि निलीयते । रा० ।

[ इदानीमेवभूताद्वितीयात्मज्ञाने सति अविद्या लीयते इत्याह—विचार्येति । शास्त्रञ्च उपदेशश्च तयो समाहारस्तस्माद् विचार्य सोपपत्तिकं निर्णीय यदा जीवपरयोर्जीवपरमात्मनोरैक्यज्ञानं भवेत्, तदा अविद्या मूलाच्छिन्ना भवति । इदानी 'मोक्ष्यसे भयादि'ति मोक्षस्वरूपज्ञानस्यापि अपेक्षितत्वात्तदप्याह—लीयते इत्यादि । तदा जीवात्मा परमात्मनि लीयते एकीभवति । गो० ]

४१ । सैवावस्था मुक्तिर्मूलविद्यालय एव मुक्तिरित्यर्थ· । आत्मन' शुद्धस्य सर्वथाऽस्पृष्टस्य भेदरहितस्य ऐक्यज्ञानमविद्यालय इत्यपि व्यवहार कण्ठचामीकरन्यायेन गौण इत्यर्थ । यथा कण्ठस्थं चामीकरम् अन्यत्रान्विष्यति नष्टं तदिति बुद्ध्या, 'अरे कण्ठे एवास्ते' इति केनचिदुक्ते लब्धं तदिति व्यवहरति, तद्वत् । रा० ।

[ सा अवस्था ध्यातृध्येययोरैक्यावस्था मुक्तिरिति उक्ता योगिभिर्मन्यते, मुक्तिर्जीवन्मुक्तिरित्यर्थ । नित्यमुक्तस्याऽऽत्मनो बन्धाभावान्मोक्षोऽनुपपन्न इत्याह—उपचारोऽयमात्मनीति । आत्मनि नित्यज्ञानरूपे मुक्तिरित्ययमुपचार , बन्धाभावे मोक्षाप्रसङ्गात् । तदुक्तं श्रीभागवते—

बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुत· ।
गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् ॥ ११।११।१ ।
अज्ञानसञ्ज्ञौ भवबन्धमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात् । १०।१४।२६ ।

इति । गो० ]

1 क-ख-ग घ-ङ-च-छ 'आचार्य' । 2 क-ख 'मल-' । 3 छ 'सदेव' । 4 ख-ग-घ छ '-चारोऽयमा-', ङ '-कारोऽय-' ।

इदं मोक्षस्वरूपं ते कथितं रघुनन्दन ।
ज्ञानविज्ञानवैराग्यसहितं मे परा[1]त्मना ।
किन्त्वेतद् दुर्लभं मन्ये मद्भक्तिविमुखात्मनाम् ॥ ४२ ॥
[2]चक्षुष्मतामपि यथा रात्रौ सम्यग् न दृश्यते ।
पद दीपसमे[3]तानां दृश्यते सम्यगेव हि ॥ ४३ ॥

---

४२। नरो०। मुक्तिस्तावद् ज्ञानादिकं विना न भवति, ज्ञानादिकन्तु मद्भक्तिं विना न भवेदत आदौ मद्भक्तिः कर्तव्येत्याशयेनाऽऽह—किन्त्विति श्लोकद्वयम्। एतन्मोक्षस्वरूपं मद्भक्तिविमुखो मद्भक्त्या अनासक्त आत्मा मनो येषां तथा। अथवा मद्भक्तिविमुखो मद्भक्तिशून्य आत्मा मनो येषां तथा। मद्भक्तियुक्तानामुत्पन्नतत्त्वसाक्षात्कारत्वान्मोक्ष सुलभ, मद्भक्तिविमुखानान्तु अनुत्पन्नतत्त्वसाक्षात्कारत्वाद् दुर्लभ एवेति भाव ।

४३। नरो०। तदेव सदृष्टान्तमाह—चक्षुष्मतामपीति। पद वस्तु, अत्र उभयत्र सम्बन्धविवक्षायां षष्ठी। यथा चक्षुष्मतामपि रात्रौ दीप विना वस्तु किञ्चिदेव प्रकाशते दीपयुक्तानान्तु सम्यक्, तथा ज्ञानसाधनयुक्तानामपि मद्भक्तिं विना आत्मा किञ्चिदेव प्रकाशते मद्भक्तियुक्तानान्तु सम्यगिति समुदायार्थ ।

---

४२। एव ज्ञानादिसहितं मे परात्मनो मोक्षस्वरूप ते कथितम्। या मोक्षावस्थोक्ता तदेव मे स्वरूपमित्यर्थ । मदभक्तिविमुखात्मनां मत्प्रेमहीनानाम्। रा०।

४२-४३। [ ज्ञानेति। ज्ञानविज्ञाने उक्तलक्षणे, वैराग्यं देहादावौदासीन्यम्, तैर्युक्तम्। मे परात्मनेति। नात्र प्रमाणमनुसन्धातव्यम्, यत परात्मना परब्रह्मणा मे मया कथितमिदम्। ननु तर्हि शास्त्रज्ञानादिना किं न स्यात्, ज्ञानादेरपि भक्तिमूलत्वात् तदभाववतामसिद्धेरित्याह—किन्त्वेतदित्यादि। मद्भक्तिविमुखात्मनां एतद्दुर्लभं मन्ये। तत्र दृष्टान्त—चक्षुष्मतामिति। रात्रौ तमिस्रायां यथा सम्यक् चक्षुष्मतां निर्मलचक्षुर्युक्तानां गृहोदरस्थमपि वस्तु न दृश्यते। दीपसमेतानां सम्यग् दृश्यत एव। यद्वा यथापाठ सम्बन्ध , एव मद्भक्तियुक्तानां सम्बन्धे आत्मा स्वयमेव सम्यक् प्रकाशते प्रत्यक्षीभवति। अयम्भाव —यथा तमोऽन्तर्हित सद् विद्यमानमपि घटादि न दृष्टिगोचर स्यात्, पित्तादिजनितदोषेण वा विद्यमानस्यापि चक्षुष, तथा भक्तिहीनानां विराजमानोऽप्यात्मा न बुद्धिगोचरीभवति। दीपसाहित्ये तदेव घटादि सम्यग् दृश्यते एव यथा, तथा भक्तियुक्तत्वे आत्मा स्वयमेव गोचरीभवति। गो० ]

यथा सनेत्राणामपि रात्रौ पदं चोरादिपदं न दृश्यते न दृग्विषयीभवति दीपसमेतानां तु तेषां तद् दृग्विषयो भवति। रा०।

---

1. क-ख-घ '-त्मन'। 2. ङ 'अपि चक्षुषता यद्वद्रात्रौ'। 3 ङ '-तेन'।

एवं मद्भक्तियुक्तानामात्मा सम्यक् प्रकाशते।
मद्भक्तेः कारणं किञ्चिद् वक्ष्यामि शृणु तत्त्वतः ॥ ४४ ॥
मद्भक्त[1]सङ्गम सेवा मद्भक्तानां निरन्तरम्।
एकादश्युपवासादि [2]मम पर्वानुमोदनम् ॥ ४५ ॥
[3]मत्कथाश्रवणे पाठे व्याख्याने सर्वदा रतिः।
मत्पूजापरिनिष्ठा च मम नामानुकीर्त्तनम् ॥ ४६ ॥
एवं सततयुक्तानां भक्तिरव्यभिचारिणी।
मयि सञ्जायते नित्यं तत' किमवशिष्यते ॥ ४७ ॥
अतो मद्भक्तियुक्तस्य [4]ज्ञानं विज्ञानमेव च।
वैराग्यञ्च भवेच्छीघ्रं ततो मुक्तिमवाप्नुयात् ॥ ४८ ॥
कथित सर्वमेतत् ते [5]तत्त्व प्रश्नानुसारत.।
अस्मिन् मन' समाधाय यस्तिष्ठेत् स तु मुक्तिभाक् ॥ ४९ ॥

---

४४। नरो०। केनोपायेन त्वद्भक्तिर्जायेत स कथ्यतामित्यपेक्षायामाह—मद्भक्तेरित्यादि।

४६। नरो०। पाठे अर्थादेतद्ग्रन्थस्य, व्याख्याने मन्त्राणामिति शेष.। रति प्रीति। कादाचित्करतेरकिञ्चित्करत्वसूचनाय सर्वदेत्युक्तम्।

४७। नरो०। ततो भक्ते किमवशिष्यते किमपि अवशिष्टं न भवतीत्यर्थ।

४८। नरो०। एतदेव विवृणोति—अत इति पद्येन। अतो मद्भक्ते सर्वकारणत्वात्। ततो ज्ञानवैराग्योत्पत्त्यनन्तरम्।

---

४४। [भक्ति विनात्मज्ञानाभावोक्तेर्भक्तिरपेक्षितेति तत्कारण कथयति—मद्भक्तेरित्यादि। किञ्चिदिति भक्तिकारणस्य बाहुल्यं बोधयति। गो० ]

एवं भक्तियुक्तानां सम्यक् मत्प्रकाशो भवति। रा०।

४५। अथ प्रतिज्ञातानि भक्तिकारणानि आह—मद्भक्तेति। मद्भक्तानां निरन्तरमित्यत्र सेवेत्यनुषज्यते। एकादश्युपवासादि तदनुष्ठानमित्यर्थ। मम यानि पर्वाणि उत्सवदिनानि रामनवम्यादीनि तेषामनुमोदन तेपूत्सवकरणम्। रा०।

[ एकादश्युपवासादीत्यादि। पाठे व्याख्याने चेति कथाप्रकाशकग्रन्थस्येत्यर्थ। गो० ]

४७। ततो मद्भक्तेरधिक ज्ञानसाधन किमवशिष्यते न किमप्यस्तीत्यर्थ.। रा०।

[ तत. किमवशिष्यत इति। ततो भक्तौ जातायां सर्वपुरुषकारोत्पत्ति। गो० ]

४८। [ ज्ञानं शास्त्रीयम्, विज्ञानम् अपरोक्षम्, वैराग्य देहादावौदासीन्यम्। गो० ]

---

1 क-ख-घ '-सङ्गी मतसेवा'। 2 च 'मत्सपर्यानुमोदनम्'। 3 छ 'सत्-'। 4 च 'ज्ञानवि-'। 5 क-ख-घ-ङ-छ 'तव'।

न वक्तव्यमिदं यत्नान्मद्भक्तिविमुखाय हि ।
मद्भक्ताय प्रदातव्यमाहूयापि प्रयत्नत ॥ ५० ॥
[1]य इदन्तु पठेन्नित्यं श्रद्धाभक्तिसमन्वितः ।
अज्ञानपटलध्वान्तं विधूय परिमुच्यते ॥ ५१ ॥
भक्तानां मम योगिनां सुविमलस्वान्तातिशान्तात्मनां
मत्सेवाभिरतात्मनाञ्च विमलज्ञानात्मनां सर्वदा ।
सङ्गं य. कुरुते सदोद्यत[2]मतिः सत्सेवनानन्यधी-
र्मोक्षस्तस्य [3]करे स्थितोऽहमनिशं दृश्यो भवे नान्यथा ॥ ५२ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अरण्यकाण्डे
चतुर्थोऽध्याय. ॥ ४ ॥

---

५१ । नरो० । अज्ञानपटलमेव ज्ञानप्रतिबन्धकत्वाद् ध्वान्तं तत्तथा, पटल समूह. । विधूय विनाश्य ।

५२ । नरो० । सुविमलमतिनिर्मल स्वान्त येषां तादृशा अतिशान्तात्मानश्चेति तेषां तथा । मत्सेवायामभिरत परिनिष्ठित आत्मा मनो येषां तेषां तथा । विमलौ ज्ञानात्मानौ येषां तेषां तथा । ज्ञानस्य विमलत्वम् अन्यविषयसम्बन्धशून्यत्वम्, शरीरस्य विमलत्व मृज्जलाभ्यां मलराहित्यम् । सतां साधूनां सेवने अनन्या धीर्यस्य स तथा ।

[ अरण्यकाण्डे चतुर्थाध्यायव्याख्या समाप्ता ॥ ४ ॥ ]

---

५१ । अज्ञानपटलकृतं ध्वान्तमित्यर्थ । रा० ।

५२ । मम भक्तानामत एव योगिनां मद्भक्तियोगवताम्, सुविमल स्वान्त हृदय येषां ते च ते अतिशान्तात्मानश्चेति शान्तचित्ताश्च तेषाम्, मत्सेवायामभिरत प्रीतियुत आत्मा चित्त येषाम्, विमलज्ञानरूप आत्मा येषां ज्ञानविषयस्तेषाम् । उद्यता ज्ञानविषये उद्यमशालिनी मतिर्यस्य स । सतां सेवने अनन्यधीस्तत्पर इत्यर्थ । तस्यानिशमह दृश्यो भवे । आत्मनेपदमार्षम् । नान्यथा तादृशसङ्ग विना न मद्दर्शनं नापि मोक्ष इत्यर्थ । रा० ।

[ भक्तानामिति । सुविमलं स्वान्त मनो येषां ते च ते अतिशान्तात्मानश्चेति, विमल क्वचिदप्यनासक्तं ज्ञानं येषाम् एवमात्मा बुद्धिर्येषाम् । सतां सेवने अनन्या निरन्तरा धीर्यस्येति । गो० ]

---

1. च 'इदन्तु य.' । 2 ङ-छ '-मतिर्मत्-' । 3 घ 'करस्थि' ।

# पञ्चमोऽध्यायः

—:०:—

[1]श्रीमहादेव उवाच—

[2]तस्मिन् काले महारण्ये राक्षसी [3]कामरूपिणी ।
विचचार महासत्त्वा जनस्थाननिवासिनी ॥ १ ॥
एकदा [4]गौतमीतीरे पञ्च[5]वट्याः समीपतः ।
पद्मवज्राङ्कुशाङ्कानि पदानि जगतीपतेः ॥ २ ॥
दृष्ट्वा कामपरीतात्मा [6]पादसौन्दर्यमोहिता ।
पश्यन्ती सा शनैरायाद्राघवस्य निवेशनम् ॥ ३ ॥

---

२ । नरो० । पद्मञ्च वज्रञ्च अङ्कुशश्च तेषामङ्कश्चिह्नं यत्र तानि तथा । पदानि चरण-चिह्नानि ।

३ । नरो० । कामेन परीतो व्याप्त आत्मा शरीरं मनो वा यस्याः सा । पादसौन्दर्य-

---

१ । महासत्त्वा महाबला । रा० ।

तस्मिन् काले रामादीनां पञ्चवट्याश्रमवाससमये । जनस्थानमिति दण्डकारण्यान्तःपाती प्रदेशविशेषः, तत्र निवसनशीला । राक्षसी सूर्पणखा । तथाच वाल्मीकीये—

तं देशं राक्षसी काचिदाजगाम यदृच्छया ।
सा तु सूर्पणखा नाम दशग्रीवस्य रक्षसः ॥
भगिनी राममागम्य ददर्श त्रिदशोपमम् । इति ३।२३।१२-१३ ।

२ । पद्मेत्यादि, तच्चिह्नानि तद्युक्तानीत्यर्थः । रा० ।

[ एकदेत्यादि । पदानि पद्मवज्राङ्कुशादियुक्तानि पदचिह्नानि । गो० ]

वाल्मीकीये पद्मवज्राङ्कुशचिह्नादीनां वर्णनपरिपाटी न दृश्यते । पादसौन्दर्यदर्शनजेयं कामपरतन्त्रता न कविसमयप्रसिद्धा ।

३ । कामपरीतात्मा कामव्याप्तचित्ता, पश्यन्ती तत्पादानीत्यर्थः । तेनैव चिह्नेन राघवाश्रममायात् । रा० ।

रामं सूर्पणखाञ्च विशिनष्टि वाल्मीकीये—

---

1. क-ख-घ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2. क-छ 'यस्मिन्' । 3. च 'घोर-' । 4 ङ 'गोमती' । 5 ङ '-वध्या' । 6 छ 'पद-' ।

तत्र 'सा त रमानाथ सीतया सह संस्थितम् ।
कन्दर्पसदृश² राम 'दृष्ट्वा काममविमोहिता ॥ ४ ॥
राक्षसी राघव प्राह कस्य त्वं क. किमाश्रमे ।
युक्तो जटावल्कलाद्यै' साध्य कि ⁴तेऽत्र मे वद ॥ ५ ॥
अह सूर्पणखा नाम राक्षसी कामरूपिणी ।
भगिनी राक्षसेन्द्रस्य रावणस्य महात्मनः ॥ ६ ॥
खरेण सहिता भ्रात्रा वसाम्यत्रैव ⁵कानने ।
⁶राज्ञा दत्तञ्च मे सर्व मुनिभक्षा वसाम्यहम् ॥ ७ ॥

---

मोहितेति पादयो· सौन्दर्यं तेन मोहिता मनःक्षोभ प्रापिता। पश्यन्ती पदानि। अत एव शनैरायात्।

६। नरो०। तर्हि एव रूप कुत इत्याह—कामरूपिणीति। यदा यच्छरीरधारणेच्छा भवति तदैव तच्छरीरावच्छिन्ना भवतीत्यर्थ ।

७। नरो०। मुनिभक्षेति शीलीत्यादिनाऽण्।

---

तं दृष्ट्वा देवसङ्काशं राक्षसी मदनार्दिता ।
प्रकृत्या चैव दुर्वर्णा दु शीला दु खचारिणी ॥
दुष्कुलीना दुरासेवा केवल स्त्री तु सा स्मृता ।
सुमुखं दुर्मुखी रामं वृत्तपार्श्वं महोदरी ॥
विशालाक्ष विरूपाक्षी सुकेशं ताम्रमूर्धजा ।
अतिरूपं विरूपा सा सुस्वर भैरवस्वना ॥
तरुणं दारुणा वृद्धा दक्षिण वामभाषिणी ।
त न्यायवृत्त दुर्वृत्ता प्रियमप्रियदर्शना ॥ इति। ३।२३।१४—१७।

५। कः किंनामा, जटावल्कलाद्यैर्युक्त आश्रमे किं वससीति शेष । अत्र वासेन किं साध्यम्, तच्च वद। रा०।

रामस्य पर्यनुयोगं विनैव राक्षस्या· स्वपरिचयप्रदानम् आत्मश्लाघादिसूचनाय।

६। अथ तत्प्रश्नं विनैव तज्जिज्ञासां सम्भाव्य स्वस्योत्तमकुलत्वादि बोधयितु स्वस्वरूपमाह—अहमिति। रा०।

७। खरेण भ्रात्रा सहितेत्यन्वय । सर्वं वनमिति शेष·। रा०।

---

1. ग ङ-च-छ 'दृष्ठा'। 2. ग '-शाकार'। 3. च 'सद्य'। 4 छ 'तेऽद्य'। 5 ङ-छ 'सहने'। 6 च 'राज्ञो'।

त्वान्तु वेदितुमिच्छामि वद मे वदतां वर ।
तामाह [1]रामनामाऽहमयोध्याधिपते सुतः ॥ ८ ॥
एषा मे सुन्दरी भार्या सीता जनकनन्दिनी ।
[2]स तु भ्राता कनीयान् मे लक्ष्मणोऽतीव सुन्दर ॥ ९ ॥
किं कृत्य ते मया ब्रूहि कार्यं भुवनसुन्दरि ।
इति रामवच' श्रुत्वा कामार्त्ता साऽब्रवीदिदम् ॥ १० ॥
एहि राम मया सार्द्धं रमस्व गिरिकानने ।
कामार्त्ताऽहं न शक्नोमि त्यक्तुं त्वां कमले[3]क्षणम् ॥ ११ ॥
राम' सीतां कटाक्षेण पश्यन् सस्मितमब्रवीत् ।
भार्या ममैषा कल्याणी विद्यते ह्यनपायिनी ॥ १२ ॥
त्वन्तु सापत्न्यदु खेन कथ स्थास्यसि सुन्दरि ।
बहिरास्ते मम भ्राता लक्ष्मणोऽतीव सुन्दर' ॥ १३ ॥

---

राज्ञा रावणेन मम भ्रात्रेत्यर्थ । सर्वम् इदं वनम् । अस्मिन् वने अहमिति शेष । मुनिभक्षा मुनीन् भक्षयतीति मुनिभक्षा तद्भक्षणशीलेत्यर्थ· ।

८ । एवं स्वपरिचयख्यापनपुर सर रामपरिचय विजिज्ञासमाना आह—त्वान्तु वेदितुमिच्छामीत्यादि । त्वां वेदितु' तत्त्वतो ज्ञातुम् इच्छामि, मे मम सकाशे स्वपरिचयं वदेत्यर्थ· । तां सूर्पणखामाह राम इति शेष । अयोध्याधिपतेर्दशरथस्य । अत्र वाल्मीकि —

एवमुक्तस्तु राक्षस्या सूर्पणख्या स राघव· ।
ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे ॥
राजा दशरथो नाम धर्मात्मा विश्रुत क्षितौ ।
तस्याहमग्रज· पुत्रो राम इत्यभिविश्रुत ॥
सीतेय मम भार्या च भ्राताऽयं लक्ष्मणस्तथा ।
नियोगात्तु नरेन्द्रस्य पितुर्मातुश्च शासनात् ॥ इत्यादि ३।२३।३०—३२ ।

९ । स दृश्यमान इत्यर्थ· ।

११ । गिरिकानने समाहारद्वन्द्व , गिरिषु काननेषु चेत्यर्थ· । रा० ।

१२ । अनपायिनी सर्वथा त्यक्तुमशक्या क्षणमप्यविभक्ता च । रा० ।

सस्मितमब्रवीदित्यनेन परिहासोक्तिरियमिति सूचितम् । तच्च व्यक्त वाल्मीकीये—

सप्रहासनिमित्तञ्च राम सूर्पणखां तत· ।
इदं वचनमारेभे वक्तुं वाक्यविशारद· ॥ इति ३।२३।४६ ।

---

1 ङ 'रामो रामोऽहं-', च 'रामचन्द्रोऽहं-' । 2 ङ 'अय' । 3. ङ '-चण' ।

तवानुरूपो भविता पतिस्तेनैव [1]सञ्चर ।
इत्युक्ता लक्ष्मणं प्राह पतिर्मे भव सुन्दर ॥ १४ ॥
भ्रातुराज्ञां पुरस्कृत्य [2]सङ्गच्छावोऽद्य मा चिरम् ।
इत्याह राक्षसी घोरा लक्ष्मणं काममोहिता ॥ १५ ॥
तामाह लक्ष्मण साध्वि दासोऽहं तस्य धीमतः ।
दासी भविष्यसि त्वन्तु ततो दुःख[3]तरं नु किम् ॥ १६ ॥
तमेव गच्छ भद्रं ते स तु राजाऽखिलेश्वरः ।
तच्छ्रुत्वा [4]पुनरप्यागाद्राघवं [5]दुष्टमानसा ॥ १७ ॥
क्रोधा[6]द्राम किमर्थं मां भ्रामयस्यनवस्थित. ।
इदानीमेव [7]तां सीतां भक्षयामि तवाग्रत. ॥ १८ ॥

---

१४ । इत्युक्ता सा सूर्पणखा रामेणेति शेष. । हे सुन्दर, मे पतिर्भव इति लक्ष्मणमाह । कथ त्वद्वचनेनैव त्वां भार्यात्वे स्वीकरिष्यामीत्यत आह—भ्रातुराज्ञामिति ।

१५ । सङ्गच्छावो मिथुनीभावं प्राप्नुव. । रा० ।

[ सगच्छामस्त्वया सह सङ्गता भवाम । गो० ]

१६ । तस्य रामस्य । दासभूतस्य मम स्त्रीत्वाङ्गीकारे त्वमपि तस्य दासी भविष्यसीत्याशय ।

१७ । तं राममेव गच्छ प्राप्नुहि पतित्वेनेति शेष । तस्य पतित्वे किं मे स्यादित्याह—स तु राजाऽखिलेश्वर इति, तेन च तस्य पत्नी भविष्यसि चेत् त्वमपि अखिलेश्वरी राज्ञी भविष्यसीत्याशय ।

१८ । क्रोधादवददिति शेष. । किमवदत्तदाह—रामेत्यादि । अनवस्थित सत्ये वचसीति शेष. । यत्प्रीत्या मामेव भ्रामयसि तामित्यर्थ । रा० ।

[ भ्रामयस्यनवस्थिर इति, अनवस्थिरोऽस्थिरबुद्धि । गो० ]

छलजन्योऽयं क्रोध , क्रोधेन तदानीमेव सीताभक्षणरूपभीते. प्रदर्शनम् । तवाग्रत इत्यनेन स्वशक्तिदार्ढ्यं सूचितम् । वाल्मीकीयेऽपि—

अद्येमां भक्षयिष्यामि पश्यतस्तेऽतिमानिन ।
ततस्त्वया रमिष्येऽहं नि.सपत्ना यथासुखम् ॥ इति । ३।२४।१७ ।

---

1 च-छ 'सवस' । 2. ग-च 'सङ्गच्छसाद', ङ 'सङ्गच्छावेव' । 3 च '-तरो' । 4. ङ 'द्रुतमागच्छत्' । 5 च 'रुष्ट-' । 6 ग '-द्राम', ङ '-द्रामच सा प्राह' । 7 ङ 'ते' ।

इत्युक्त्वा विकटाकारा जानकीमनुधावती ।
ततो रामाज्ञया खड्गमादाय परिगृह्य ताम् ।
चिच्छेद [1]नासां कर्णौ च लक्ष्मणो[2] लघुविक्रमः ॥ १९ ॥
ततो घोरध्वनिं कृत्वा रुधि[3]राक्तवपुर्द्रुतम् ।
क्रन्दमाना पपा[4]ताग्रे खरस्य[5] परुषाक्षरा ॥ २० ॥
किमेतदिति [6]तामाह खरः खरतरा[7]क्षरः ।
केनैवं कारिताऽसि त्वं मृत्योर्वक्त्रानुवर्त्तिना ।
वद मे [8]तं वधिष्यामि कालकल्पमपि क्षणात् ॥ २१ ॥
तमाह राक्षसी रामः सीतालक्ष्मणसंयुतः ।
दण्डकं निर्भयं कुर्वन्नास्ते गोदावरीतटे ॥ २२ ॥

---

१९। रामाज्ञयेति। व्यक्तमाह वाल्मीकीये—

तां मृत्युपाशप्रतिमामापतन्तीं महाबलः ।
निवार्य रामः कुपितस्ततो लक्ष्मणमब्रवीत् ॥
क्रूरैः सुदुष्टैः सौमित्रे संप्रहासः कथञ्चन ।
न कार्यः पश्य वैदेहीं कथञ्चित् सौम्य जीवति ॥ इति । ३।२४।१९-२० ।

परिगृह्य निगृह्येत्यर्थः। तथाच वाल्मीकीये—

इत्युक्तो लक्ष्मणः क्रुद्धस्तस्य रामस्य पश्यतः ।
खड्गेन तस्याश्चिच्छेद कर्णनासां निगृह्य ताम् ॥ इति । ३।२४।२२ ।

पाश्चात्त्ये पुनरत्र खड्गमुद्धृत्य इति पाठः । तथाच—

इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो रामस्य पश्यतः ।
उद्धृत्य खड्गं चिच्छेद कर्णनासे महाबलः ॥ इति । ३।१८।२१ ।

२१। मृत्योर्वक्त्रानुवर्त्तिना यममुखगामिना। तादृश्यास्तवेदृशविरूपकरणं सर्वथा तस्य मृत्युजनकमिति भावः। कालकल्पमपि यमसदृशमपि। यमसमानानामप्यस्मत्करे नास्ति परित्राणमिति भावः। वयं मृत्युमपि मारयितुं प्रभवाम इत्याशयः।

२२। अत्राऽऽह वाल्मीकिः—

तरुणौ रूपसम्पन्नौ सुकुमारौ महाबलौ ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥

---

1 ग-ङ-च-छ 'कर्णौ नासाञ्च'। 2 ग घ 'णोऽलघु-', ङ '-णो रघुवि-', च '-णो रघुनन्दन'। 3 ङ '-रार्द्रवपु-'। 4 च '-ताशु'। 5 च '-स्याये च राक्षसी'। 6 ङ 'ता प्राह'। 7 ग '-क्षरम्'। 8 ग 'त्व'।

मामेव कृतवांस्तस्य भ्राता तेनैव चोदितः ।
यदि त्वं कुलजातोऽसि वीरोऽसि जहि तौ रिपू ॥ २३ ॥
तयोस्तु रुधिरं पास्ये भक्षये[1] तौ सुदुर्मदौ ।
नो चेत् प्राणान् परित्यज्य यास्यामि यमसादनम् ॥ २४ ॥
तच्छ्रुत्वा त्वरितं प्रागात् खरः क्रोधेन मूर्च्छितः ।
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ॥ २५ ॥
चोदयामास रामस्य समीपं वधकाङ्क्षया ।
खरश्च त्रिशिराश्चैव दूषणश्चैव राक्षसः[2] ॥ २६ ॥
सर्वे रामं ययुः शीघ्रं नानाप्रहरणोद्यताः ।
श्रुत्वा कोलाहलं तेषां रामः सौमित्रिमब्रवीत् ॥ २७ ॥
श्रूयते विपुलः शब्दो नूनमायान्ति राक्षसाः ।
भविष्यति महद् युद्धं नूनमद्य मया सह ॥ २८ ॥
सीतां नीत्वा गुहां गत्वा तत्र तिष्ठ महाबल ।
हन्तुमिच्छाम्यहं सर्वान् राक्षसान् घोररूपिणः ॥ २९ ॥

---

गन्धर्वराजप्रतिमौ पार्थिवव्यञ्जनान्वितौ ।
देवौ वा तौ मनुष्यौ वा न तर्कयितुमुत्सहे ॥
आत्मसम्भावितौ वीरौ राजपुत्रौ मनस्विनौ ।
तापसौ च धनुष्पाणी सिंहविक्रान्तगामिनौ ॥ इत्यादि । ३।२०।११-१३ ।

२३ । तस्य रामस्य भ्राता लक्ष्मणः । तेनैव रामेणैव ।

२४ । तयोस्त्विति । अत्राऽऽह वाल्मीकीये—
त्वत्प्रमादात्तयोश्चैव तस्याश्चैव निशाचर ।
सफेनं पातुमिच्छामि रुधिरं रणमूर्धनि ॥ इति ३।२९।१८ ।

२६ । रामस्य समीपं गन्तुं चोदयामास । वधकाङ्क्षयेत्यस्य रामस्य वधमाकाङ्क्ष्येत्यर्थः । स्ववधेच्छयेति तत्त्वार्थः । रा० ।

इत आरभ्य सूर्पणखाया रावणसकाशे वृत्तान्तवर्णनात्मकोऽशोऽत्राध्यात्मरामायणे अतिसंक्षेपेण सम्बद्धः । एतच्च वाल्मीकीये अरण्यकाण्डस्य पञ्चविंशसर्गतः सप्तत्रिंशसर्गान्ते स्थाने निबद्धम् ।

२८-२९ । अत्राऽऽह वाल्मीकिः—
तान् दृष्ट्वा राघवः क्रूरान् राक्षसांस्ताञ्च राक्षसीम् ।
अब्रवीद् भ्रातरं रामो लक्ष्मणं दीप्ततेजसम् ॥

---

1. ङ 'भक्षय', च 'भक्षयेतौ' । 2 ग-च '-सा' ।

[1]अत्र किञ्चिन्न वक्तव्यं शापितोऽसि ममोपरि ।
तथेति सीतामादाय लक्ष्मणो गह्वरं ययौ ॥ ३० ॥

रामः परिकरं बद्ध्वा धनुरादाय निष्ठुरम् ।
[2]तूणीरावक्षयशरौ बद्ध्वा[3]यत्तोऽभवत् [4]प्रभुः ॥ ३१ ॥

तत्र आगत्य रक्षांसि रामस्योपरि चिक्षिपुः ।
आयुधानि विचित्राणि पाषा[5]णान् पाद[6]पानपि ॥ ३२ ॥

तानि चिच्छेद रामोऽपि लीलया तिलशः क्षणात् ।
ततो बाणसहस्रेण हत्वा तान् सर्वराक्षसान् ॥ ३३ ॥

[7]खरं त्रिशिरसञ्चैव दूषणञ्चैव राक्षसम् ।
जघान प्रहरार्धेन सर्वानेव रघूत्तमः ॥ ३४ ॥

लक्ष्मणोऽपि गुहामध्यात् सीतामादाय राघवे ।
समर्प्य राक्षसान् दृष्ट्वा हतान् विस्मयमाययौ ॥ ३५ ॥

---

३० । नरो० । अनभिमतं लक्ष्मणेन यदि किञ्चिद्वक्तव्यं तदा तत्खण्डने तस्य दुःखं स्यादित्याह—अत्रेति । अत्र ममोपरि किञ्चिन्न वक्तव्यमित्यन्वयः । शापितः आज्ञापितः इत्यर्थः । गह्वरं गुहाम् ।

३१ । नरो० । परिकरं परिच्छदम् ।

---

मुहूर्तं भव सौमित्रे वैदेह्याः प्रत्यनन्तरः ।
यावन्निहन्मि रक्षांसि घोराणीमानि संयुगे ॥ इत्यादि ३।२६।३४ ।

३० । [ एकाकिना कथं बहुभी राक्षसैः सह त्वया योद्धव्यमिति लक्ष्मणः कदाचिन्निवारयेदिति मन्वान आह—अत्रेति । गो० ]

शापितोऽसि ममोपरि मदीयः शपथ इत्यर्थः ।

३४ । जघान प्रहरार्द्धेनेति । अत्र वाल्मीकीये समयनिर्धारणं नास्ति, परं युद्धवर्णनारभटीदर्शनेन तत्रैतेषां विनाशो बहूनां प्रहराणां व्यपगमः सम्भाव्यते ।

३५ । अत्रायमंशः पाश्चात्त्यवाल्मीकीयसंवादी । तथाच—

एतस्मिन्नन्तरे वीरो लक्ष्मणः सह सीतया ।
गिरिदुर्गाद् विनिष्क्रम्य सविवेशाऽऽश्रमे सुखी ॥ इति ३।३०।३७ ।

---

1 ग 'अत', च 'तत्र' । 2 च 'तूणीरादच-', छ 'तूणीरानचय-' । 3 क ख 'यत्तो-' । 4 ग-ड-च-छ 'विभु' । 5 ग '-णपाद-' । 6 ङ '-पास्तथा' । 7 छ 'खरञ्च त्रिशिरश्चैव' ।

सीता रामं समालिङ्ग्य [1]प्रसन्नमुखपङ्कजा ।
[2]शस्त्रव्रणानि चाङ्गेषु ममार्ज जनकात्मजा ॥ ३६ ॥
साऽपि दुद्राव [3]दृष्ट्वा तान् हतान् राक्षसपुङ्गवान् ।
लङ्कां गत्वा सभामध्ये [4]क्रोशन्ती पादसन्निधौ ॥ ३७ ॥
रावणस्य पपातोर्व्यां भगिनी तस्य रक्षसः ।
दृष्ट्वा तां रावणः प्राह भगिनीं भयविह्वलाम् ॥ ३८ ॥
उत्तिष्ठोत्तिष्ठ वत्से त्वं विरूपकरणं तव ।
कृतं शक्रेण वा भद्रे यमेन वरुणेन वा ।
कुबेरेणाथ वा ब्रूहि भस्मीकुर्यां क्षणेन तम् ॥ ३९ ॥
राक्षसी तमुवाचेदं [5]त्वं प्रमत्तो विमूढधीः ।
पानासक्तः [6]स्त्रीविजितः [7]षण्डः सर्वत्र लक्ष्यसे ॥ ४० ॥

---

३७ । नरो० । राक्षसपुङ्गवान् राक्षसश्रेष्ठान् ।

---

३६ । शस्त्रव्रणानि मार्जितरुधिराणि पूर्णगर्तानि सत्यसङ्कल्पत्वाच्चकारेत्यर्थः । रा० ।

३८ । रावणस्य पादसन्निधावुर्व्यां पपातेत्यन्वयः । रा० ।

अत्र रावणं विशिनष्टि वाल्मीकिर्बहुभिः श्लोकैः । तत्र केचन श्लोकाः प्रदर्श्यन्ते—

आजगाम समुद्विग्ना लङ्कां रावणपालिताम् ।
सा ददर्श विमानाग्रे रावणं लोकरावणम् ॥
सह्योपविष्टं सचिवैर्मरुद्भिरिव वासवम् ।
आसीनं सूर्यसङ्काशे काञ्चने परमासने ॥
रुक्मवेदीगतं देवं ज्वलन्तमिव पावकम् ।
दशास्यं विंशतिभुजं दर्शनीयपरिच्छदम् ॥
ताम्राक्षं विपुलोरस्कं राजलक्षणलक्षितम् ।
सिद्धजीमूतसदृशं तप्तकाञ्चनभूषणम् ॥
सुभुजं श्वेतवदनं महास्यं पर्वतोपमम् ।
देवदानवयक्षाणामृषीणाञ्च महात्मनाम् ॥
अजेयं समरे शूरं व्यात्ताननमिवान्तकम् ।
देवासुरविमर्देषु वज्राशनिकृतव्रणम् ॥ इत्यादि । ३।३६।३-८ ।

---

1. च 'प्रहसन्मुख-' । 2 छ 'शस्त्र व्रणान्यथाङ्गेषु' । 3 च 'वेगेन दृष्ट्वा तान् राक्षसान् हतान्' ।
4 छ 'क्रोशती' । 5 च 'त्वन्तु मत्तो' । 6 च 'स्त्रीजितश्च' । 7 ग-ङ-च-छ 'शठ.' ।

चारचक्षुर्विहीनस्त्वं कथं राजा भविष्यसि ।
खरश्च निहत सङ्ख्ये दूषणस्त्रिशिरास्तथा ॥ ४१ ॥
चतुर्दशसहस्राणि राक्षसानां [1]महात्मनाम् ।
निहतानि क्षणेनैव रामेणासुर[2]शत्रुणा ॥ ४२ ॥
जनस्था[3]नमशेषेण मुनीनां निर्भयं कृतम् ।
न जानासि विमूढस्त्वमत एव मयो[4]च्यते ॥ ४३ ॥

रावण उवाच—

को वा राम' किमर्थं वा कथं तेनासुरा हताः ।
[5]सम्यक् कथय मे तेषां मूलघात करोम्यहम् ॥ ४४ ॥

सूर्पणखोवाच—

जनस्थानादहं याता कदाचिद् [6]गौतमीतटे[7] ।
तत्र पञ्चवटी नाम [8]पुरा मुनिजनाश्रया ॥ ४५ ॥
तत्राऽऽश्रमे मया दृष्टो रामो राजीवलोचन ।
धनुर्बाणधर· श्रीमाञ् जटा[9]वल्कलमण्डित ॥ ४६ ॥
[10]कनीयाननुजस्तस्य लक्ष्मणोऽपि तथाविध' ।
तस्य भार्या विशालाक्षी रूपिणी श्रीरिवापरा ॥ ४७ ॥

---

४१ । नरो० । यस्तु राजा नीतिज्ञो भवति स गूढपुरुषद्वारा सर्वं पश्यति, त्वन्तु न तथेत्याह—चारचक्षुर्विहीन इत्यर्थेन । चार एव ज्ञानजनकत्वाच्चक्षुस्तेन विहीनस्त्यक्त' ।

४२ । नरो० । महात्मनां बृहच्छरीराणाम् । लक्ष्मणस्य हननकर्तृत्वाभावेऽपि 'निहता लक्ष्मणेने'(?)त्युक्तिर्या सा लक्ष्मणोऽपि हन्यतामित्याशयार्था । स तवापि शत्रुरिति सूचनार्थम् असुरशत्रुणेत्युक्तम्, सुरविरोधिवैरिणेत्यर्थ· ।

४७ । नरो० । रूपिणी श्रीरिवापरेति, श्री शोभा रूपिणीवेत्युत्प्रेक्षा । अत एवापरा नास्ति परा उत्कृष्टा यस्या इति व्युत्पत्त्या अत्युत्कृष्टेत्यर्थ' । अथवा रूपिणी लावण्यवती श्रीरिवापरेति अपरा लक्ष्मीरिवेत्यर्थ ।

---

४४ । किमर्थं कस्मै प्रयोजनाय कथं केन प्रकारेण असुराः खरादयो हता· । तेषां रामादीनाम् । रा० ।

---

1 च 'हतात्मनाम्' । 2. च '-घातिना' । 3 च '-न विशेषेण' । 4 ङ '-च्यसे' । 5 क 'सत्य' । 6. ङ 'गौत-' । 7 च '-टम्' । 8. च 'पुरी' । 9 च 'मण्डल-' । 10 ङ च 'लघीया' ।

देवगन्धर्वनागानां मनुष्याणां तथाविधा ।
न दृष्टा न श्रुता राजन् द्योतयन्ती वन [1]शुभा ॥ ४८ ॥
आनेतुमहमुद्युक्ता [2]तां भार्यार्थं तवानघ ।
लक्ष्मणो नाम तद्भ्राता चिच्छेद मम नासिकाम् ॥ ४९ ॥
कर्णौ च [3]चोदितस्तेन रामेण स महाबलः ।
ततो[4]ऽहमतिदुःखेन [5]रुदन्ती खरमन्वगाम् ॥ ५० ॥
सोऽपि राम समासाद्य [6]योद्धुं राक्षस[7]यूथपैः ।
[8]तत' क्षणेन रामेण तेनैव बलशालिना ॥ ५१ ॥
[9]सर्वे तेन विनष्टा वै राक्षसा भीम[10]विक्रमा' ।
यदि रामो मनः कुर्यात् त्रैलोक्य निमिषार्धतः ॥ ५२ ॥
भस्मीकुर्यान्न सन्देह इति भाति [11]मम प्रभो ।
यदि सा तव भार्या स्यात् सफलं तव [12]जीवितम् ॥ ५३ ॥

---

४८ । नरो० । तदेव द्रढयति—देवेति पद्येन । द्योतयन्ती भासयन्ती ।

४९-५० । नरो० । तच्चरणविह्वानि दृष्ट्वा कामार्त्ता तयो समीपं गतेत्युक्ते मां प्रत्येवास्य कोपो भविष्यतीति हृदि निधायाऽऽह—आनेतुमित्यादि महाबल इत्यन्तम् । ततस्त्व किं कृतवती इति प्रश्न इति दिक् (?) ।

५१ । नरो० । सोऽपि खरोऽपि गत इति शेष ।

---

५१ । राक्षसयूथपै सह युद्धमकरोदिति शेष । रा० ।

५२ । विनष्टा विनाशिता । अन्तर्भावितण्यर्थ' । रा० ।

५३ । सा सीतेत्यर्थ. । सीतासौन्दर्यं प्रकटयन्ती सूर्पणखा भ्रातु कामोन्मादनाम् अकरोद् वाल्मीकीये—

रामस्य तु विशालाक्षी धर्मपत्नी यशस्विनी ।
सीता नाम वरारोहा वेदिप्रतिममध्यमा ॥
नैव देवी न गन्धर्वी न यक्षी न च किन्नरी ।
तथारूपा मया नारी दृष्टपूर्वा महीतले ॥

---

1 च छ 'शुभम्' । 2 ग-ङ-च 'भार्यार्थंच तवानघ', छ 'भार्यार्थं तव चानघ' । 3 क-ख घ 'नोदि-' । 4 ङ 'दुःखेन महता' । 5 च 'रुदती' । 6 क ख-घ 'युद्ध' । 7 ग-ङ-च '-पुङ्गवैः' । 8 च 'हत ' । 9 ङ 'सद्यो', छ 'ते च' । 10. च '-घातिना' । 11 ङ 'मनो मम' । 12. छ 'जीवनम्' ।

अतो यतस्व राजेन्द्र [1]यथा ते वल्लभा भवेत् ।
सीता राजीवपत्राक्षी सर्वलोकैकसुन्दरी ॥ ५४ ॥
साक्षाद्रामस्य पुरतः स्थातुं त्वं न क्षमः प्रभो ।
मायया मोहयित्वा तु प्राप्स्यसे [2]तां रघूत्तमम् ॥ ५५ ॥
श्रुत्वा तत् सूक्त[3]वाक्यैश्च [4]धनमानादिभि[5]स्तथा ।
आश्वास्य भगिनीं राजा प्रविवेश [6]स्वकं गृहम् ।
तत्र चिन्तापरो भूत्वा [7]निद्रां रात्रौ न लब्धवान् ॥ ५६ ॥
एकेन रामेण [8]कथं मनुष्यमात्रेण नष्टः सबलः खरो मे ।
भ्राता कथं मे बलवीर्य[9]दर्प[10]युतो विनष्टो बत राघवेण ॥ ५७ ॥

---

५७ । नरो० । बलञ्च शरीरशक्तिः वीर्यञ्च इन्द्रियशक्तिः दर्पश्च शौर्यातिशयस्तैर्युतो बलवीर्यदर्पयुतः ।

[ अरण्यकाण्डे पञ्चमाध्यायव्याख्या समाप्ता ॥ ५ ॥ ]

---

यस्य भार्या भवेत् सीता यं च हृष्टा परिष्वजेत् ।
अपि जीवेत् स लोकेषु देवेष्विव पुरन्दरः ॥
एवं सीता महाराज रूपेणाप्रतिमा भुवि ।
तवानुरूपा भार्या सा त्वं च तस्याः पतिस्तथा ॥
सा हि विस्तीर्णजघना पद्मरक्तान्तलोचना ।
दृश्यमाना प्रयत्नेन ममापि हरते मनः ॥
त्वया दृष्टा च वैदेही पूर्णचन्द्रनिभानना ।
मन्मथस्य शराणां त्वं विधेयत्वं गमिष्यसि ॥ इत्यादि । ३।३८।१४-१९ ।

५५ । साक्षाद् रामस्य पुरत इत्यादि सूर्पणखावाक्यं वाल्मीकीयविरोधी । तथाच तत्र—
यदि तस्यामभिप्रायो भार्यार्थं तव जायते ।
शीघ्रमुद्ध्रियतां पादो जयार्थमिह दक्षिणः ॥
वैरं प्रतिकुरुष्वेह तस्मिन् राक्षसपुङ्गव ।
यत्ते भ्रातृवधाज्जातं रामे वैरं सलक्ष्मणे ॥ इत्यादि । ३।३८।२१ २२ ।

५५ । रघूत्तमं मायया मोहयित्वा तां प्राप्स्यसे इत्यन्वयः । रा० ।

५६ । तत् सूर्पणखावाक्यम् । सूक्तवाक्यैर्दानादिभिर्भगिनीम् आश्वास्य स्वगृहं प्रविवेशेत्यन्वयः । रा० ।

---

1 ग 'यथाऽतिव-' । 2 ङ 'त्वं' । 3 क-ख '-वाक्यश्च' । 4 ग-ङ च-छ 'दान-' । 5 ग-ङ-च '-सदा' । 6 ग-ङ-च 'गृहं स्वकम्' । 7. छ 'रात्रौ निद्रां' । 8 ग 'हठान्' । 9 च '-दर्पौ' । 10. च-छ 'युवा' ।

यद्वा न रामो मनुजः परेशो
मां हन्तुकामः [1]सबलं [2]बलौघैः ।
सम्प्रार्थितोऽयं द्रुहिणेन पूर्वं
मनुष्यरू[3]पोऽद्य रघो' कुलेऽभूत् ॥ ५८ ॥
वध्यो यदि स्यां परमा[4]त्मनाऽह
वैकुण्ठराज्यं परिपालये[5]ऽहम् ।
नो चेदिदं राक्षसराज्यमेव
भोक्ष्ये चिरं राममतो व्रजामि ॥ ५९ ॥

---

५७। नष्टो नाशित । शोकावेशादुक्तमेव पुनराह—भ्रातेति । बलं शारीरम्, वीर्यमान्तर बलम् । दर्पोऽहङ्कार ।

५८। परेश परमात्मा । बलौघैर्वानरसमूहै· । द्रुहिणेन ब्रह्मणा । रा० ।

५९। अतोऽल्पराज्यहान्या महत्तरराज्यप्राप्ते· । रा० ।

वध्य इत्याद्यशो वाल्मीकीयविरोधी पुराणान्तरविसवादी च । वाल्मीकीये न हि रामाद् मृत्युकामस्य रावणस्य सीताहरणप्रवृत्ति ।

तथा हि तद्राक्षसवंशनाशनं तया प्रयुक्तं वचन स रावण· ।
मुदा च संहृष्य नरेन्द्रतापनश्चकार बुद्धिं स्वकुलस्य नाशने ॥ ३।३८।२७

प्राच्यवाल्मीकीये इत्यादिना बुद्धिवैषम्येणैव रावणस्य सीतापहरणादिप्रवृत्तिरित्यायाति । अत पर मारीचसकाशमुक्तेन—

तस्य भार्या विशालाक्षी नाम्ना सीतेति विश्रुता ।
रूपयौवनसम्पन्ना श्रीरपद्मेव शोभना ॥
अद्य गत्वा जनस्थान तामहं लोकसुन्दरीम् ।
आनयिष्यामि विक्रम्य सहायस्तत्र मे भव ॥ ३।४०।१९-२० ।

इत्यादिना च सीतासौन्दर्यलोलुपस्य रावणस्य तद्धरणप्रवृत्तिरित्यवगम्यते ।

कर्णनासापहारेण भगिनी मे विरूपिता ।
तस्य भार्या जनस्थानात् सीतां सुरसुतोपमाम् ॥
आनयिष्यामि विक्रम्य सहायस्तत्र मे भव । ३।३६।१३-१४ ।

इत्यादिना प्राच्येन वाल्मीकीयेनापि भगिनीविरूपणजन्यापमानेन सुरसुतासदृशसीता-

---

1 च 'सकलैर्व-' । 2 ङ 'शरौघै' । 3 '-पो हि' । 4 छ '-त्मनोऽह' । 5 ङ-च-छ '-ऽयम्' ।

इत्थं विचिन्त्याखिलराक्षसेन्द्रो
रामं विदित्वा परमेश्वरं हरिम्।
विरोधबुद्धैयव हरिं प्रयामि
द्रुतं [1]न भक्त्या भगवान् प्रसीदेत्॥ ६० ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अरण्यकाण्डे पञ्चमोऽध्याय. ॥ ५ ॥

---

सम्भोगवासनया च तस्या हरणारम्भ इति सम्भाव्यते। भागवतीयश्लोकोऽपि रावणस्य कामपरता एव सीतापहरणकारणमिति कथयति। तथाच तस्य नवमस्कन्धे दशमाध्याये—

सीताकथादीपितहृच्छयेन सृष्टं विलोक्य नृपते दशकन्धरेण।
जघ्नेऽद्भुतैणवपुषाश्रमतोऽपकृष्टो मारीचमाशु विशिखेन यथा कमुग्र ॥ इति।१०।

६०। भक्त्या द्रुतमल्पकालकृतया शीघ्र न प्रसीदेत्, एतद्राज्यत्याजनपूर्वं महद्राज्यं न प्रापयेत्। रा०।

[ परमेश्वरं ब्रह्मादीनामपीश्वर हरिं संहारकम् आत्मनो मृत्युमित्यर्थ। ननु ईश्वर इति जानासि चेत् किं भक्त्या न व्रजसि, तस्य भक्तवत्सलत्वात् नेत्याह—भक्त्या द्रुतं न प्रसीदेत्। गो० ]

---

1. क 'स्वभ-'।

# षष्ठोऽध्यायः

—.०.—

[1]श्रीमहादेव उवाच—

विचिन्त्यैवं[2] निशायां स प्रभाते रथमास्थितः।
रावणो [3]मनसा कार्यमेकं निश्चित्य बुद्धिमान्।
ययौ मारीचसदनं परं [4]पारमुदन्वतः ॥ १ ॥
मारीचस्तत्र मुनिवज्जटावल्कलधारकः।
ध्यायन् [5]हृदि परात्मानं निर्गुणं गुणभासकम्।
समाधि[6]विरमेऽपश्यद्रावणं गृहमागतम् ॥ २ ॥

२। नरो०। गुणान् भासयतीति गुणभासकस्तम्। एतेन स्वप्रभवत्वं सूचितम्। निर्गुणत्वेनान्तःकरणाद्युपाधिरहितत्वं सूचितम्। समाधिविवरे समाधिच्छिद्रे समाधिभङ्गे इति यावत्।

१। एकं कार्यं सीताहरणेन रामतो मृत्युरूपम्। रा०।

स निशायाम् एवं विचिन्त्य मनसा एकं कार्यं निश्चित्य चेति शेषः। उदन्वतः समुद्रस्य परं पारं मारीचसदनं ययौ इत्यन्वयः। वाल्मीकीयेऽपि—

ततः सूर्पणखावाक्यं श्रुत्वा तल्लोमहर्षणम्।
सचिवानभ्यनुज्ञाय कार्यं बुद्ध्वा जगाम सः ॥
विमृश्य च ततः कार्यं यथावदुपलभ्य च।
दोषाणाञ्च गुणानाञ्च संप्रधार्य बलाबलम् ॥
इतिकर्तव्यमिति च कृत्वा निश्चयमात्मनः।
स्थिरबुद्धिस्ततो रम्यां यानशालां जगाम ह ॥ इत्यादि। ३।३९।१-३।

मारीचाश्रमं मारीचञ्च विशिनष्टि वाल्मीकिः—

स तु गत्वा परं पारं समुद्रस्य नदीपतेः।
ददर्शाऽऽश्रममेकान्ते पुण्ये रम्ये वनान्तरे ॥
तत्र कृष्णाजिनधरं जटामण्डलधारिणम्।
ददर्श नियताहारं मारीचं नाम राक्षसम् ॥ इत्यादि। ३।३९।३९-४०।

२। गुणाः प्रकृतिस्तत्कार्याणि तद्भासकम्। रा०।

1. क-ख-व-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति, ङ 'श्रीशिव उवाच'। 2 ङ 'व' 3 छ 'रामसत्कार्य-'। 4 ग च-छ 'तीर-', ङ 'पारं महोदधेः'। 5 च छ 'हरिं'। 6 क-ख ग-घ छ '-विरमे', च '-गमने'।

द्रुतमुत्थाय चाऽऽलिङ्ग्य पूजयित्वा यथाविधि ।
[1]इति वृष्यां समासीनं मारीचो वाक्यमब्रवीत् ॥ ३ ॥

समागमनमेतत् ते रथेनैकेन रावण ।
चिन्तापर इवाऽऽभासि [2]हृदि कार्यं विचिन्तयन् ॥ ४ ॥

ब्रूहि मे न हि गोप्यञ्चेत् करवाणि तव प्रियम् ।
न्याय्यं चेद् ब्रूहि राजेन्द्र वृजिनं मां स्पृशेन्न हि ॥ ५ ॥

रावण उवाच—

अस्ति राजा दशरथः [3]साकेताधिपतिः [4]किल ।
[5]रामनामा सुतस्तस्य ज्येष्ठः सत्यपराक्रमः ॥ ६ ॥

विवासयामास सुतं [6]वनं वन[7]जनप्रियम् ।
भार्यया सहितं भ्रात्रा लक्ष्मणेन समन्वितम् ॥ ७ ॥

---

३ । नरो० । इति वाक्यमब्रवीदित्यन्वय । वृष्यां व्रत्यासने ।

७ । नरो० । विवासयामास विपरीतं वासयामासेत्यर्थ, निःसारयामासेत्यर्थो वा । वनमुद्दिश्येति वा शेष. ।

---

[ निर्गुणं गुणभासकमिति । स्वरूपेण गुणान् बुद्ध्यादीन् भासयतीति चेतयतीति गुणभासकम् । 'तस्य भासा सर्वमिद विभाति' इति श्रुते. । गो० ]

३ । मारीचो द्रुतमुत्थाय रावणम् आलिङ्ग्य यथाविधि पूजयित्वा च वृष्यां समासीन तम् इति वाक्यमब्रवीदित्यन्वय ।

४ । एतदेकेन रथेन समागमनं किमर्थम्, तद् ब्रूहीति शेष. । हृदि किञ्चित् कार्यं विचिन्तयन् चिन्तापर इवाऽऽभासि, तत् कार्यं किमिति ब्रूहीत्यन्वय । रा० ।

५ । न्याय्य धर्म्यम् । हि यतो यत्कार्यकरणे मां वृजिन पापं न स्पृशेत् । रा० ।

७ । वनविशेषण वनजनप्रियमिति । रा० ।

[ वनजनप्रियमिति । वनजनास्तपस्विन प्रिया यस्य तम् । गो० ]

---

1 क-ख ग घ च-छ 'कृतातिथ्य सुखासीन', ङ 'कृतातिथ्यं'। 2 छ 'बुद्धि'। 3 क ख घ 'कोशलाधि-'। 4 ग ङ-छ 'प्रभु'। 5 च 'रामनाम'। 6 ग 'रामं'। 7 च '-जनार्चितम्'।

स आस्ते विपिने घोरे पञ्चवट्याश्रमे शुभे ।
तस्य भार्या विशालाक्षी सीता लोक[1]विमोहिनी ॥ ८ ॥

रामो निरपराधान्मे राक्षसान् भीमविक्रमान् ।
खरञ्च हत्वा विपिने सुखमा[2]स्ते विनिर्भयः ॥ ९ ॥

भगिन्या मे सूर्पणख्या निर्दोषायाश्च [3]नासिकाम् ।
कर्णौ चिच्छेद [4]दुष्टात्मा वने तिष्ठति निर्भयः[5] ॥ १० ॥

अतस्त्वया सहायेन गत्वा तत्प्राणवल्लभाम् ।
आनयिष्यामि विपिने [6]रहिते राघवेण ताम् ॥ ११ ॥

त्वन्तु मायामृगो भूत्वा ह्याश्रमा[7]दपनेष्यसि ।
रामञ्च लक्ष्मण[8]ञ्चैव तदा सीतां हराम्यहम् ॥ १२ ॥

त्वन्तु तावत् [9]सहायेन [10]कृती स्थास्यसि पूर्ववत् ।
इत्येवं भाषमाणं तं रावणं [11]वीक्ष्य विस्मितः ।
[12]मारीचः प्राह तं भीतश्चिन्तयन् रामविक्रमम् ॥ १३ ॥

---

१३ । नरो० । आश्रमादपनीयैव निजरूपं न धार्यमित्याह—त्वन्त्वित्यादिना । तावदिति—'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । सहायेन साहाय्येन । कृती पुण्यवान् । पूर्ववद् मृगरूपेणेत्यर्थः ।

---

१० । कर्णौ चिच्छेद तथाऽपि निर्भय इत्यन्वयः । रा० ।

११ । अतोऽस्मात् खरादिनाशजन्यात् क्रोधात् अपमानाद्वा सहायेन त्वया सह राघवेण रहिते विपिने गत्वा तत्प्राणवल्लभां रामस्य प्राणोपमां तां सीतामित्यर्थः, आनयिष्यामि, यद्वा राघवेण रहिताद् विपिनाद् आनयिष्यामि । पञ्चम्यर्थे सप्तमीयम् ।

१३ । [ कृती स्थास्यसीति । कृतं मायारचितं नानारूपं यस्यास्तीति सः । सहायेन साहाय्येन स्थास्यसि । यद्वा कृती कृतकार्यः सन् पूर्ववत् तपस्विवत् स्थास्यसि । गो० ]

---

1 च 'विलासिनी' । 2 क-ख-घ '-स्तेऽतिनि-' । 3 च 'लक्ष्मण' । 4 च 'नासाच्च रुदन्ती खरसन्निधौ' । 5 अतः परं च-पुस्तके 'सोऽपि रामं समासाद्य योधयन् दैत्ययपे । सर्वे तेन विनष्टा वै राक्षसा भीमविक्रमाः ॥ सोऽपि रामः सुदुष्टात्मा वने तिष्ठति निर्भयः ।' इत्यधिकम् । 6 च 'रहिता' । 7. ग-ङ-छ '-द्दूप-' । 8 च '-श्चापि' । 9 क-ख-घ 'सहायः मे' । 10 क 'कृत्वा' । 11. छ 'प्राह' । 12. क-ख-ग-ङ-छ-पुस्तकेषु इदमर्द्धं नास्ति ।

केनेदमुपदिष्टं ते मूलघातकरं वच ।
स एव शत्रुर्वध्यश्च [1]यस्त्वन्नाशं प्रतीक्षते ॥ १४ ॥
रामस्य पौरुष [2]स्मृत्वा [3]सर्वमद्यापि रावण[4] ।
[5]बाल्येऽपि मां कौशिकस्य यज्ञसंरक्षणाय स ॥ १५ ॥
आग[6]तस्त्विषुणैकेन पातयामास सागरे ।
योजनानां [7]शते रा[8]मात्तदादि भयविह्वल ।
स्मृत्वा स्मृत्वा [9]तदैवाहं रामं पश्यामि सर्वत ॥ १६ ॥

---

१४ । नरो० । स एव शत्रुरात्मन इति शेषः ।

१५-१६ । नरो० । हे रावण, रामस्य सर्वं पौरुषं पुरुषकर्म स्मृत्वा अद्यापि तदादि यथा स्याद् रामाद्भयविह्वल इत्यन्वय । किं पौरुषमित्यपेक्षायामाह—बाल्येऽपीत्यादि ।

---

इत्येव भाषमाण तं रावणं वीक्ष्य विस्मितस्तस्य तात्कालिकाकृतिदर्शनेन आश्चर्यान्वित इवेत्यर्थ । मारीच केनेदमुपदिष्टन्ते इत्यादि वक्ष्यमाणं वचनजात प्राह ।

१४ । इद वच सीतोत्तमा स्त्री सा हर्त्तव्यैवंरूपम् । यो दुरुपदेशेन त्वन्नाशं प्रतीक्षते द्रष्टुमिच्छति स एव शत्रुर्न राम । स एव वध्यश्चेत्यर्थ । रा० ।

केनेदमित्यादि । इद मूलघातकर स्वमूलनाशकं वच ते तव सम्बन्धे केनोपदिष्टम् । स एव ते शत्रुर्वध्यश्च । ननु किमिदमसङ्गतमुच्यते मम हितकारित्वात् तत्राऽऽह—यस्त्वन्नाशं प्रतीक्षते इति । एवमुपदेश उपदेश्यास्याहितमिच्छतैव दीयते न तु हितमिच्छतेत्यर्थ । एतेन रामदर्शनादेव ते मृत्यु स्यादित्याशय ।

अत्र वाल्मीकि —

शत्रवस्तव सुव्यक्तं हीनवीर्या निशाचरा ।
इच्छन्ति त्वां विनश्यन्तमुपरुद्धं बलीयसा ॥
तैर्नूनमुपदिष्टन्ते विनाशसुखमुत्तमम् ।
ये त्वामिच्छन्ति नश्यन्तं स्वकृतेनेह कर्मणा ॥
वध्या खलु न वध्यन्ते सचिवास्तव रावण ।
ये त्वामुत्पथमारूढ न नियच्छन्ति शास्त्रत ॥ इत्यादि । ३।४१।४-६ ।

१५-१६ । रामस्य पौरुषं स्मृत्वा अद्यापि मे चित्त विकलमिति शेष । स्मर्यमाण

---

1 ग 'य स्मशानं', ङ च-छ 'य स्वनाश' । 2 ङ 'श्रुत्वा' । 3 क ख ग-घ-ङ-च छ 'चित्त-' ।
4 अत पर छ-पुस्तके 'न शर्म लेभे कुत्रापि शृणु तच्चेष्टित महत' इत्यर्द्धमधिकम् । 5 क ख घ 'बालोऽपि' ।
6 च '-तश्च शरैकेण' । 7 क ख-घ छ 'शत' । 8 क ख-ग-घ-ङ-च छ '-मसदा-' । 9 ग घ-ङ 'सदै-' ।

दण्डकेऽपि पुनर[1]प्यहं वने पूर्ववैरमनुचिन्तयन् हृदि ।
तीक्ष्णशृङ्गमृग[2]रूप एकदा मादृशैर्बहुभिरावृतोऽभ्य[3]गाम् ॥ १७ ॥
राघवं जनकजासमन्वितं लक्ष्मणेन सहितं त्वरान्वितः ।
आगतोऽहमथ हन्तुमुद्यतो मां विलोक्य शरमेक[4]मक्षिपत् ॥ १८ ॥
तेन विद्धहृदयोऽहमु[5]द्वमन् राक्षसेन्द्र पतितोऽस्मि सागरे ।
तत्प्रभृत्यह[6]मिदं समा[7]श्रितः स्थानमूर्जितमिदं भयार्दितः ॥ १९ ॥

---

बाल्येऽपि कौशिकस्य यज्ञसंरक्षणाय स आगतः सन् एकेन इषुणा मां योजनानां शते सागरे पातयामासेत्यन्वयः । न केवलं तत्स्मृत्या तस्माद्भयमित्याह—स्मृत्वेत्यर्द्धेन ।

१७ । नरो० । अपरमपि कर्माऽऽह—दण्डकेऽपीति सार्द्धद्वयेन ।

१९ । नरो० । उद्वमन् अर्थाद्रुधिरम्, ऊर्जितभयान्वितः (?) बलवद्भययुक्त इत्यर्थः ।

---

पौरुषं किञ्चिदेव निदर्शनायाऽऽह—बालोऽपीति । कौशिकस्य यज्ञरक्षणाय आगतो बालोऽपि रामस्त्वेकेषुणा अनेकयोजनशतमुल्लङ्घ्य मां सागरे पातयामास । तदेव रामकर्माहं स्मृत्वा रामं सर्वतः सर्वत्र पश्यामि । रा० ।

१७ । हृदि पूर्ववैरं विश्वामित्राश्रमादौ जनितां शत्रुतां स्मरन्नहं दण्डके वनेऽपि तीक्ष्णशृङ्गमृगरूपं धृत्वा मादृशैः बलशालिभिरित्यर्थः, आवृतः परिवृतः त्वरान्वितः सन् जनकजासमन्वितं लक्ष्मणेन च सहितं राघवम् अभ्ययाम् । अथ अनन्तरम् आगतोऽहं तान् हन्तुमुद्यतोऽभवम् ।

१९ । तेन शरेण रामागमननिश्चयेन निर्भयम् । रा० ।

[ तत्प्रभृत्यहमित्यादि । स्थानमूर्जितभयान्निजार्दित इति । निजेन स्वकीयेन कर्मणा रामविरोधरूपेण मुनियज्ञनाशादिना अर्दितः पीडितः । यद्वा अर्दिता मृता निजा आत्मीया यस्य सः । निजार्दित इति क्तान्तस्य परनिपातः । गो० ]

---

1 च '-हन्तुं त' । 2 क-ख-घ 'रूपमे-' । 3 क ख घ 'याम्' । 4 ग ङ-च छ '-माक्षिपत्' । 5 क-ख घ '-द्भ्रमन्', च '-त्पतन्' । 6 गं ङ '-मथो' । 7 ग '-स्थित' ।

रामभेव सततं विभावये भीतभीत इव भोग[1]राशित ।
राजरत्नरमणीरथादिकं श्रोत्रयोर्यदि गतं भय भवेत् ।
राम आगत इहेति शङ्कया [2]बाह्यकार्यमपि सर्वमत्यजम् ॥ २० ॥
निद्रया परिवृतो [3]यदा [4]स्वपे राममेव मन[5]साऽनुचिन्तयन् ।
स्वप्न[6]देशगतराघव तदा बोधितो विगतनि[7]द्रमास्थित ॥ २१ ॥

---

२० । नरो० । इदं स्थानमाश्रित्यापि स्वास्थ्यं नास्तीत्याह—राममित्यर्द्धेन । भोगराशितो भीतभीतो यथा तमेव सततं विभावयति तथा राममेव सततं विभावये इति । इदं रत्नादिकं राज्ञ इति श्रोत्रगत यदि भवति तदा भय भवेत्, मृदेवदेवस्य रमणी हर्त्तु कथ न बिभेषि इत्याशयेनाऽऽह—राजरत्नेति । रत्नञ्च रमणी च रथश्च ते आदयो (?) यस्य तत्तथा । तस्य भार्यां हर्त्तुं न त्वां प्रेरयामि, किन्तु तमाश्रमात् नि सारयितुमिति, तत्र भय कुत इति चेत्तत्राऽऽह—राम आगत इत्यादि ।

२१ । नरो० । न जाग्रद्दशायामेव शङ्कावानहम्, किन्तु स्वप्नदशायामपीत्याह—

---

२० । यद्वस्तु भोगसमूहसाधनं ततोऽपि भीतभीतो अत्यन्तभीत इव राममेव भावये । तदेवोपपादयति—राजेति । रेफवत्त्वेन रामस्मारकतया भोगसाधनानामप्येषां श्रवणं भयजनकमिति भाव । रा० ।

भोगराशितो भोग्यवस्तुसमूहात् विरक्त इति शेष । भीतभीत इव यस्य स्मरणेन सर्वं भयजातं विनश्यति तस्य कार्यस्मरणेनैवायं भीतिभाव । ननु यदि तत्कार्यस्मरणेनैव भीतिस्तदा तच्चिन्ता एव त्यज्यताम्, न हि तस्य चिन्तन विना गतिर्न भविष्यतीति । भीतोऽपि रामम् एव तादृशभीतिजनकमपि सतत विभावये । यतो भोगराशितो विरक्त. अतो राजरत्नरमणीरथादिक भोगसाधकं वस्तुजातं यदि श्रोत्रयोरागतं भवति तदा भय भवेत् । विरक्तस्य अनिष्टजनकत्वादित्याशय । राम आगत इहेति चिन्तया तस्य शराघातशङ्कयेत्यर्थ । बाह्य कार्यं संसारसमुत्थकार्यजातमित्यर्थ', सर्वम् अत्यजम् । सर्वं बाह्यकार्यं त्यक्त्वा मोक्षसाधकं तमेव निरन्तर चिन्तयामीत्यर्थ. ।

२१ । रामागमनशङ्कया बाह्यकार्यं परित्यज्य निद्राणोऽपि राममेव चिन्तयन् । स्वपे इति आत्मनेपदमार्षम् । तदा स्वप्नदृष्टिगतराघवं स्वप्नज्ञानविषयं राघवं पश्यन्नेव बोधितो विगतनिद्र आस्थित आसने भवेयमिति शेष. । रा० ।

---

1. ङ 'वर्जित:' । 2. च-छ 'राज-' । 3 ङ 'यदि' । 4 च 'सदा', छ 'स्वय' । 5 ङ 'सा नु चिन्तयन्', छ 'साऽतिचि-' । 6 क-ख-घ '-दृष्टि-' । 7. क-ख-घ '-द्र आ-', ग-ङ-च-छ '-द्रयास्थि-' ।

तद् भवानपि विमुच्य [1]चाऽऽग्रहं राघवं प्रति गृहं प्रयाहि भोः ।
रक्ष राक्षसकुल चिरागत तत्स्मृतौ सकलमेव नश्यति ॥ २२ ॥
[2]तव हितं वदतो मम भाषित परिगृहाण परात्मनि राघवे ।
त्यज विरोधमतिं भज भक्तित· परमकारुणि[3]को रघुनन्दनः ॥ २३ ॥
अहमशेषमिद मुनिवाक्यतोऽश्रृणवमादियुगे परमेश्वरः ।
ब्रह्मणाऽर्थित उवाच त हरि· [4]किं तवेप्सितमहं करवाणि तत् ॥ २४ ॥

---

निद्रयेत्यादिना । स्वप्ने स्वप्नसमये राममेव मनसाऽनुचिन्तयन् यदा निद्रया परिवृतस्तदा स्वप्नदेशगतराघव बोधित· सन् विगतनिद्र यथा स्यात्तथा आस्थित इति सम्बन्ध· ।

२२ । नरो० । उपसंहरति—तदिति । आग्रह विरोधमतिम् ।

२३ । नरो० । भजने हेतु· परमकारुणिक इति ।

---

यदा निद्रया परिवृत आच्छन्नोऽभवम्, तदाऽपि मनसा राममेव अनुचिन्तयन् स्वपे इत्यन्वय· ।

२२ । राघवं प्रत्याग्रहं विमुच्येत्यन्वय । चिरागतं चिरेण वृद्धिप्राप्तं राक्षसकुल रक्ष । एव विरोधेन तत्स्मृतौ सकलमेव रक्ष कुल नश्यति । राघवे तद्विषये । रा० ।

[ विगतनिद्रं यथा स्यात्तथा आस्थितो भवामीत्यर्थ· । प्रथमान्तपाठे विगतनिद्र सन् आस्थित सावधान स्थितो भवामीत्यर्थ· । तत्स्मृतौ सकलमपि नश्यतीति, तस्य स्मृतौ रामस्य शत्रुत्वेन चिन्तायां सकलकुल नश्यतीति । गो० ]

राघव प्रति तस्य विनाश प्रतीत्यर्थः । तत्स्मृतौ तस्य रामस्य अनिष्टस्मृतावित्यर्थः ।

२३ । तव हित वदतो मम भाषित गृहाण, परात्मनि राघवे विरोधमति त्यजेति अग्रेणान्वय· । तं राघवं भक्तितो भज आराधय । तस्य भजने किमित्याह— परमकारुणिक इति । परमकारुणिक· स भजनेन प्रीत्या त्वयि करुणां करिष्यतीति भाव ।

विरोधमतिं विरोधसम्पादिकां मतिम् । रा० ।

२४ । पुनरपि तद्विरोधान्निवृत्तये इतिहासान्तरमाह—अहमिति । मुनिरत्र नारद· । आदियुगे सत्ययुगे । रा० ।

[ आदियुगे त्रेतायुगस्याऽऽदौ । गो० ]

अहम् इदमशेषं सर्वमित्यर्थः । मुनिवाक्यतो मुनेर्नारदस्य वचनतः अश्रृणवम् ।

---

1. च-छ 'विग्रह' । 2 छ 'तावदिद' । 3 च 'क रघुनन्दनम्' । 4 च 'तव किमीप्-' ।

ब्रह्मणोक्तमरविन्दलोचन त्वं प्रयाहि भुवि मानुषं वपुः ।
दशरथात्मजभाव[1]मञ्जसा जहि रिपुं दशकन्ध[2]रमाहवे ॥ २५ ॥

अतो न मानुषो रामः साक्षान्नारायणोऽव्ययः ।
मायामानुष[3]वेशेन [4]वनं यातो[5]ऽतिनिर्भय.[6] ।
भूभारहरणार्थाय गच्छ तात [7]गृहं सुखम् ॥ २६ ॥

श्रुत्वा मारीचवचनं रावणः प्रत्यभाषत ।
परमात्मा यदा राम' प्रार्थितो ब्रह्मणा किल ॥ २७ ॥

मां हन्तुं मानुषो भूत्वा [8]यत्नाद् यदि समागतः ।
करिष्यत्यचिरादेव सत्यसङ्कल्प ईश्वरः ॥ २८ ॥

---

२६ । नरो० । अव्ययोऽपक्षयशून्यः । मायामानुषवेशेन कपटमानुषचिह्नेनेत्यर्थ ।

---

आदियुगे सत्यादौ ब्रह्मणाऽर्थित· परमेश्वरो हरिस्तं ब्रह्माणमुवाच ।

२५ । मानुष वपुर्धृत्वेति शेष· । दशरथात्मजभावं दशरथपुत्रत्व प्राप्य अञ्जसा शीघ्रमेव । रा० ।

२७ । अत्र वाल्मीके· सरण्यन्तरम् । न तत्र रामहस्ते निधनमनुभवितुं रावणस्य कश्चिदप्याग्रह परिलक्ष्यते । तथा च तत्र—

मारीचेन तु तद्वाक्यं हितमुक्तो दशानन· ।
मानान्न प्रतिजग्राह मर्त्तुकाम इवौषधम् ॥
तं पथ्यहितवक्तारं मारीच राक्षसेश्वर ।
अब्रवीत् पौरुष वाक्यमयुक्त कालचोदित ॥ इत्यादि ।३।४४।१-२ ।
गुणदोषौ न पृच्छामि क्षेमं वापदमात्मनः ।
अस्मिंस्तु तात कृत्ये मे साहाय्यं कर्त्तुमर्हसि ॥
सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभि ।
प्रलोभ्य चैव वैदेहीं यथेष्टं कर्त्तुमर्हसि ॥३।४४।१५-१६।

२८ । सत्य सङ्कल्प इच्छा यस्य स । रा० ।

---

1 ङ '-मुपेत्य भो' । 2 क-ख ग-घ च छ 'र हरे' । 3 च-छ '-रूपेण' । 4 छ 'रामो' । 5. च 'विनि' । 6. ङ 'यम्' । 7 ग ङ 'गृहे' । 8. क-ख घ 'यत्नादिह' ।

अतोऽहं यत्नतः सीता[1]मानेष्याम्येव राघवात् ।
[2]वधे प्राप्ते रणे वीर प्राप्स्यामि परमं पदम् ॥ २९ ॥
यद्वा रामं रणे हत्वा सीतां प्राप्स्यामि निर्भयः ।
[3]अतोत्तिष्ठ महाभाग विचित्रमृगरूपधृक् ॥ ३० ॥
[4]रामं सलक्ष्मणं शीघ्रमाश्रमादतिदूरतः ।
[5]आकृष्य [6]गच्छ त्वं शीघ्रं सुखं तिष्ठ यथा पुरा ॥ ३१ ॥
[7]अतः परं [8]चेद् यत् किञ्चिद्भाषसे मद्विभीषणम् ।
हनिष्याम्यसिनाऽनेन त्वा[9]मत्रैव न संशयः ॥ ३२ ॥
मारीचस्तद्वचः श्रुत्वा स्वात्म[10]न्येवान्वचिन्तयत् ।
[11]यदि मां राघवो हन्यात् तदा मुक्तो भवार्णवात्
मां हन्याद् [12]यदि चेद्दुष्टस्तदा मे निरयो ध्रुवम् ॥ ३३ ॥

---

२९ । नरो० । परमं पदं मोक्षमित्यर्थः ।

३० । नरो० । यदि रामः परमेश्वरो न स्यात्तदा तं हत्वा सीतां ग्रहीष्यामीति हृदि कृत्वाह—यद्वेत्यादि । विचित्रं यन्मृगरूपं तद्धर्षति धारयतीति विचित्रमृगरूपधृक् ।

---

२९ । राघवाद् राघवं वञ्चयित्वेत्यर्थः । मया रामाद्वधे प्राप्ते सति । हे वीर, अहं परमं पदं प्राप्स्यामि । रा० ।

३० । अतोत्तिष्ठ अत उत्तिष्ठ । सन्धिरार्षः । रा० ।

३१ । यथा पुरा यथा पूर्वम् आश्रमे सुखं तिष्ठेत्यन्वयः । रा० ।

३२ । अत्र वाल्मीकेर्भङ्गीवैशिष्ट्येन रावणस्य सामदानदण्डादिपरिज्ञानपरिचयः ।

तथा च—

एतत् कार्यमवश्यं त्वां कारयिष्ये बलादपि ।
राज्ञां हि प्रतिकूलो यो न जातु सुखमेधते ॥
तस्मिन् कार्ये च संसिद्धे मारीच भवतेऽप्यहम् ।
राज्यस्यार्द्धं प्रदास्यामि कृतार्थेनान्तरात्मना ॥ इत्यादि ।३।४४।२१-२२।

---

1. च-छ '-मानयिष्यामि' । 2 ग-ङ-च 'वध प्राप्स्ये', छ 'वध प्राप्य' । 3 ग 'अथो-', ङ-च 'अतो-' । 4 छ 'रामञ्च ल-' । 5 घ 'आक्रम्य' । 6 ग-ङ च-छ 'राघव' । 7 ग ङ-छ 'इत' । 8 ग-ङ 'त यत् किञ्चिद्' । 9. च '-मयैव' । 10 ग-च ङ '-न्येवानुचिन्तयन्, छ 'न्येवानु-' । 11 ङ 'यदा' । 12. च 'यदाय द्-' ।

इति निश्चित्य मरणं रामादुत्थाय वेगतः ।
अब्रवीद्रावणं राजन् करोम्याज्ञां तव प्रभो ॥ ३४ ॥
इत्युक्त्वा रथमास्थाय [1]गतो रामाश्रमं प्रति ।
शुद्धजाम्बूनदप्रख्यो मृगोऽभूद्रौप्यबिन्दुकः ।
रत्नशृङ्गो मणिखुरो नीलरत्नविलोचनः ॥ ३५ ॥
विद्युत्प्रभो विमुग्धास्यो विचचार वनान्तरे ।
रामाश्रमपदस्यान्ते सीतादृष्टिपथे चरन् ॥ ३६ ॥
[2]क्षणञ्च [3]धाव[4]त्यथ तिष्ठते[5] क्षणं समीपमागत्य पुनर्भयावृतः ।
एवं स माया[6]मृगवेशरूपधृक् चचार सीतां परिमोहयन् खलः ॥ ३७ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अरण्यकाण्डे षष्ठोऽध्यायः ॥ ६ ॥

---

३५ । नरो० । शुद्धजाम्बूनदप्रख्य इति । शुद्धं निर्मलं यज्जाम्बूनदं कनकं तत्तुल्य. । रौप्या बिन्दवो यत्र स तथा । रत्ने इव शृङ्गे यस्य स. । मणय इव खुरा यस्य स. । नीलरत्ने इव विलोचने यस्य स. । यद्वा रत्नविकारौ शृङ्गे यस्य स तथा । मणिविकारा खुरा यस्य स तथा । नीलरत्नविकारौ विलोचने यस्य स तथा ।

३६ । नरो० । विद्युत इव प्रभा यस्य स । विशेषेण मुग्धं मनोहरमास्यं यस्य तादृशः ।

३७ । नरो० । मृगस्य वेशश्चिह्नं यत्र तच्च तद्रूपञ्चेति मायया कपटेन तद्धर्षयतीति मायामृगवेशरूपधृक् ।

[ इति श्रीमदध्यात्मरामायणे षष्ठाध्यायव्याख्या ॥ ६ ॥ ]

---

३४ । वाल्मीकीये मारीचस्य कथञ्चित् स्वीकृतिर्दशाननभयेन, न तु परमात्मन· सकाशान्मृत्युलोभेन । तथाच—

उच्यमानोऽसकृद्वाक्य न गृह्णीषे रणप्रिय ।
किं करिष्यामि मन्दात्मा करिष्यामि तव प्रियम् ॥
उपस्थितविनाशोऽसि ध्रुवं त्वं राक्षसेश्वर ।
कार्यं वा यदि वाऽकार्यं कृतमेवेच्छति प्रभुः ॥ इति । ३।४६।२०-२१ ।

---

1 क ख-ग-ड-छ 'गतौ'। 2 च 'चण प्रधा-'। 3 छ 'धावत्यरति चणञ्च'। 4 ख घ '-त्यवति-'। 5 च '-ति'। 6 छ '-मृगरूपधृक्।

# सप्तमोऽध्यायः

—— ०.——

[1]श्रीमहादेव उवाच—

अथ रामोऽपि तत् सर्वं ज्ञात्वा रावणचेष्टितम् ।
उवाच सीतामेकान्ते शृणु जानकि [2]मद्वचः ॥ १ ॥
रावणो भिक्षुरूपेण [3]आगमिष्यति तेऽन्ति[4]कम् ।
त्वन्तु च्छायां त्वदाकारां स्थापयित्वोटजे विश ॥ २ ॥
अग्नावदृश्यरूपेण वर्षं तिष्ठ ममाऽऽज्ञया ।
रावणस्य वधान्ते मां पूर्ववत् प्राप्स्यसे शुभे ॥ ३ ॥
श्रुत्वा [5]रामोदितं वाक्यं साऽपि तत्र तथाऽकरोत् ।
मायासीतां बहिः स्थाप्य स्वयमन्तर्दधेऽनले ॥ ४ ॥

---

२ । नरो० । तव इवाऽऽकारो यस्यास्तादृशीम् । उटजे पर्णशालायाम् ।

४ । नरो० । मायया निर्मिता सीता मायासीता ताम् ।

---

१-४ । छायासीतारूपोऽयमारम्भो वाल्मीकीयान्नवीनः । स चास्माभिरादिकाण्डे प्रथमाध्याये अष्टनवतिश्लोकटिप्पण्याम् आलोचितः । अत्रत्योऽयं सवादः कूर्मपुराणीयवृत्तान्तेन कथञ्चित् संवदन्नपि भागवतादिविरोधी ।

रक्षोऽधमेन वृकवद् विपिनेऽसमक्षं
वैदेहराजदुहितर्यपयापितायाम् । भागवतम् ९।१०।११ ।

इति श्लोकस्थवैदेहराजदुहितेतिपदेन सीताया एवोल्लेखात् ।

रावणोऽप्यहरत् सीतां हत्वा गृध्रं जटायुषम् । ८।१७ इत्यग्निपुराणवचनेन,

'बद्ध्वा चाम्भोनिधिम् अशेषराक्षसकुलक्षयं कृत्वा दशाननापहृतां तद्वधापहतकलङ्काम् अप्यनलप्रवेशशुद्धाम् अशेषदेवेन सस्तूयमानां सीतां जनकराजतनयामयोध्यामानिन्ये । ४र्थ० अ० । ४९ । इत्यादिवायुपुराणोक्त्या च विदेहतनयाया एवापहरणप्रतीतेरध्यात्मरामायणस्येयं भङ्गी प्रायः सर्वपुराणविरोधिनीति सहृदयैराकलनीयम् ।

२ । त्वदाकारां तव आकार इव आकारो यस्यास्तां स्थापयित्वा बहिरिति शेषः । रा० ।

---

1 क-ख-घ-ङ-च-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2 क-ख-घ 'मे वचः' । 3 ग-ङ-छ 'ह्यागः' । 4 छ '-के' । 5. ग ङ-छ 'रामेरित' ।

मायासीता तदाऽपश्यन्मृगं मायाविनिर्मितम् ।
हसन्ती राममभ्येत्य प्रोवाच विनयान्विता ॥ ५ ॥
पश्य राम मृगं चित्र [1]कानकं रत्नभूषितम् ।
विचित्रबिन्दुभिर्युक्त चरन्तमकुतोभयम् ॥ ६ ॥
बद्ध्वा देहि मम क्रीडामृगो[2] भवतु सुन्दर' ।
तथेति धनुरादाय गच्छँल्लक्ष्मणमब्रवीत् ॥ ७ ॥

---

६ । नरो० । चित्रमद्भुतम् । स्वर्णवर्णमृगं दृष्ट्वा कानकमित्युक्तम् । विचित्रबिन्दुभिर्नानारूपबिन्दुभि· । अविद्यमानं कुतोऽपि भय यस्य तादृशम् ।

---

५ । हसन्ती सा सीतेति शेष· ।

६ । मायामृगवर्णन वाल्मीकीये—

तं तु सीता मृगं दृष्ट्वा वने काञ्चनसुप्रभम् ।
हेमराजतचित्राभ्यां पार्श्वाभ्यां समलङ्कृतम् ॥
शृङ्गाभ्यां हेमवर्णाभ्यां कान्तिमद्भ्यां विभूषितम् ।
वैदूर्यमणिवर्णाभ्यां कर्णाभ्यां चारुदर्शनम् ॥
प्रभया परिराजन्तं सूक्ष्मरोमतनुत्वचम् ।
नानारत्नविचित्राङ्गं सा व्यस्मयत भाविनी ॥
तेन काञ्चनरोम्णा च प्रवालमणिशृङ्गिणा ।
लोहितादित्यजिह्वेन नक्षत्रपद्मवर्चसा ॥ इति । ३।४९।१-४ ।

७ । अय सुन्दर क्रीडार्थो मृग· क्रीडामृगो भवत्वित्यन्वय· । रा० ।
बद्ध्वा देहि एनमिति शेष । क्रीडामृग इति । वाल्मीकीये—

आर्यपुत्र मृगस्यास्य जाम्बूनदनिभां त्वचम् ।
स्वशय्यायां परिस्तीर्य सुखमिच्छेयमासितुम् ॥ ३।४९।९ ।

इत्यादिना प्रथमत· शय्यास्तरणार्थं मृगचर्मप्रार्थना सीतायास्तत पुनः—

आर्यपुत्राभिरामोऽसौ मृगो हरति मे मन ।
आनयैनं महाबाहो क्रीडार्थं नो भविष्यति ॥ ३।४९।२३ ।
यदि ग्रहणमभ्येति जीवन्नेव मृगस्तव ।
आश्चर्यभूतं भवति विस्मयं जनयिष्यति ॥

---

1. च 'काञ्चन' । 2 छ 'ऽय रत्नसुन्दर.' ।

रक्ष त्वमतियत्नेन सीतां मत्प्राणवल्लभाम् ।
मायिनः सन्ति विपिने राक्षसा घोरदर्शनाः ।
अतोऽत्रावहित साध्वीं रक्ष सीतामनिन्दिताम्[1] ॥ ८ ॥
लक्ष्मणो राममाहेदं [2]देवायं मृगरूपधृक् ।
मारीचोऽत्र न सन्देह एवम्भूतो मृगः कुतः ॥ ९ ॥

श्रीराम उवाच—

यदि मारीच एवायं तदा हन्मि न संशयः ।
मृगश्चेदानयिष्यामि सीता[3]विश्रामहेतवे ॥ १० ॥
गमिष्यामि मृग बद्ध्वा [4]ह्यानयिष्यामि सत्वरः[5] ।
त्व प्रयत्नेन सन्तिष्ठ सीतासरक्षणोद्यत ।
इत्युक्त्वा प्रययौ रामो मायामृगमनुद्रुत ॥ ११ ॥
[6]माया यदाश्रया [7]लोकमोहिनी जगदाकृति ।
निर्विकारश्चिदात्माऽपि पूर्णोऽपि मृगमन्वगात् ॥ १२ ॥

---

८ । नरो० । अवहितोऽप्रमादाश्रय ।

१२ । नरो० । य आश्रयो यस्या सा यदाश्रया । यतो वृद्ध्यादिषड्भावविकारशून्योऽत एव पूर्ण ।

---

समाप्तवनवासानां राज्यस्थानाञ्च न पुन. ।
अन्त पुरेऽपि भूषार्थो मृग एष भविष्यति ॥
जीवन् न यदि तेऽभ्येति ग्रहणं मृगसत्तम ।
अजिनं नरशार्दूल रुचिरं तु भविष्यति ॥
निहतस्यास्य सत्त्वस्य जाम्बूनदसमत्वचि ।
शष्पवृष्यां विनीतायामिच्छाम्यहमुपासितुम् ॥ ३।४९।२६-२९ ।

इत्यादिना क्रीडार्थं शय्यार्थञ्चेत्युभयार्थमेव प्रार्थना ।

८ । मायिनश्छलकर्तारः । अवहितः सावधान । रा० ।

९ । मृगरूपधरोऽयं मारीच एव न मृग , अत्र न सन्देह ; अत एव तदुद्देशेन मा गाः । एवम्भूतो मृग. कुत , न कुत्रापीत्यर्थः । रा० ।

१२ । जगदाकृतिर्जगद्रूपेण परिणम्यमाना । रा० ।

---

1 इत पर च पुस्तके 'लक्ष्मण उवाच' इत्यधिकम् । 2 ग ङ छ 'दुष्टोऽयं' । 3 ग '-विश्वास-' । 4. छ 'ह्याहरिष्यामि' । 5 ग-च 'रम्' । 6. छ 'मायाश्रया यदा' । 7. च 'लोके' ।

भक्तानुकम्पी भगवानिति सत्यं वचो हरिः ।
कर्त्तुं सीताप्रियार्थाय[1] जानन्नपि मृगं ययौ ॥ १३ ॥
अन्यथा पूर्णकामस्य रामस्य विदितात्मनः ।
मृगेण [2]वा स्त्रिया वाऽपि किं कार्यं परमात्मनः ॥ १४ ॥
कदाचिद् दृश्यतेऽभ्यासात्[3] क्षणं धावति [4]लीयते ।
दृश्यते च ततो [5]दूरादेवं राम[6]मपाहरत् ॥ १५ ॥

---

१४ । नरो० । विदित आत्मा येन तादृशस्य ।

१५ । नरो० । अभ्यासात् समीपं प्राप्येत्यर्थः । अभ्यासे इति पाठो वा ।

---

[ ननु परब्रह्मरूपश्चेद्रामः कथं मारीचस्य मायया मुग्धोऽभूत् कथं वा सीतापरतन्त्रोऽगात् इति चेत्, न, भक्तस्य मारीचस्यानुग्रहार्थमित्याह—माययेत्यादि । जगदाकृतिः जगद्रूपा जडाऽपि माया यदधिष्ठानवशाद् बहुरूपा भवति । गो० ]

१३ । हरी राम इति स्वभक्तवचः सत्यं कर्तुं मारीचं जानन्नपि सीताप्रियार्थाय सीताप्रियरूपमर्थमुद्दिश्य मृगं ययौ अनुययावित्यर्थः । अत्र मारीचस्य रामान्मरणं श्रेय इति जानतः स्वस्मिन् प्रेमवत्तया स्वभक्तत्वं निर्णीय तस्य तं मनोरथं पूरयितुम्, रावणस्य पूर्वविचारेण निर्णीतभक्तस्य मनोरथं पूरयितुं च तदनुकम्पया गत इति तात्पर्यम् । रा० ।

१४ । [ अन्यथा इत्यादि । विदितात्मनः सर्वभूतात्मसाक्षिणः । तत्र हेतुः—परमात्मन इति, अतः पूर्णकामस्य । गो० ]

१५ । मृगस्य चेष्टितमाह वाल्मीकिः —

आवध्य कवचं चैव प्रदुद्राव वने मृगम् ।
मनोमारुतवेगश्च मारीचः प्राद्रवद्वने ॥
नातिदूरेण तं रामो गच्छन्तमनुगच्छति ।
स च रामभयोद्विग्नो मारीचो दण्डके वने ॥
बभूवान्तर्हितस्तत्र क्षणात् पुनरदृश्यत ।
एषोऽयमयमेतीति वेगवान् राघवो ययौ ॥
मुहूर्त्तादेव ददृशे मुहूर्त्तान्न प्रकाशते ।
अतिवृत्त इषुत्रासाल्लोभयन् स रघूत्तमम् ॥

---

1 छ '-र्थञ्च' । 2. च 'च,' छ 'प्रियया वाऽपि' । 3 क '-ऽभ्यासे' । 4 छ 'लीलया' । 5 च 'दूरमेव' । 6. च '-मधावत' ।

ततो रामोऽपि विज्ञाय राक्षसोऽयमिति स्फुटम् ।
विव्याध शरमादाय राक्षसं मृगरूपिणम् ॥ १६ ॥
पपात रुधिराक्तास्यो मारीचः पूर्वरूपधृक् ।
हा हतोऽस्मि महाबाहो त्राहि लक्ष्मण मां द्रुतम् ।
इत्युक्त्वा रामवद्वाचा पपात रुधिरा'शन' ॥ १७ ॥

---

१७ । नरो० । रुधिरेण रक्तेन अक्तं म्रक्षितमास्यं यस्य तादृशः ।

---

क्वचिद्दृष्ट क्वचिन्नष्ट· क्वचित्त्रासाच्च विद्रुत ।
क्वचित् स्थित क्वचिल्लीन क्वचिद् वेगेन नि सृत ॥
भयेन महता च्छन्नो मारीचो याति कानने ।
तमपश्यत् ततो रामस्तत्र यान्तमिवाग्रतः ॥
मायामृगं प्रद्रवन्त धनुरानम्य क्रोधन· ।
समापतन्त संप्रेक्ष्य राघवं धन्विन मृग ॥
अन्तर्हितो मुहुर्भूत्वा पुन संदर्शयत्यपि ।
ददृशे मुहुरासन्ने मुहुर्दूरादहृश्यत ॥
दर्शनादर्शनेनैवमपाकर्षत् स राघवम् ।
अवेक्ष्यावेक्ष्य धावन्तं धनुष्पाणिर्महावने ॥
दृश्यमानमदृश्यञ्च वनोद्देशेषु केषुचित् ।
छिन्नाभ्रैरिव सवीतं शरदीवेन्दुमण्डलम् ॥ इत्यादि ।३।९०।३-१२।

१७ । रामवद्वाचा रामवाक्तुल्यवाचा । रा० ।

रामवद्वाचेति । अत्र कारणमाह वाल्मीकि'—

रामस्य सदृशं व्यक्त स्वरमालम्ब्य पापकृत् ।
हा लक्ष्मणेति चुक्रोश त्रायस्वेति महावने ॥
अन्तकालेऽपि संप्राप्ते तस्य बुद्धिरभूदियम् ।
स्वरमेतं यदि श्रुत्वा लक्ष्मणं प्रेरयेदिह ॥
सीता शून्येन मनसा भर्तृस्नेहसमुत्सुका ।
ततो लक्ष्मणहीनां तां रावणो वै हरेदिति ॥ इत्यादि ।३।९०।२२-२४।

---

1 क-ख '-नन.' ।

यन्ना[1]मज्ञोऽपि मरणे स्मृत्वा तत्साम्यमाप्नुयात् ।
किमुताग्रे हरिं पश्यंस्तेनैव निहतोऽसुरः ॥ १८ ॥
तद्देहादुत्थितं तेजः सर्वलोकस्य पश्यतः ।
राममेवाविशद्देवा विस्मयं परमं ययुः ॥ १९ ॥
कि कर्म कृत्वा किं प्राप्तः पातकी मुनिहिंसकः ।
अथवा राघवस्यायं महिमा नात्र संशयः ॥ २० ॥
रामबाणेन संविद्धः पूर्वं राममनुस्मरन् ।
भयात् सर्वं परित्यज्य [2]गृहवित्तादिकञ्च यत् ॥ २१ ॥
हृदि रामं [3]सदा ध्यात्वा निर्धूता[4]शेषकल्मषः ।
अन्ते रामेण निहतः पश्यन् राममवाप सः ॥ २२ ॥

---

१८ । नरो० । यस्य नाम यन्नाम, तज्जानातीति यन्नामज्ञ । मरणे इति सति सप्तमी । यद्वा मरणे मरणसमये ।

१९ । नरो० । तेजोऽहंस्वरूपज्योति । यद्वा तेजोऽन्तःकरणप्रतिबिम्बित चैतन्यं राममेवाविशदिति तदानीमन्तःकरणाभावाद् राममेव प्रविष्टमित्यर्थः ।

---

१८ । स च भगवत्सायुज्यं प्राप्त इत्याह—यदिति । त पश्यंस्तेन हतोऽसुरः सायुज्यं प्राप्त इति किमु वक्तव्यमिति । रा० ।

१९ । तदेव स्पष्टमाह—तद्देहादिति । तस्य रामप्रवेशं दृष्ट्वा देवा परमं विस्मयं ययुः । राममहिमविषये इति शेष । रा० ।

[ तद्देहादुत्थितमित्यादि । राममेवाविशत् देहाद्देहं परित्यज्य तद्देहादुत्थितं तेजो राममेवाविशत् । गो० ]

२१ । रामभयादेव सर्वं गृहादिकं परित्यज्य पूर्वमपि रामं स्मरन् स्थित इति शेषः । रा० ।

२२ । तादृशः स तत्स्मृतिदूरीकृताशेषपापः । अन्ते रामेण निहतो रामं पश्यन् राममेव प्राप । अत्र भगवद्भयमेव वैराग्यादिज्ञानान्तमकलमुक्तिसाधनसम्पादकं जातमिति सूचितम् । मुख्यतयैतदेव सर्वसाधनमिति मन्तव्यम् । रा० ।

---

1 क-ख-ग घ ङ-च-छ 'माज्ञो'। 2 च 'राज्यगेहा'। 3 ग 'समाधाय', ङ 'सदा ध्यायन्'।
4 छ '-खिल-'।

द्विजो वा राक्षसो वाऽपि पापी वा धार्मिकोऽपि वा ।
त्यजन् कलेवरं रामं स्मृत्वा याति परं पदम् ।
इति तेऽन्योन्यमाभाष्य ततो देवा दिवं ययुः ॥ २३ ॥
राम[1]स्तच्चिन्तयामास म्रियमाणोऽसुराधमः ।
हा लक्ष्मणेति [2]मद्वाक्यमनुकुर्वन् [3]ममार किम् ॥ २४ ॥
श्रुत्वा मद्वाक्यसदृशं वाक्यं सीताऽपि किं भवेत् ।
इति चिन्तापरीतात्मा रामो दूराच्चयवर्त्तत ॥ २५ ॥
सीता [4]तद्भाषितं श्रुत्वा मारीचस्य दुरात्मनः ।
भीताऽतिदुःखसंविग्ना लक्ष्मणन्त्विदमब्रवीत् ॥ २६ ॥
गच्छ लक्ष्मण वेगेन भ्राता तेऽसुरपीडित ।
हा लक्ष्मणेति वचन भ्रातुस्ते न शृणोषि किम् ॥ २७ ॥
तामाह लक्ष्मणो देवि रामवाक्यं न तद्भवेत् ।
यः कश्चिद्राक्षसो [5]देवि म्रियमाणोऽब्रवीद्वच ॥ २८ ॥
रामस्त्रैलोक्यमपि यः क्रुद्धो नाशयति क्षणात् ।
स कथं दीनवचनं भाषतेऽमरपूजितः ॥ २९ ॥

---

२९ । नरो० । किं भवेत् कथं भवेत् न जीवेदित्यर्थः । नष्टायां मायासीतायां रावणवधोपाय. को भवेदिति चिन्ता ।

---

२४-२९ । किं ममार किमर्थं मृत । किं भवेत् किमवस्था भवेत् । रा० ।

२६ । तदेव स्पष्टमाह—भीता भीतेवेत्यर्थ । यद्वा अस्या मायासीतात्वात् तन्मायैव वास्तवी विभीति । रा० ।

२९ । अत्राऽऽह वाल्मीकि.—

देवि देवमनुष्येषु गन्धर्वपतगेषु च ।
राक्षसेषु पिशाचेषु किन्नरेषूरगेषु च ॥
दानवेषु च घोरेषु विद्यते न च शोभने ।
यो रामं प्रतियुध्येत महेन्द्रमिव मानुष ॥
अवध्य समरे रामो नैवं त्वं वक्तुमर्हसि ।
नोत्सहे त्वां विरहितुं शून्येऽह राघवं विना ॥ इत्यादि । ३।४५।१५-१७ ।

---

1 ङ '-श्च चि-' । 2. छ 'तद्वाक्य-' । 3 ग-च-छ 'पपात' । 4 छ 'तद्वचनं' । 5. ग 'रामं' ।

क्रुद्धा लक्ष्मणमालोक्य सीता बाष्पविलोचना ।
प्राह लक्ष्मण दुर्बुद्धे भ्रातुर्व्यसन[1]मिच्छसि ।
प्रेषितो भरतेनैव रामनाशाभिकाङ्क्षिणा ॥ ३० ॥
मां नेतुमागतोऽसि त्वं रामनाश उपस्थिते ।
न प्राप्स्यसे त्वं मामद्य पश्य प्राणांस्त्यजाम्यहम् ॥ ३१ ॥
न जानातीदृशं रामस्त्वां भार्याहरणोद्यतम् ।
रामादन्यं न [2]स्पृशामि त्वां वा भरतमेव वा ।
इत्युक्त्वा वध्यमाना सा स्वबाहुभ्यां रुरोद ह ॥ ३२ ॥
तच्छ्रुत्वा लक्ष्मणः कर्णौ पिधायातीव दुःखित ।
[3]मामेवं भाषसे चण्डि धिक् त्वां नाश[4]मुपैष्यसि ॥ ३३ ॥
इत्युक्त्वा वनदेवीभ्यः समर्प्य जनकात्मजाम् ।
ययौ [5]दुःखातिसंविग्नो राममेव शनैः शनैः ॥ ३४ ॥
[6]ततोऽन्तरं समा[7]लोक्य रावणो भिक्षु[8]वेशधृक् ।
सीतासमीप[9]मगमत् स्फुरद्दण्डकमण्डलुः ॥ ३५ ॥

---

३२ । नरो० । वध्यमाना ताड्यमाना वक्षसीति शेषः ।

३५ । नरो० । अन्तरमवकाशम् । भिक्षुवेशधृग् भिक्षुचिह्नधृक् । भिक्षुज्ञापकविशेषणमाह—स्फुरद्दण्डकमण्डलुरिति ।

---

३२ । स्वबाहुभ्यामात्मानं वध्यमाना ताड्यमाना रुरोद ।

३३ । कर्णौ पिधाय ईदृशं पापम् एषा वदतीति तस्य श्रवणायोग्यत्वात् कर्णपिधानम् । रा० ।

३४ । वनदेवीभ्यः समर्पणमाह वाल्मीकीये—

गच्छामि यत्र काकुत्स्थः स्वस्ति तेऽस्तु वरानने ।
रक्षन्तु त्वां विशालाक्षि समग्रा वनदेवताः ॥ इति ३।९१।३७ ।

३५ । वाल्मीकीयेऽपि—

एतदन्तरमासाद्य दशग्रीवः प्रतापवान् ।
अभिचक्राम वैदेहीं परिव्राट्छद्मना तदा ॥ इति । ३।९२।४ ।

---

1 क 'काङ्क्ष'। 2 ग 'जानामि'। 3 ङ 'मा मैव'। 4 क '-मुते', ख 'मुते-'। 5 क-ख-घ 'दुःखाभि-'। 6 ग 'अतो-'। 7 ग '-साद्य'। 8 क '-रूप-'। 9 च '-मभ्यायात्'।

सीता तमवलोक्याऽऽशु नत्वा सम्पूज्य भक्तितः ।
कन्दमूलफलादीनि दत्त्वा स्वागतमब्रवीत् ॥ ३६ ॥
मुने भुङ्क्ष्व फलादीनि विश्रमस्व [1]यथासुखम् ।
इदानीमेव [2]भर्त्ता मे ह्यागमिष्यति ते प्रियम् ।
करिष्यति विशेषेण तिष्ठ त्वं यदि रोचते ॥ ३७ ॥

भिक्षुरुवाच—

का त्वं कमलपत्राक्षि को वा भर्त्ता तवानघे ।
किमर्थमत्र ते वासो वने राक्षस[3]सेविते ।
ब्रूहि [4]भद्रे [5]ततः सर्वं [6]स्ववृत्तान्तं निवेदय ॥ ३८ ॥

सीतोवाच—

अयोध्याधिपतिः श्रीमान् राजा दशरथो महान् ।
तस्य [8]ज्येष्ठसुतो रामः सर्वलक्षणलक्षितः ॥ ३९ ॥
तस्याहं[9] धर्मतः पत्नी सीता जनकनन्दिनी ।
तस्य भ्राता कनीयांश्च लक्ष्मणो भ्रातृवत्सलः ॥ ४० ॥
पितुराज्ञां पुरस्कृत्य दण्डके[10] वस्तुमागतः ।
चतुर्दश समास्त्वान्तु ज्ञातुमिच्छामि [11]मे वद ॥ ४१ ॥

---

३८ । नरो० । सेयं न वेत्ति सन्देहे आह—का त्वमित्यादि ।

३९ । नरो० । का त्वमिति यदुक्तं तत्राऽऽह—अयोध्याधिपतिरित्यादि । पतिपितृनिवेदनं विना तन्निवेदनं न भवतीति तन्निवेदनम्, भर्तृनिवेदनं विना स्वनिवेदनं न भवतीति प्रथमं तन्निवेदनमिति नास्ति विरोधः ।

४० । नरो० । प्रश्नं विनाऽपि प्रसङ्गात् तस्येत्याद्युक्तम् ।

४१ । नरो० । किमर्थमित्यादि यदुक्तं तत्राऽऽह—पितुराज्ञामित्यादि । मम भर्त्तेति शेषः । पतिव्रतायाः पतिं विना स्थितिरनुचितेति ममाप्यत्रागमनमिति भावः ।

---

३७ । ते प्रियं तद्योग्यातिथ्यकरणेनेति शेषः । रा० ।

३८ । ततस्त्वद्वृत्तान्तवर्णनानन्तरम् । रा० ।

---

1 क 'महासुखम्' । 2 ङ 'मे भर्त्ता' । 3 च '-भीषिते' । 4 क 'शीघ्र' । 5 च 'द्रुत' । 6 ङ 'मे वृत्तान्त', ग-छ 'यद्वृत्तान्त', च 'मद्वृत्तान्त' । 7 घ '-दये' । 8. क-ख 'ज्येष्ठ सु-' । 9. क '-हञ्च धर्मपत्नी' । 10. च '-क' । 11. च 'मूलतः' ।

भिक्षुरुवाच—

पौलस्त्यतनयोऽहन्तु रावणो राक्षसाधिपः ।
त्वत्कामपरितप्तोऽहं त्वां नेतुं पुर[1]मागतः ॥ ४२ ॥
मुनिवेशेन रामेण किं करिष्यसि[2] मां भज ।
भुङ्क्ष्व [3]भोगान् मया सार्द्धं त्यज दुःखं वनोद्भवम् ॥ ४३ ॥
श्रुत्वा तद्वचनं सीता भीता किञ्चिदुवाच तम् ।
[4]यद्येवं भाषसे [5]मां त्वं नाशमेष्यसि राघवात् ॥ ४४ ॥
आगमिष्यति रामोऽपि क्षणं तिष्ठ सहानुजः ।
मां को धर्षयितुं शक्तो हरेर्भार्यां शशो यथा ॥ ४५ ॥
रामबाणैर्विभिन्नस्त्वं पतिष्यसि महीतले ।
इति सीतावचः श्रुत्वा रावणः क्रोधमूर्च्छितः ।
स्वरूपं दर्शयामास महापर्वतसन्निभम् ॥ ४६ ॥

---

४२ । नरो० । 'त्वान्तु ज्ञातुमिच्छामि मे वदे'ति यदुक्तं तत्राऽऽह—पौलस्त्यतनय इत्यादि । त्वमत्र कथमागत इति पृष्टः सन् अस्थिरमतित्वात् मारीचवचनादपि रामं परमेश्वरत्वेन निश्चेतुमशक्तत्वात् सीतायां मातृबुद्धिरहितत्वादाह—त्वत्कामपरितप्त इत्यादि । त्वत्कामपरितप्त इति । उपभोग्यत्वेन तव यः कामः इच्छा तेन परितप्तः सर्वतोभावेन प्राप्तसन्तापः इत्यर्थः ।

४३ । नरो० । मुनिवेशेनेति । मुनिरिव वेशो यस्येति, मुनिवेश इव वेशो यस्येति वा बहुव्रीहिः । एतद्विशेषणेन विलासित्वाभावः सूचितः ।

४४ । नरो० । भीता रामविश्लेषाद् रावणाद्वा ।

४५ । नरो० । हरेः सिंहस्य ।

४६ । नरो० । क्रोधमूर्च्छितः कोपेन कर्त्तव्याकर्त्तव्यविवेकाभावाश्रयः इत्यर्थः । महापर्वतसन्निभं बृहत्पर्वततुल्यमित्यर्थः ।

---

४२ । त्वां पुरं स्वनगरं लङ्कारूपं नेतुम् आगत इत्यन्वयः । रा० ।

४३ । अत्र वाल्मीकीये सीतारावणयोर्महान् कथासङ्घर्षः । स च आरण्ये त्रिपञ्चाशचतुःपञ्चाशसर्गयोः ।

४५ । हरेः सिंहस्य । शशः क्षुद्रमृगः । रा० ।

४६ । रावणस्य रूपान्तरं तद्ग्रहणप्रकारश्चाऽऽह वाल्मीकीये—

सीतायास्तद्वचः श्रुत्वा दशग्रीवः प्रतापवान् ।
हस्ते हस्तं विनिष्पिष्य चकार सुमहद् वपुः ॥

---

1 छ 'पुर आगत' । 2. च '-ति' । 3. च 'भोग' । 4. घ 'यदेव' । 5 च 'त्व मा'

दशास्यं विंशतिभुजं कालमेघसमद्यु[1]तिम् ।
[2]त दृष्ट्वा वनदेव्यश्च भूतानि च वितत्रसुः ॥ ४७ ॥
ततो विदार्य धरणीं नखैरुद्धृत्य बाहुभिः ।
तोलयित्वा रथे क्षिप्त्वा ययौ क्षिप्रं विहायसा ॥ ४८ ॥

---

४७ । नरो० । दश आस्यानि यस्य तादृशम् । विंशतिर्भुजा यस्य यत्र वा तं तथा । समा द्युतिर्यस्य स तथा, कालमेघेन समद्युतिस्तं कालमेघसमद्युतिम् । कालशब्दश्चात्र प्रलयकाले आषाढे वा वर्त्तते । त रावणम् । महापर्वतसन्निभमित्यादिविशेषणानि तमित्यस्य बोध्यानि ।

४८ । नरो० । ततो विदार्येति । नलकुवरशापो रावणेन स्पर्शाभावे कारणम् ।

---

स परिव्राजकच्छद्मा महाकायशिरोधर' ।
प्रतिपेदे स्वकं रूपं रावणो राक्षसाधिप ॥
सद्य. सौम्यं परित्यज्य भिक्षुरूपं निशाचर. ।
स्वं रूपं कालरूपाभ भेजे वैश्रवणानुज. ॥
महाललाटो रक्ताक्षो व्यूढोरस्को महाभुजः ।
सिंहदंष्ट्रो वृषस्कन्धश्चित्राङ्गो दीप्तमूर्धज' ॥
श्रूस सहृष्टरोमाङ्ग कृष्णाञ्जनगिरिप्रभ' ।
रक्ताम्बरधरो घोरस्तप्तकाञ्चनकुण्डल ॥ इत्यादि । ३।५५।१-५ ।

४८ । नखैर्धरणी विदार्य भूसम्बद्धायाश्चालयितुमशक्यत्वात् । बाहुभिस्तामुद्धृत्य भुव. सकाशात् उपरिकृता । रा० ।

[ ततो विदार्य धरणीमिति । अयमभिप्राय —इयं साक्षाल्लक्ष्मीः पार्थिवी पृथिव्यां कदाचिल्लीयते इति भुवो नखैर्विदारणम् । 'प्रादेशतालो गोकर्ण' इत्यमर. ।

दशतालसमो रामो नवतालस्तु लक्ष्मण. ।
सप्ततालाा च वैदेही त्रिंशत्तालश्च रावण. ॥ इति । गो० ]

वाल्मीकीये भूविदारणादीनां प्रसङ्गोऽपि न दृश्यते । सीताग्रहणप्रकारश्च तस्य—

वैदेहीं रावण' क्रुद्धो निर्दहन्निव राक्षसः ।
सव्येन सीतां पद्माक्षीं मूर्धजेषु करेण स. ॥

---

1. क ख घ '-द्युतिः' । 2 क-ख घ 'तंदृ-' ।

श्रुत्वा [1]तत्क्रन्दितं दीनं सीतायाः पक्षिसत्तमः ।
जटायुरुत्थितः शीघ्रं नगाग्रात् तीक्ष्णतुण्डकः ॥ ४९ ॥

तिष्ठ तिष्ठेति [2]तं प्राह को गच्छति ममाग्रतः ।
मुषित्वा लोकनाथस्य भार्यां [3]शून्याद्वनालयात् ।
शुनको मन्त्रपूतं त्वं पुरोडाशमिवाध्वरे ॥ ५० ॥

इत्युक्त्वा तीक्ष्णतुण्डेन चूर्णयामास तद्रथम् ।
वाहान् बिभेद पादाभ्यां चूर्णयामास तद्धनुः ॥ ५१ ॥

---

५० । नरो० । शुनकः कुक्कुरः, पुरोडाशम् अपूपम्, अध्वरे यज्ञे ।

---

ऊर्वोस्तु दक्षिणेनैनामग्रहीत् पाणिना शुभाम् ।
सा गृहीता विचुक्रोश राक्षसेन बलीयसा ॥ इति ।३।४९।२४-२७ ।

रथे क्षिप्त्वेति । वाल्मीकीयेऽपि—

अङ्केनाऽऽदाय वैदेहीं रथमारोपयत्तदा । इति । ३।४९।३३ ।

सीताग्रहणसमयमाह वाल्मीकीये—

अर्द्धरात्रार्द्धदिवसे अर्द्धचन्द्रार्द्धभास्करे ।
रक्षो जग्राह वैदेहीं शूद्रो वेदश्रुतीमिव ॥ इति । ३।४९।३४ ।

५० । मन्त्रपूतं पुरोडाशं मुषित्वा शुनक इव लोकनाथस्य रामस्य भार्यां हृत्वा ममाग्रतः को गच्छतीत्यन्वयः । रा० ।

वाल्मीकीये जटायूरावणयोर्विकत्थनाप्रकारो युद्धप्रकारो रावणस्य विडम्बनाप्रकारश्च अत्यद्भुतः । स च अरण्यकाण्डीयषट्पञ्चाशसप्तपञ्चाशसर्गयोरनुसन्धेय ।

५१ । धनुर्वाहरथविध्वंसनप्रकारं वाल्मीकीये—

ततोऽस्य सशरं चापं मणिमुक्ताविभूषितम् ।
चरणाभ्यां महातेजा बभञ्ज पतगेश्वरः ॥ ३।५६।४४ ।
कामगन्तु महाघोरं चक्रकूवरभूषणम् ।
मणिहेमविचित्राङ्गं बभञ्ज च महारथम् ॥ ३।५६।४९ ।
समाक्षिप्य रथात्तस्मात् सारथिं पतगेश्वर ।
गजाङ्कुशनिभेनाऽऽशु दारयित्वा पदाऽसृजत् ॥ ३।५६।५० ।

---

1. घ 'तद्रोदन' । 2. ग-ङ 'सप्राह', च-छ 'स प्राह' । 3. छ 'शून्यालयाद्वनात्' ।

ततः सीतां परित्यज्य रावणः खड्गमाददे ।
चिच्छेद पक्षौ सामर्षः पक्षिराजस्य धीमतः ॥ ५२ ॥
[1]पपात किञ्चिच्छेषेण प्राणेन भुवि पक्षिराट् ।
[2]पुनरन्यरथेनाऽऽशु सीतामादाय रावणः ॥ ५३ ॥
क्रोशन्ती राम रामेति त्रातारं नाधिगच्छती ।
हा राम हा जगन्नाथ मां न पश्यसि दुःखिताम् ।
रक्षसा नीयमानां स्वां भार्यां मोचय राघव ॥ ५४ ॥
हा लक्ष्मण महाभाग त्राहि मामपराधिनीम् ।
वाक्[3]शरेणाऽऽहतस्त्वं मे क्षन्तुमर्हसि देवर ॥ ५५ ॥
इत्येवं क्रोशमानां तां रामागमनशङ्कया ।
जगाम वायुवेगेन सीतामादाय सत्वरः[4] ॥ ५६ ॥

---

रावणस्य तदानीन्तनी अवस्था वाल्मीकीये—

स भग्नधन्वा विरथो हताश्वो हतसारथिः ।
अङ्केनाऽऽदाय वैदेहीं पपात भुवि रावणः ॥ ३।५६।११ ।

५२ । खड्गमाददे इति ।

तस्य प्रयतमानस्य रामस्यार्थे स रावणः ।
पक्षौ पादौ च पार्श्वञ्च चिच्छेदोद्यम्य सायकम् ॥ ३।५७।३१ ।

इत्यादिना प्राच्यवाल्मीकीये बाणेन । पाश्चात्त्ये पुनः—

तस्य व्यायच्छमानस्य रामस्यार्थे स रावणः ।
पक्षौ पादौ च पार्श्वौ च खड्गमुद्धृत्य सोऽच्छिनत् ॥ ३।५१।४२ ।

इत्यादिना खड्गेनैव ।

५३ । अन्यरथेन मायाकल्पितेन सीतामादायागच्छदिति शेषः । रा० ।

अन्यरथेनेति । वाल्मीकीये नास्ति रथान्तरकल्पना । तथाच—

स तु तां राम रामेति रुदन्तीं लक्ष्मणेति च ।
जगामाकाशमादाय रावणो जनकात्मजाम् ॥ इति । ३।५८।१८ ।

५४ । क्रोशन्ती सीता, मां न पश्यसि मां किं न पश्यसीत्यर्थः । एवं विललापेति शेषः । रा० ।

---

1. क 'किञ्चिच्छेषेण प्राणेन पपात' । 2 ङ 'पुनरन्यद्रथे-', क 'पुनश्च स-' । 3 क-ख-घ '-शरेण हत-' । 4. च '-रम्' ।

विहायसा नीयमाना सीताऽपश्यदधोमुखी ।
पर्वता[1]ग्रे स्थितान् पञ्च वानरान् वारिजानना[2] ॥ ५७ ॥
उत्तरीयार्द्धखण्डेन विमुच्याऽऽभरणादिकम् ।
बद्ध्वा चिक्षेप रामाय कथयन्त्विति पर्वते ॥ ५८ ॥
ततः समुद्रमुल्लङ्घ्य लङ्कां गत्वा स रावण ।
स्वान्त पुरे[3] रहस्ये तामशोकविपिनेऽक्षिपत् ।
राक्षसीभिः परिवृतां मातृबुद्ध्याऽनुपाल[4]यन् ॥ ५९ ॥

---

५८ । नरो० । पञ्च वानरा रामाय कथयन्त्विति मनसि कृत्वा आभरणादिकं विमुच्य उत्तरीयार्धखण्डेन बद्ध्वा पर्वते चिक्षेपेति सम्बन्ध । उत्तरीयार्धखण्डेनेति—उत्तरीयस्य वस्त्रस्य यदर्धं तस्यार्द्धेनेत्यर्थ. ।

५९ । नरो० । मातृबुद्ध्याऽनुपालयन्निति—इदानीं मारीचवाक्यार्थस्य पुनः पुन. स्मरणात् स्थिरबुद्ध्या मातृबुद्धिरिति ।

---

५८ । आभरणादिकं विमुच्य उत्तरीयार्धखण्डेन बद्ध्वा रामाय कथयन्त्विति पर्वते चिक्षेप । अनेन स्त्रीचरित्रस्याशक्यवक्तव्यता सूचिता । रा० ।

वस्त्रालङ्कारादिविनिक्षेपमवलम्ब्य वाल्मीकीये—

ह्रियमाणा तु वैदेही कञ्चिन्नाथमपश्यती ।
ददर्श गिरिशृङ्गस्थान् पञ्च वानरपुङ्गवान् ॥
तेषां मध्ये विशालाक्षी कौषेयं कनकप्रभम् ।
उत्तरीयं वरारोहा शुभान्याभरणानि च ॥
मुमोच यदि रामस्य शंसेयुरिति जानकी । ३।६०।५-७ ।

५९ । रहसि एकान्ते गुप्तदेशे अनुपालयदन्वपालयदित्यर्थ. । अडभाव आर्ष. । रा० ।

स्वान्त पुर इत्यादि । प्रथमत. स्वान्तःपुरे पश्चादशोकवने अक्षिपदित्यर्थः ; वाल्मीकीये-नैकवाक्यत्वात् ।

स प्रविश्य पुरीं लङ्कां सुविभक्तमहापथाम् ।
निदधे रावण सीतां मयो मायामिवासुरः ॥ ३।६०।२१ ।

इत्यादिना ।

सोऽभिगम्य पुरीं लङ्कां सुविभक्तमहापथाम् ।
संरूढकक्ष्यां बहुलां स्वमन्तःपुरमाविशत् ॥

---

1 क-ख घ '-ग्रस्थि-' । 2 च '-नान्' । 3 ग '-पुररहस्ये', ङ '-पुरे बहि सीताम-' । 4. क-ख-ग-घ-ङ-च-छ '-यत्' ।

[1]यदि शोचामि तां दुःखसन्तप्तः कामुको यथा ।
[2]तदा क्रमेणानुचिन्वन् सीतां यास्येऽसुरालयम् ॥ ५ ॥
रावणं सकुलं हत्वा सीता[3]मग्नौ स्थितां पुनः ।
मयैव स्थापितां नीत्वा [4]यातोऽयोध्यामतन्द्रितः ॥ ६ ॥
अहं मनुष्यभावेन जा[5]तोऽस्मि ब्रह्मणाऽर्थितः ।
मनुष्यभावमापन्नः [6]कश्चित् कालं वसामि कौ ॥ ७ ॥
ततो मायामनुष्यस्य चरितं [7]मेऽनुशृण्वताम् ।
मुक्तिः स्यादप्रयासेन [8]मुक्तिमार्गानु[9]वर्त्तिनाम् ॥ ८ ॥
निश्चित्यैवं तदा दृष्ट्वा लक्ष्म[10]णश्चेदमब्रवीत् ।
किमर्थमागतोऽसि त्वं सीतां त्यक्त्वा मम प्रियाम् ।
नीता वा भक्षिता वाऽपि राक्षसैर्जनकात्मजा ॥ ९ ॥
लक्ष्मणः प्राञ्जलिः प्राह सीताया दुर्वचो [11]रुदन् ।
हा लक्ष्मणेति वचनं राक्षसोक्तं श्रुतं [12]तया ।
त्वद्वाक्यसदृशं श्रुत्वा मां [13]गच्छेति त्वराऽब्रवीत् ॥ १० ॥

---

७। नरो०। कौ पृथिव्याम्।

---

५। तां सीतामित्यर्थः। असुरालयं न सुरा असुरा राक्षसाः, तेषामालयं रावणालयम् इत्यर्थः।

६-७। नीत्वा प्राप्य अयोध्यां याता गन्ता। एतत् किमर्थं ज्ञानगोपनं तत्राऽऽह—ब्रह्मणा प्रार्थितोऽहं मनुष्यभावेन जातोऽस्मि, एवञ्च तद्भावसंरक्षणायैतदिति भावः। ननु रावणवधोत्तरं पुनरयोध्यागमनेन तत्र स्थानेन वा न फलं तत्राऽऽह—मनुष्यभावमिति। रा०।

अतन्द्रितोऽहं सकुलं रावणं हत्वा मयैव स्थापितामग्नौ स्थितां सीतां पुनर्नीत्वा अयोध्यां यातो गतो भविष्यामि गमिष्यामीत्यर्थः। मनुष्यभावेन मानुषरूपेण। मनुष्यभावमापन्नो मानुषोचितस्वभावाद्यन्वित इत्यर्थः।

८। मायामनुष्यस्य मायया छलेन गृहीतमनुजरूपस्य, अथवा मायया सीतया सह गृहीतमनुजरूपस्य।

१०। रुदन् लक्ष्मणः प्राञ्जलिः सीताया दुर्वचः प्राह इत्यन्वयः।

---

1. ग-ङ-छ 'परिशो-'। 2 च पुस्तके इदमर्द्धं नास्ति। 3 च '-मग्न्युत्थिता'। 4 क ख-ग-घ 'याताऽयो-'। 5 ङ छ '-तोऽपि'। 6 क ख ग-घ 'किञ्चित्', च 'कियत्-'। 7 च-छ 'मेऽन्वहं'। 8 क-ख-घ 'भक्ति'। 9 ग 'सारिणाम्'। 10 क ख-घ 'णं वाक्य-'। 11. च 'ब्रुवन्'। 12. ङ-च-छ 'मया'। 13 च 'गच्छस्वेति चाब्रवीत्'।

[1]रुदन्ती सा मया प्रोक्ता देवि राक्षसभाषितम् ।
नेदं रामस्य वचन [2]स्वस्था भव [3]शुचिस्मिते ॥ ११ ॥
इत्येव सान्त्विता साध्वी मया प्रोवाच मां पुन' ।
यदुक्त [4]दुर्वचो राम [5]न वाच्यं पुरतस्तव ।
कर्णौ पिधाय निर्गत्य यातोऽहं त्वां [6]समीक्षितुम् ॥ १२ ॥
रामस्तु लक्ष्मण प्राह तथाऽप्यनुचित कृतम् ।
त्वया स्त्रीभाषितं सत्य कृत्वा [7]त्यक्त्वा शुभाननाम् ॥ १३ ॥
नीता वा भक्षिता [8]वाऽपि राक्षसैर्नात्र सशय· ।
इति चिन्तापरो राम' स्वाश्रमं त्वरितो[9] ययौ ॥ १४ ॥
तत्राद्दष्ट्वा जनकजां विललापातिदु खितः ।
हा प्रिये क्व गताऽसि त्व नासि पूर्ववदाश्रमे ॥ १५ ॥
अथवा मद्विमोहार्थं लीलया क्व विलीयसे ।
इत्याचिन्वन् वन सर्व नापश्यज्जानकीं तदा ॥ १६ ॥

---

१४ । नरो० । इति चिन्तैव परा परमा यस्य स तथा ।

१६ । नरो० । लीयसे दिवादित्वाद् यत् । आचिन्वन् मृगयन् ।

---

तया सीतया राक्षसोक्तं हा लक्ष्मणेति वचनं श्रुतम् । ततश्च सा तत् राक्षसोक्त वचनं त्वद्वाक्यसदृशं श्रुत्वा त्वर त्वरस्व शैघ्र्यं कुरु, गच्छ राममन्वेष्टु याहीति मामब्रवीत्, यद्वा त्वरा त्वरान्विता सतीत्यर्थ ।

१२ । मया इत्येवं सान्त्विता साध्वी पुनर्मां प्रोवाच इत्यन्वय । किमुवाच इत्याह—यदुक्तमिति ।

१३ । तथाऽपि स्त्रीस्वभावादेव तदुक्तावपि । सत्यं कृत्वा सत्यं मत्वेत्यर्थ । यत् शुभाननां त्यक्त्वा आगत तदनुचितं कृतमित्यन्वय । रा० ।

१६ । मद्विमोहार्थं मम मोहार्थं क्व क्वचिद् विलीयसे किमित्यर्थ । आचिन्वन् अन्वेषयन् । रा० ।

---

1 घ 'रुदती' । 2 ग ङ-च-छ 'सुस्था' । 3 ग-च 'सुशोभने', छ 'शुभानने' । 4 ग-ङ-च-छ 'तद्वचो' । 5 ग ङ 'दुर्वाक्य', च छ 'दुवाच्य' । 6 छ 'निरीक्षि' । 7 ग च छ 'त्यक्ता शुभानना' । 8 ङ 'वा सा', छ 'सा वा' 9 च छ '-त' ।

वनदेव्यः कुतः सीतां ब्रुवन्तु मम वल्लभाम् ।
मृगाश्च पक्षिणो [1]वृक्षा दर्शयन्तु मम प्रियाम् ॥ १७ ॥

इत्येवं विलपन्नेव रामः सीतां न कुत्रचित् ।
सर्वज्ञः [2]सर्वदृग् व्यापी नापश्यद्रघुनन्दनः ॥ १८ ॥

आनन्दोऽप्य[3]नुशोचेत् तामचलोऽप्यनुधावति ।
निर्ममो निरहङ्कारोऽप्यखण्डानन्दरूप[4]वान् ।
मम जायेति सीतेति विललापातिदुःखितः ॥ १९ ॥

---

१८। नरो०। यतो व्यापी सर्वव्यापी अत सर्वदृक् सर्वद्रष्टा अत एव च सर्वज्ञ· सर्ववित्, सर्वदृगपि रघुनन्दनो नापश्यदित्यन्वय·। सर्वद्रष्टुरदर्शनासम्भवाद्विरोध·, क्षत्रियशरीरावच्छिन्नस्य परमेश्वरस्य चक्षुरिन्द्रियसन्निकर्षाभावादविरोध·।

१९। नरो०। आनन्दोऽप्यनुशोचेत्तामिति, आनन्दरूपस्यानुशोचनासम्भवाद् विरोध, लोकवञ्चनार्थमनुशोचनमित्यविरोध। अचलोऽप्यनुधावतीति, अचलस्याशेषशरीरत्यागिनोऽनुधावनासम्भवाद् विरोध, धृतमानुषरूपस्य तत्सम्भवादविरोध। निर्ममो निरहङ्कारोऽप्यखण्डानन्दरूपवान्। मम जायेति सीतेति विललापातिदु खित इति, निर्ममस्य ममताशून्यस्य ममत्वासम्भवाद्विरोध, मम जायेति सीतेत्युक्तिर्लोकवञ्चनार्थेति अविरोध। निरहङ्कारस्य अन्त करणशून्यस्य विलापासम्भवाद्विरोध, सोऽपि लोकवञ्चनार्थ इत्यविरोध। अखण्डानन्दरूपस्य दु खितत्वासम्भवाद् विरोध·, सोऽपि लोकवञ्चनार्थ इत्यविरोध·। अत्र विरोधाभासनामाऽलङ्कार·। तल्लक्षणं यथा—'विरोध· सोऽविरोधेऽपि विरुद्धत्वेन यद्वच।' (काव्यप्र० अल १६६) इति। अपिशब्दा विरोधाभासद्योतकाः।

---

१७। कुत कुत्रेत्यर्थ। क्वचित् 'कुत्रे'त्येव पाठ·। मृगा इत्यादि सम्बोधनानि। रा०।

१८। न कुत्रचिद्ददर्शेति शेष·। सर्वथा सर्वप्रकारेण पश्यन्नपि क्वापि देशे नापश्यत्। रा०।

१९। यदानन्दस्तन्मयः सर्वशक्तिसमृद्धो वा तामन्वशोचत्, यदचलोऽप्यनुधावति तत्कर्तृक· शोकोऽचलकर्तृकं धावनं तदेतदाश्चर्यमिति भाव·। निर्मलत्वादिगुणोऽपि मम जायेति विललाप। मायागृहीतमनुष्यत्वस्य लोकान् सत्यत्वेन प्रत्याययितुमिति भाव। अतिदु·खित· स इव। रा०।

---

1 ग 'वृक्षाः शसयन्तु', च 'वृक्षा शसन्तु च', छ 'वृक्षा शसन्तु मम च'। 2 क-ख-घ 'सर्वथा क्वापि'। 3 का ख-ग घ-ङ च-छ 'न्वशोचत्'। 4 छ '-दृक्'।

एवं मायामनुवरन्नसक्तोऽपि रघूत्तमः ।
आसक्त [1]इव मूढानां भाति तत्त्वविदां न हि ॥ २० ॥
एव विचिन्वन् सकलं वनं राम. सलक्ष्मणः ।
[2]भग्नरथं छत्रचापकूवरं पतित भुवि ।
दृष्ट्वा लक्ष्मणमाहेद पश्य लक्ष्मण केनचित् ॥ २१ ॥
नीयमानां जनकजां तं जित्वाऽन्यो जहार ताम् ।
तत [3]कश्चिद्भुवो भागं गत्वा पर्वतसन्निभम् ।
रुधि[4]राक्त वपुर्दृष्ट्वा रामो [5]वाक्यमथाब्रवीत् ॥ २२ ॥
एष वै भक्षयित्वा [6]तां जानकीं शुभ[7]दर्शनाम् ।
शेते विविक्ते[8]ऽतितृप्त [9]पश्य हन्मि निशाचरम् ॥ २३ ॥

---

२० । नरो० । उपसंहरति—एवमिति । अनुचरन् अनुवर्त्तमान. ।

२१ । नरो० । छत्रञ्च चापश्च कूबरश्च युगन्धरः 'युडाली' इति ख्यातः, तेषां समाहार., तत् ।

२२ । नरो० । रुधिराक्तं रक्तम्रक्षितम् ।

२३ । नरो० । विविक्ते विजने ।

---

२० । असक्तोऽपि आसक्तिरहितोऽपि । रा० ।

२२ । नीयमानां जनकजां दृष्ट्वा अन्यस्तं जित्वा तां जहार तच्चिह्नमिदं पश्येत्यर्थ । पर्वतसन्निभं तत्सदृशम् । रुधिराक्तवपुरिति कर्मधारय । रा० ।

२३ । जटायुषोऽवस्थावैचित्र्यं रामकोपप्रकारश्च वाल्मीकीये—

तत. पर्वतकूटाभ छिन्नपक्षं द्विजोत्तमम् ।
ददर्श पतितं भूमौ क्षतजार्द्रं जटायुषम् ॥
तं दृष्ट्वा गिरिसङ्काशं रामो लक्ष्मणमब्रवीत् ।
अनेन सीता वैदेही भक्षिताऽत्र न संशयः ॥
गृध्ररूपमिदं रक्षो व्यक्त भ्रमति कानने ।
भक्षयित्वा विशालाक्षीं सीतामास्ते यथासुखम् ॥
एनं हनिष्ये दीप्ताग्रै शीघ्रं बाणैरजिह्मगै. ।
जातरोष. सहस्राक्षो वज्रेणेव महाचलम् ॥ इत्यादि । ३।७२।१०-१३ ।

---

1 घ 'एव' । 2 क 'भग्न रथ छत्रचाप', ग 'भग्नरथ छत्रचाप कूबर' । 3. ग-ङ-च-छ 'किञ्चिद्भु-' । 4. क-ख-ग-घ-ङ '-राक्तवपु-' । 5. ग 'वचनम-' । 6 ग 'तु' । 7 घ '-लक्षणाम्' । 8 ग 'सतृप्त' । 9. ङ 'पश्यन्' ।

चापमानय [1]शीघ्रं मे बाणश्च रघुनन्दन ।
तच्छ्रुत्वा रामवचनं जटायुः प्राह भीतवत् ॥ २४ ॥
मां न मारय भद्रं ते म्रियमाणं स्वकर्मणा ।
अहं जटायुस्ते भार्याहारिणं सम[2]नुद्रुतः ।
रावणं तत्र युद्धं मे बभूवारिविमर्दन[3] ॥ २५ ॥
तस्य वाहान् रथं चापं [4]छित्त्वाऽहं तेन [5]पातितः ।
पतितोऽस्मि जगन्नाथ प्राणांस्त्यक्ष्यामि पश्य माम् ॥ २६ ॥
तच्छ्रुत्वा राघवो दीनं कण्ठप्राणं ददर्श ह ।
हस्ताभ्यां संस्पृशन् रामो दुःखाश्रुवृतलोचनः ॥ २७ ॥
जटायो ब्रूहि मे भार्या केन नीता शुभानना ।
मत्कार्यार्थं हतोऽसि त्वमतो मे प्रियबान्धवः ॥ २८ ॥
जटायुः [6]सञ्ज्ञया वाचा वक्त्राद्रक्तं समु[7]द्वमन् ।
उवाच रावणो [8]नाम राक्षसो भीमविक्रमः ॥ २९ ॥
आदाय मैथिलीं [9]सीतां दक्षिणाभि[10]मुखो ययौ ।
इतो वक्तुं न मे शक्तिः प्राणांस्त्यक्ष्यामि [11]तेऽग्रतः ॥ ३० ॥

---

२७ । नरो० । दुःखाश्रुणा वृते पिहिते लोचने यस्य सः ।
२९ । नरो० । संज्ञया मस्तकादिनाऽर्थसूचनया ।

---

पाद्मे उत्तरखण्डे पुनः—

मार्गमाणो वने सीतां पथि गृध्रं महाबलम् ।
विच्छिन्नपादपक्षञ्च पतितं धरणीतले ॥
रुधिरापूर्णसर्वाङ्गं दृष्ट्वा विस्मयमागतः ॥ इत्यादि । २४२।२६१ ।

२५-२६ । रावणमिति पूर्वान्वयि । छित्त्वाऽहं स्थित इत्यर्थः । रा० ।

३० । अत्र वाल्मीकिः —

अथ श्रान्तस्य मे पक्षौ छित्त्वा वृद्धस्य रावणः ।
अङ्केनाऽऽदाय वैदेहीमुत्पपात विहायसा ॥ ३।७२।२१ । इति ।
सीतामादाय वैदेहीं प्रयातो दक्षिणामुखः । ३।७३।१४ । इति च ।

---

1. च 'सौमित्रे' । 2. च '-नुव्रतः' । 3. ग '-नम्' । 4. ङ 'छित्त्वा हसीन', च 'कृत्ताऽहं', छ 'छित्त्वा त' । 5. क ख घ 'घातितः' । 6. क-ख-ग घ-च 'सन्नया', ङ-छ 'सत्यया' । 7. च '-वहन्' । 8. क-ख घ 'राम' । 9. च 'तूर्णं' । 10. छ '-मुखं' । 11. ग 'पीडितः' ।

दिष्ट्या दृष्टोऽसि राम त्व म्रियमाणेन [1]मेऽनघ ।
परमात्माऽसि विष्णुस्त्वं माया[2]मनुजरूपधृक् ॥ ३१ ॥
अन्तकाले[3]ऽपि दृष्ट्वा त्वां मुक्तोऽहं रघु[4]सत्तम ।
हस्ताभ्यां स्पृश मां राम पुनर्यास्यामि ते पदम् ॥ ३२ ॥
तथेति रामः पस्पर्श तदङ्गं पाणिना [5]स्मयन् ।
ततः प्राणान् परित्यज्य जटायुः पतितो भुवि ॥ ३३ ॥
राम[6]स्तमनुशोचित्वा [7]बन्धुवत् साश्रुलोचनः ।
लक्ष्मणेन समानाय्य काष्ठानि प्रददाह तम् ॥ ३४ ॥
स्नात्वा [8]दुःखेन रामोऽपि लक्ष्मणेन समन्वितः ।
हत्वा [9]वने मृगं तत्र मांसखण्डान् समन्ततः ।
[10]शाद्वले प्राक्षिपद्रामः पृथक् पृथगनेकधा ॥ ३५ ॥

---

३२ । नरो० । पुनः स्पृशेत्यन्वयः ।

---

३१ । म्रियमाणेन मे मयेत्यर्थः । रा० ।

३२ । पुनः स्पृशेत्यन्वयः । येन स्पर्शेन ते पदं यास्यामीत्यन्वयः । रा० ।

३३ । स्मयन् पक्षिणोऽपि एवं पराक्रम एवं ज्ञानमित्याश्चर्यवान् । रा० ।

३४ । बन्धुवदनुशोचित्वा अनेन तिरश्चामपि प्रीत्या दाहौचित्यमिति दर्शितम् । रा० ।

३५ । जटायुष ऊर्ध्वगतिलाभार्थं रामचेष्टितमाह वाल्मीकिः —

एवमुक्त्वा चितां दीप्तामारोप्य पतगेश्वरम् ।
ददाह रामो धर्मात्मा पतगेन्द्रं जटायुषम् ॥
रामोऽथ सहसौमित्रिर्विगाह्य जलमोजसा ।
कृत्वा चोदककार्यं तु भ्रातरौ रामलक्ष्मणौ ॥
रोहिमांसानि चोत्कृत्य पेषीकृत्य महायशाः ।
शकुनेभ्यो ददौ रामो वन्ये हरितशाद्वले ॥
यन्तु मृतस्य मर्त्यस्य जपन्तीह द्विजातयः ।
तं स्वर्गगमने तस्य मन्त्रं रामो जजाप ह ॥
ततो गोदावरीं गत्वा नदीं नरवरात्मजौ ।
उदकं ददतुस्तस्मै गृध्रराजे जटायुषे ॥ इति । ३।७३।३७-४१ ।

पाद्मे उत्तरखण्डेऽपि—

इत्युक्त्वा राघवस्याग्रे सहसा त्यक्तजीवितः ।
संस्कारमकरोद्रामस्तस्य ब्रह्मविधानतः ॥

---

1 च 'राघव' । 2 ङ-क्ष 'मानुष' । 3 ग 'तु' । 4 च-क्ष '-नन्दन' । 5 ङ 'स्वयम्' । 6 ग-क्ष 'स्तु परिशो' । 7 च 'बभूव' । 8. ग-क्ष 'रामोऽपि दुःखेन' । 9. ग 'मृग वने तव' । 10. च 'पचिषि' ।

भक्षन्तु पक्षिणः सर्वे तृप्तो भवतु पक्षिराट् ।
इत्युक्त्वा राघवः प्राह जटायो गच्छ मत्[1]पदम् ।
मत्सारूप्यं भजस्वाद्य सर्वलोकस्य पश्यतः ॥ ३६ ॥
ततोऽनन्तरमेवासौ दिव्यरूपधरः शुभः ।
[2]विमानवरमारुह्य भास्वरं भानुसन्निभम् ॥ ३७ ॥
शङ्खचक्रगदापद्मकिरीटवरभूषणैः ।
द्योतयन् स्वप्रकाशेन पीताम्बरधरोऽमलः ॥ ३८ ॥
चतुर्भिः पार्श्वदैर्विष्णोस्ता[3]दृशैरभिपूजितः ।
[4]स्तूयमानो [5]योगिगणै राममाभाष्य [6]सत्वरः ।
कृताञ्जलिपुटो भूत्वा तुष्टाव रघुनन्दनम् ॥ ३९ ॥

जटायुरुवाच—

अगणितगुणमप्रमेयमाद्यं सकलजगत्स्थितिसंयमादिहेतुम् ।
उपरम[7]परमं [8]परात्मभूतं सततमहं प्रणतोऽस्मि रामचन्द्रम् ॥ ४० ॥

---

३६ । नरो० । मत्पदं वैकुण्ठमित्यर्थः । समानं रूपं यस्य तस्य भावः ।

४० । नरो० । अगणिता असंख्याता गुणा यस्य तम् अतोऽप्रमेयम्, आद्यं सृष्टेः प्राग् वर्तमानम् अतः सकलजगत्स्थितिसंयमादिहेतुम् । आदिपदेन सृष्टेः परिग्रहः । उपरमे अर्थात् प्रपञ्चस्य विरतौ परं परमार्थं यतः परमात्मभूतं परमात्मस्वरूपमित्यर्थः । त्वमात्मा अहमप्यात्मा मां कथं स्तौषीति चेत्तत्राऽऽह—परमेति ।

---

स्वपदञ्च ददौ तस्मै योगिगम्यं सनातनम् ।
राघवस्य प्रसादेन स गृध्रः परमं पदम् ॥
इरे सामान्यरूपेण मुक्तिं प्राप खगोत्तमः । इति । २४२।२६४-२६६ ।

३६ । भक्षन्तु भक्षयन्तु । इत्युक्त्वा इति सङ्कल्प्य । रा० ।

३८ । द्योतयन् आकाशमिति शेषः । रा० । अत्र नरोत्तमव्याख्यातः पाठस्तु 'उपरमपरं परमात्मभूतम्' इति, स च भग्नवृत्त इत्युपेक्ष्यते ।

४० । अगणितगुणम् अनन्तशक्तित्वात् । अप्रमेयं देशकालापरिच्छेद्यम् । संयमो नाशः । आदिना जन्म उपरमः शान्तिरेव परमा शोभा यस्मिन् तम् । रा० ।

---

1. च '-पुरम्' । 2. ञ 'दिव्य विमान-' । 3. ग 'दृशैः परि-' । 4. क 'पूज्यमा' । 5. क 'मुनि-' । 6. ग 'खे स्थित', च 'सत्वरम्' । 7. च '-निरत' । 8. ग 'परमात्मभूत' ।

निरवधिसुखमिन्दिराकटा[1]क्षपि[2]तसुरेन्द्रचतुर्मुखादिदुःखम् ।
नरवरमनिशं नतोऽस्मि राम वरदमहं वर[3]चापबाणहस्तम् ॥ ४१ ॥
त्रिभुवन[4]कमनीयरूपमीड्यं रविशतभा[5]स्वरमीहितप्रदानम् ।
[6]शरणदमनिशं [7]सुरागमूले कृतनिलयं रघुनन्दनं प्रपद्ये ॥ ४२ ॥

---

४१ । नरो० । मत्प्राप्तौ को लाभ इति चेत्तत्राऽऽह—निरवधिसुखमिति । ननु 'सुखस्यानन्तर दुःख दुःखस्यानन्तर सुखम्' अनायासेनैव भवेत्तदर्थं जीव कथं यतेत इति चेत्तत्राऽऽह—निरवधीति । नास्ति अवधिर्यस्य तच्च तत् सुखञ्चेति तत्तथा । न केवलं तव मुक्तिदातृत्वमित्याह—इन्दिरेति । इन्दिराया लक्ष्म्या य कटाक्षस्तेन क्षपित सुरेन्द्रश्चतुर्मुखश्च तौ आदी येषां तेषां दुःख येन तं तथा । तद्रूपमेव मम हृदये स्फुरतु इत्याशयेनाऽऽह—नरवरमित्यादि । हस्तयोर्वरौ चापबाणौ यस्य त तथा । 'गड्वादे सप्तम्यन्त परम्' ( सङ्क्षिप्त० समास० ४४१ सू० ) इत्यनेनात्र परनिपात ।

४२ । नरो० । कल्पवृक्षमूले तव एतद्रूपं ध्येयमित्याशयेनाऽऽह—त्रिभुवने कमनीय रूपं यस्य तादृशम् अतो रविशतभास्वर सूर्यशतमिव दीप्रमित्यर्थ । एतेन तमोनाशकत्वं सूचितम् । अत्राद्भुतोपमा । ध्यात किं कुर्यामिति चेत्तत्राऽऽह—ईहितप्रदानमिति, अभीष्टप्रदमित्यर्थः । मामेव कथ प्रपद्यसे चेत्तत्राऽऽह—शरणदमिति, आश्रयदमित्यर्थ ।

---

[ अगणिता गुणा कृपालुत्वादयो यस्य तम् । अप्रमेयं मनोबुद्ध्याद्यगोचरम् । तत्र हेतुः—आद्यं परमकारणम् । न हि सकलकारणं कार्यज्ञेय स्यात् । आदिरेवाऽऽद्यम् । सकलजगतां स्थितिः पालनम्, संयमो नाश , आदिः उत्पत्ति , तेषां हेतुम् । तर्हि किमासक्त , नेत्याह—उपरम इति । उपरम परमः स्वरूपं यस्य, तत्र हेतु —परमात्मभूतं परमात्मानम् 'असङ्गो ह्ययं पुरुष ' ( बृहदा० ४।३।१९ ) इति श्रुतेः । गो० ]

४१ । निरवधिसुखं तदतिरिक्तेषु ब्रह्माण्डेषु सुखं सावधिकमिति भाव । इन्दिरा लक्ष्मीः तत्कटाक्षा यस्मिंस्तम् । क्षपितेति, सुरेन्द्रादिसेवाप्रीतेन येन तदीयदु खं क्षपितमित्यर्थ । रा० ।

[ निरवधीत्यादि । अखण्डब्रह्मसुखरूपम् 'आनन्द ब्रह्मणो विद्वान्' ( तैत्ति० २।४।१) इति श्रुतेः । इन्दिरा लक्ष्मीः, तस्या कटाक्षेण कृपावलोकनेन क्षपितं खण्डितं सुरेन्द्रचतुर्मुखादीनां दु खं येन । एतेन लक्ष्म्या अवलोकेऽपि स एव हेतुरित्युक्तम् । नरा जीवास्तेषां वरं पूज्यं परमात्मानमित्यर्थः । यद्वा नरैर्व्रियतेऽसौ ज्ञानैश्वर्यादिनेति नरवरस्तम् । गो० ]

---

1 क-ख-घ-ङ '-च चपित-', छ '-चचयित-' । 2 घ '-त सु-' । 3 च '-चापहस्तम्' । 4 च '-रमणीय-' । 5 क-ग '-सु-' । 6 क-ख-ग-घ 'शरणम-' । 7 च-छ 'सपादमूले' ।

भवविपिन[1]दवाग्निनामधेय [2]भवमुखदैवत[3]दैवतं दयालुम् ।
दनुज[4]पतिसहस्रकोटिनाश रवि[5]तनयासदृशं हरिं प्रपद्ये ॥ ४३ ॥
अविरतभवभावनातिदूरं भवविमुखैर्मुनिभिः सदैव दृश्यम् ।
भवजलधिसुतारणाङ्घ्रिपोतं शरणमहं रघुनन्दनं प्रपद्ये ॥ ४४ ॥

---

४३ । नरो० । जन्म निःशेषयितुं समर्थस्त्वमेवेत्याह—भवविपिनदवाग्निनामधेयमिति । भव एव निर्मूलयितुमशक्यत्वाद् विपिनं वनं तस्य दवाग्निरिति नामधेयं यस्य तं तथा । दवाग्निर्वनाग्निः । वृष्ट्यादिना दुर्वारो दवाग्निर्यथा वनं निर्मूलं करोति, तथा त्वमपि जन्म निर्मूलं करोषीति भावः । नन्वेवमपि देवान् विहाय मां कथं प्रपद्यसे इति चेत्तत्राऽऽह—भवमुखदैवतदैवतमिति, रुद्रादिदेववृन्ददेवमित्यर्थः । तत्रापि दयालुं दयासम्पन्नमित्यर्थः । तथाऽपि दैत्याधिपान् हत्वा त्रैलोक्यरक्षितारमिन्द्रं विहाय मां कथं प्रपद्यसे तत्राऽऽह—दनुजपतिसहस्रकोटिनाशमिति । दैत्याधिपानां सहस्राणां कोटेर्नाशकमित्यर्थः । रवितनया कालिन्दी तस्याः सदृशं वर्णेन ।

४४ । नरो० । अतिसंसारिणो मम यत्तव ध्यानं दर्शनञ्च तदतिभाग्येनेत्याह—अविरतेत्यर्द्धेन । अविरता या भवस्य भावना तस्या अतिदूरं कदाचिदपि न गोचरमित्यर्थः । भवविमुखैः संसारानासक्तैः । यतः शरणमतोऽहं रघुनन्दनं प्रपद्ये इति । ननु कस्यचित् कश्चिदाश्रयो भवतीति ममाऽऽश्रयत्वस्य कथं वैलक्षण्यमिति चेत्तत्राऽऽह—भवजलधिसुतारणाङ्घ्रिपोत-

---

४२ । ईहितप्रदानं भक्तेहितप्रदानस्वभावम् । सुरागमूले शोभनो रागः प्रीतिस्तस्य मूलमाश्रयश्चित्तं तत्र कृतस्थानम् । रा० ।

[ त्रिभुवनमित्यादि । त्रिभुवनस्य कमनीयं काम्यं रूपं यस्य सर्वोत्कृष्टत्वात् । शतशब्दोऽसंख्यपरः । अनेकशतरविवद्देदीप्यमानम् । ईहितं भक्तानामभीष्टं प्रददातीति तथा । सुरागो देवद्रुमः कल्पद्रुमस्तस्य मूले कृतो निलयो येन तम् । गो० ]

४३ । भवविपिनस्य दवाग्निभूतं नामधेयं यस्य तम् । रवितनया यमुना तत्सदृशं तद्वर्णम् । रा० ।

[ भवः संसार एव विपिनम् असंख्यत्वात् । तत्र दवाग्निर्वनाग्निस्तन्नाशकं नामधेयं यस्य । नाममात्रेण तन्नाशात् । भवः शिवः मुखमाद्यं येषां देवतानां तेषामपि दैवतं पूज्यम् । दनुजपतीनां सहस्रसंख्यकोटीर्नाशयति । रवितनया यमुना तत्सदृशं नीलच्छविमित्यर्थः । गो० ]

४४ । अविरतं भवस्य संसारस्य भावना येषां तेषामतिदूरम्, भवसमुद्रस्य सुतारणे अङ्घ्रिरूपः पोतो यस्य तम् । रा० ।

---

1. ङ-छ 'दावा-' । 2 क 'भवसुख', च 'भवसुखनियतदैवत-', च टि 'भवविरिञ्चिसुख-', छ 'भवमुखदैवतं' । 3. ङ '-दैवत' । 4 च '-पतिकोटिसहस्रना-' । 5. च-छ '-तनयस-' ।

गिरिशगिरिसुता[1]मनोनिवासं गिरिवरधारिणमीहिताभिरामम् ।
सुरवरदनुजेन्द्रसेविताङ्घ्रिं [2]सुरवरदं रघुनायकं प्रपद्ये ॥ ४५ ॥
परधनपरदारवर्जितानां परगुण[3]भूतिषु तुष्टमानसानाम् ।
परहितनिरतात्मनां सुसेव्यं रघुवरमम्बुजलोचनं प्रपद्ये ॥ ४६ ॥

---

मिति । भवश्च हरः, जलधिसुता च लक्ष्मीः, तयोस्तरणमाश्रयोऽङ्घ्रिरेव तरणहेतुत्वात् पोतो 'डिङ्गे'ति ख्यातो यस्य तम् । भवजलधिसुताभ्यामपि भवाब्धितरणाय तव पादः पोतः कृत इति भावः ।

४५ । नरो० । अन्यवैलक्षण्यसाधनानि विशेषणान्याह—गिरिशेत्यादि । गिरिशश्च शिवः, गिरिसुता च दुर्गा, तयोर्मनो निवासो यस्य तम् । एतेन सर्वोत्कृष्टत्वं सूचितम् । गिरिवरधारिणमित्यनेन शक्त्यतिशय उक्तः । ईहिताभिरामम् ईहितेन चेष्टया लीलया मनोहरमित्यर्थः । सुरवराश्च दनुजेन्द्राश्च तैः सेवितावङ्घ्री यस्य । एतेन विश्वसेव्यसेव्यत्वं सूचितम्, अविद्यमानसेव्यत्वमिति वा । सुरवरदमित्यनेन सर्ववरदातृत्वमुक्तम् ।

४६ । नरो० । तर्हीह सर्वैः सेव्येय इति चेत्तत्राऽऽह—परधनेत्यादि । भूतिरैश्वर्यम् । परहिते निरत आत्मा मनो येषां तेषां तथा । रघुपतिं प्रपद्ये इत्यन्वयः ।

---

[ अविरतं भवस्य संसारस्य भावना येषां तेषामतिदूरं तैर्मनसाऽपि अप्राप्यम् । भवैर्विमुखास्तत्प्रसङ्गरहिताः तैः सदैव सततमेव दृश्यं निरन्तरं तेषामन्तर्बहिश्च प्रकाशमानत्वात् । भव एव जलधिर्दुष्पारत्वात् तस्य सुखतरणाय अङ्घ्री एव पोतो नौर्यस्य । गो० ]

४५ । गिरिशः शिवः, गिरिसुता पार्वती तयोर्मनसि निवासो यस्य तम् । गिरिवरधारिणम् अयमेव कृष्णो भावीति भावः । ईहितैश्चेष्टितैरभिरामम् अभिरामचेष्टितमिति यावत् । सुराणां वरदम् । रा० ।

[ गिरिः शिवः गिरिसुता पार्वती च, तयोर्मनो निवासो यस्य निरन्तरं तत्र स्थितत्वात् । गिरिवरो मन्दरो गोवर्द्धनश्च तद्धारिणं कूर्मरूपिणं श्रीकृष्णरूपिणञ्च । ईहितेनेच्छामात्रेण अभिरामं सृष्ट्यादिक्रिया यस्य । यद्वा ईहितमेवाभिरामो लीला यस्य । एतेन परमात्मनो नित्यानन्दमयस्य तव शोकादिरपि लीलैव न वास्तव इत्यर्थः । सुरवरा ब्रह्माद्या दनुजेन्द्रा प्रह्लादाद्याः, तैः सेवितावङ्घ्री यस्य । सुरवरेष्वपि वरं ददातीति, एतेन सर्वाराध्यत्वं ध्वनितम् । गो० ]

४६ । परगुणादिषु तुष्टमीर्ष्यारहितं मानसं येषाम् । रा० ।

---

1. क 'मनोऽभिरामं' । 2. च 'सुरवरवरदं' । 3. ख '-भूतिसु-' ।

स्मितरुचिरवि[1]कासितानना[2]ब्जमतिसुलभं सुरराज[3]नीलनीलम् ।
[4]सितजलरुहचारुनेत्रशोभं रघुपतिमीशगुरोर्गुरुं प्रपद्ये ॥ ४७ ॥

हरिकमलजशम्भुरूपभेदात् त्वमिह विभासि गुणत्रयानुवृत्तः ।
रविरिव जलपूरितोदपात्रेष्वमरपतिस्तुतिपात्रमीशमीडे ॥ ४८ ॥

---

४७ । नरो० । अन्यवैलक्षण्यसाधकविशेषणान्याह—स्मितेति । स्मितरुचिरेव रविस्तेन कासितं भासितम् आननाब्जं यस्य तं तथा । यद्वा स्मितेन रुचिरं विकासितं प्रफुल्लम् आननाब्ज यस्य तं तथा । सुरराजनीलनीलम् इन्द्रनीलमणिवन्नीलमित्यर्थः । सितजलरुहयोरिव चारुनेत्रयोः शोभा यस्य तं तथा । ईशगुरोर्गुरुमिति उपदेष्टृ शिवस्यापि उपदेष्टारमित्यर्थः । एतेनाविद्यमानोपदेष्टृत्वं सूचितम्, उपदेशं विना सर्वज्ञत्वं वा ।

४८ । नरो० । गुणत्रयमनु लक्षीकृत्य रूपं (?) यस्य स तथा । जलपूरितानि च तानि उदपात्राणि चेति तेषु । यथा जलपूर्णजलपात्रनानात्वात् तत्प्रतिबिम्बितसूर्यस्य नानात्वप्रतीतिस्तथा गुणनानात्वात् तदवच्छिन्नस्य तव नानात्वप्रतीतिरिति भाव ।

---

[ परधनेत्यादि । परधनञ्च परदाराश्च तैर्वर्जितानां तद्ग्रहणरहितानां परेषा गुणा पाण्डित्यादय भूतिः सम्पत् तत्र तुष्टं न त्वीर्ष्यायुक्तं मानसं येषां तेषां सुखेन सेव्यम् । गो० ]

४७ । स्मितेनेषद्धासेन रुचिरं विकासितमाननाब्जं यस्य । सुरराजनील इन्द्रनीलमणि । ईशगुरोर्ब्रह्मणः । रा० ।

[ स्मितरुचिरेत्यादि । स्मितेन रुचिरं विकसितं प्रफुल्लमाननमेवाब्जं यस्य । अतिकारुणिकतया स्मरणमात्रमेव सुलभम् । सुरराजस्य यन्नील नीलमणिस्तद्वन्नीलम् । सितजलरुह श्वेतपद्म तद्वच्चारुभ्यां नेत्राभ्या शोभा यस्य । ईशो महेशः, तस्य जनकत्वेन गुरुर्ब्रह्मा तस्य गुरु पितरम् । गो० ]

४८ । यथैकोऽपि रविरुदपात्रेष्वनेक इव, एवमेकोऽपि त्व गुणभेदाद्ब्रह्मादिसञ्ज्ञकः, अमरपतिरिन्द्रस्तस्य स्तुतिपात्रं तत्कृतस्तुतिविषयमित्यर्थ । रा० ।

[ न केवलं तद्गुरुं तद्रूपमपीत्याह—हरीत्यादि । इह पालनादिकार्ये हरिर्विष्णु कमलजो ब्रह्मा शम्भुरिति रूपभेदात् त्वमेव भासि, कथम्? गुणत्रयानुवृत्तः सत्त्वरजस्तमोगुणानुगत सन् । एकस्य उपाधिगतत्वे बहुधा भाने दृष्टान्त —रविरिवेति । घटादिषु प्रतिबिम्बगतो रविर्यथा तथेत्यर्थ । गुणत्रयजलपात्रयोः साम्यम् । सर्वसेव्यत्वमाह—अमरपतीनाम् इन्द्रादीनामन्यस्तुतानामपि स्तुतेः पात्रम् । गो० ]

---

1 कं-ख-ङ छ '-कसिता-' । 2. गं-ङ च-छ '-ब्जमति-' । 3 च 'नीलमीशम्', छ '-पीतनीलम्' । 4. च-छ 'स्मित-' ।

रतिपतिशतकोटिसुन्दराङ्गं शतपथगोचरभावना[1]विदूरम् ।
यतिपतिहृदये सदा विभा[2]न्त रघुपतिमार्त्तिहरं [3]प्रभुं प्रपद्ये ॥ ४९ ॥
इत्येवं स्तुवतस्तस्य प्रसन्नोऽभूद्रघूत्तमः ।
उवाच गच्छ भद्रं ते मम विष्णोः परं पदम् ॥ ५० ॥
शृणोति [4]य इदं स्तोत्रं [5]लिखेद्वा नियतः पठेत् ।
स याति मम सारूप्यं [6]सततं मत्परायणः ॥ ५१ ॥
[7]इति राघवभाषितं तदा श्रुतवान् हर्षसमाकुलो द्विजः ।
रघुनन्दनसाम्यमास्थितः प्रययौ ब्रह्मसुपूजितं पदम् ॥ ५२ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अरण्यकाण्डे अष्टमोऽध्यायः ॥ ८ ॥

---

४९ । नरो० । रतिपतीनां कन्दर्पाणां शतसंख्यका या कोटिस्तस्या अपि तस्या इव वा सुन्दरमङ्गं यस्य स तथा । एतेन त्रैलोक्यसुन्दरत्वं सूचितम् । शतपथेति, शतपथा नानापथा गोचरा विषया यस्यास्तादृशी या भावना तस्या अविदूरं गोचरमित्यर्थः । एतेन अनन्यविषय-भावनागोचरत्वं सूचितम् । अथवा शतपथगोचरा भावना येषां तेषामविदूरमित्यर्थः । यतिपति-हृदये यतिश्रेष्ठमनसि । 'ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते' इत्यमरः । आर्त्तिहरं प्रपन्नस्य नरकपीडानाशकमित्यर्थः ।

५१ । नरो० । अहं परं केवलम् अयनम् आश्रयो यस्य स तथा ।

५२ । नरो० । द्विजः पक्षी ।

[ अष्टमाध्यायव्याख्या समाप्ता ॥ ८ ॥ ]

---

४९ । रतिपतिः कामः, ततोऽपि शतकोटिगुणं सुन्दरमङ्गं यस्य । शतपथो माध्यन्दिनानां ब्राह्मणं तद्गोचरया तत्रोक्तप्रकारया भावनया अविदूरं लभ्यमिति यावत् । तदेवाऽऽह—यतिपतीत्यादि । रा० ।

[ रतिपतीत्यादि । कन्दर्पशतकोटिवत् सुन्दरमङ्गं यस्य । कामस्य द्वैतासम्भवात् यद्येकत्र शतकोटयः कामाः स्युस्तदा यादृक् सौन्दर्यं भवति तथाभूताङ्गम् इत्यद्भुतोपमा । शतपथाख्यः श्रुतिभागविशेषः तस्य गोचरः स चासौ भावना चिन्ता तस्यामतिदूरं मन-आदेरगोचरत्वात् । तथाच श्रुतिः—'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' ( तैत्ति० २।४।१ ) इति । यतिपतयः सनकाद्याः, तेषां हृदये सदा देदीप्यमानम्, प्रभुं प्रभवनशीलम् । गो० ]

५२ । ब्रह्मसुपूजितं पदं वैकुण्ठम् । रा० ।

[ ब्रह्मणोऽपि सुपूजितं पदं वैकुण्ठम् । गो० ]

---

1 ग-छ '-भिदूर-' । 2 क-ख-घ '-त' । 3. ग 'विभु', च पुस्तके 'प्रभु' इति नास्ति । 4 ग-ङ छ 'यस्त्विदं' । 5 ग-ङ-च-छ 'लिखित्वा' । 6. क-ख घ 'मरणे मत्स्मृतिं लभेत्' । 7 ग च 'इति स राघ-' ।

# नवमोऽध्यायः

—:०:—

[1]श्रीमहादेव उवाच—

ततो रामो लक्ष्मणेन जगाम विपिनान्तरम् ।
पुनर्दुःखं समाश्रित्य सीतान्वेषणतत्परः ॥ १ ॥
तत्राद्भुत[2]समाकारो राक्षसः प्रत्यदृश्यत ।
[3]वक्षस्येव महावक्त्रश्चक्षुरादिविवर्जितः ॥ २ ॥

---

१ । नरो० । सीतान्वेषणतत्पर सीतामार्गणासक्तः ।

२ । नरो० । सम· शिव· पादरहित आकारो यस्य स तथा । अद्भुतश्चासौ समाकारश्चेति । तदेवाऽऽह—वक्षस्येत्यादिना । महद् वक्त्रं यस्य स तथा ।

---

१ । विपिनान्तरम् अन्यद्वनम् । दुःखं समाश्रित्याभिनीय । रा० ।

अत्राऽऽह भागवते—

रक्षोऽधमेन वृकवद्विपिनेऽसमक्षं वैदेहराजदुहितर्यपयापितायाम् ।
भ्रात्रा वने कृपणवत् प्रियया वियुक्तः स्त्रीसङ्गिनां गतिमिति प्रथयंश्चचार ॥
९।१०।११ । इति ।

२ । अद्भुतसमाकार आश्चर्याकृति, महद् वक्त्रं यस्य स· । रा० ।

[ वक्षसीत्यादि । वक्षसि हृदये महद् वक्त्रं यस्य, इन्द्रस्य वज्रेण प्रोथितशिरस्त्वात् । गो० ]

कबन्धं विशिनष्टि वाल्मीकीये—

अथ तत्र महाघोरं विकृतं तं महोच्छ्रयम् ।
विवृद्धमशिरोग्रीवं कबन्धमुदरे मुखम् ॥
रोमभिर्निचितं तीक्ष्णैर्महागिरिमिवोच्छ्रितम् ।
नीलमेघनिभं घोरं मेघस्तनितनिस्वनम् ॥
महता चातिपिङ्गेन विपुलेनाऽऽयतेन च ।
एकेनोरसि दीर्घेण नयनेनातिदर्शिना ॥

---

1. क-ख-ग-घ पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2 ङ '-महाकायो' । 3. ङ 'वक्षोगतमहा-' ।

बाहू योजनमा[1]त्रेण [2]व्यापारौ तस्य रक्षसः
कबन्धो नाम दैत्येन्द्र सर्वसत्त्वविहिंसक ॥ ३ ॥
तद्बाह्वोर्मध्यदेशे तौ चरन्तौ रामलक्ष्मणौ ।
ददर्शतुर्महासत्त्वं तद्बाहुपरिवेष्टितौ ॥ ४ ॥
राम प्रोवाच [3]विहसन् पश्य लक्ष्मण राक्षसम् ।
शिरःपादविहीनोऽय यस्य वक्षसि चाऽऽननम् ॥ ५ ॥
बाहुभ्यां [4]लभ्यते यद् [5]यत् तत्तद्भक्षन् स्थितो ध्रुवम् ।
आवाम[6]पि तयोर्बाह्वोर्मध्ये सङ्कलितौ ध्रुवम् ॥ ६ ॥

---

३ । नरो० । योजनमात्रेण क्रोशचतुष्टयमात्रेण । व्यापारौ व्यापारविशिष्टौ । यद्वा व्याप्रियते आभ्यामिति व्यापारौ । सर्वसत्त्वविहिंसक सर्वप्राणिघातक इत्यर्थ ।

४ । नरो० । महासत्त्वं बृहत्प्राणिनम् ।

५ । नरो० । आननं मुखम् ।

६ । नरो० । सङ्कलितौ सगूढौ संवृतौ सक्षिप्ताविति यावत् ।

---

महादंष्ट्रोपपन्नं त बलिनं सर्वघातिनम् ।
भक्षयन्त महाकायं घोरानृक्षमहाद्विपान् ॥
भुजौ दीर्घौ विकुर्वाणं घोरौ योजनमायतौ ।
आदाय विविधांश्चैव कराभ्यां मृगपक्षिण· ॥
आकर्षन्तं वनात्तस्मादनेकान् मृगयूथपान् ।
स्थितमावृत्य पन्थानं कबन्धं तावपश्यताम् ॥ ३।७४।१४-१९ ।

३ । [ बाहू योजनमात्रेणेत्यादि । योजनमात्रेण योजनमानेन उपलक्षितौ बाहू व्यापारौ व्यापारसाधकौ । गो० ]

पद्मपुराणे शवरीसमागमात् पर कबन्धविनाशो रामस्य ।

तथाच—

फलान्यास्वाद्य काकुत्स्थस्तस्यै मुक्तिं ददौ पराम् ।
तत पम्पासरो गत्वा राघव· शत्रुसूदन· ।
जघान राक्षसन्तत्र कबन्धं घोररूपिणम् ॥ इति । उत्तर० । २४२।२७१ ।

४ । तद्बाह्वोर्मध्यदेशे चरन्तौ तौ रामलक्ष्मणौ तद्बाहुपरिवेष्टितौ सन्तौ महासत्त्वं तं कबन्धं ददर्शतुरित्यन्वय· ।

६ । सङ्कलितौ प्राप्तौ । रा० ।

[ आवामपीति । सङ्कलितौ संयतौ भक्षयेत् । गो० ]

---

1 च '-त्रत्य' । 2 क ख-घ 'व्यापृतौ' । 3 ङ-च 'प्रहृ-' । 4 ङ-च-छ 'लभते' । 5· ग-ङ 'यत्तद्भच ', च 'यत्तत्स्थितो भचते', छ 'यत्तत्तद्भक्ष्ये·' । 6· क-ख-घ '-प्येतयो-' ।

गन्तुमन्यत्र [1]मार्गो न दृश्यते रघुनन्दन ।
किं कर्त्तव्य[2]मितोऽस्माभिरिदानीं भक्ष[3]येत् स नौ ॥ ७ ॥
लक्ष्मणस्तमुवाचेदं किं [4]विचारेण राघव ।
आवामेकैकमव्यग्रौ [5]छिन्द्वो रक्षो[6]भुजौ ध्रुवम् ॥ ८ ॥
तथेति रामः खड्गेन भुजं दक्षिण[7]मच्छिनत् ।
[8]तथैव लक्ष्मणो वामं चिच्छेद भुजमञ्जसा ॥ ९ ॥
[9]ततोऽतिविस्मितो [10]दैत्यो [11]युवां किं सुरपुङ्गवौ ।
मद्बाहुच्छेदकौ लोके दिवि देवेषु वा कुतः ॥ १० ॥
ततो[12]ऽब्रवीद्धसन्नेव रामो राजीवलोचनः ।
अयोध्याधिपतिः श्रीमान् राजा दशरथो महान् ॥ ११ ॥

---

७। नरो०। अस्माभिरिति, 'अस्मदोऽविशेषणस्य द्वित्वे चे'ति द्वित्वे बहुवचनम् ।

८। नरो०। छिन्द्व इति छिदधातोर्वसि 'रुधादेः श्नमि'ति श्नम्, 'श्नास्त्योरल्लो'-त्यकारलुक् ।

१०। नरो०। सुरपुङ्गवौ सुरश्रेष्ठौ। युवां किं सुरपुङ्गवाविति पृष्ट्वा विचारयति—मद्बाहुच्छेदकावित्यादिना। लोके इह लोके। दिवि स्वर्गे ।

---

७। नौ आवाम्। रा०।

[ स नाविति, स राक्षसः, नौ आवाम्। भक्षयेदिति सम्भावनायां लिङ्। गो० ]

८। [ लक्ष्मणस्तमुवाचेत्यादि। एकमेकं कृत्वा आवामावाभ्यां भुजौ छिन्द्वो छेद्यौ। उभयत्र च्छन्दसा विभक्तिव्यत्ययः, नुम् च। गो० ]

९। बाहुच्छेदनं प्रस्तुत्य वाल्मीकीये—

त्वाञ्च माञ्च पुनस्तूर्णमादत्ते राक्षसाधमः ।
तस्मादसिभ्यामस्याऽऽशु बाहू कृन्ताव मा चिरम् ॥
ततश्च देशकालज्ञौ खड्गाभ्यामेव राघवौ ।
बाहू तस्यांसदेशाभ्यामुभावेव निकृन्तताम् ॥
दक्षिणो दक्षिणं बाहुमसक्तमसिना तदा ।
रामश्चिच्छेद वेगेन सव्यं वीरस्तु लक्ष्मणः ॥ इति। ३।७०।४-६।

१०-११। मद्बाहुच्छेदसमर्थौ लोके भूलोके कुतः असंभावितावेव, तथा दिवि विद्यमानेषु देवेष्वपि असंभावितौ, तद् युवां कावित्याश्चर्येण प्रश्नः। रा०।

---

1 ग 'पन्था नौ'। 2 ग-च-छ '-मतो-'। 3. च '-येत नौ'। 4. छ 'विलम्बेन'। 5. क ख-घ 'छिन्द्या', ङ-छ 'छित्त्वा'। 6 च '-भुजद्वयम्'। 7 छ 'माच्छि-'। 8 छ 'तथेति'। 9. च 'ततोऽसौ विस्मित'। 10 च 'प्राह'। 11. क-ख-घ-च-छ 'कौ युवां', ग 'युवां कौ'। 12. ग-च-छ '-ऽतिविहसन्नेव, ङ -ऽतिविहसन्नाह'।

रामोऽहं तस्य पुत्रोऽसौ भ्राता मे लक्ष्मणः सुधी ।
मम भार्या जनकजा सीता त्रैलोक्यसुन्दरी ॥ १२ ॥
आवां [1]मृगयया यातौ तदा केनापि रक्षसा ।
[2]नीतां सीतां विचिन्वन्तौ चाऽऽगतौ घोरकान[3]नम् ॥ १३ ॥
बाहुभ्यां वेष्टितावत्र तव प्राणरिरक्षया ।
छिन्नौ तव भुजौ [4]त्वञ्च को वा विकटरूपधृक् ॥ १४ ॥

कबन्ध उवाच—

धन्योऽहं यदि रामस्त्वमागतोऽसि ममान्तिकम् ।
पुरा गन्धर्वराजोऽहं रूपयौवनदर्पित ॥ १५ ॥
विचरँल्लोकमखिल [5]वरनारीमनोहरः ।
तपसा ब्रह्मणो लब्धमव[6]ध्यत्व [7]रघूत्तम ॥ १६ ॥

---

१३-१४ । नरो० । विचिन्वन्तौ मृगयन्तौ । यतो बाहुभ्यां वेष्टितौ अत प्राणरिरक्षया तव भुजावर्थादावाभ्यां छिन्नाविति सम्बन्ध. ।

---

बाल्मीकीये रामपरिचयवक्ता लक्ष्मण, न राम । तथाच—

इति तस्य ब्रुवाणस्य लक्ष्मण शुभलक्षण. ।
समाचष्ट स तस्याथ कबन्धस्य महाबल. ॥
अयमिक्ष्वाकुदायादो रामो नाम महायशा. ।
अस्य चावरजं विद्धि भ्रातर मां तु लक्ष्मणम् ॥ इत्यादि । ३।७१।९-१० ।

१२ । अहं रामस्तस्य पुत्र इत्यन्वय । रा० ।

१३ । मृगयया मृगयासक्त्या यातौ दूरं यातावित्यर्थ । रक्षसा नीतां सीतां विचिन्वन्ताविल्यन्वय । रा० ।

[ आवां मृगयया याताविति । मृगयया इत्यत्र हेतौ तृतीया । गो० ]

१४ । अत्र तव बाहुभ्यां वेष्टितौ जातौ प्राणरिरक्षया तव भुजौ छिन्नौ । स्ववृत्तान्तमुक्त्वा तद्वृत्तान्त पृच्छति— त्वं च क इति । रा० ।

[ बाहुभ्यामिति । वेष्टितौ प्राणरिरक्षया प्राणरक्षणेच्छया तव भुजौ छिन्नाविति सम्बन्ध । कर्त्तरि क्त आर्ष । यद्वा तव बाहुभ्यामत्र वेष्टितौ अनन्तरमावाभ्यां तव भुजौ छिन्नौ । गो० ]

१६ । वरनार्य उत्तमस्त्रियः । अवध्यत्वं लब्ध मयेति शेष । रा० ।

---

1 च 'वै मृगया' । 2 च 'नीता सीता विचिन्वन्तावागतौ' । 3 क-ख-व '-नै' । 4 च 'त्वन्त' । 5 ङ 'नरनारी-' । 6 छ '-ध्योऽहं' । 7 ग 'सुरासुरै.' ।

अष्टा[1]वक्र मुनिं दृष्ट्वा कदाचिदहसं पुरा ।
क्रुद्धो[2]ऽसावाह दुष्ट त्वं राक्षसो भव दुर्मते ॥ १७ ॥
[3]अष्टावक्र[4] पुन. प्राह वन्दितो मे दयापरः ।
शापस्यान्तञ्च मे प्राह तपसा द्योतितप्रभ' ॥ १८ ॥

१८ । नरो० । दयैव परा परमा यस्य स तथा ।

१८ । [ अष्टावक्र इत्यादि । मे मया वन्दित. पुन प्राह सदयवाक्यमुक्तवान् , न केवलमेतावत् शापान्तञ्च प्राह इत्यर्थ. । गो० ]

अष्टावक्रमुनिवृत्तान्तो वाल्मीकीये नास्ति । प्राच्ये वाल्मीकीये कबन्धवचनप्रबन्धेन इन्द्रशापादेव तस्य तथात्वमिति विज्ञायते । तथाच—

श्रियो मां मध्यमं पुत्रं दनुं नाम्ना च दानवम् ।
इन्द्रकोपादिदं रूपं प्राप्तवन्तमवेहि च ॥
अहं हि तपसोग्रेण पितामहमतोषयम् ।
दीर्घमायु स मे प्रादात् ततोऽहं पूर्णमानस ॥
दीर्घमायुर्मया प्राप्तं किं मे शक्र करिष्यति ।
इत्येवं बुद्धिमास्थाय रणे शक्रमधर्षयम् ॥
तस्य बाहुप्रमुक्तेन वज्रेण शतपर्वणा ।
सक्थिनी मे शिरश्चैव शरीरे सन्निवेशितम् ॥
स तु मां याच्यमानोऽपि नानयद् यमसादनम् ।
पितामहवचस्तथ्यं तदस्त्विति च सोऽब्रवीत् ॥
एवम्भूतेन तु मया निरस्तेनाल्पतेजसा ।
इदमुक्त' सुरपतिर्मूर्ध्नि कृत्वाऽञ्जलिं तदा ॥
अनाहार' कथ शक्ये भग्नसक्थिशिरोमुख. ।
वज्रेणाभिहत. कालं सुदीर्घमपि जीवितुम् ॥
एवमुक्तो मया शक्रो बाहू योजनमायतौ ।
प्रादाद् वक्षसि चाऽऽस्यं मे तीक्ष्णदंष्ट्रमिदं महत् ॥
सोऽहं भुजाभ्यां दीर्घाभ्यामाकृष्यास्मिन् महावने ।
गजान् व्याघ्रान् मृगान्नृक्षान् भक्षयामि समन्ततः ॥

1. ग-ङ-च-छ 'वक्रमु-' । 2 च 'मामाह' । 3 छ-पुस्तके अयं श्लोक ऊनविंशश्लोकस्य पूर्वार्धश्च न दृश्यते । 4. छ '-क्रो मुनि.' ।

त्रेतायुगे दाशरथिर्भूत्वा नारायण स्वयम् ।
आगमिष्यति ते बाहू [1]छिद्येते योजनायतौ ॥ १९ ॥
तेन [2]शापाद्विनिर्मुक्तो भविष्यसि यथा पुरा ।
इति शप्तोऽहमद्राक्षं राक्षसी[3] तनुमात्मन ॥ २० ॥
कदाचिद् देवराजान[4]मभ्यद्रवमह रुषा ।
सोऽपि वज्रेण [5]मां राम शिरो[6]देशेऽभ्यताडयत् ॥ २१ ॥
तदा शिरो गत [7]कुक्षि पादौ च रघुनन्दन ।
ब्रह्मदत्तवरान्मृत्यु[8]र्नाभून्मे वज्रताडनात् ॥ २२ ॥

---

स च मामब्रवीदिन्द्रो यदा ते रामलक्ष्मणौ ।
छेत्स्यत समरे बाहू तदा स्वर्गं गमिष्यसि ॥ इत्यादि । ३।७९।२४—३३ ।

पाश्चात्त्ये पुनरष्टावक्र इत्यत्र स्थूलशिरोनाममुनेर्वृत्तान्तो वर्त्तते, तथाच—

पुरा राम महाबाहो महाबलपराक्रमम् ।
रूपमासीन्ममाचिन्त्यं त्रिषु लोकेषु विश्रुतम् ॥
यथा सूर्यस्य शक्रस्य सोमस्य च यथा वपु ।
सोऽहं रूपमिद कृत्वा लोकवित्रासन महत् ॥
ऋषीन् वनगतान् राम त्रासयामि ततस्तत ।
तत स्थूलशिरा नाम महर्षि कोपितो मया ॥
स चिन्वन् विविधं वन्यं रूपेणानेन धर्षित ।
तेनाहमुक्त प्रेक्ष्यैव घोरपापाभिधायिना ॥
एतदेव नृशसं ते रूपमस्तु विगर्हितम् ।
स मया याचितः क्रुद्ध शापस्यान्तो भवेदिति ॥
अभिशापकृतस्येति तेनेद भाषितं वच ।
यदा छित्त्वा भुजौ रामस्त्वां दहेद्विजने वने ॥
तदा त्वं प्राप्स्यसे रूपं स्वमेव विपुलं शुभम् । ३।७१।१-७ ।

२० । तेन यदा ते बाहू छिद्येते तदा शापाद्विनिर्मुक्तो भविष्यसीति सम्बन्ध । रा० ।
[ शापविनिर्मुक्त सन् यथा शापात् पूर्वं गन्धर्वस्तथा भविष्यसि । गो० ]
२१ । कदाचिदिति राक्षसतनुप्राप्त्यनन्तरमिति शेष । रा० ।
२२ । तदा वज्रेण ताडने शिर कुक्षिं गतं पादौ च गतौ नष्टावित्यनुकर्षः । रा० ।

---

1 ग 'छित्त्वा तो', च छ 'छतस्यते' । 2 ग 'शापवि-' । 3 घ-ङ '-मीतनु-', छ '-सीमात्मनस्तनुम्' । 4 ग-च-छ '-महमभ्यद्रव' । 5 ग-ङ 'मे' । 6 ग-च छ '-देशमता-' । 7 छ 'कुचि-' 8 ङ '-र्मा', छ '-नाभूद्वज्रस्य ता-' ।

[1]मुखाभावे कथं जीवेदयमित्यमराधिपम् ।
[2]ऊचुः सर्वे दयाविष्टा मां विलोक्याऽऽस्यवर्जितम् ॥ २३ ॥
ततो मां प्राह मघवा जठरे[3] ते मुखं भवेत् ।
बाहू ते योजनायामौ भविष्यत इतो व्रज ॥ २४ ॥
इत्युक्तोऽत्र वसन्नित्यं बाहुभ्यां वनगोचरान् ।
भक्षयाम्यधुना बाहू खण्डितौ मे त्वयाऽनघ ॥ २५ ॥
इतः पर [4]मां श्वभ्रास्ये निक्षि[5]पाग्नीन्धनाविले ।
अग्निना दह्यमानोऽहं त्वया रघु[6]कुलोत्तम ॥ २६ ॥
पूर्वरूपमनुप्राप्य भार्यामार्गं वदामि ते ।
इत्युक्तो[7] लक्ष्म[8]णेनाऽऽशु [9]श्वभ्रं निर्माय [10]तत्र तम् ॥ २७ ॥

---

२४ । नरो० । योजन योजनमान आयामो दैर्घ्यं ययोस्तौ तथा ।

२६ । नरो० । अग्नीन्धनाविले अग्निश्च इन्धनानि च तराविलं इन्धन काष्ठम् ।

[ शिर कुक्षिगत पादौ च कुक्षिगतौ । आर्षत्वाद् विभक्तेर्लुक् । गो० ]

२५ । बाहुभ्यां गृहीत्वेति शेष । रा० ।

२६ । श्वभ्रास्ये गर्त्तोपरिभागे अग्नीन्धनावृते अग्नियुक्तेन्धनावृते । रा० ।

२७ । भार्यामार्गं भार्यालाभोपायम् । रा० ।

पूर्वरूपमनुप्राप्येति, वर्त्तमानदेहे ज्ञानाद्यभावेन सीतावृत्तान्ताविज्ञानादिति भावः । व्यक्तमाह वाल्मीकीये—

दिव्यमस्ति न मे ज्ञानं नापि जानामि मैथिलीम् ।
यस्ता ज्ञास्यति तं ज्ञास्ये दग्ध स्व रूपमास्थित ॥
मेऽदग्धस्य न विज्ञातुं शक्तिरस्ति नरर्षभौ ।
राक्षस तं महावीर्यं येन सीता हृता बलात् ॥ इत्यादि । ३।७१।४२-४३ ।

---

1 छ पुस्तके अयं श्लोको नास्ति । 2 च 'ऊचुर्देवा' । 3 च '-रन्ते' । 4 क '-च्च कुगड़ मा', ङ 'मा श्वभ्र वै' । 5 क-ख-ग घ ङ-छ '-पाग्नीन्धनावृते', च '-प्याग्निसमावृते' । 6. ङ 'कुलोद्भव', छ '-कुलोद्वह' । 7 ख-घ '-क्तो' । 8 च '-णस्त्वाशु' । 9. ग ङ च-छ 'गर्त्तं' । 10. ग 'स द्रुतम्', च 'तद् द्रुतम्' ।

निक्षिप्य प्रादहत् काष्ठैस्ततो देहात् समुत्थितः ।
कन्दर्पसदृशाकारः सर्वाभरणभूषितः ॥ २८ ॥
रामं प्रदक्षिणं कृत्वा साष्टाङ्गं प्रणिपत्य [1]च ।
कृताञ्जलिरुवाचेदं [2]भक्तिगद्गदया गिरा ॥ २९ ॥

[3]गन्धर्व उवाच—

स्तोतुमुत्सहते मेऽद्य मनो रामातिसम्भ्रमात् ।
त्वामनन्तमनाद्यन्तं मनोवाचामगोचरम् ॥ ३० ॥

---

३० । नरो० । इदानीं श्रीरामं स्तौति—त्वामनन्तमित्यादिना । नास्ति अन्तो यस्य तं तथा । अनन्तत्वमाकाशस्यापि विद्यते तत्र किं विचित्रमिति चेत्तत्राऽऽह—अनाद्यन्तमिति । अविद्यमानकारणनाशमित्यर्थः । यतोऽनन्तमतो मनोवाचामगोचरम् ।

---

२८ । ततो देहात् दह्यमानदेहादित्यर्थः । कन्दर्पसदृशः पुरुष उपस्थित इत्यर्थः । रा० । प्रादहदिति । भागवतेऽपि—

दग्ध्वात्मकृत्यहतकृत्यमहन् कबन्धम् ९।१०।१२ । इत्यादि ।

पाश्चात्ये वाल्मीकीयेऽपि—

लक्ष्मणस्तु महोल्काभिर्ज्वलिताभिः समन्ततः ।
चितामादीपयामास सा प्रजज्वाल सर्वतः ॥
तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत् ।
मेदसा पच्यमानस्य मन्दं दहति पावकः ॥ इत्यादि । ३।७२।२-३ ।

कबन्धस्य रूपान्तरधारणप्रकारो वाल्मीकीये—

स विधूय चितामाशु भूत्वा चानिमिषेक्षणः ।
विमले वाससी बिभ्रन्मालां सन्तानिकीमपि ॥
ततश्चिताया वेगेन भास्वरो विरजोऽम्बरः ।
उत्पपात तदा हृष्टः सर्वप्रत्यङ्गभूषितः ॥
विमाने सोऽम्बरे तिष्ठन् हंसयुक्ते मनोरमे ।
प्रभया च महातेजा दिशो दश विराजयन् ॥ इत्यादि । ३।७१।९३-९५ ।

३० । अतिसम्भ्रमादत्यादरात् । अनन्तं देशापरिच्छेद्यम् । अनाद्यन्तम् आद्यन्तरहितम्, तेन कालापरिच्छेद्यत्वमुक्तम् । मनोवाचामिति 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' ( तैत्ति० २।४।१ ) इति श्रुतेः । रा० ।

---

1 ङ-च ॐ 'तम्' । 2. ङ 'भक्त्या गद्' । 3 क 'कबन्ध उवाच' ।

सूक्ष्मं ते रूपमव्यक्तं देहद्वयविलक्षणम् ।
[1]दृग्रूपमितरत् सर्वं दृश्यं जडमनात्मकम् ।
तत् कथं त्वां विजानीयाद् व्यतिरिक्तं मनः प्रभो ॥ ३१ ॥
[2]बुद्ध्यात्माभासयोरैक्यं जीव इत्यभिधीयते ।
बुद्ध्यादिसाक्षी ब्रह्मैव तस्मिन् निर्विषयेऽखिलम् ।
आरोप्यतेऽज्ञानवशान्निर्विकारेऽखिलात्मनि ॥ ३२ ॥

---

३१ । नरो० । ते तव रूपमव्यक्तं तर्हि किं प्रधानमिति चेत्तत्राऽऽह—दृगिति । द्रष्ट्र इत्यर्थः । सूक्ष्मं मनसोऽप्यगोचरम् । अव्यक्तं चक्षुराद्यगोचरम् । यद्वा सूक्ष्मत्वेऽव्यक्तत्वे च हेतुः—देहद्वयविलक्षणमिति, लिङ्गशरीरस्थूलशरीरभिन्नमित्यर्थः । तद्वैलक्षण्ये हेतुः—दृगिति । तर्हि किं दृश्यमित्यपेक्षायामाह—रूपमितरदित्यादि । अविद्यमान आत्मा चैतन्यं यस्य तत्तथा । तद्रूपस्यादृश्यत्वमुपसंहरति—तदित्यर्द्धेन । तत्तस्मात् दृश्यपदार्थव्यतिरिक्तं त्वां मनः कथं जानीयादित्यन्वयः ।

३२ । नरो० । ननु जीवोऽपि परमार्थतो बुद्ध्यादिसाक्षी ब्रह्मैव कथं मज्ज्ञानापेक्ष इत्यत आह—बुद्ध्यात्माभासयोरित्यादि । बुद्ध्यात्माभासयोरैक्यमिति आभासीभूतान्तःकरणतादात्म्यापन्नचैतन्यमित्यर्थः । तस्मिन् आत्मनि अन्तःकरणतद्धर्मकामसङ्कल्पादीन्द्रियधर्मकाणत्वबधिरत्वादि-देहतद्धर्मस्थौल्यादीनामखिलशब्दवाच्यता । निर्नास्ति विषयः कामनाविषयो यस्य तस्मिन् तथा, अत एव कामसङ्कल्पासम्भवः । निर्विकारे देहेन्द्रियादिशून्ये, अत एव

[ स्तोतुमित्यादि । त्वां स्तोतुं मम मनः अतिसम्भ्रमादतिहर्षादुत्सहते । ननु तत् कथं न अस्तौषीरित्याह—तव दुर्ज्ञेयत्वात् । ननु यत् प्रत्यक्षं दृश्यते तत् कथं दुर्ज्ञेयं भवतु, एतावत्त्वेन नियन्तुमशक्यत्वात् । दुर्ज्ञेयत्वे हेतुमाह—त्वामित्यादि । अनन्तं देशकालाभ्यामपरिच्छेद्यम् । अत्र हेतुः—अनाद्यन्तं जन्मलयहीनम् । यदाद्यन्तवद् भवति तत् परिच्छेद्यं भवति । किञ्च यद् वाचां मनसां वा गोचरं भवति तज् ज्ञेयं भवति, त्वन्तु न तथा इत्याह—मम इत्यादि । सर्वप्रत्यक्त्वात् । तथाच श्रुतिः—'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' (तैत्ति० २।४।१) इति । गो० ]

३१ । देहद्वयं हिरण्यगर्भविराड्रूपं स्थूलं सूक्ष्मञ्च । ततो विलक्षणं दृग्रूपं केवलज्ञानरूपं ते सूक्ष्मं रूपं तदव्यक्तं सर्वथा योगिभिर्दुर्ज्ञेयम्, इतरत् सर्वं जडम् । यतो जगज्जडं दृश्यत्वादित्यनुमानमनेन सूचितम् । विस्तरस्त्वस्मद्गुरुभिर्व्याससूत्रवृत्तौ प्रपञ्चितः । व्यतिरिक्तं जडत्वात् त्वत्तो भिन्नं मनस्त्वां कथं जानीयादित्यर्थः । रा० ।

[ ननु इदमहङ्कारात्मतया परिच्छिन्नं कथं ममोऽगोचरं भवतीत्याह—सूक्ष्ममित्यादि । गो० ]

३२ । बुद्धिश्चित्तं तत्राऽऽत्माभास आत्मप्रतिबिम्बः, तयोरैक्यं भेदानवभासस्तद्विषयो

---

1 क 'तद्रूप-' । 2. ग 'बुद्ध्याद्याभा-', क 'बुद्ध्यात्मभा-' ।

हिरण्यगर्भस्ते[1] सूक्ष्मं देहं स्थूल विराट् स्मृतम् ।
भावनाविषयो राम सूक्ष्मं ते [2]ध्यानमङ्गलम् ।
भूत भव्य भवि[3]ष्यच्च यत्रेदं दृश्यते जगत् ॥ ३३ ॥
[4]स्थूलेऽण्डकोषे देहे [5]ते महदादिभिरावृते ।
सप्तभि[6]रुत्तरगुणै[7]र्विराजो धारणा[8]श्रयः ।
त्वमेव सर्वकैवल्यं लोकास्तेऽवयवाः स्मृताः ॥ ३४ ॥

---

स्थूलत्वकृशत्वकाणत्वबधिरत्वाद्यसम्भवः । अज्ञानवशादज्ञानायत्तत्वात्, देहादिकन्तु ससारदशायामेव विद्यते इति नास्ति विरोध । परमार्थतो ब्रह्माऽपि जीव , यावदज्ञान न निवर्त्तते तावत् ससारी, अज्ञाननिवृत्तिस्तु तज्ज्ञानं विना न भवतीति भाव ।

३३ । नरो० । हिरण्यगर्भ इति, अपञ्चीकृतभूतपञ्चकं ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चक प्राणादिपञ्चक बुद्धिर्मनश्च मिलित्वा हिरण्यगर्भो भवति । तदुक्तम्—

पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥ इति ।

ध्यानेन मङ्गलम् अभिमतसिद्धिकारणम् , किन्तु भावनाया अविषय । भवतीति भव्यम् । 'भुव कर्त्तरि चे'ति यङ् । यत्र सूक्ष्मशरीरे ।

३४ । नरो० । उत्तरगुणे सप्तभिर्महदादिभिरावृते स्थूलेऽण्डकोषे स्थूलदेहे च विराजो धारणाश्रयस्त्वमेव । यत् सर्वकैवल्य सर्वैक्यम् । उत्तरा अधिका· सत्त्वादयो गुणा यत्र तैस्तथा विराज आदिकर्त्ता हिरण्यगर्भ ।

---

जीव· । बुद्ध्यादीनां जडानां साक्षी अन्तर्यामी ब्रह्मेव शुद्ध चैतन्यम्, यतो निर्विषये वाङ्मनसयोरगोचरे तस्मिन्निदमखिलं जगत् अज्ञानवशान्निर्विकारे त्वयि आरोप्यते । हिरण्यगर्भः सूक्ष्म देहम्, सकललिङ्गदेहसमष्टिरूपत्वात्तस्येति भाव । सकलस्थूलसमष्टिर्विराडिति भाव । रा० ।

३३ । ध्यातॄणां मङ्गलं स्वपदप्रदत्वात् । अतस्ते सूक्ष्म भावनाविषय हृदयपुण्डरीकादौ ध्येयमिति यावत् । यद्विषयभावनायां सिद्धायां भूतभविष्यद्वर्त्तमानसर्वपदार्थज्ञानं सम्भवतीत्याह—भूतमित्यादि । भव्य वर्त्तमानम् । रा० ।

३४ । अण्डकोषरूपो भगवतो विराड्देहस्तत्र महदादिभिरावृते इति । अत्रेय पौराणिकसांख्यसंमता प्रक्रिया । स्वव्याप्याहङ्कारावरणाद्दशगुणितं महत्तत्त्व बाह्यमावरणम्, तन्मध्ये अहङ्कारावरणम् । तदपि स्वव्याप्यव्योमावरणाद्दशगुणितम्, तन्मध्ये व्योमावरणम् । तस्य दश-

---

1 ग ङ-च छ 'न्ते' । 2 क-ख-व 'ध्यात-', च 'ज्ञान- । 3 क-ख-घ '-ष्यच्च' । 4 च 'स्थूलाण्ड-' । 5 ग-ङ छ 'च' । 6. च '-श्चोत्त-' । 7. क ख-घ-ङ-च-छ '-र्वैरा-' । 8. ङ '-श्रयम्' ।

पातालं ते पादमूलं पार्ष्णि[1]स्तव [2]महातलम् ।
रसातलं [3]ते गुल्फौ [4]तु तलातलमितीर्यते ॥ ३५ ॥
जानुनी सुतलं राम ऊरू ते वितलं तथा ।
अतलञ्च मही राम जघनं नाभिगं नभः ।
उरःस्थलं ते ज्योतींषि ग्रीवा ते [1]महः उच्यते ॥ ३६ ॥

---

३५ । नरो० । इदानीं विराड्देहं विवृणोति—पातालं ते पादमूलमित्यादि । 'स्थूलं वपुस्तवे'त्यन्तेन पातालं ते तव पादमूलमित्यन्वयः । महातलं ते तव पार्ष्णिरित्यन्वयः । पार्ष्णि'गुंहड्या' इति ख्यातः । रसातलं तलातलञ्च ते तव गुल्फावितीर्यते इति सम्बन्धः । गुल्फौ 'गोडगाठी'ति ख्यातौ ।

३६-३७ । नरो० । सुतलं जानुनी इत्यन्वयः । जानुनी 'ऑठु' इति ख्याते । वितलम् अतलञ्च ते तव ऊरू इत्यन्वयः । ऊरू 'उरात' इति ख्यातौ । मही जघनम् इत्यन्वयः । 'पश्चान्नितम्ब'

---

गुणितस्य मध्ये वाय्वावरणम् । तस्यापि दशगुणितस्य मध्ये तेज-आवरणम् । तेजसो दश-गुणितस्य मध्ये जलावरणम् । जलस्य दशगुणितस्य मध्ये पृथिव्यावरणम् । तस्या दशगुणाया मध्ये पृथिवीतेज उद्भूतमण्डम् । तस्यापि दशगुणस्याण्डस्य मध्ये चतुर्दशभुवनात्मकं स्वयम्भुवः स्थूलं शरीरं स्वयम्भूसङ्कल्पादेव जायते इति । तदाह—सप्तभिरुत्तरगुणैरिति । उत्तर-दशगुणैः स्वस्वान्तर्गतापेक्षयेत्यर्थः । साधारणाश्रयो भ्रूमध्यदेशेषु भावनाश्रय इत्यर्थः । तदेव विराड्रूपं ध्यानयोग्यं दर्शयति—त्वमेवेति । सर्वकैवल्यम् अन्ते प्राप्यं वस्त्वित्यर्थः । रा० ।

[ विराजो विराट्, धारणाश्रयः आश्रयविशेषः । सामान्यतश्चित्तस्थिरीकरणं धारणा, विविधरूपेण राजते विराजः । सर्वकैवल्यं सर्वेषां परमार्थस्त्वम्, लोकाः पातालादयः पुनस्तेऽवयवा अवयवत्वेन ध्येया एव स्मृता मुनिभिरुक्ताः । गो० ]

३५-३६ । लोकास्तेऽवयवा इति सामान्यत उक्त्वा तदेव विशेषेणाऽऽह—पातालमित्यादि । पातालं सप्तमोऽधोलोकः तलातलमितीर्यत इत्यस्य गुल्फोर्ध्वजान्वधोभाग इति शेषः । अतलञ्चेत्यस्योर्वोरूर्द्ध्वं जघनाधोभाग इति शेषः । नाभेरधोभागः जघनं तन्मही पृथ्वीत्यर्थः । नभो भुवर्लोकः, अत्र ज्योतींषि स्वर्गलोकः, अत्र महर्महर्लोकः । रा० ।

[ तमेवावयवविभागमाह—पातालमित्यादि सार्द्धनवभिः । पादमूलं पातालम् । पार्ष्णि-श्चरणपश्चाद्भागः । गुल्फौ घुटिकाग्रन्थी, तलातलम्, जानुनी, जङ्घे सुतलम्, ऊरू वितलम् । अतलं मही जघनं नभो नाभिः नाभितलम् 'नाभिसारा गृणन्ती'ति शुकोक्तेः । ज्योतींषि स्वर्गः । गो० ]

---

1. ग-ङ-छ '-स्ते तु' । 2. च 'मही त-?' । 3. ग ङ-छ 'तु' । 4 ग 'ते' ।

वदनं [1]जनलोकस्ते तपस्ते [2]शङ्खदेशगम् ।
सत्य[3]लोको रघुश्रेष्ठ शीर्षण्यास्ते सदा प्रभो ॥ ३७ ॥
[4]इन्द्रादयो लोकपाला बाहू[5]वस्ते दिशः श्रुती ।
अश्विनौ नासिके राम वक्त्रं तेऽग्निरुदाहृतः ॥ ३८ ॥
चक्षुस्ते[6] सविता राम मनश्चन्द्र उदाहृतः ।
भ्रूभङ्ग एव [7]कालस्ते बुद्धिस्ते वाक्पतिर्भवेत् ॥ ३९ ॥
रुद्रोऽहङ्काररूपस्ते वाचश्छन्दांसि तेऽ[8]व्यया. ।
यमस्ते दंष्ट्रदेशस्थो नक्षत्राणि द्विजालय ॥ ४० ॥

---

स्त्रीकट्या क्लीबे तु जघनं पुर ' इत्यमर. । स्त्रीकट्या इत्युपलक्षणम् । नभो नाभिगमित्यन्वय. । नाभिशब्दश्चात्र लक्षणया नाभित्वबोधक । ज्योतीषि ते तव उर.स्थलम्, महर्लोकस्ते तव ग्रीवा, जनलोकस्ते तव वदनम्, ते तव शङ्खदेशगं तप, 'शङ्खो निधौ ललाटास्थ्नि' इत्यमर. । शीर्षणि मस्तके ।

३८ । नरो० । नासिके इति पुटभेदाद् द्विवचनम् । वक्त्रञ्च मुखाग्रवर्त्तिभागः ।

३९ । नरो० । कालस्तव भ्रूभङ्ग । वाक्पतिर्बुद्धि. ।

४० । नरो० । रुद्रोऽहङ्काररूप । छन्दांसि अव्यया वाचः । यमो दंष्ट्रदेशस्थ. दंष्ट्रेत्यर्थ । ह्रस्वश्छान्दस' । नक्षत्राणि द्विजालय , द्विजालयो दन्तपङ्क्तय इत्यर्थ. । तत्र ज्योति.पदं रविचन्द्रेतरग्रहपरम् ।

---

३७ । तपस्तपोलोक. । रा० ।

[शङ्ख ललाटम्, शीर्षण्या. शिरांसि 'सत्यञ्च शीर्षाणि सहस्रशीर्ष्ण ' इति शुकोक्तेः । गो०]

३९ । कालो निमेषादिर्द्विपरार्धान्त' वाक्पतिर्बृहस्पति । रा० ।

[ भ्रूभङ्ग एव कालस्ते इति, कालो भ्रूविजृम्भः 'तद्भ्रूविजृम्भ. परमेष्ठिधिष्ण्यमि'ति शुकोक्ते । वाक्पतिर्ब्रह्मा । गो० ]

४० । अहङ्कारश्चित्तम्, छन्दांसि वेदास्ते वाच. वागित्यर्थ । दंष्ट्रदेशस्थो दंष्ट्रादेशस्थ इत्यर्थ. । ह्रस्व आर्ष. । द्विजालयो दन्तपङ्क्तयः । रा० ।

[ छन्दांसि गायत्र्यादीनि वेदा वा, द्विजालयो दन्तपङ्क्तिश्रेणय । गो० ]

---

1 क 'जनको लोकस्त-' । 2. च 'भालदेशकम्' । 3 च '-लोक' । 4 ग-ङ-पुस्तकयोरिदमर्धं नास्ति । 5. क 'वश्र' । 6. च-क '-श्र' । 7. क 'काम-' । 8 क-ख-घ-च '-व्यय', ङ-क 'व्यय' ।

हासो मोहकरी माया सृष्टिस्तेऽपाङ्गमोक्षणम्[1] ।
धर्मः [2]पुनस्तेऽधर्मश्च पृष्ठभाग [3]उदीरितः ॥ ४१ ॥
[4]निमेषोन्मेषणे रात्रिर्दिवा [5]चैव रघूत्तम ।
समुद्राः सप्त ते कुक्षिर्नाड्यो नद्यस्तव प्रभो ॥ ४२ ॥
[6]रोमाणि वृक्षौषधयो रेतो वृष्टिस्तव प्रभो ।
महिमा ज्ञानशक्तिस्ते एवं [7]स्थूलं वपुस्तव ॥ ४३ ॥
[8]यदिदं स्थूलरूपं ते मनः सन्धार्यते नरैः ।
अनायासेन मुक्तिः [9]स्यात्ततश्चान्यन्न किञ्चन ॥ ४४ ॥

---

४१ । नरो० । मोहकरी माया हासः । अपाङ्गमोक्षणं सृष्टिरिति दिक् ।

४४ । नरो० । यदिदमिति, मनो मनसेत्यर्थः । ततश्चान्यन्न किञ्चनेति, मुक्त्यनन्तरम् आत्मनोऽन्यत् किमपि नास्तीत्यर्थः ।

---

४१ । [ हास एव माया मोहकरी जगन्मोहिका च 'हासो जनोन्मादकरी च माया' इति शुकोक्तेः । अपाङ्गमोक्षणं दृष्टिः, सृष्टिः सर्गः, ईक्षयैव जगत्सृष्टेः, 'दुरन्तसर्गो यदपाङ्गमोक्षः' ( २।१।३१ ) इति भागवतम् । गो० ]

४२ । निमेषो रात्रिरुन्मेषणं दिवा, सप्त समुद्राः कुक्षिस्तव, नद्यस्तव नाड्यः । रा० ।

[ निमेषोन्मेषणे चक्षुःपक्ष्मप्रवृत्तिनिवृत्ती दिनरात्री 'निमेषणं रात्र्यहनी' इति शुकोक्तेः । कुक्षिरुदरम् । गो० ]

४३ । वृष्टिस्तव रेतः, ज्ञानशक्तिस्तव महिमा सर्वत आधिक्यम् । त्वत्तुल्या ज्ञानशक्तिर्नान्यत्रेति भावः । रा० ।

४४ । [ यदिदमित्यादि । ते तव इदं यत् स्थूलरूपं तद् यैर्नरैः संस्मर्यते सम्यक् स्मरणविषयीकार्यते, तेषामनायासेन मुक्तिः स्यात्, ततो दानध्यानादिकं किञ्चिदपि मुक्तौ नोपयुज्यते । वाशब्द एवार्थे । गो० ]

---

1 अतः परं च-छ-पुस्तकयोः 'रोमाणि वृक्षौषधयो रेतो वृष्टिस्तव प्रभो' इत्यधिकम् । 2 ग-छ 'पुरः' । 3 च छ 'उदाहृत' । 4 क-घ 'निमि-' । 5 छ 'ते रघुनन्दन' । 6 च-छ-पुस्तकयोरिदमर्द्धमत्र नास्ति । 7 छ 'स्थूलवपु-' । 8 क-ख-घ 'यदस्मिन्', च छ 'यदास्मिन्' । 9 क-ख-घ छ 'स्यादतोऽन्यन्नहि', ग 'स्यात्ततो वाऽन्यन्न', च 'स्यात्ततोऽन्यन्न-' ।

अतोऽहं राम [1]रूप ते स्थूलमेवा[2]नुभावये ।
यस्मिन् ध्याते प्रेमरसः सरोमपुलको भवेत् ।
[3]तदैव मुक्तिः [4]स्याद्राम [5]यदा ते स्थूल[6]भावक ॥ ४५ ॥
तदप्यास्तां [7]तवैवाहमेतद्रूपं [8]विचिन्तये ।
धनुर्बाणधरं श्यामं जटावल्कल[9]भूषितम् ।
अपीव्यवयसं सीतां विचिन्वन्तं सलक्ष्मणम् ॥ ४६ ॥
इदमेव सदा मे स्यान्मानसे रघुनन्दन ।
सर्वज्ञ शङ्करः साक्षात् पार्वत्या सहित सदा ।
तद्रूप[10]मेव सततं ध्यायन्नास्ते रघूत्तम ॥ ४७ ॥

---

४५ । नरो० । अतो मुक्तिदत्वाद् यस्मिन् स्थूलरूपे प्रेमा चासौ रसश्चेति प्रेमरसः । तल्लक्षणं यथा—

सम्यङ्मसृणितस्वान्तो ममत्वातिशयान्वितः ।
भाव स एव सान्तात्मा बुधैः प्रेमा निगद्यते ॥ इति ।
( रूपगोस्वामिकृतभक्तिरसामृतसिन्धौ )

रोमपुलकेन सह वर्तमानः सरोमपुलकः । पुलकशब्दश्चात्र रोमशब्दसमभिव्याहारसत्त्वे स्वार्थैकदेशे हर्षणे निरूढलाक्षणिकः ।

४६ । नरो० । श्रीरामस्य विराड्रूपं ध्यातं मुक्तिदं भवति । ध्यातं मुक्तिदं सुखदञ्चेति

---

४५ । सरोमपुलक इत्यनेन प्रेमरसलक्षणमुक्तम् । येन गात्रे सरोमपुलकता स प्रेमरसः । 'इदं मे भूयाल्लब्धं च मा नश्यत्वि'ति इच्छा प्रेमेत्याहुः । अथ जीवो यदा ते स्थूलरूपभावको भवति तदैव तस्य मुक्तिः स्याद् भवेदित्यर्थः ।

४६ । तत् स्थूलभावनमप्यास्तां यद्यशक्यं तदा तिष्ठतु, तवैतद्रूपमेवाह विचिन्तयिष्यामि । तद्रूपमाह—धनुरिति । अपीव्यवयस तारुण्यवयस्कम् । रा० ।

[ धनुर्बाण इत्यादि । अपीव्यवयसं मनोहरवयस्क विचिन्वन्तं विचिन्वत् । गो० ]

४७ । तद्रूपध्यानप्रार्थने हेतुमाह—सर्वज्ञ इत्यादि । एवं तद्रूपमनुपदोक्तं धनुरित्यादि । एवञ्च शङ्करध्येयत्वादेतद्रूपध्यानप्रार्थनमिति भावः । रा० ।

[ अत्र सदाचारं प्रमाणयति—सर्वज्ञ इत्यादि । गो० ]

---

1 ङ-च-छ 'ते रूप' । 2 छ '-भिभा-' । 3 छ 'तदेव' । 4 छ '-स्याद्दैव' । 5 छ 'यदास्ते' । 6 च '-भावत' । 7 च 'तदेवाह' । 8 छ 'विभावये' । 9 ग-ङ '-भूषणम्', च-छ '-धारिणम्' । 10 ग च छ '-मेव' ।

मुमूर्षूणां सदा काश्यां तारकं ब्रह्मवाचकम् ।
राम [1]रामेत्युप[2]दिशन् सदा सन्तुष्टमानसः ॥ ४८ ॥
अतस्त्वं जानकीनाथ परमात्मा सुनिश्चितः ।
सर्वे ते मायया मूढास्त्वां न जानन्ति तत्त्वतः ॥ ४९ ॥
नमस्ते राम[3]भद्राय वेधसे परमात्मने ।
अयो[4]ध्याधिपते तुभ्य नमः सौमित्रिसेवित ।
त्राहि त्राहि जगन्नाथ [5]मां माया [6]नाऽऽवृणोतु ते ॥ ५० ॥

श्रीराम उवाच—

तुष्टोऽहं देवगन्धर्व भक्त्या स्तुत्या च [7]तेऽनघ ।
[8]याहि मे परमं स्थानं [9]योगिगम्यं सनातनम् ॥ ५१ ॥

---

हृदि कृत्वाह—तदुच्यास्तामित्यादि । जटावल्कले भूषणे यस्य तं तथा । अपीव्य नूतन मनोह वा वयो यस्य तं तथा । विचिन्वन्त मृगयन्तम् ।

४९ । नरो० । मूढास्त्वयि मनुष्यबुद्ध्याश्रया इत्यर्थ । तत्त्वत स्वरूपेण याथार्थ्येन वा ।

५१ । नरो० । परमं स्थान वैकुण्ठमित्यर्थ । सनातनं नित्यम् ।

---

४८ । ननु मनुष्यस्य मम किमेतत् प्रार्थ्यते इत्याशङ्कायां तस्य परमात्मत्व युक्त्या साधयति—मुमूर्षूणामिति । तारक ब्रह्मतत्त्वमस्याङ्कप्रतिपाद्य तस्य वाचकं प्रतिपादकम् । रा० ।

४९ । रमन्ते योगिनोऽत्रेति व्युत्पत्त्येति भावः । त्वां न जानन्ति परमात्म-मेत्यर्थः । रा० ।

[ ननु सर्वे दशरथात्मजं मां जानन्ति कथं त्वया ब्रह्मेत्युच्यते इत्याह—सर्वे इति । यतः सर्वे ते तव मायया मूढाः, अतस्त्वां तत्त्वतः स्वरूपेण न जानन्ति । गो० ]

५० । [ नमस्ते रामभद्राय इत्यादि । वेधसे जगत्कर्त्रे, एवमपि निर्विकारितामाह—परमात्मन इति । गो० ]

५१ । योगिभिरनेनैव देहेन योगबलाद् गम्यं स्वर्लोकम् । रा० ।

---

1 च 'नामे-' । 2 ग-ङ-छ '-दिशेत्' । 3 छ '-चन्द्राय' । 4 च '-ध्यापतये' । 5 ग-ङ-च-छ 'माया मां' । 6 ग-ङ-छ 'मा', घ 'न वृणो-' । 7. क-ख 'तेऽनया' । 8 च 'त्व याहि' । 9 च 'योगगम्य' ।

[1]जपन्ति ये नित्यमनन्यबुद्ध्या भक्त्या त्वदुक्तं [2]स्तवमागमोक्तम् ।
तेऽज्ञानसम्भूतभवं विहाय मां [3]यान्ति नित्यानुभवानुमेयम् ॥ ५२ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अरण्यकाण्डे
नवमोऽध्याय ॥ ९ ॥

---

५२ । नरो० । अज्ञानसम्भूतभवम् अविद्योत्पन्नसंसारमित्यर्थः । नित्यश्चासौ अनुभवश्चेति नित्यानुभव०, स चासौ अनुमेयश्चेति तं तथा ।

[ नवमाध्यायव्याख्या समाप्ता ॥ ९ ॥ ]

---

५२ । नित्यानुभवानुमेयं नित्यं यो अनुभवो ज्ञानं तत्तद्वस्तुविषयं तेनानुमेयम् । तदुक्तं भगवद्गीतायाम्—

'सर्वस्य चाहं हृदि सन्निविष्टो मत्त स्मृतिर्ज्ञानमपोहनञ्च ।' ( १५।१५ )

इति । रा० ।

[ जपन्ति इत्यादि । यान्ति नित्यानुभवानुमेयम्, नित्यश्चासावनुभवो बोधरूपश्चेति स चासौ अनुमेयोऽनुमितिगोचर । बुद्ध्यादीनां जडानां प्रवृत्त्यनुपपत्त्या चेतन सर्वप्रेरकोऽनुमीयते, न हि चेतनमधिष्ठान विना जडानां प्रवृत्तिरुपपद्यते । गो० ]

---

1 छ 'यजन्ति' । 2 च 'भवभोगमोचम्', छ 'तव सामगीतम्' । 3. ङ-च-छ 'यान्तु' ।

इत्युक्त्वा प्रययौ सोऽपि विमानेनार्कवर्चसा ।
विष्णोः पदं रामनाम[1]स्मरणे फलमीदृशम् ॥ ३ ॥
त्यक्त्वा तद्विपिनं घोरं सिंहव्याघ्रादि[2]दूषितम् ।
[3]शनैरापाऽऽश्रमपदं शबर्या रघुनन्दनः ॥ ४ ॥
शबरी राममालोक्य लक्ष्मणेन समन्वितम् ।
आयान्त[4]माराद्धर्षेण प्रत्युत्था[5]याचिरेण सा ॥ ५ ॥
पतित्वा पादयोरग्रे हर्षपूर्णाश्रुलोचना ।
स्वागतेनाभिनन्द्याथ स्वासने [6]संन्यवेशयत् ॥ ६ ॥
रामलक्ष्मणयोः सम्यक् पादौ प्रक्षाल्य भक्तितः ।
तज्जलेनाभिषिच्याङ्गमथार्घ्यादिभि[7]राहता ॥ ७ ॥

---

३ । नरो० । अर्कस्येव वर्चो दीप्तिर्यस्य तेन तथा । पदं स्थानम् ।

५ । नरो० । आरात् समीपे । अचिरेण शीघ्रम् ।

६ । नरो० । हर्षेण पूर्णम् उच्छलितम् अश्रु याभ्यां तादृशे लोचने यस्याः सा । अभिनन्द्य प्रशस्य । स्वासने शोभनासने इत्यर्थः ।

---

४ । अथ रघुनन्दनो रामः सिंहव्याघ्रादिदूषितं घोरं तद्विपिनं त्यक्त्वा शबर्याः आश्रमपदं शनैरापेत्यन्वयः ।

६ । पादयोरग्रे तदन्त्यभागे, स्वासने शोभने आसने । रा० ।

७ । आहता अर्घ्यादिभिस्तद्रूपया सपर्यया पूजासामग्र्या रामं संपूज्य रामार्थं संगृहीतानि दिव्यानि फलानि रामाय ददावित्यन्वयः । तदुक्तं पाद्मे शबरी प्रस्तुत्य—

प्रत्युद्गम्य प्रणम्याथ निवेश्य कुशविष्टरे ।
पादप्रक्षालनं कृत्वा तत्तोयं पापनाशनम् ॥
शिरसा धार्य पीत्वा च वन्यैः पुष्पैरथार्चयत् ।
फलानि च सुपक्वानि मूलानि मधुराणि च ॥
स्वयमास्वाद्य माधुर्यं परीक्ष्य परिभक्ष्य च ।
पश्चान्निवेदयामास राघवाभ्यां दृढव्रता ।
फलान्यास्वाद्य काकुत्स्थस्तस्यै मुक्तिं परां ददौ ॥*

उत्तर ख० २४२।२६९-२७१

इति । रा० ।

---

1 ङ '-स्फुरणे' । 2 ग-ङ '-भूषितम्', च '-सङ्कुलम्' । 3 ङ 'जगामाऽऽश्रममिवासौ', क 'शनैरयाऽऽश्र-' । 4 ग '-मायाद्धर्षेण', च '-मतिहर्षेण' । 5 ग-ङ '-य चि-' । 6 ग 'सन्निवेशयेत' । 7 क-ग-ङ '-राहृता' ।

---

* वङ्गवासिमुद्रितपुस्तके श्लोकानामेतेषां पाठान्तरादिना बहु वैरूप्यं दृश्यते ।

सम्पूज्य विधिवद्रामं ससौमित्रिं सपर्यया ।
संगृहीतानि [1]दिव्यानि रामार्थं शबरी मुदा ॥ ८ ॥
फलान्यमृतकल्पानि ददौ रामाय भक्तितः ।
पादौ सम्पूज्य कुसुमैः सुगन्धैः सानुलेपनैः ॥ ९ ॥
कृतातिथ्यं रघुश्रेष्ठमुपविष्टं सहानुजम् ।
शबरी भक्तिसम्पन्ना प्राञ्जलिर्वाक्यमब्रवीत् ॥ १० ॥
अत्राऽऽश्रमे रघुश्रेष्ठ गुरवो मे महर्षयः ।
[2]स्थिताः शुश्रू[3]षणं तेषां [4]कुर्वती समुपस्थिता ॥ ११ ॥
बहुवर्षसहस्राणि गतास्ते ब्रह्मणः पदम् ।
गमिष्यन्तोऽब्रुवन्मां त्वं वसात्रैव समाहिता ॥ १२ ॥
रामो दाशरथिर्जातः परमात्मा सनातनः ।
राक्षसानां वधार्थाय ऋषीणां रक्षणाय च ॥ १३ ॥

---

११ । नरो० । हे रघुश्रेष्ठ, अत्राऽऽश्रमे मे मम महर्षयो गुरवो बहुवर्षसहस्राणि स्थिताः, तेषां शुश्रूषणं कुर्वती समुपस्थितेत्यन्वयः ।

१२ । नरो० । ते ब्रह्मणः पदं गता इत्यन्वयः । गमिष्यन्तो मामब्रुवन्नित्यन्वयः । गमिष्यन्तस्त्वां किमुक्तवन्त इत्यपेक्षायामाह—त्वमित्यादि ।

---

११ । तेषां शुश्रूषणं कुर्वती अहं सम्यक् उप तेषां समीपे स्थिता । रा० ।

वाल्मीकीयेऽपि—

चित्रकूटं त्वयि प्राप्ते विमानैरतुलप्रभैः ।
इह ते दिवमारूढा ये मयाऽभ्यर्चिताः पुरा ॥
तैश्चाहमुक्ता धर्मिष्ठैर्महाभागैर्महर्षिभिः ।
आगमिष्यति काकुत्स्थः सुपुण्यमिममाश्रमम् ॥
स ते प्रतिग्रहीतव्यो रामः सौमित्रिणा सह ।
तमर्चित्वा ध्रुवं स्वर्गो भविष्यति तवाक्षयः ॥ इत्यादि ।३।७७।१३—१९।

१२ । बहुवर्षसहस्राणीति पूर्वान्वयि । गतास्ते इत्यस्येदानीमित्यादिः, गमिष्यन्तस्ते त्वमत्रैव समाहिता वसेति मामब्रुवन् । रा० ।

---

1 ङ 'द्रव्याणि', च 'रामार्थं दिव्यानि' । 2 क 'श्रिता' । 3 'ङ '-षणां' । 4 ख 'कुर्वन्ती' ।

आगमिष्यति चैकाग्रध्याननिष्ठा [1]स्थिरा भव ।
इदानीं चित्रकूटाद्रामाश्रमे वसति प्रभुः ॥ १४ ॥
यावदागमनं तस्य तावद्रक्ष कलेवरम् ।
दृष्ट्वैव राघवं दग्ध्वा देहं यास्यसि तत्पदम् ॥ १५ ॥
तथैवाकरवं राम त्वद्ध्यानैकपरायणा ।
[2]प्रतीक्ष्याऽऽगमनं [3]तेऽद्य सफलं गुरुभाषितम् ॥ १६ ॥
तव सन्दर्शनं राम गुरूणामपि मे न हि ।
योषिन्मूढाऽप्रमे[4]यात्मन् हीनजातिसमुद्भवा ॥ १७ ॥
तव दासस्य दासानां शतसंख्योत्तरस्य वा ।
दासीत्वे नाधिकारोऽस्ति कुतः साक्षात्तवैव हि ॥ १८ ॥

---

१४ । नरो० । एकाग्रं यद् ध्यानं तत्र निष्ठा रतिः प्रीतिर्यस्याः सा तथा ।

१८ । नरो० । परम्परयाऽपि तत्र दासीत्वे ममाधिकारो नास्तीत्याह—तवेति पद्येन । दासानां शतसंख्योत्तरस्येति परम्परया भृत्यानां शतसंख्याया उत्तरभूतस्येत्यर्थः ।

---

१४ । आगमिष्यति अत्राऽऽश्रमे इति शेषः । अत एकाग्रं यथा भवति तथा विषयान्तर-सञ्चाररहितमिति यावत्, तद्ध्याननिष्ठा अत्र स्थिरा भवेत्यर्थः । तेषां गमनकालमाह—इदानीमिति । रा० ।

१९ । इत्युक्त्वा ते गता इत्यर्थः । रा० ।

१६ । ते आगमनं प्रतीक्ष्य स्थिताऽहं तथैव यथा गुरुभिरुक्तं तथाऽकरवम् । तच्च मे गुरुभाषितं रामोऽत्राऽऽयास्यतीत्येतत् अद्य सफलं जातम् । रा० ।

१७ । हे राम तवैतद्रूपस्य दर्शनं मे गुरूणामपि न जातम् । हे अप्रमेयात्मन्, अहं योषित् । अनेन सर्वधर्मानर्हत्वम् । तत्रापि हीनजात्युद्भवा । रा० ।

गुरूणां मत्पित्रादीनाम् । यतस्तादृशानां मद्गुरूणामपि न सन्दर्शनम् अतो हीनजाति-समुद्भवाया मम यत् तव सन्दर्शनं तद् भाग्यातिशयो मेऽत्र नास्ति सन्देहः । तथात्वेऽपि पुन-र्विनयादि प्रकाशयन्ती आह—योषिन्मूढेत्यादि ।

१८ । तव दासः तद्दासः इत्येवंक्रमेण शतसंख्यात उत्तरस्यापि दासीत्वे नाधिकारः, साक्षात्तव दास्ये तु सुतरामनधिकारः । रा० ।

[ तव दासस्य दासानां शतसंख्योत्तरस्येति । दासक्रमेण शताधिकदासदासस्यापि दासीत्वे अधिकारो नास्ति साक्षात्तव कुतः ? गो० ]

---

1 ङ 'स्थिता' । 2 ग 'प्रतीक्ष्य ग-' । 3 च 'तव' । 4. क '-यात्मा' ।

कथं [1]रामाद्य [2]मे दृष्टस्त्वं मनोवागगोचरः ।
स्तोतुं न जाने देवेश किं करोमि प्रसीद मे ॥ १९ ॥

श्रीराम उवाच—

पुंस्त्वे स्त्रीत्वे विशेषो वा जातिनामाश्रमादयः ।
न कारणं मद्भजने [3]भक्तिरेव हि कारणम् ॥ २० ॥
यज्ञदानतपोभिर्वा वेदाध्ययनकर्मभिः ।
[4]नैव द्रष्टुमहं शक्यो मद्भक्तिविमुखैः सदा ।
[5]तस्मा[6]द्भामिनि संक्षेपाद्वक्ष्येऽहं भक्तिसाधनम् ॥ २१ ॥
सतां [7]सङ्गतिरेवात्र [8]साधनं प्रथमं स्मृतम् ।
द्वितीयं मत्कथालापस्तृतीयं मद्[9]गुणेरणम् ॥ २२ ॥

---

२० । नरो० । विशेषो वैलक्षण्यम् । जातिनामाश्रमादय इति । जातयो ब्राह्मणत्वादयः, नामानि नरसिंहादीनि, आश्रमा ब्रह्मचारिगृहिवानप्रस्थभिक्षवः । आदिपदेन जातिधर्माचारा आश्रमधर्माचाराश्च गृह्यन्ते ।

२१ । नरो० । मद्भक्तिविमुखैः मद्भक्तिहीनैरित्यर्थः ।

२२ । नरो० । सतां साधूनाम् । रतिः प्रीतिः ।

---

१९ । इति हेतोर्योगिनामपि मनोवागगोचरस्त्वं मे मया कथं दृष्ट इति प्रश्नः । स्तोतुमित्यादिर्विनयः । रा० ।

२० । पुंस्त्वस्त्रीत्वकृतो विशेषो वा जातिनामाश्रमादयस्तत्कृता विशेषा वा न मद्भजने कारणम्, किन्तु भक्तिरेव न तु पुंसो ब्राह्मणस्यैवाधिकार इत्यर्थः । रा० ।

[ पुंस्त्वे स्त्रीत्वे इत्यादि । मद्भजने पुंस्त्वे स्त्रीत्वे विशेषो नास्ति । जातिर्ब्राह्मणादिः, नाम स्नातकयाज्ञिकाद्युपाधिः, आश्रमो ब्रह्मचर्यादिः ; आदिना व्रतपरत्वादीनां ग्रहणम् । एते मद्भजने कारणं न, किन्तु भक्तिरेव कारणम् । अतो योषिदपि त्वं भक्तिमती मद्भजनस्य सम्यगधिकारिणीति भावः । गो० ]

२१ । तदेवोपपादयति—यज्ञेत्यादि । वेदाध्ययनकर्मभिः वेदाध्ययनेन वेदोक्तकर्मानुष्ठानैश्चेत्यर्थः । रा० ।

२२ । सत्सङ्ग एव प्रथमं मुख्यं साधनमित्यर्थः । मत्कथालापो मच्चरितनिबन्धालाप इत्यर्थः । मद्गुणेरणं मद्गुणकीर्त्तनम् । रा० ।

---

1 छ 'रामोऽद्य' । 2 ग-ङ 'मे दृष्टो मनोवाचामगोचरः', च 'मे दृष्टो मनोवाचाद्यगोचरः', छ 'दृष्टो मे मनोवाग्भ्यामगोचरः' । 3 ख 'शक्ति-' । 4 ग ङ-च छ 'नैव' । 5 छ-पुस्तके अत आरभ्य त्रयोविंशश्लोकान्तोऽंशो नास्ति । 6 ग च '-द्भाविनि' । 7 क ख ग-घ-ङ-च-छ 'सङ्गतिः' । 8 ग 'प्रथमं साधनं' । 9 क छ 'गुणेरणम्', च '-रूपभावनम्' ।

व्याख्यातृत्वं मद्वचसां चतुर्थं साधनं भवेत् ।
आचार्योपासनं भद्रे मद्बुद्ध्याऽमायया सदा ।
पञ्चमं [1]पुण्यशीलत्वं यमादि नियमादि च ॥ २३ ॥
निष्ठा मत्पूजने नित्यं षष्ठं साधनं[2]मीरितम् ।
[3]मम मन्त्रोपासकत्वं साङ्गं सप्तममुच्यते ॥ २४ ॥
[4]मद्भक्तेष्वधिका पूजा सर्वभूतेषु मन्मतिः ।
[5]बाह्यार्थेषु [6]विरागित्वं [7]शमादिसहितं [8]तथा ।
अष्टमं नवमं [9]तत्त्व[10]विचारो मम [11]भामिनि २५ ॥

---

२३ । नरो० । अमायया अकपटेन । यमादि नियमादि च पूर्वमुक्तम् ।

२४ । नरो० । निष्ठा रतिः ।

२५ । नरो० । बाह्यार्थेषु पुत्रदारादिषु विरागित्वम् अनुरागशून्यत्वम् । शमादयः प्रागुक्ताः । तत्त्वविचारः स्वरूपनिरूपणम् ।

---

२३ । मद्वचसां मत्प्रतिपादकवचसाम् उपनिषद्रूपाणां व्याख्यातृत्वम् । अमायया अच्छलेन । मद्बुद्ध्या ईश्वरबुद्ध्या गुरुसेवा पुण्यशीलत्वं पुण्यविषये स्वारसिकी प्रवृत्तिः । यमादि— अहिंसाऽस्तेयब्रह्मचर्यापरिग्रहा यमाः, आदिना आसनप्राणायामप्रत्याहाराः । नियमादि— शौच-सन्तोष-तपः-स्वाध्यायेश्वरप्रणिधानानि नियमाः, आदिना धारणाध्यानसमाधयः । रा० ।

[ व्याख्यातृत्वं मद्वचसामित्यादि । मद्वचसां मत्सूचकवचनानाम् । गो० ]

२४ । मत्पूजने निष्ठा तत्परता । मम ये मन्त्रास्तदुपासकत्वं तदुपासनं तच्च साङ्गं तत्तन्मन्त्रकल्पोक्ताङ्गसहितम् । रा० ।

२५ । अधिका मत्तोऽप्यधिकेत्यर्थः । पुत्रादरस्य पितुरिव तदादरस्य ममाधिकसन्तोषदत्वादिति भावः । मन्मतिः सर्वान्तर्यामी भगवानिति सर्वं भगवति वर्त्तते इति वा मतिः । विरागित्वं वैराग्यम् । शमोऽन्तरिन्द्रियनिग्रहः । आदिना बाह्येन्द्रियनिग्रहरूपो दमः । मम तत्त्वविचारः स्वस्य तत्त्वं शुद्धं ब्रह्म तद्विचारस्तत्त्वमस्यादिवाक्यतः । रा० ।

---

1. च-छ 'मुख्य-' । 2 ग-ङ-च '-मुच्यते' । 3 ङ-पुस्तके इदमर्धं नास्ति । 4 क-च 'सद्भक्ति' । 5 च 'राज्यार्थेषु' । 6 ग ङ च छ 'विरागत्व' । 7 च 'समाधिस-' । 8 च 'तदा' । 9 ङ च छ 'तत्र' । 10 ङ-च-छ 'विचार' । 11. ग-च 'भाविनि', छ 'मानिनि' ।

एवं नव[1]विधा [2]भक्ति-साधन यस्य कस्य वा[3] ।
[4]स्त्रियो वा पुरुषस्यापि तिर्यग्योनिगतस्य वा ।
भक्तिः सञ्जा[5]यते प्रेमलक्षणा शुभलक्षणे ॥ २६ ॥
[6]भक्तौ सञ्जातमात्रायां मत्तत्त्वानुभव[7]स्तथा ।
ममानु[8]भवसिद्धस्य मुक्तिस्तत्रैव जन्मनि ।
स्यात्तस्मात् कारण भक्तिर्मोक्षस्येति [9]सुनिश्चितम् ॥ २७ ॥
प्रथमं साधन यस्य भवेत् तस्य क्रमेण तु ।
भवेत् सर्वं ततो [10]भक्तिर्मुक्तिरेव सुनिश्चितम् ॥ २८ ॥
[11]यस्मान्मद्भक्तियुक्ता त्व [12]ततोऽहं त्वामुपस्थित ।
इतो [13]मद्दर्शनान्मुक्ति[14]स्तव [15]नास्त्यत्र [16]सशय· ॥ २९ ॥
यदि जानासि मे ब्रूहि सीता कमललोचना ।
कुत्राऽऽस्ते केन वा नीता प्रिया मे प्रिय[17]दर्शना ॥ ३० ॥

---

२६ । नरो० । तिर्यग्योनिगतस्य पक्षिमृगादियोनिगतस्य ।

२७ । नरो० । मत्तत्त्वानुभवो मत्स्वरूपसाक्षात्कार ।

२८ । नरो० । तत्रापि साधनानि कथं भवेयुरिति चेत्तत्राऽऽह—प्रथममित्यादि । भक्ति विना मुक्तिर्नास्तीति सूचनाय भक्तिमुक्त्योरभेदमङ्गीकृत्य भक्तिर्मुक्तिरेवेत्युक्तम् ।

२९ । नरो० । मत्तत्त्वानुभव विना तव मुक्तिर्भविष्यतीति सूचनाय इत इत्याद्युक्तम् । इतो मद्दर्शनात्तव मुक्तिर्भविष्यति नान्यत्र कारणम् । मुक्तेर्मद्दर्शनादन्यत्र कारणत्व नास्तीत्यर्थ । पुनर्दर्शनापेक्षा नास्तीति सूचनाय इत इत्युक्तम् ।

---

२६ । यस्य कस्य वेत्यस्यैव प्रपञ्च·—स्त्रिया इति । यस्य तन्नवविधं साधनं जायते तस्य प्रेमलक्षणा भक्ति सञ्जायते । ममेयं भूयाद् भूत्वा च मा नश्यत्वित्येवमिच्छा प्रेम । रा० ।

२७ । मत्तत्त्वं ब्रह्म । अनुभवसिद्धस्येति तृतीयासमास । मुक्ति· स्यादित्यन्वय । रा० ।

२८ । सर्वं नवविधसाधन ततो भक्तिस्ततो मुक्तिरित्यन्वय । रा० ।

---

1. ङ '-विध भ-' । 2 ग 'भक्ति सा-', च 'भक्तिर्मोक्षस्येति विनिश्चिता' । 3 अत पर च-पुस्तके 'मत्सङ्गादिविभेदेन साधन यस्य कस्य वा' इत्यधिकम् । 4 ग-घ-ङ 'स्त्रिया' । 5 ग '-यतेऽवश्य मयि सत्त्वादिलक्षण' । 6 ग-ङ 'भक्त्या सञ्जातमानाया' । 7 ग-ङ-च '-स्तदा' । 8 ङ '-भाव-' । 9 च 'विनि-' । 10 ङ 'भक्तिर्मुक्तिरेवेति निश्चितम्', च 'मुक्तिर्भक्तिरेवेति निश्चितम्', ग छ 'भक्तिर्मुक्तिरेवेति निश्चितम्' । 11 छ-पुस्तके इदमर्द्धं नास्ति । 12 ग 'ततस्त्वाऽहमुपस्थित' । 13. ङ 'मे दर्श-' । 14. ङ '-स्ततो' । 15 ग-ङ 'नाश्यत' । 16 ग-ङ-च छ 'कारणम्' । 17 ङ '-दर्शिन' ।

शबर्युवाच—

देव जानासि सर्वज्ञ सर्वं त्वं विश्वभावन ।
तथाऽपि पृच्छसे यन्मां लोकाननु[1]सृतः प्रभो ॥ ३१ ॥
[2]ततोऽहमभिधास्यामि सीता [3]यत्राधुना स्थिता ।
रावणेन हृता सीता लङ्कायां वर्त्ततेऽधुना ॥ ३२ ॥
इतः समीपे रामाऽऽस्ते पम्पानाम सरो [4]वरम् ।
ऋष्यमूकगिरिर्नाम तत्समीपे महा[5]नगः ॥ ३३ ॥

३१ । नरो० । अनुसृतोऽनुगतः ।
३३ । नरो० । महान्तो नगा वृक्षा यत्र स तथा ।

२९ । इतो मद्दर्शनात् अस्मादेव मद्दर्शनादित्यर्थः । रा० ।

३० । 'यदि जानासि' इत्यादि रामप्रश्नः 'रावणेन हृता सीते'ति शबर्या उत्तरञ्च वाल्मीकीये नास्ति । तत्र सुग्रीवसकाशगमने कबन्धस्यैवोपदेशः ।

वाल्मीकीयवाक्यं पूर्वं (१०।१ टिप्पण्यां) दर्शितम्, अपरमपि हनूमत्सकाशं लक्ष्मणवाक्यं पाश्चात्ये वाल्मीकीये—

हनुर्नामादितेः पुत्रः शापाद्राक्षसतां गतः ।
आख्यातस्तेन सुग्रीवः समर्थो वानराधिपः ॥
स ज्ञास्यति महावीर्यस्तव भार्यापहारिणम् ।
एवमुक्त्वा दनुः स्वर्गं भ्राजमानो दिवं गतः ॥ ३।९।१५-१६ ।

अग्निपुराणेऽपि—

मृतोऽथ संस्कृतस्तेन कबन्धश्चावधीत् ततः ।
शापमुक्तोऽब्रवीद्रामं स त्वं सुग्रीवमाव्रज ॥ ८।२२ इति ।

३१ । सर्वं जानासीत्यत्र हेतुगर्भविशेषणं सर्वज्ञेति, यत् पृच्छसे तल्लोकाननुसृतः असीति जाने इति शेषः । रा० ।

३२ । यतस्त्वं लोकाननुसृतस्ततः इत्यर्थः । रा० ।

३३ । तत्प्राप्त्युपायमप्याह—इत इति । रा० ।

1 च '-सृतस्तदा' । 2 छ 'अतोऽह-' । 3. क-ख-घ ङ-च-छ 'तत्रा-' । 4 ग-ङ-छ '-वर' । 5. छ '-नघ' ।

चतुर्भि[1]र्मन्त्रिभिः सार्द्धं सुग्रीवो वानराधिपः ।
भीतभीतः सदा तत्र तिष्ठ[2]त्यनिलविक्रमः ॥ ३४ ॥
वालिनश्च भयाद् भ्रातुस्तद[3]गम्यमृषेर्भयात् ।
वालिनस्तत्र गच्छ त्वं तेन सख्यं कुरु प्रभो ॥ ३५ ॥

---

३४ । नरो० । भीतादपि भीतो भीतभीत. । अनिलस्येव विक्रमो यस्य स तथा ।

---

३४ । भीतभीतो भीतेभ्योऽपि भीत , अतिभीत इत्यर्थः । रा० ।

३५ । कस्य भयादेवं भीतस्तत्राऽऽह—वालिन इति । भ्रातुर्वालिनो भयादित्यर्थः । ननु तत्र वासेन कथमभयमत आह—तद्वालिनोऽगम्यम् । एष चार्थो वाल्मीकिना सविस्तरं दर्शित । अग्रे चात्रापि दर्शयिष्यति । तेन सुग्रीवेण सख्य कुरु । तस्यापि विपद्ग्रस्तत्वात्तेन सख्यं सुलभं न तु वालिनेति शेष । रा० ।

तदगम्यमृषेर्भयादिति । ऋषेर्मतङ्गस्य भयाच्छापभयादित्यर्थ । तथाच वाल्मीकीये—

आविद्धस्तेन बलिना विनिष्पिष्टो महासुर ।
विमुञ्चन् रुधिरं खेभ्यः प्राणांस्त्यत्याज वीर्यवान् ॥
स पपात महाकाय क्षितौ पञ्चत्वमागत ।
त तोलयित्वा बाहुभ्या गतसत्त्वमचेतनम् ॥
चिक्षेप बलवान् वाली पादेनैकेन योजनम् ।
तस्य वेगप्रवृद्धस्य वक्त्रात् क्षतजबिन्दव ॥
प्रपेतुर्मारुतोत्क्षिप्ता मतङ्गस्याऽऽश्रमे किल ।
तान् दृष्ट्वा पतितान् गात्रे मुनि. शोणितबिन्दुकान् ॥
उपस्पृश्य ददौ शाप क्षेप्तार वालिन प्रति ।
येनैष दानव क्षिप्तो ममाऽऽश्रमपद प्रति ॥
इह ते न प्रवेष्टव्यमृष्यमूकवन हरे ।
प्रविष्टस्य हि ते सद्यो जीवित न भवेदिति ॥
तत शापभयाद्वाली ऋष्यमूक महागिरिम् ।
प्रवेष्टुं न स शक्नोति द्रष्टुं वा रघुनन्दन ॥ ४।९।८०-८६ ।

अस्याग्रेऽपि—

मातङ्गो वालिनं प्राह यद्यागन्ताऽसि मे गिरिम् ।
इतः परं भग्नशिरा मरिष्यसि न संशय. ॥

---

1. च 'वानरैः' । 2 क ख-घ '-त्यतुल-', च '-त्यमित-' । 3 च '-गम्यं मुने-' ।

सुग्री[1]वेण स सर्वं [2]ते कार्यं सम्पादयिष्यति ।
[3]अहमग्निं प्रवेक्ष्यामि तवाग्रे रघुनन्दन ॥ ३६ ॥
मुहूर्त्तं तिष्ठ राजेन्द्र यावद्दग्ध्वा कलेवरम् ।
यास्यामि [4]भवनं राम तव विष्णोः परं पदम् ॥ ३७ ॥
इति रामं समामन्त्र्य प्रविवेश[5] हुताशनम् ।
क्षणान्निर्धूय सकलमविद्याकृतबन्धनम् ।
रामप्रसादाच्छबरी मोक्षं प्रापातिदुर्लभम् ॥ ३८ ॥
किं [6]दुर्लभं जगन्नाथे श्रीरामे भक्तवत्सले ।
प्रसन्नेऽधमजन्माऽपि शबरी मुक्तिमाप सा ॥ ३९ ॥
किं पुनर्ब्राह्म[7]णा मुख्याः पुण्याः श्रीरामचिन्तकाः ।
मुक्तिं यान्तीति [8]मद्भक्तिर्मुक्तिरेव न संशयः ॥ ४० ॥

---

३८ । नरो० । क्षणान्निर्धूय सकलमविद्याकृतबन्धनमिति, अज्ञानकृतं लिङ्गशरीरादिकं क्षणं प्राप्य निवर्त्त्येत्यर्थः ।

४० । नरो० । मद्भक्तिरिति, श्रीरामविषया मम भक्तिरित्यर्थः ।

---

एवं शप्तस्तदारभ्य ऋष्यमूकं न यात्यसौ ।
एतज् ज्ञात्वाऽहमप्यत्र वसामि भयवर्जितः ॥ ४।१।६६-६७ ।

३८ । वाल्मीकीयेऽपि—

अनुज्ञाता तु रामेण हुत्वात्मानं हुताशने ।
ज्वलन्ती स्वेन वपुषा स्वर्गमेव जगाम सा ॥
यत्र ते सुकृतात्मानो विहरन्ति महर्षयः ।
तत् पुण्यं शबरी स्थानं जगामैव समाधिना ॥ इति । ३।७७।३२-३३ ।

३९ । विशेषसामान्यमर्थान्तरं न्यस्यति—किमिति । श्रीरामे प्रसन्ने किं दुर्लभम् ? तमेव विशेषं सामान्येनोपपादकत्वेनाऽऽह—यदधमजन्मा शबर्यपि रामे प्रसन्ने मुक्तिमाप । रा० ।

४० । मुक्तिं यान्तीति किं पुनर्ब्राह्मणादय इति वक्तव्यमित्यन्वयः । यतस्तद्भक्तिर्मुक्तिरेव । अनेन रूपकेण सर्वथा तस्या मुक्तिजनकत्वं सूचितम् । रा० ।

---

1 ग '-वेण सुसख्येन', च '-वेणास्तु सर्वन्ते', छ '-वेणैव सर्वन्ते' । 2 ङ 'त्वत्-' । 3 ग-ङ-छ 'अहञ्चाग्निं', च 'अहं वह्निं' । 4 क ख 'भगवन्नाम', घ 'भगवद्राम' । 5 छ 'वैशानलं ततः' । 6 ग-ङ-च-छ 'दुष्करं' । 7. ग '-णमुखाः' । 8. क-ख-घ-ङ-छ 'यद्भ-', ग 'यद्भक्ते-', च 'तद्भक्ते-' ।

भक्तिर्मुक्तिविधायिनी भगवतः श्रीरामचन्द्रस्य हे
लोकाः कामदुघाङ्घ्रिपद्मयुगलं सेवध्वमत्युत्सुकाः ।
नानाज्ञानविशेषमन्त्र[1]विततिं त्यक्त्वा सुदूरे भृशं
रामं श्यामतनुं [2]स्मरारिहृदये [3]भान्तं भजध्वं बुधाः ॥ ४१ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे अरण्यकाण्डे
दशमोऽध्यायः ॥ १० ॥

---

४१ । नरो० । कामदुघञ्च अङ्घ्रिपद्मयुगलञ्चेति तत्तथा । नाना अनेको यो ज्ञानविशेषः, तेन सहिता मन्त्रविततिस्तां नानाज्ञानविशेषमन्त्रविततिम् ।

[ अरण्यकाण्डव्याख्या समाप्ता ॥ ३ ॥ ]

---

४१ । यतो रामचन्द्रस्य भक्तिर्मुक्तिदा, अतो रामस्य कामदुघचरणपद्मयुगलं सेवध्वम् । तद्विषये अत्युत्सुका अत्युत्कटेच्छावन्तः सन्तः नानाप्रकारमज्ञानविशेषभूतामज्ञानस्यैव तन्मूलसंसारस्यैव जवनिकां मन्त्रविततिं मन्त्रसमूहं त्यक्त्वा भृशमतिशयेन रामं भजन्तु । तत्र हेतुगर्भविशेषणम्—स्मरारिहृदये भातम्, स्मरारिः शिवः । रा० ।

[ नानाज्ञानेत्यादि । ज्ञानं शास्त्रीयम्, विशेषमन्त्रा नानादेवतामन्त्राः, तेषां विततिं विचयनम् अन्वेषणं सुदूरे त्यक्त्वा स्मरारिहृदये भान्तं प्रकाशमानं श्यामतनुं रामं भजध्वम् । गो० ]

अरण्यकाण्डं समाप्तम् ॥

---

1. च '-विततं' । 2 ग 'भजामि', ङ-च-छ 'स्मरामि हे-' । 3 छ 'चान्ते' ।

# अध्यात्मरामायणम्

## किष्किन्धाकाण्डम्

### प्रथमोऽध्यायः

[1]श्रीमहादेव उवाच—

ततः सलक्ष्मणो रामः शनैः पम्पासरस्तटम् ।
आगत्य सरसां श्रेष्ठं दृष्ट्वा विस्मयमाययौ ॥ १ ॥
क्रोशमात्रं सुविस्तीर्णमगा[2]धामल[3]शम्बरम् ।
उत्फुल्लाम्बुजकह्लारकुमुदोत्पलमण्डितम् ॥ २ ॥

२ । नरो० । अगाधमतलस्पर्शम् अमलं निर्मलं शम्बरं जलं यत्र तत्तथा । उत्फुल्लानि च अम्बुजञ्च पद्मं कह्लारञ्च सौगन्धिकं कुमुदञ्च कैरवम् उत्पलञ्च कुवलयं तानि चेति तैर्मण्डितं तत्तथा ।

१ । पम्पामधिकृत्य वाल्मीकीये—

स ददर्श ततः पम्पां शुभशीतजलाशयाम् ।
प्रहृष्टनानाशकुनां बहुपादपसङ्कुलाम् ॥
कुमुदोत्पलिनीं रम्यां शुभां मणिनिभोदकाम् ।
बहुपङ्कजसम्बाधां बहुपुष्करमण्डिताम् ॥
हंसकारण्डवाकीर्णां महर्षिगणसेविताम् ।
चक्रवाकोपक्रीडाञ्च कादम्बैः कूजितान्तथा ॥ इत्यादि । ३।७८।२५-२७ ।

२ । विस्मयहेतूनाह—क्रोशमात्रमिति । अगाधामलशम्बरम् । 'नीरक्षीराम्बुशम्बरम्' इत्यमरः । अम्बुजं पद्मं कह्लारस्तद्विशेषः । एवमुत्पलपदेन कुमुदविशेषोऽत्र । रा० ।

[ अगाधामलशम्बरमिति, अगाधम् अतलस्पर्शम् अमलं शम्बरं पानीयं यत्र । 'नीरक्षीराम्बु-

1. ङ पुस्तके 'श्रीमहादेव उवाच' इति नास्ति । 2. च '-ध सुसरोवरम्' । 3 ङ छ '-मम्बरम्' ।

हंसकारण्डवाकीर्णं चक्रवाकादि[1]शोभितम् ।
जलकुक्कुटकोयष्टिक्रौञ्चनादोपनादितम् ॥ ३ ॥
नानापुष्पलताकीर्णं नानाफलसमावृतम् ।
सतां मनःस्वच्छजलं पद्मकिञ्जल्कवासितम् ॥ ४ ॥
तत्रोपस्पृश्य सलिलं पीत्वा श्रमहरं विभुः ।
सानुजः सरसस्तीरे शीतलेन पथा ययौ ॥ ५ ॥
ऋष्यमूकगिरेः[2]पार्श्वे गच्छन्तौ रामलक्ष्मणौ ।
धनुर्बाण[3]करौ दान्तौ जटावल्कलमण्डितौ ।
पश्यन्तौ विविधान् वृक्षान् गिरेः शोभां सुविक्रमौ ॥ ६ ॥
सुग्रीवस्तु गिरेर्मूर्ध्नि चतुर्भिः [4]सह वानरैः ।
स्थित्वा ददर्श तौ यान्तावारुरोह गिरेः शिरः ॥ ७ ॥

---

३ । नरो० । हंसाः कारण्डवाश्च तैराकीर्णं व्याप्तम् । कारण्डवः पक्षिविशेषः । जलेत्यादि । जलकुक्कुटाश्च 'कामि' (?) इति ख्याता, कोयष्टिकाश्च 'कोण्टा' इति ख्याता, क्रौञ्चाश्च 'कोँचवक' इति ख्याता, तेषां नादैरुपनादितं शब्दितम् ।

४ । नरो० । नानापुष्पेति । नाना अनेका पुष्पलता पुष्पोपलक्षिता लता तया आकीर्णं व्याप्तम् । नानाफलसमावृतमिति । नाना नानाविधानि यानि फलानि तैः समावृतं वेष्टितं व्याप्तं वा । सतां साधूनां मन इव स्वच्छं निर्मलं जलं यत्र तत्तथा । इदं विशिष्य उक्तमिति नास्य पूर्वेण सह पौनरुक्त्यम् ।

५ । नरो० । उपस्पृश्य आचम्य ।

---

शम्बरमि'त्यमरः । कह्लारं सौगन्धिकम् । कुमुदोत्पलयोः रात्रिविकासिदिनविकासित्वेन भेदः । गो० ]

३ । हंसादयः पक्षिविशेषाः । क्रौञ्चनादैरुपनादितं प्रतिध्वनितम् । रा० ।

४ । सतां मनोवत् स्वच्छजलम् । रा० ।

[ सतां मनःस्वच्छजलमिति । सतां मन इव स्वच्छं निर्मलं जलं यत्र । गो० ]

५ । तत्र सरसि उपस्पृश्य स्नात्वा अवगाह्येति यावत् । श्रमहरं क्षुत्तृड्विनाशकत्वेन श्रान्तिनाशकं शान्तिदमित्यर्थः । सरसस्तीरे सरोवरतीरमवलम्ब्येत्यर्थः ।

६ । दान्तौ निगृहीतेन्द्रियौ, विविधान् वृक्षान् गिरेः शोभाञ्च पश्यन्तौ । पश्यन्तौ तौ जग्मतुरिति शेषः । रा० ।

७ । चतुर्भिर्वानरैः सह गिरेर्मूर्ध्नि स्थित्वा सुग्रीवः यान्तौ तौ ददर्श । दृष्ट्वा च इति शेषः । गिरेः पर्वतान्तरस्येत्यर्थात् शिर आरुरोह ।

---

1. क 'नादितम्' । 2 ग-घ-च 'पार्श्वं' । 3 ङ-च-क '-धरौ' । 4. ङ 'सचिवैः सह' ।

भयादाह हनूमन्तं कौ तौ वीरवरौ सखे ।
गच्छ जानीहि भद्र ते वटुर्भूत्वा द्विजाकृति' ॥ ८ ॥
वालिना [1]प्रेषितौ किं वा मां हन्तुं समुपागतौ ।
ताभ्यां सम्भाषण कृत्वा जानीहि हृदयं तयो' ॥ ९ ॥
यदि तौ दुष्टहृदयौ सञ्ज्ञां कुरु कराग्रत' ।
[2]विनयावनतो भूत्वा एवं जानीहि निश्चयम् ॥ १० ॥
तथेति वटुरूपेण हनूमान् समुपागत' ।
विनयावनतो भूत्वा रामं नत्वेदमब्रवीत् ॥ ११ ॥

---

८ । नरो० । द्विजस्येवाऽऽकृतिर्यस्य स तथा ।

१० । नरो० । संज्ञां प्रयोजनसूचनाम् । कराग्रत कराग्रेण ।

---

अत्र　सत्त्वान्यतिप्रविद्धानि त्रासितानि हतानि च ।
शिखराच्छिखर गत्वा सुपर्णानिलवेगित' ॥ ४।१।१९ ।

इत्यादिप्राच्यवाल्मीकीयेन—

एवमेकायनगताः प्लवमाना गिरेर्गिरिम् ।
प्रकम्पयन्तो वेगेन गिरीणां शिखराणि च ॥ ४।२।९ ।

इत्यादिपाश्चात्यवाल्मीकीयेन च पर्वतान्तरगमनं स्पष्टमुक्तम् । तेन च गिरेर्मूर्ध्नि स्थितस्य गिरे शिरसि आरोहण न विरुद्धम् ।

९ । किं वालिना प्रेषितौ मां हन्तुमागतौ, वा पक्षान्तरे उतान्यथेति तयोर्हृदयं सम्भाषणं कृत्वा जानीहि अन्त करणानुरूपत्वाद्वाच सम्भाषणेन तन्निर्णय । रा० ।

१० । संज्ञां कुरु पलायनार्थमिति शेष । एवं सङ्केतस्य निश्चयं जानीहीत्यर्थ । रा० ।

[ संज्ञां कुरु कराग्रत इति । कराग्रेण संज्ञां सङ्केतं करिष्यति । गो० ]

११ । तथेति भवता यदुक्तं तथैव करिष्यामीति स्वीकृत्येत्यर्थ. । अत्र वटुरूपेण हनूमतो गमनम्, वाल्मीकीये भिक्षुरूपेण, भिक्षुरूपधारणमपि स्वबुद्ध्या न सुग्रीवप्रबोधेन । तथाच पाश्चात्यवाल्मीकीये—

कपिरूपं परित्यज्य हनूमान् मारुतात्मज ।
भिक्षुरूपं ततो भेजे शठबुद्धितया कपि ॥ इति ।४।३।२।

रामं नत्वेति । पाश्चात्यवाल्मीकीये रामलक्ष्मणौ नत्वा । तथाच—

तत. स हनुमान् वाचा श्लक्ष्णया सुमनोज्ञया ।
विनीतवदुपागम्य राघवौ प्रणिपत्य च ॥ इति ।४।३।३।

---

1. ग 'प्रेरितौ' । 2. ग-ङ-च छ 'साधुत्वे स्मितवक्त्रोऽभूरेव जानीहि निश्चितम्' ( 'निश्चयम्' ङ-छ ) ।

कौ युवां पुरुषव्याघ्रौ युवानौ वीरसम्मतौ ।
द्योतयन्तौ दिशः सर्वाः प्रभया भास्कराविव ॥ १२ ॥
युवां त्रैलोक्यकर्ताराविति भाति मनो मम[1] ।
युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ ।
मायया मानुषाकारौ चरन्ताविव लीलया ॥ १३ ॥
भूभारहरणार्थाय [2]भक्तानां पालनाय च ।
अवतीर्णा[3]विव [4]परौ चरन्तौ क्षत्रियाकृती ॥ १४ ॥
[5]जगत्स्थितिलयौ [6]सर्गं लीलया कर्तुमुद्यतौ ।
[7]स्वतन्त्रौ [8]प्रेरकौ [9]सर्वहृदयस्था[10]विवेश्वरौ ।
नरनारायणौ लोके चरन्ता[11]विति मे मतिः ॥ १५ ॥

---

१२ । नरो० । पुरुषव्याघ्रौ पुरुषश्रेष्ठौ ।

१३ । नरो० । श्रीरामलक्ष्मणयोस्त्रिलोकीसृष्टिकर्तृत्वं मन्यमान आह—युवामित्यादि । भाति प्रकाशते मनो मनसीत्यर्थः । प्रधानश्च पुरुषश्च प्रधानपुरुषौ, जगन्मयौ जगत्स्वरूपौ । तर्हि चावयोः कार्यत्वमायातमिति चेत्तत्राऽऽह—जगद्धेतू इति । यद्वा कुतो जगन्मयावित्यत आह—जगद्धेतू इति, मानुषावावां कथमेवं वदसीति चेत्तत्राऽऽह—माययेत्यादि । इव उत्प्रेक्षायाम् ।

१४ । नरो० । इमौ न क्षत्रियौ किन्तु परमेश्वरौ, कार्यार्थमवतीर्णौ क्षत्रियाकृती चरन्ताविति हृदि कृत्वाह—भूभारहरणार्थायेत्यादि । इव उत्प्रेक्षायाम् । परौ परमेश्वरौ । अत्र युवामित्यस्यानुषङ्गः कार्यः ।

१५ । नरो० । न क्षत्रियौ किन्तु विश्वस्य जन्मादिहेतू लोकप्रवर्तकावीश्वराविति हृदि

---

१२ । हे पुरुषव्याघ्रौ युवां कौ ? वीरसम्मतौ युवानौ भास्कराविव प्रभया सर्वा दिशो द्योतयन्तौ गच्छत इत्यन्वयः ।

१३ । भाति जानाति । प्रधानपुरुषौ मुख्यपुरुषौ नरनारायणावित्यर्थः । मुख्यत्वमेवाऽऽह—जगद्धेतू इत्यादिना । लीलया चरन्ताविव गच्छन्ताविव वस्तुतो विभुत्वाद् गतिहीनावेव । रा० ।

१४ । भूभारहरणार्थाय रावणलवणादीनां दुष्टानां नाशेन पृथिवीस्थपापभारनाशाय, भक्तानां विश्वामित्रसुग्रीवादीनां मादृशाञ्चेत्यर्थः, पालनाय अवतीर्णौ, क्षत्रियाकृती सन्तौ इह चरन्तौ मया दृष्टाविति शेषः ।

१५ । स्थितिलयौ सर्गञ्च लीलया कर्तुमुद्यतौ रक्षसां लयस्तदितरजगतः सर्गस्थिती ।

---

1 अत परं च-पुस्तके 'जगत्स्थितिलयौ सर्गं लीलया कर्तुमुद्यतौ' इत्यधिकम् । 2. ग 'प्रजानां रक्षणाय च', ङ 'प्रजाना', छ 'यज्ञाना' । 3 क-ख-घ '-विह' । 4 ग 'वरौ' । 5 च-पुस्तके इदमर्द्धमत्र नास्ति । 6 ख 'सर्वं' । 7. ग 'स्वतन्त्रप्रे-' । 8. छ 'प्रेषकौ' । 9. क 'सूक्ष्मे-' । 10. क-ख-घ '-विह-' । 11. च-छ '-विव' ।

श्रीरामो लक्ष्मणं प्राह [1]पश्यैनं वटुरूपिणम् ।
[2]शब्दशास्त्रमशेषेण श्रुत [3]नूनमनेकधा ।
अनेन भाषित कृत्स्नं न किञ्चिदप[4]शब्दितम् ॥ १६ ॥

ततः प्राह हनूमन्तं राघवो [5]ज्ञानविग्रह ।
अहं दाशरथी रामस्त्वय मे लक्ष्मणोऽनुज ॥ १७ ॥

सीतया भार्यया सार्द्ध पितुर्वचन[6]गौरवात् ।
आगतस्तत्र विपिने स्थितोऽहं दण्डके द्विज ॥ १८ ॥

तत्र भार्या हृता सीता रक्षसा केनचिन्मम ।
[7]तामन्वेष्टुमिहाऽऽयातौ त्वं को वा कस्य वा [8]वद ॥ १९ ॥

---

कृत्वाह—जगत्स्थितिलयावित्यादि । स्वतन्त्रत्वे हेतु—प्रेरकाविति । प्रेरकत्वे हेतु—सर्व-हृदयस्थाविति । इव उत्प्रेक्षायाम् । युवामित्यनुषञ्जनीयम् । इमौ नान्यौ किन्तु नर-नारायणाविति हृदि कृत्वाह—नरनारायणौ लोके इत्यादि ।

१७ । नरो० । ज्ञान विग्रह स्वरूपं यस्य स तथा ।

१८ । नरो० । वचनगौरवाद् वाक्यमहिम्न ।

---

प्रेरकौ अन्तर्यामितयेत्यर्थ । तदेवाऽऽह—सर्वहृदयस्थाविति । इह लोके चरन्तावित्य-न्वय । रा० ।

१६-१७ । शब्दशास्त्रं व्याकरणम् । कृत्स्नं बह्वित्यर्थ । ज्ञानविग्रह इत्यनेन चिदानन्द एव मायया एवंशरीररूपेण भातीति सूचितम् । रा० ।

[ न किञ्चिदपशब्दितमिति । अपशब्दोऽशुद्धशब्द । अशुद्ध नोक्तमिति तात्पर्यार्थः । वस्तुतस्तु यदुक्तं तत् सङ्गतमेव, आवयोस्तथाभूतत्वात् । गो० ]

अपशब्दितमिति । पाश्चात्ये वाल्मीकीयेऽपि—

नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ।
बहु व्याहरताऽनेन न किञ्चिदपशब्दितम् ॥ इति ।४।३।२९।

१८ । तत्र दण्डके दण्डकाख्ये, विपिने अरण्ये ।

१९ । तां सीतामित्यर्थ । आयातौ आवामिति शेष । त्वं क किंनामधेय । कस्य वा कस्य पुत्रो वा ।

---

1 छ 'पश्य त' । 2. च 'सर्वं-' । 3 ग 'मूल-' । 4 च '-भाषितम्' । 5 छ 'ज्ञानिनां वर' । 6. च '-कारणात्' । 7 ङ 'तावन्वे-' । 8 ग-ङ-च 'वटु,' छ 'वटो' ।

वटुरुवाच—

सुग्रीवो नाम [1]राजास्ते वानराणां महामतिः ।
चतुर्भिर्मन्त्रिभिः सार्द्धं गिरिमूर्धनि तिष्ठति ॥ २० ॥
भ्राता कनीयान् सुग्रीवो वालिनः[2] पापचेतसः ।
तेन [3]निष्कामितो भार्या हृता [4]तस्येह वालिना ।
तद्भयादृष्यमूकाख्य गिरिमाश्रित्य [5]संस्थितः ॥ २१ ॥
अहं सुग्रीवसचिवो वायुपुत्रो महामते ।
हनूमान् नाम विख्यातो [6]ह्यञ्जनागर्भसम्भवः ॥ २२ ॥
तेन सख्यं त्वया युक्तं सुग्रीवेण रघूत्तम ।
भार्यापहारिणं हन्तुं सहायस्ते भविष्यति ।
इदानीमेव [7]गच्छाम आगच्छ यदि रोचते ॥ २३ ॥

[8]श्रीराम उवाच—

अहमप्यागतस्तेन सख्यं कर्तुं कपीश्वर ।
सख्युस्तस्यापि यत् कार्यं तत् करिष्याम्यसं[9]शयम् ॥ २४ ॥

---

२१ । मरो० । निष्कामितो निःसारितः, गृहादिति शेषः ।

---

२० । यः सुग्रीवो नाम तेन नाम्ना प्रसिद्धो वानराणां राजा स गिरिमूर्धनि तिष्ठतीत्यन्वयः । रा० ।

२१ । तत्रावस्थाने हेतुमाह—भ्रातेति । निष्काशितो हीनराज्यः कृतः । भार्या च हृता । रा० ।

तद्भयात् तस्य वालिनो भयात् ।

२३ । तेन सख्यं युक्तं समदुःखत्वात् न तु वालिनेति शेषः । रा० ।

२४ । सख्युस्तस्य सुग्रीवस्यापि यत् कार्यं सुग्रीवेण स्वहितानुबन्धित्वेनानुष्ठेयं कर्मेत्यर्थः, तदहमसंशयं निश्चितमेव करिष्यामि ।

---

1 क-ख-घ 'राजा यो' । 2 क-ङ 'ना पापचेतसा' । 3. क-ख ग घ-ङ-छ 'निष्काशितो' । 4 ग-ङ 'तस्यैव,' च 'तेनैव' । 5 छ 'तिष्ठति' । 6 क-ख 'अञ्जना-', घ 'ह्यञ्जनी-' । 7 छ 'गच्छामि' । 8. छ-पुस्तके 'श्रीराम उवाच' इति नास्ति । 9. ङ '-शय' ।

हनूमान् [1]स्वस्वरूपेण स्थितो राममथाब्रवीत् ।
[2]आरोहतां[3] मम स्कन्धौ गच्छामः पर्वतोपरि ॥ २५ ॥
[4]यत्र तिष्ठति सुग्रीवो मन्त्रिभिर्वालिनो भयात् ।
[5]तथेति तस्याऽऽरुरोह [6]स्कन्ध रामोऽथ लक्ष्मणः ॥ २६ ॥
उत्पपात गिरेर्मूर्ध्नि क्षणादेव महाकपिः ।
वृक्षच्छायां समाश्रित्य स्थितौ तौ रामलक्ष्मणौ ॥ २७ ॥
हनूमानपि सुग्रीव[7]मुपगम्य कृताञ्जलिः ।
व्येतु ते भयमायातौ राजन् श्रीरामलक्ष्मणौ ॥ २८ ॥
शीघ्रमुत्तिष्ठ रामेण सख्यं ते योजितं मया ।
[8]अग्निं साक्षिणमारोप्य तेन सख्यं [9]द्रुतं कुरु ॥ २९ ॥

---

२५ । पर्वतोपरिगमने श्रमातिशयात् स्कन्धारोहणप्रेरणा । रा० ।

स्वस्वरूपेण निजरूपेणेत्यर्थः । वाल्मीकीयेऽपि—

ततः स सुमहाप्राज्ञो हनूमानिदमब्रवीत् ।
स्वं रूपमभिसम्प्राप्य सहृष्टो हेमपिङ्गलः ॥
आरुह्यतां नरश्रेष्ठ मम पृष्ठमरिन्दम ।
लक्ष्मणेन सह भ्रात्रा सुग्रीवं द्रष्टुमर्हसि ॥
एवमुक्त्वा महाकायो हनूमान् पवनात्मजः ।
जगामाऽऽदाय तौ वीरौ सुग्रीवो यत्र वानरः ॥ इत्यादि ।४।३।२७—२९ ।

२७ । उत्पपात उत्पत्य जगामेत्यर्थः । स्थितौ स्थापितावित्यर्थः । रा० ।

गिरेर्मूर्ध्नि गिरेर्मलयपर्वतस्य । तथाच वाल्मीकीये—

ऋष्यमूकात्तु हनुमान् गत्वा मलयपर्वतम् ।
कथयामास तौ वीरौ सुग्रीवाय महात्मने ॥ ४।४।१।

२८ । व्येतु भयं वालिप्रेरिताविति शङ्काकृतम् । रा० ।

हनूमानपि कृताञ्जलिः सुग्रीवमुपगम्य हे राजन्, ते भयं व्येतु श्रीरामलक्ष्मणावायातौ इत्युवाचेत्यध्याहारेणान्वयः ।

२९ । योजितं ताभ्यामङ्गीकारं कारितम् । आरोप्य कृत्वा । रा० ।

---

1 क 'स स्वरू-' । 2 च 'आरुह्यतां' । 3 ग-ङ क '-नामिमौ' । 4 ङ 'तत्र' । 5 ङ 'तथा तस्याऽऽरुहत्' । 6 ङ 'रामचन्द्रः सलक्ष्मणः' । 7 ग-ङ '-मुपा-' । 8 ङ-च क 'अग्निमा-' । 9 च 'कुरु द्रुतम्' ।

[1]ततोऽतिहर्षात् सुग्रीवः समागम्य रघूत्तमम् ।
वृक्षशाखां स्वयं छित्त्वा विष्टराय ददौ मुदा ॥ ३० ॥
हनूमाँल्लक्ष्मणायादात् सुग्रीवाय [2]च लक्ष्मणः ।
हर्षेण महताविष्टाः सर्वं एवावतस्थिरे ॥ ३१ ॥
लक्ष्मणस्त्वब्रवीत् सर्वं रामवृत्तान्तमादित ।
वनवासाभिगमनं सीताहरणमेव च ॥ ३२ ॥
लक्ष्मणोक्तं वच श्रुत्वा सुग्रीवो [3]राममब्रवीत् ।
अहं करिष्ये राजेन्द्र सीतायाः परिमार्गणम् ॥ ३३ ॥
साहाय्यमपि ते राम करिष्ये शत्रुघातिन ।
शृणु राम मया दृष्टं किञ्चित् ते कथयाम्यहम् ॥ ३४ ॥
एकदा मन्त्रिभि साद्धं स्थितोऽहं गिरिमूर्धनि ।
विहायसा नीय[4]माना केनचित् प्रमदो[5]त्तमा ॥ ३५ ॥
क्रोशन्ती राम रामेति दृष्ट्वाऽस्मान् पर्वतोपरि ।
[6]आमुच्याऽऽभरणान्याशु [7]स्वोत्तरीयेण [8]भामिनी ॥ ३६ ॥

---

३० । नरो० । विष्टराय आसनाय ।

---

३० । वाल्मीकीये सख्यबन्धनानन्तरं सरामस्य सुग्रीवस्य सालशाखायामुपवेशनं दृश्यते । तथाच—

स ददर्श तत सालमविदूरे हरीश्वरः ।
सपुष्पमीषत्पर्णाढ्यं भ्रमरैरुपशोभितम् ॥
तस्यैकां पर्णबहुलां शाखां भङ्क्त्वा सुपुष्पिताम् ।
सालस्याऽऽस्तीर्य सुग्रीवो निषषाद सराघव ॥ इति । ४।७।१२-१३ ।

ततश्च— तावासीनौ ततो दृष्ट्वा हनूमानपि लक्ष्मणम् ।
शाखां चन्दनवृक्षस्य समाक्षिप्य न्यवेशयत् ॥

इत्यादिना लक्ष्मणस्यापि चन्दनशाखायामुपवेशनमुक्तम् ।

३२ । लक्ष्मण सुग्रीवमब्रवीदित्यर्थः ।

३४ । शत्रुघातिनस्ते शत्रुवधे साहाय्यमपि करिष्ये इत्यन्वय । रा० ।

३५ । विहायसा नीयमानां प्रमदोत्तमामपश्यमिति शेष । रा० ।

---

1. च 'ततो हर्षात स मु-' । 2 च 'स' । 3 छ 'वाक्य-' । 4 क ग-ङ-च-छ 'मानां' । 5. क ग-ङ-च छ '-त्तमाम्' । 6. ग-ङ-च छ 'विमु-' । 7 ग 'सोत्तरी-' । 8. च 'भाविनी' ।

निरीक्ष्याधः परित्यज्य क्रोशन्ती तेन रक्षसा ।
[1]नीत्वाऽहं भूषणा[2]न्याशु गुहा[3]यामक्षिपं प्रभो ॥ ३७ ॥
इदानीमपि पश्य त्वं जानीहि तव वा न वा ।
इत्युक्त्वानीय रामाय दर्शयामास वानरः ॥ ३८ ॥
विमुच्य रामस्तद् दृष्ट्वा हा सीतेति मुहुर्मुहुः ।
हृदि निक्षिप्य तत् सर्वं रुरोद प्राकृतो यथा ।
आश्वास्य राघवं भ्राता लक्ष्मणो वाक्यमब्रवीत् ॥ ३९ ॥

---

३६-३७। सा च राम रामेति क्रोशन्ती अस्मान् पर्वतोपरि दृष्ट्वा स्वोत्तरीयेण तदेकदेशेनाऽऽभरणानि आमुच्य बद्ध्वा पुनरस्मान् निरीक्ष्य तान्यप्यधः परित्यज्य क्रोशन्ती तेन नीता। क्रोशनक्रियया समानकर्तृक क्त्वा। अहञ्च तानि गुहायामक्षिपम्। रा०।

उत्तरीयनिक्षेपप्रकारमाह वाल्मीकीये—

क्रोशन्ती राम रामेति करुणं लक्ष्मणेति च ।
स्फुरन्ती राक्षसस्याङ्के पन्नगेन्द्रवधूरिव ॥
आत्मना पञ्चमं दृष्ट्वा मां शैलस्य तटे स्थितम् ।
उत्तरीयं तया क्षिप्तं शुभान्याभरणानि च ॥ इत्यादि। ४।६।८-९।

३८। इदानीं त्वमपि पश्य तव भार्याया भवन्ति वा न भवन्ति चेति जानीहि निश्चयं कुरु। रा०।

३९। तद् भूषणयुक्तं वासःखण्डं विमुच्य, दृष्ट्वा भूषणानीति शेषः। तत् सर्वं भूषणजातम्। रा०।

विमुच्य आवरणाभ्यन्तराद् बहिरानीय। आभरणादिदर्शनेन रामशोकमाह वाल्मीकीये—

सोऽपि वीक्ष्याथ तद्वासः सीताया भूषणानि च ।
अभवद्वाष्पसंपूर्णः सनीहार इवोडुराट् ॥
सीतास्नेहप्रवृद्धेन स तु बाष्पेण धर्षितः ।
हा प्रिये जानकीत्युक्त्वा धैर्यं त्यक्त्वाऽपतत् क्षितौ ॥
हृदि कृत्वा तु बहुशस्तमलङ्कारमार्तवत् ।
विनिश्वसंश्च बहुशो भुजङ्ग इव रोषितः ॥
अविच्छिन्नाश्रुवेगस्तु सौमित्रिं वीक्ष्य राघवः ।
परिदेवयितुं दीनो रामः समुपचक्रमे ॥ इत्यादि। ४।६।१४-१७।

---

1 घ 'नीताऽहं', च 'नीत्वा च'। 2. च 'न्यत्र'। 3 ग-च '-यामा-', क '-या प्रा-'।

अचिरेणैव ते राम [1]प्राप्यते जानकी शुभा ।
वानरेन्द्रसहायेन हत्वा रावणमाहवे ॥ ४० ॥
सुग्रीवोऽप्याह हे राम प्रतिज्ञां करवाणि ते ।
समरे रावणं हत्वा तव दास्यामि जानकीम् ॥ ४१ ॥
ततो हनूमान् प्रज्वाल्य तयो[2]रग्निं समीपतः ।
तावुभौ रामसुग्री[3]वावग्नौ साक्षिणि तिष्ठति ॥ ४२ ॥
बाहू प्रसार्य चाऽऽलिङ्ग्य परस्परमकल्मषौ ।
समीपे रघुनाथस्य सुग्रीवः समुपाविशत् ॥ ४३ ॥
[4]स्वोदन्त कथयामास प्रणयाद्रघु[5]नायके ।
सखे श्रृणु ममोदन्तं वालिना यत् कृतं [6]पुरा ॥ ४४ ॥
मयपु[7]त्रोऽथ मायावी नाम्ना परमदुर्मदः ।
किष्किन्ध्यां समुपा[8]गत्य वालिनं समुपाह्वयत् ॥ ४५ ॥

---

४० । ते त्वया । रा० ।

४१ । ते तव सकाशे । तव तुभ्यम् ।

४२ । तयोः समीपतोऽग्निं प्रज्वाल्य सख्यं कुरुतम् इत्युवाचेति शेषः । रा० ।

अत्राऽऽह वाल्मीकिः—

ततस्तु हनुमान् दृष्ट्वा तयोः सम्बन्धमीप्सितम् ।
विधिवत् सोऽथ काष्ठाभ्यां जनयामास पावकम् ॥
दीप्यमानं ततो वह्निं पुष्पैः सत्कृत्य सत्कृतम् ।
तत्रोपन्यस्य च प्रीतस्तयोर्मध्ये समेधितम् ॥
तमग्निं दीप्यमानन्तु चक्रतुस्तौ प्रदक्षिणम् ।
सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ ॥ इत्यादि । ४।५।१६-१८ ।

४३ । आलिङ्ग्य परस्परं सखे इत्यवदतामिति शेषः । सखित्वकरणफलं दर्शयति—समीपे इति । रा० ।

४४ । वालिना यदुदन्तं मद्विषये कृतं तच्छृणु । रा० ।

स सुग्रीवः स्वोदन्तं स्ववृत्तान्तं कथयामास ।

४५ । नाम्ना मायावीत्यन्वयः । समुपाह्वयत् युद्धायेति शेषः । रा० ।

---

1 ग 'प्राप्स्यते'। 2 ख '-रग्निसमीपत'। 3 च '-वावग्नि', क '-वौ चाग्नि-'। 4 च 'इद-'। 5 च '-नन्दने'। 6, ङ 'मयि'। 7 च-क '-त्रो हि'। 8 च '-गम्य'।

सिंहनादेन महता वाली तु [1]तदमर्षणः ।
निर्ययौ क्रोधताम्राक्षो जघान दृढमुष्टिना ॥ ४६ ॥
[2]दुद्राव तेन संविग्नो जगाम [3]स्वगुहां [4]प्रति ।
अनुदुद्राव त वाली मायाविनमह तथा ॥ ४७ ॥
तत· प्रविष्टमालोक्य गुहां मायाविनं रुषा ।
वाली मामाह तिष्ठ त्वं बहिर्गच्छाम्यहं गुहाम् ।
इत्युक्त्वाविश्य स गुहां मासमेकं न निर्ययौ ॥ ४८ ॥

---

परमदुर्मदोऽत्यन्तदुष्टमत्ततायुक्त· । मयपुत्रो नाम्ना मायावी, स च दुन्दुभे· पूर्वज । तेन स्त्रीहेतोर्वालिनो महद्वैरं सञ्जातम् । तथाच वाल्मीकीये—

मायावी नाम तेजस्वी पूर्वजो दुन्दुभेस्तु य· ।
तेन तस्य महद्वैरं स्त्रीनिमित्तं किलाभवत् ॥ इति । ४।८।३६ ।

४६ । तदाह्वानममर्षणोऽसहमान· । रा० ।

४७ । तेन मुष्टिपातेन संविग्न पीडित· । रा० ।

दुद्राव स्वगुहां प्रति जगाम च मायावीति शेष । स्वगुहां प्रतीति वाल्मीकीयविरोधीदं वचनम् । तत्र पृथिव्या· किञ्चिद् विवरमासाद्य प्रविष्ट तेनेति व्यक्तम् । तथाच—

स तृणैरावृतं दृष्ट्वा धरण्यां विवरं महत् ॥
प्रविवेशासुरो वेगादावां त्वासाद्य वेष्टितौ । इति । ४।८।४३-४४ ।

पाश्चात्त्येऽपि—स तृणैरावृतं दुर्गं धरण्यां विवरं महत् ।
प्रविवेशासुरो वेगादावामासाद्य विष्ठितौ ॥ इति । ४।९।११ ।

४८ । तं मायाविनं मायावन्तं स्वगुहां प्रविष्टमालोक्य इत्यन्वय । रा० ।

मासमेकमिति । वाल्मीकीये वत्सरमेकं ततोऽपि दीर्घं कालं तदपेक्षया सुग्रीवस्य गुहाद्वार्यवस्थानम् । तथाच—

प्रतिषिद्धस्तदानीं स प्राविशच्चैव तद्बिलम् ।
तस्य प्रविष्टस्य बिलं साग्र· संवत्सरो गत· ॥
स्थितस्य च मम द्वारि स कालो व्यत्यवर्तत ।
अनिष्पतन्तं तं ज्ञात्वा स्नेहादागतसंभ्रम· ॥
भ्रातर· पुरुषव्याघ्र पापशङ्काऽभवत्तदा ।
अथ दीर्घस्य कालस्य बिलात्तस्माद्विनि·सृतम् ॥

---

1. च 'तममर्षण.' । 2 क 'दुद्र वे' । 3 ङ 'स गुहा' । 4 च 'तत' ।

मासादूर्ध्वं गुहाद्वारान्निर्गतं रुधिरं बहु ।
तद् दृष्ट्वा परितप्ताङ्गो मृतो वालीति दुःखितः ॥ ४९ ॥
गुहा[1]द्वारि शिलामेकां [2]निधाय गृहमागतः ।
ततोऽब्रवं [3]मृतो वाली गुहायां रक्षसा [4]हतः ॥ ५० ॥
तच्छ्रुत्वा दुःखिताः सर्वे मामनिच्छन्तमप्युत ।
राज्येऽभिषेचनं चक्रुः [5]सर्वे वानरमन्त्रिणः ॥ ५१ ॥
शिष्टं [6]तदा मया राज्यं [7]किञ्चित् कालमरिन्दम ।
ततः समागतो वाली मामाह [8]परुषं रुषा ॥ ५२ ॥

---

५१ । नरो० । आत्मनो निरपराधत्वसूचनाय अनिच्छन्तमपीत्युक्तम् । अभिषेचनमिति कर्मणि अनट् ।

---

सफेनं रुधिरं व्यक्तं दृष्ट्वाऽहं व्यथितोऽभवम् ।
नर्दतामसुराणाञ्च ध्वनिर्मे श्रोत्रमागतः ॥ इत्यादि । ४।८।४७-५० ।

४९ । मृतो वालीति निश्चयेनेति शेषः । रा० ।

पाश्चात्त्येऽप्येवम् । (४।१०।१५-१८) ।

५० । रक्षसा हतो वाली मृत इति स्वज्ञातीनब्रवम् । रा० ।

शिलामेकामिति । वाल्मीकीये—

पूरयित्वा शिलाभिस्तु बिलं शोकसमन्वितः ।
शोकार्तश्चोदकं कृत्वा किष्किन्ध्यामागतः सखे ॥ ४।८।५२ ।

इत्यादिना शिलानां बहुत्वम्, बिलस्य च सर्वस्य पूरणम्, न द्वारमात्रस्याऽऽवरणम् ।

पिधाय च बिलद्वारं शिलया गिरिमात्रया ।
शोकार्तश्चोदकं कृत्वा किष्किन्ध्यामागतः सखे ॥ ४।९।१९ ।

इत्यादिना पाश्चात्त्ये एकया शिलया बिलद्वारावरणमिति पाश्चात्त्यवाल्मीकिसम्मतोऽयं पाठः ।

५१ । अनिच्छन्तं राज्याभिषेकमिति शेषः । रा० ।

सर्वे पुरवासिनो नगरवासिनश्च दुःखिताः । सर्वे वानरमन्त्रिणोऽभिषेचनं चक्रुरिति सर्वद्वयान्वयः ।

५२ । शिष्टं पालितम् । परुषं भ्रातृद्वेषिन्नित्यादिवाक्यम् । रा० ।

---

1 ङ '-द्वारे' । 2 च 'पिधाय' । 3. च 'हतो' । 4. च 'मृतः' । 5. ङ 'सर्ववानर-' । 6. ग-ङ-च-छ 'ततु' । 7 छ 'कश्चित्' । 8. च-छ 'पौरुषं' ।

बहुधा भर्त्सयित्वा मां [1]निजघान [2]च मुष्टिभिः ।
ततो निर्गत्य नगराद्धाव परया भिया ॥ ५३ ॥

लोकान् [3]सर्वान् परिक्रम्य ऋष्य[4]मूकं समाश्रितः ।
ऋषेः शापभयात् सोऽपि नाऽऽयातीमं गिरिं [5]प्रभो ॥ ५४ ॥

तदादि मम भार्यां स स्वयं भुङ्क्ते विमूढधीः ।
अतो दुःखेन [6]सन्तप्तो हृतदारो [7]हृताश्रयः ।
वसा[8]म्यद्य [9]भवत्पादसंस्पर्शात् सुखितोऽस्म्यहम् ॥ ५५ ॥

मित्रदुःखेन सन्तप्तो रामो राजीवलोचनः ।
हनिष्यामि तव द्वेष्यं शीघ्रं भार्यापहारिणम् ।
इति प्रतिज्ञामकरोत् सुग्रीवस्य पुरस्तदा ॥ ५६ ॥

सुग्रीवोऽप्याह राजेन्द्र वाली बलवतां [10]बली ।
कथं हनिष्यति भवान् देवैरपि दुरासदम् ॥ ५७ ॥

शृणु तु कथयिष्यामि तद्बलं बलिनां वर ।
[11]कदाचिद् दुन्दुभिर्नाम महाकायो महाबलः ॥ ५८ ॥

किष्किन्ध्यामगमद्राम महामहिषरूपधृक् ।
युद्धाय वालिनं रात्रौ समाह्वयत भीषणः ॥ ५९ ॥

---

५३ । नरो० । परया महत्या ।

५५ । नरो० । विमूढा विपरीता धीर्यस्य स तथा ।

---

५४ । ऋष्यमूकं तदाख्यमिमं पर्वतम् । ऋषेः शापभयात्, तच्चानुपदमेव स्फुटं भविष्यति । रा० ।

५५ । वालिनोऽतिशयितपापकारित्वसूचनाय स्वयं भुङ्क्ते इत्युक्तम् । एतेन तादृशस्य कनिष्ठभ्रातुर्भार्यापहारिणो विनाशे तव पापाशङ्का नास्तीति च ध्वनितम् ।

५७ । बलवतां बली सर्वेभ्यो बलवद्भ्योऽप्यधिकबलवान् इत्यर्थः । दुरासदं वालिनमिति शेषः । रा० ।

---

1. ग च-छ 'निर्जघान' । 2 ङ 'स्वमुष्टिभिः' । 3 च 'सर्वानतिक्रम्य' । 4. ग-ङ-च-छ '-मूकमुपा-' । 5 ग 'प्रति' । 6 ग 'सविग्नो' । 7. ङ-च 'हृतश्रिकः' । 8 ग '-म्यत्र' । 9 छ 'भयात् पाद-' । 10. छ 'वरः' । 11. ङ-छ 'एकदा' ।

तच्छ्रुत्वाऽसहमानोऽसौ वाली परमकोपनः ।
महिषं शृङ्गयोर्धृत्वा पातयामास भूतले ॥ ६० ॥

पादे[1]नैकेन [2]तत्काय[3]माक्रम्यास्य शिरो महत् ।
हस्ताभ्यां भ्रामयं[4]श्छित्वा तोलयित्वाऽक्षिपद्भुवि ॥ ६१ ॥

पपात तच्छिरो राम मातङ्गाश्रमसन्निधौ ।
योजनात् पतितं तस्मान्मुनेराश्रममण्डले ॥ ६२ ॥

रक्तवृष्टिः पपातोच्चैर्दृष्ट्वा [5]तां क्रोधमूर्च्छित[5] ।
मातङ्गो वालिन प्राह यद्यागन्ताऽसि मे गिरिम् ।
इतः परं भग्नशिरा [6]मरिष्यसि न संशयः ॥ ६३ ॥

एव शप्तस्तदारभ्य ऋषमूकं न यात्यसौ ।
[7]एतज् ज्ञात्वाऽहमप्यत्र वसामि भयवर्जितः ॥ ६४ ॥

---

६० । नरो० । परमकोपन इति व्युत्पत्तिवैचित्र्येण परमत्वं कोपेनान्वेति ।

---

५९ । महामहिषरूपधृगिति । वाल्मीकीये—

धारयन् माहिष रूपं तीक्ष्णशृङ्गो भयावह. ।
प्रावृषीव महामेघस्तोयपूर्णो नभस्तले ॥ इति ।४।९।६० ।

६० । असहमान इति च्छेद. । रा० ।

६१ । अस्य शिरो हस्ताभ्यां भ्रामयन् ग्रीवातश्चालयन् छित्वा ग्रीवारूपादाधारादुत्पाट्य हस्ताभ्यां तोलयित्वा एतावद्भारकमिति ज्ञात्वा भुवि अक्षिपत् । रा० ।

६२-६३ । क्षेपवेगेन ऊर्ध्वं योजनमात्रं गत्वा ततो मातङ्गाश्रमे पपात । यस्माच्च योजनसन्मितादूर्ध्वदेशात् पतितमतस्तदाश्रमे शिरसो गलिता रक्तवृष्टि पपात, तत क्रुद्ध. स वालिनं प्राह । रा० ।

६४ । शापप्रकारमाह वाल्मीकीये—

तान् दृष्ट्वा पतितान् गात्रे मुनिः शोणितबिन्दुकान् ।
उपस्पृश्य ददौ शापं क्षेप्तारं वालिनं प्रति ॥

---

1 च '-नाऽऽक्रम्य' । 2. ग-ङ 'त काय-' । 3 च '-मेकेनास्य' । 4. ग-छ '-श्छिन्नं', ङ '-श्छिन्दन्' । 5 ग च छ 'तत्', ङ 'त' । 6. ग 'मरिष्यति', छ 'पतिष्यति' । 7. च 'तज्ज्ञात्वा चाह-' ।

राम पश्य शिरस्तस्य दुन्दुभेः पर्वतोपमम् ।
तत्क्षेपणे यदा [1]शक्तः शक्तस्त्वं वालिनो वधे ॥ ६५ ॥
इत्युक्त्वा दर्शयामास शिरस्तद्द गिरिसन्निभम् ।
दृष्ट्वा रामः स्मितं कृत्वा पादाङ्गुष्ठेन चाक्षिपत् ॥ ६६ ॥
[2]दशयोजनपर्यन्तं तदद्भुतमिवाभवत् ।
साधु साध्विति तं प्राह सुग्रीवो मन्त्रिभिः सह ॥ ६७ ॥
पुनरप्याह सुग्रीवो [3]रामं भक्तपरायणम् ।
एते ताला महासाराः सप्त पश्य रघूत्तम ।
एकैकं चालयि[4]त्वाऽसौ [5]निष्पत्रं कुरुतेऽञ्जसा ॥ ६८ ॥

---

६७। नरो०। दशसंख्यकानि यानि योजनानि तेषां पर्यन्तो यत्र तत्तथा। दशयोजनपर्यन्तं शिरःक्षेपणम्। इव अत्र वाक्यालङ्कारे।

६८। नरो०। महान्तः साराः स्थिरांशा येषां ते तथा। एतेनातिकठिनत्वं सूचितम्।

---

इह ते न प्रवेष्टव्यमृष्यमूकवनं हरे ।
प्रविष्टस्य हि ते सद्यो जीवितं न भविष्यति॥ इत्यादि ।४।९।८४।८९।

६५। यदा यदि तस्य बाणेन दूरं क्षेपणे त्वं शक्तस्तर्हि त्वं वालिवधे शक्तः। रा०। शिरस्तस्येति। वाल्मीकीये अस्थि। तथाच—

एतत्तस्यास्थि काकुत्स्थ दुन्दुभेः संप्रकाशते ।
वीर्योत्सेकनिरस्तस्य गिरिकूटनिभं महत् ॥ इति ।४।९।८८।

६७। दशयोजनमिति पाश्चात्यवाल्मीकीयसंवादि। तथाच—

राघवो दुन्दुभेः कायं पादाङ्गुष्ठेन लीलया ।
तोलयित्वा महाबाहुश्चिक्षेप दशयोजनम् ॥ इति ।४।११।८४।

प्राच्ये दशयोजनमित्यत्र शतयोजनम्। तथाच—

अथैवं वदतस्तस्य सुग्रीवस्य महात्मन ।
राघवो दुन्दुभेः कायं पादाङ्गुष्ठेन तोलयन् ॥
लीलयैव तदा रामश्चिक्षेप शतयोजनम् । इति ।४।९।९१-९२।

६८। चालयित्वा मूलतो बाहुभ्यां कम्पनेन। अञ्जसा अनायासेन। रा०।

---

1 ग 'शक्ति.'। 2 च 'शत-'। 3 च 'राम भक्त-', ङ 'रामं भक्ति-'। 4 ङ '-त्वा तु'। 5 क-ख-घ 'निष्पवान्'।

यदि त्वमेकबाणेन [1]विद्ध्वा छिद्रं करोषि [2]चेत् ।
हत[3]स्त्वया तदा वाली विश्वासो मे प्रजायते ॥ ६९ ॥
तथेति धनुरादाय सायकं तत्र सन्दधे ।
बिभेद [4]च तदा रामः सप्त तालान् महाबलः ॥ ७० ॥
तालान् सप्त विनिर्भिद्य गिरिं भूमिञ्च सायकः ।
पुनरागत्य रामस्य तूणीरे पूर्ववत् स्थितः ॥ ७१ ॥
[5]ततोऽतिहर्षात् सुग्रीवो राममाहातिविस्मितः ।
देव त्वं जगतां नाथः परमात्मा [6]न सशयः ।
मत्पूर्वकृतपुण्यौघैः सङ्गतोऽद्य मया सह ॥ ७२ ॥

---

७२ । नरो० । एवञ्चेत्तर्हि त्वया सह मम मेलनं कुत इत्यत आह—मत्पूर्वकृतपुण्यौघैरित्यादि । सङ्गतो मिलितः ।

---

६९ । छिद्रं करोषि सप्तस्वपीति शेषः । रा० ।

ताला इत्यत्र वाल्मीकीये सालास्तालाश्चेत्युभयथा दृश्यते । तथाच—

यदि भिन्द्याद्‌ भवान् सालानिमानेकेषुणा तत· ।
जानीयां त्वां महाबाहो समर्थं वालिनो वधे ॥ इति ।४।९।९९ ।
स गृहीत्वा धनुर्दिव्य शक्रचापसमद्युति ।
मुमोच बाण सन्धाय तालानुद्दिश्य राघव ॥
स विसृष्टो बलवता बाणो हेमपरिष्कृत· ।
भित्त्वा तालान् गिरिञ्चैव प्रविवेश रसातलम् ॥ इति च । ४।११।३-४ ।

पाश्चात्त्येऽपि—

इम हि साल प्रहितस्त्वया शरो न संशयोऽत्रास्ति विदारयिष्यति ।
अलं विमर्शेन मम प्रियं ध्रुवं कुरुष्व राजन् प्रतिशापितो मया ॥ इति ।४।११।९२ ।
स विसृष्टो बलवता बाण· स्वर्णपरिष्कृत ।
भित्त्वा तालान् गिरिप्रस्थं सप्तभूमिं विवेष ह ॥ इति च । ४।१२।४ ।

७२ । एवमाश्चर्यकर्मणा रामं परमात्मानं ज्ञात्वा स्तौति—देवेति । सङ्गतिं मैत्रीं प्राप्त· । रा० ।

---

1. ग 'भित्त्वा' । 2 छ 'वै' । 3. ङ 'स्तदा त्वया' । 4 ग ङ-च-छ 'स' । 5. ग-घ 'ततो हर्षात् स' । 6. च 'सनातन.' ।

त्वां भजन्ति महा[1]त्मानः संसारविनि[2]वृत्तये ।
त्वां प्राप्य [3]मोक्षमचिरं प्रार्थयेऽहं कथं [4]भवम् ॥ ७३ ॥

दारा· पुत्रा धनं राज्यं सर्वं त्वन्मायया कृतम् ।
[5]अतोऽहं देवदेवेश नाऽऽकाङ्क्षेऽ[6]न्यत् प्रसीद मे ॥ ७४ ॥

आनन्दानुभवं त्वाऽद्य [7]प्राप्तोऽहं भाग्यगौरवात् ।
[8]मृदर्थं यतमानेन [9]निधान[10]मिव सत्पते ।
अनाद्यविद्या[11]ससिद्धं बन्धनं छिन्नमद्य नः ॥ ७५ ॥

---

७३ । नरो० । तर्हि अभीष्टं दारादिकं मां प्रार्थयस्वेति चेत्तत्राऽऽह—त्वामित्यादि । महान् आत्मा मनो मतिर्वा येषां ते तथा । मोक्षं मोक्षदम् । अचिरं शीघ्रम् । भवं संसारम् ।

७४ । नरो० । अवस्तुबुद्ध्या दारादिकं कथं त्यक्तुमुत्सहसे इति चेत्तत्राऽऽह—दारा इत्यादि । मायाया अवस्तुत्वात् तत्कृतस्याप्यवस्तुत्वमिति भाव । अतो मायाकृतत्वात् ।

७५ । नरो० । ननु मां प्राप्य कथमात्मानं कृतकृत्यं मन्यसे, तव मया किं कृतमित्यत आह—आनन्दानुभवमित्यादि । अद्याहम् आनन्दानुभवं त्वा त्वां निधानमिव रत्नमिव भाग्य-गौरवाद् भाग्याधिक्यात् प्राप्त इत्यन्वय । हे सत्पते, मृदर्थं यतमानेन त्वयाऽद्य नोऽस्माकम् अनाद्यविद्यासंसिद्ध बन्धनं छिन्नमित्यन्वय· । आनन्दश्चासौ अनुभवश्चेति तं तथा । अनित्या माया, तन्नाशे तत्कृतबन्धनं स्वयमेव नश्यति, तन्नाशाय कथं यतसे इति चेत्तत्राऽऽह—अनादीति । बध्नातीति बन्धनं ससार ।

---

७३ । मोक्षसचिवं मोक्षप्रदत्वात् तत्सचिवम् । भवं संसारम् । रा० ।

७४ । अन्यद् दारपुत्रादिक त्वन्मायाकृतत्वेन मायिकत्वान्नाऽऽकाङ्क्षे, अतो मां निवर्त्तये-त्यर्थ· । रा० ।

७५-७६ । मृदर्थं भूमिं खनता यथा निधानं धनराशि प्राप्तो भवति, एवमहमानन्दानुभवं तद्रूपं त्वां प्राप्त· । अनाद्यविद्यासंसिद्धं निष्पन्नं विषयवासनारूपं बन्धन संसारप्रवर्त्तकं नश्छिन्नं नष्टम् । अन्येभ्यो भगवद्दर्शनस्याऽऽधिक्यमाह—यज्ञेत्यादि । यज्ञादिभिरप्यसौ संसृतिस्तत्कारणं विषयवासनारूप बन्धनं न जीर्यति अपि तु दार्ढ्यमेव भजते त्वच्चरणदर्शनात्तु संद्यस्तन्नाशमेति । रा० ।

---

1 ग '-भागा' । 2 ग '-वर्त्तने' । 3 क ख-घ-च-छ 'मोक्षसचिव' । 4 च 'भुवम्' । 5 ग 'ततो-' । 6 ग-ङ '-न्य' । 7 ग 'प्राप्याद्द' । 8. ग-ङ 'यद' । 9 च 'विधान-' । 10 छ '-मपि' । 11 ग '-सम्बन्धव-' ।

[1]यज्ञदानतपःकर्मपूर्त्तेष्टादिभिरप्यसौ ।
न जीर्यते पुनर्दार्ढ्यं भजते संसृतिः प्रभो ।
त्वत्पाद[2]दर्शनात् सद्यो नाशमेति न संशयः ॥ ७६ ॥

क्षणार्द्धमपि यच्चित्तं त्वयि तिष्ठत्यचञ्चलम् ।
तस्याज्ञानमनर्थानां मूलं नश्यति तत्क्षणात् ।
तत् तिष्ठतु मनो राम त्वयि नान्यत्र [3]मे सदा ॥ ७७ ॥

राम रामेति यद्वाणी मधुरं [4]गायति क्षणम् ।
स ब्रह्महा सुरापो वा मुच्यते सर्वपातकैः ॥ ७८ ॥

---

७६ । नरो० । राज्यं लब्ध्वा यज्ञदानादिभिः संसारं नाशं नेष्यसीति चेत्तत्राऽऽह— यज्ञेत्यादि । यज्ञश्च दानञ्च तपःकर्म च पूर्त्तञ्च खातादिकर्म इष्टञ्च क्रतुकर्म तैस्तथा । संसृतिः संसारस्तर्हि कस्मात् नश्यतीत्यत आह—त्वत्पाददर्शनादित्यादि ।

७७ । नरो० । न केवलं त्वत्पाददर्शनात् संसारो नाशमेति किन्तु तद्ध्यानादपीत्याह— क्षणार्द्धमपीत्यादिना । यस्य चित्तं यच्चित्तम् । अज्ञानमविद्या, अनर्थानाम् अन्तःकरणोपाधि-सम्बन्ध्यादीनां बन्धानां संशयविपर्ययादीनां शरीरादीनां मूलं कारणम् । उपसंहरति—तदिति ।

७८ । नरो० । न केवलं त्वद्दर्शनात् त्वद्ध्यानात् पापानि नश्यन्ति, किन्तु त्वन्नामोच्चारणादपीत्याह—राम रामेतीति पद्येन । यद्वाणी रामरामेति मधुरं श्रुतिसुखावहं क्षणं वदति स ब्रह्महा सुरापो वा सर्वपातकैर्मुच्यते इति सम्बन्धः । यस्य वाणी यद्वाणी ।

---

[ आनन्दानुभवमिति । अहं भाग्यगौरवादतिशुभादृष्टवशात् त्वामद्य प्राप्तः, तव दर्शनं प्राप्त इत्यर्थः । आनन्दश्चासावनुभवो ज्ञानघनश्चेति । मृदर्थं यतमानेन जनेन निधानं निधिरिव । गो० ]

७७ । यच्चित्तम्, यस्य चित्तं तस्यानर्थानां नानासंसृतिरूपाणां मूलमज्ञानं नश्यतीत्यन्वयः । मे मनः सदा त्वयि तिष्ठतु । रा० ।

[ तत्तिष्ठतु मनो राम इत्यादि । तत्तस्मात् हे राम, त्वयि त्वय्येवेत्यर्थः, अन्यत्र दारादिष्वेव । गो० ]

७८ । यस्य वाणी त्वन्नाम गायति स मुच्यते । रा० ।

---

1 क 'यज्ञ दानं' । 2. च '-स्पर्शनात्' । 3 ङ 'वा' । 4 ग-ङ-च 'गायते', क 'गीयते' ।

न [1]काङ्क्षेऽरिजयं राम न च [2]दारसुखादिकम् ।
भक्तिमेव सदा काङ्क्षे त्वयि बन्धविमोचनीम् ॥ ७९ ॥
त्वन्मायाकृतसंसा[3]रस्त्वद्वशोऽहं रघूत्तम ।
[4]स्वपादभक्तिमादिश्य त्राहि मां भवसङ्कटात् ॥ ८० ॥
पूर्वं मित्राद्युदासीनास्त्वन्मायावृतचेतस[5] ।
आसन् मेऽद्य भवत्पाददर्शनादेव राघव ।
सर्वं ब्रह्मैव मे भाति क्व मित्रं क्व च मे रिपुः ॥ ८१ ॥
यावत्त्वन्मायया बद्धस्तावद् गुणविशे[5]षता ।
[6]सा यावदस्ति नानात्वं तावद्भवति नान्यथा ॥ ८२ ॥

---

७९ । नरो० । तर्हि किं वाञ्छसीत्यपेक्षायामाह—भक्तिमेवेत्यादि । एवकारव्यवच्छेद्यमाह—न काङ्क्षे इत्यादि ।

८० । नरो० । ननु मायाकृतबन्धविमोचनी भक्तिर्मयि कथं भविष्यतीत्यत आह—त्वन्मायाकृतसंसार इति । त्वन्मायया त्वदधीनमायया कृत संसारो यस्य स तथा । मम शिक्षां यदि मन्यसे तदाऽह शिक्षयामीति चेत्तत्राऽऽह—त्वद्वशोऽहमिति । आदिश्य उपदिश्य ।

८१ । नरो० । यदि तव विजयाकाङ्क्षा नास्ति दारसुखादिकाङ्क्षा च नास्ति तदा कथं वालिनि शत्रुबुद्धि कथं वा मयि मित्रबुद्धिरिति चेत्तत्राऽऽह—पूर्वमित्यादि । मित्राद्युदासीन इति । मित्रं सुहृत्, अरि शत्रु , उदासीन· शत्रुत्वमित्रत्वोभयरहित· ।

८२-८३ । नरो० । इदानीमपि भ्रातरि शत्रुबुद्धि· स्थिता तस्माद् भीतिरपि स्थिता, ते तवाद्युनैव कथ नष्टे इति चेत्तत्राऽऽह—यावदिति पद्यद्वयम् । तावद् गुणविशेषतेति, मायाकार्यत्वात् तावद् गुणविशेषता भवतीत्यर्थः । गुणविशेषता सत्त्वरजस्तमोभेद इत्यर्थ· । अत्र स्वरूपे

---

७९ । बन्धस्य संसारकारणस्य मोचनीम् । रा० ।

८० । त्वन्मायया कृतः संसारो यस्य स , त्वदंशस्त्वत्प्रतिबिम्बरूपत्वात् । अतः स्वपादयोर्भक्तिमादिश्य दत्त्वा त्राहि । रा० ।

८१ । त्वन्मायावृतचेतस इतः पूर्वं मित्रादय आसन् , अद्य तु त्वत्पाददर्शनान्मे सर्वं ब्रह्मैवेति भातीत्यन्वय । रा० ।

८२ । गुणविशेषता सत्त्वादिगुणविशेषवत्तेत्यर्थ· । सा गुणविशेषता नानात्वं सुहृन्मित्राद्युदासीनत्वरूपो भेद· । रा० ।

---

1 ग 'काङ्क्षे विजयं' । 2. ङ 'राज्यसु-' । 3. क-ख-घ '-रस्त्वदंशोऽहं', ग '-रे त्वद्वशोऽहं' । 4. ग-ङ-च-छ 'त्वत्पाद-' । 5. च '-षत.' । 6. ङ 'माया वदस्ति' ।

यावन्नानात्वमज्ञानात् तावत् कालकृतं भयम् ।
अतोऽविद्यामुपास्ते यः सोऽन्धे तमसि मज्जति ॥ ८३ ॥
मायामूलमिदं [1]सर्वं पुत्रदारादिबन्धनम् ।
[2]अतोत्सारय मायां [3]त्वं दासीं तव रघूत्तम ॥ ८४ ॥
त्वत्पादपद्मार्पितचित्तवृत्तिस्त्वन्नामसङ्गीतकथा[4] च वाणी ।
त्वद्भक्तसेवानिरतौ करौ मे त्वदङ्गसङ्गं [5]लभतां मदङ्गम् ॥ ८५ ॥

---

ताप्रत्यय· । सा गुणविशेषता नानात्वम् । अर्थात् शरीरस्य । तथाहि—सत्त्वप्रधानं देवशरीरम् , रज प्रधानं मनुष्यशरीरम् , तम·प्रधानं तिर्यगादिस्थावरान्तं शरीरमिति । अथवा गुणविशेषता आकाशादिभूतभेद इत्यर्थ· । मायाकृतभूतबन्धे दूरीभूते क्रमेण तेषां लये तद्भेद एव न स्थास्यतीति भाव· । नानात्वम् अर्थाद्वस्तुन· । अज्ञानात् तत्त्वज्ञानाभावात्, विवेकाभावाद्वा । कालकृतं मृत्युकृतम् । अतोऽज्ञानात् । अविद्यां मायाम् । अन्धे अन्धजनके, तमसि ससारे । तव चरणदर्शनादेव उत्पन्नतत्त्वज्ञानेन अखिलबन्धरहितोऽहमिति कुतो मम शत्रुस्तत्कृतभय वेति भावः ।

८४ । नरो० । यदि पुनरस्य माया मामावृणुयात्तदा पुनर्बन्ध स्यादित्याशङ्क्याऽऽह—मायामूलमिदमित्यादि । मायैव मूलं कारण यस्य तत्तथा । पुत्रदारा आदयो यस्य तत्तथा । उत्सारय दूरीकुरु । ममाऽऽज्ञया कथं दूरीभविष्यतीति चेत्तत्राऽऽह—दासीं तवेति ।

८५ । नरो० । इदानीं कानिचिद् भक्त्यङ्गानि वाञ्छन्नुपसहरति—त्वत्पादपद्मार्पितचित्तवृत्तिरिति त्रिभि । त्वत्पादपद्मार्पितचित्तवृत्तिर्भवतु, अन्यविषयान् विहाय त्वत्पादपद्मयोश्चित्तं वर्त्ततामित्यर्थः । अर्थाद् विषयेषु अर्पितञ्च तत् चित्तञ्चेति अर्पितचित्तं तस्य वृत्तिरर्पितचित्तवृत्ति·, त्वत्पादपद्मयोरर्पितचित्तवृत्तिस्त्वत्पादपद्मार्पितचित्तवृत्ति· । यद्वा त्वत्पादपद्मयोरर्पिता चित्तवृत्तिर्येन स । अहं भवानीति शेष· । वाणी त्वन्नामसङ्गीतकथा भवतु, तव नाम सङ्गीतकथे यत्र सा तथा । सङ्गीतं गानम् ।

---

८३ । कालकृतं मृत्युकृतम् । अतः अविद्यामिति च्छेदः । रा० ।

८४ । अत उत्सारयेति च्छेद· । सन्धिरार्षः । रा० ।

८५ । त्वत्पादपद्मयोरर्पिता चित्तवृत्तिर्येन स ईदृशोऽहं भूयासमिति शेष । त्वन्नामविषयसङ्गीतकथासु वाणी निरता तिष्ठत्वित्यन्वय· । त्वद्भक्तानां सेवायां निरतौ तत्परौ ।

---

1. क 'सर्वे', च 'विश्व' । 2. ग 'अथोत्-', ङ-च-छ 'अतोत्' । 3 ग 'मे' । 4 क ख घ 'चास्तु' । 5· ङ 'लभते' ।

त्वन्मूर्त्तिभक्तान् [1]स्वगुरूंश्च चक्षुः पश्यत्वजस्रं स [2]शृणोतु कर्णः।
त्वज्जन्मकर्माणि च पादयुग्मं व्रजत्वजस्रं तव मन्दिराणि ॥ ८६ ॥
अङ्गानि ते पादरजोविमिश्रतीर्थानि [3]बिभ्रत्वहिशत्रुकेतो।
शिरस्त्वदीय भवपद्मजाद्यैर्जुष्टं पदं राम नमत्वजस्रम् ॥ ८७ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्ध्याकाण्डे
प्रथमोऽध्याय. ॥ १ ॥

---

८६। नरो०। त्वन्मूर्त्तिभक्तान् स्वगुरूंश्च अजस्र चक्षु. पश्यत्वित्यन्वय.। त्वन्मूर्त्ति-भक्तानिति तव मूर्त्तीस्तव भक्तांश्चेत्यर्थ.। स कर्ण. अजस्र त्वज्जन्मकर्माणि शृणोत्वित्यन्वय.। तव मन्दिराणि पादयुग्मम् अजस्र व्रजत्वित्यन्वय ।

८७। नरो०। अङ्गानि तव पादरजोविमिश्रतीर्थानि बिभ्रत्वित्यन्वय.। अङ्गानि मस्तकादीनि। पादयोर्यानि रजांसि पांशवस्तैर्विमिश्राणि तुलसीदलानीति तानि च तीर्थानि चेति तानि तथा। तीर्थानीव तीर्थानि। जहदजहल्लक्षणया तीर्थपदस्य जलमात्रे वृत्ति ।

[ किष्किन्ध्याकाण्डे प्रथमाध्यायव्याख्या समाप्ता ॥ १ ॥ ]

---

८६। त्वन्मूर्त्तिभक्तान् त्वन्मूर्त्तयश्च त्वद्भक्ताश्च तान्। स कर्णस्त्वज्जन्मानि मायिकानि तत्रत्यकर्माणि च शृणोतु इत्यन्वय.। रा०।

८७। अहिशत्रुकेतो गरुडध्वज, मे शिरस्त्वदीयं शिवब्रह्माद्यै सेवित पदं नमतु। रा०।

अहीनां शत्रुर्गरुड. स केतुर्यस्य स। भवपद्मजाद्यै. शिवब्रह्मप्रभृतिभि। जुष्टं सेवितम्।

---

1. क-ख-घ-ङ 'स्वगुरूंश्च'। 2. ङ-छ 'शृणोति'। 3. छ 'बिभ्रत्वहि'।

# द्वितीयोऽध्यायः

[1]श्रीमहादेव उवाच—

इत्थं [2]स्वाङ्गपरि[3]ष्वङ्ग[4]निर्धूताशेषकल्मषम् ।
रामः सुग्रीवमालोक्य [5]सस्मितं वाक्यमब्रवीत् ॥ १ ॥
मायां मोहकरीं तस्मिन् वितन्वन् कार्यसिद्धये ।
सखे [6]त्वदुक्तं [7]यत्तन्मां सत्यमेव न संशयः ॥ २ ॥
किन्तु लोका वदिष्यन्ति मामेव रघुनन्दनः ।
कृतवान् किं कपीन्द्राय [8]सख्यं कृत्वाऽग्निसाक्षिकम् ।
इति लोकाप[9]वादो मे भविष्यति न संशयः ॥ ३ ॥
तस्मादाहूय भद्रं ते गत्वा युद्धाय वालिनम् ।
बाणेनैकेन तं हत्वा राज्ये त्वाम[10]भिषेचये ॥ ४ ॥

---

१। नरो०। स्वस्य अङ्गानां परिष्वङ्गेण निर्धूत नाशितम् अशेषकल्मषं निखिलपापं यस्य येन वा तं तथा।

२। नरो०। तस्मिन् सुग्रीवे।

---

१। स्वात्मपरिष्वङ्गः स्वशरीरालिङ्गनं तेन दूरीकृताशेषपापम्। सस्मितमिति, मायाया जगदध्यासरूपत्वेन स्मितद्वारा मायया तदावरणम्। रा०।

२। कार्यं रावणवधः। यन्मां प्रति त्वदुक्तं त्वयोक्तं तत् सत्यमेव। रा०।

३। रघुनन्दनोऽग्निसाक्षिकं सख्यं कृत्वा कपीन्द्राय तदुपकारकं किं कृतवानित्येवं लोका मां वदिष्यन्ति, अतस्त्वदुपकारो मेऽवश्यं कर्त्तव्य इति शेषः। उक्तमेव दार्ढ्याय पुनराह— इतीति। रा०।

सर्वमेव मायाकार्यमिति मत्वा वालिवधादिकं परित्यज्य कर्महीनश्चेत् मायामुक्तये यतेय तदा मायाकृतस्य सख्यबन्धनादिकार्यस्य विफलत्वेन ममातिशयहीनत्वं भविष्यतीति मायावालित एव मानुषप्रकृतिकोऽहं कार्यं कुर्यामिति भावः।

४। भद्रन्ते इत्यनेन मदाज्ञाकरणे एतदेव भद्रं नान्यथेति सूचितम्। रा०।

---

1. क-ख-पुस्तकयो 'श्रीमहादेव उवाच' इति नास्ति। 2 क-ख घ ङ-च 'स्वात्म'। 3 ङ '-ष्वङ्गं'। 4 च '-निर्मुक्ता-'। 5 च 'साम्प्रत', छ 'स तु त'। 6 च 'यदुक्तं'। 7 च 'तत्त-'। 8. च 'सख्य'। 9. ग '-वादोऽय'। 10 क-ख-घ '-भिषिञ्चये'।

तथेति गत्वा सुग्रीवः किष्किन्ध्योप[1]वनं द्रुतम् ।
कृत्वा शब्दं महा[2]नादं [3]तमाह्व[4]यत वालिनम् ॥ ५ ॥
तच्छ्रुत्वा भ्रातृनिनदं रोषताम्रविलोचनः ।
निर्जगाम [5]गृहाच्छीघ्रं सुग्रीवो यत्र वानरः ॥ ६ ॥
तमापतन्तं सुग्रीवः शीघ्रं वक्षस्यताडयत् ।
सुग्रीवमपि मुष्टिभ्यां जघान क्रोधमूर्च्छितः ॥ ७ ॥

---

५ । नरो० । महानादमिति वालिनमित्यस्य विशेषणम् ।
६ । नरो० । रोषेण ताम्रे इव विलोचने यस्य स तथा ।
७ । नरो० । क्रोधमूर्च्छितः क्रोधेन कर्त्तव्याकर्त्तव्यविवेकशून्य इत्यर्थः ।

---

५ । महानादं महाप्रतिध्वनिजनकम् । आह्वयत स्पर्द्धया आहूतवान् ।
अत्रेन्द्रेण मालाविक्षेपमाह प्राच्ये वाल्मीकीये । तथाच—

माला च काञ्चनी दिव्या नानारत्नविभूषिता ।
दिवः सुग्रीवमूर्धानमभितो निपपात ह ॥
सा पतन्ती मही माला काञ्चनी देवनिर्मिता ।
प्रचकाशे तदाकाशे विद्युन्मालामनोहरा ॥
सा हि पित्रा सुतस्नेहादादित्येन दिवौकसा ।
वालिनो मालया तुल्या स्वयं यत्नाद् विनिर्मिता ॥
तया पिनद्धया तत्र सुग्रीवः प्लवगेश्वरः ।
शुशुभे हरिशार्दूलो ज्वलदग्निरिवानलः ( व ज्वलन् ? ) ॥

इति । ४।१२।१६-१९ ।

६ । 'वाल्मीकीये वालिनो गुहाया निर्गमनं न तु गृहात् , तथाच—

तमुवाच ततस्तारा भर्त्तारं वानरेश्वरम् ।
परिष्वज्य भयादित्थं निष्पतन्तं गुहामुखात् ॥ ४।१४।६ ।

पूर्वतोऽपि—

प्रदक्षिणं समावृत्य स तौ दशरथात्मजौ ।
सुग्रीवो विपुलग्रीव आजगाम गुहामुखम् ॥ इति । ४।१२।२२ ।

एवमन्यत्रापि गुहापददर्शनाद् वाली गुहायामेव राज्यं कृतवानिति परमार्थतः प्रतिभाति, तेन च तस्य गुहाया निर्गमनमेव समीचीनमिति विभाव्यते ।

---

1. ग ङ '-वने' । 2. ङ '-न्त त' । 3 ग 'समा-' । 4. ङ 'यति' । 5 ख-ङ-छ 'गहा-' ।

वाली तमपि सुग्रीव एव क्रुद्धौ परस्परम् ।
अयुध्येतामेकरूपौ दृष्ट्वा रामोऽतिविस्मितः ।
न मुमोच तदा बाणं सुग्रीववधशङ्कया ॥ ८ ॥
ततो दुद्राव सुग्रीवो वमन् रक्तं भयाकुलः ।
वाली स्वभवनं [1]यातः सुग्रीवो राममब्रवीत् ॥ ९ ॥
किं मां घातयसे राम शत्रुणा भ्रातृरूपिणा ।
यदि मद्धनने वाञ्छा त्वमेव जहि मां [2]विभो ॥ १० ॥
एवं मे प्रत्ययं कृत्वा सत्य[3]वादिन् रघूत्तम ।
उपेक्षसे किमर्थं मां शरणागतवत्सल ॥ ११ ॥

---

११ । नरो० । प्रत्ययं निश्चितम् ।

---

८ । एकरूपौ समानाकारौ, अत एव रामो बाणं न मुमोच । रा० ।
अत्र वाल्मीकीयेऽपि—

रामोऽथ धनुरादाय तावुभौ समवैक्षत ।
पश्यंश्च वालिसुग्रीवौ ददर्श वपुषा समौ ॥
अन्योऽन्यसदृशौ वीरावन्योऽन्यसमविक्रमौ ।
उभौ यत्ते तदा तुल्यावश्विनाविव रूपिणौ ॥
स नाभिजानन् सुग्रीवं वालिनञ्चापि राघव ।
न चकार तदा बुद्धिं सायकस्य विमोक्षणे ॥ इति । ४।१२।२७-२९ ।

१० । सुग्रीववाक्यं वाल्मीकीये—

तं दृष्ट्वाऽभ्यागतं रामं सामात्यं सहलक्ष्मणम् ।
दीनोऽथाधोमुखो ह्रीमान् सुग्रीवो वाक्यमब्रवीत् ॥
आह्वयस्वेति मामुक्त्वा दर्शयित्वा च विक्रमम् ।
वैरिणा घातयित्वा मां किमुपेक्षा कृता त्वया ॥
तस्मिन्नेव हि वक्तव्यं काले राघव तत्त्वतः ।
न हनिष्याम्यहमिति न स्थास्ये क्षणमप्यहम् ॥
अभविष्यं विनिहतो वालिना यद्यहं रणे ।
ममाभविष्यत् को राज्येनार्थो बन्धुजनेन वा ॥ इति । ४।१२।३४-३७ ।

११ । प्रत्ययं कृत्वा विश्वासमुत्पाद्य । सत्यवादिन्नित्यादिराक्षेपः । रा० ।

---

1. ग-ङ-च-छ 'यायात्' । 2. च 'प्रभो' । 3 ग-ङ-च-छ '-वादी' ।

श्रुत्वा सुग्रीववचनं रामः साश्रुविलोचनः ।
आलिङ्ग्य मास्म भैषीस्त्वं दृष्ट्वा वामेकरूपिणौ ।
मित्रघातित्वमाशङ्क्य मुक्तवान् सायकं न हि ॥ १२ ॥
इदानीमेव ते चिह्नं करिष्ये भ्रमशान्तये ।
गत्वाह्वय पुनः [1]शत्रुं हतं [2]द्रक्ष्यसि वालिनम् ।
रामोऽहं [3]त्वां शपे भ्रातर्हनिष्यामि रिपुं क्षणात् ॥ १३ ॥
इत्याश्वास्य स सुग्रीवं रामो लक्ष्मणमब्रवीत् ।
सुग्रीवस्य गले पुष्पमाला[4]मामुच्य पुष्पिताम् ।
प्रेषयस्व महा[5]भाग सुग्रीवं वालिनं प्रति ॥ १४ ॥

---

१४ । नरो० । पुष्पितामिति, पुष्प फुल्लने इत्यस्य रूपम् । पुष्पितपुष्पमालाक्षेपणे नियोजनं झटिति ज्ञानार्थम् ।

---

१२ । युवां समानाकारौ दृष्ट्वा मित्रघातशङ्कयाऽहं सायकं न मुक्तावानित्यन्वय । रा० ।
अत्र वाल्मीकेर्वाग्भङ्ग्यन्तरम्—

अलङ्कारेण वेशेन प्रमाणेन गतेन च ।
त्वञ्च सुग्रीव वाली च सदृशौ स्थः परस्परम् ॥
स्वरेण वर्चसा चैव प्रेक्षितेन स्थितेन च ।
विक्रमेण च वाचा च व्यक्तं वां नोपलक्षये ॥
तदहं रूपसादृश्यान्मोहितो वानरेश्वर ।
कथ सुहृद्वधो न स्यादिति बाण न मुक्तवान् ॥ इति । ४।१२।४०-४२ ।

१३ । अहं राम इत्यनेन स्वस्यामिथ्याभाषित्वं सूचितम् । त्वां शपे यदि न हनिष्यामि तर्हि मित्रस्य तवैव शपथ इत्यर्थः । रा० ।

१४ । पुष्पितां मालामामुच्य संबध्य प्रेष्यतामित्यन्वयः । रा० ।
माल्यप्रकारमाह वाल्मीकीये—

गजपुष्पमयीं मालामुत्पाद्य कुसुमायुताम् ।
कुरु लक्ष्मण कण्ठेऽस्य सुग्रीवस्य महात्मन ॥
ततो गिरितटे जातामारुह्य सुदुरासदाम् ।
लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे स सक्तवान् ॥ इति । ४।१२।४५-४६ ।

---

1 क 'शीघ्र' । 2 क 'पश्यसि' । 3 घ 'त्वा' । 4 च '-मुच्य सुपु-' । 5 ङ क '-भाग' ।

लक्ष्मणस्तु तदा बद्ध्वा गच्छ [1]गच्छेति सादरम् ।
प्रेषयामास सुग्रीवं सोऽपि गत्वा तथाऽकरोत् ॥ १५ ॥
पुन[2]रप्यद्भुत शब्दं कृत्वा वालिनमाह्वयत् ।
तच्छ्रुत्वा विस्मितो वाली क्रोधेन महता वृतः ।
बद्ध्वा परिकरं सम्यग् गमनायोपचक्रमे ॥ १६ ॥
गच्छन्त वालिनं तारा गृहीत्वा निषिषेध तम् ।
न गन्तव्यं त्वयेदानीं शङ्का मेऽतीव जायते ॥ १७ ॥
इदानीमेव ते भग्नः [3]पुनरायाति सत्वर' ।
सहायो बलवांस्तस्य कश्चिन्नूनं समागतः ॥ १८ ॥
वाली तामाह हे सुभ्रु शङ्का ते व्येतु [4]तद्गता ।
प्रिये [5]करं परित्यज्य गच्छ गच्छामि तं रिपुम् ।
हत्वा शीघ्र समायास्ये सहायस्तस्य को भवेत् ॥ १९ ॥

---

१५ । नरो० । बद्ध्वा पुष्पमालामिति शेष ।

१६ । नरो० । विस्मित इति अधुनैव मुष्टिप्रहार सोढुमशक्तत्वात् प्रपलाय्य गत', कथं पुनरागत इति विस्मय' ।

---

१६ । परिकरं कच्छवन्धादिरूपम् । रा० ।

वालिनस्तात्कालिकीमाकृतिमाह वाल्मीकि·—

श्रुत्वैव च निनादन्तु वालिनो दारुण पुन ।
मद एकपदे नष्ट· क्रोधश्चास्य ततोऽभवत् ॥
स रोषताम्रनयनो वाली सन्ध्यातपप्रभ· ।
उपरक्त इवाऽऽदित्य· सद्यो निष्प्रभतां गत· ॥
दंष्ट्राकरालवदनः क्रोधताम्रतराकृति ।
बभ्राजोत्फुल्लनयन· समृणाल इव ह्रद· ॥
सोऽमर्षवशमापन्नो निष्पपात हरीश्वरः ।
वेगेन चरणन्यासैः कम्पयन्निव मेदिनीम् ॥ इत्यादि । ४।१४।२-५ ।

१८ । ते त्वत्तो भग्न पुनरायाति गर्जन् युद्धार्थमाह्वयति । रा० ।

१९ । तद्गता सुग्रीवसहायविषया । करं परित्यज्य गच्छ, अन्त·पुरमिति शेष' । मत्तो रक्षितुं जीवितार्थी कस्तस्य सहायो भवेदित्यन्वय । रा० ।

---

1 क 'राजेति' । 2, घ '-रप्य-' । 3 ग-ङ 'कथ पुनरुपागत.' । 4 ग ङ-च 'हृद्गता' । 5 च 'शोक' ।

सहायी यदि सुग्रीवस्ततो हत्वोभयं क्षणात् ।
[1]आयास्ये मा शुचः शूर कथं तिष्ठेद् गृहे रिपुम् ।
ज्ञात्वा[2]ऽप्याहूयमानं हि [3]हत्वायास्यामि सुन्दरि ॥ २० ॥

तारोवाच--

मत्तोऽ[4]न्यच्छृणु राजेन्द्र श्रुत्वा कुरु यथोचितम् ।
आह मामङ्गद' पुत्रो मृगयायां श्रुतं वचः ॥ २१ ॥
अयोध्याधिपतिः श्रीमान् रामो [5]दाशरथिः किल ।
लक्ष्मणेन सह भ्रात्रा सीतया [6]भार्यया सह ॥ २२ ॥
आगतो दण्डका[7]रण्यं [8]तत्र सीता हृता किल ।
रावणेन सह भ्रात्रा मार्ग[9]माणोऽथ जानकीम् ॥ २३ ॥

---

२० । आह्वयमानं रिपुं ज्ञात्वाऽपि शूर कथं गृहे तिष्ठेत्, अतस्तं हत्वाऽत्राऽऽयास्यामि इति च्छेद. । रा० ।

२१ । यन्मामङ्गदो मृगयायां श्रुतं वच आह तच्छ्रुत्वा यथोचितं कुरु । रा० ।

सत्यसन्धेन वीरेण राघवेण महात्मना ।
किल कृत्वैव सुमहत् सख्यमत्राऽऽगत. पुन. ॥
सुपरीक्षितवीर्येण लब्धलक्ष्येण धीमता ।
परिश्रुतो मया पूर्वं रामेणैष सहायवान् ॥ ४।१४।१४-१९ ।

इत्यत्र 'मया पूर्वं परिश्रुत' इत्युक्त्या कस्माच्छ्रुतस्तन्न स्पष्टीकृतं प्राच्ये वाल्मीकीये, पाश्चात्त्ये पुनरेतद्ग्रन्थसंवादी सन्दर्भोऽङ्गदनाम्ना स्पष्टीकृत । तथाच—

पूर्वमेव मया वीर श्रुतं कथयतो वचः ।
अङ्गदस्य कुमारस्य वक्ष्याम्यद्य हितं वच. ॥
अङ्गदस्तु कुमारोऽयं वनान्तमुपनिर्गतः ।
प्रवृत्तिस्तेन कथिता चारैरासीन्निवेदिता ॥ इत्यादि । ४।१५।१५-१६ ।

२३ । रावणेन हृता सीता तां सह भ्रात्रा मार्गमाण ऋष्यमूकाद्रिमागतः । रा० ।

---

1. क 'आयामि' । 2 घ-च '-ऽप्याह्वय-' । 3. ङ-च-छ 'हत्वा यास्यामि' । 4. ग-च '-न्य स्र-' । 5 ङ 'दशरथात्मज' । 6. छ 'मायया' । 7. ग '-रण्ये' । 8 छ 'सदा' । 9. ग '-माणश्च', ङ '-माणो च', '-माणो हि' ।

[1]आगत ऋष्यमूकाद्रिं सुग्रीवेण समा[2]गत ।
चकार तेन सुग्रीवः सख्यञ्चानलसाक्षिकम् ॥ २४ ॥
प्रतिज्ञां कृतवान् रामः सुग्रीवाय सलक्ष्मण ।
वालिनं समरे हत्वा राजानं त्वां करोम्यहम् ॥ २५ ॥
इति निश्चित्य तौ यातौ [3]निश्चित शृणु मद्वचः ।
इदानीमेव [4]ते भग्नः कथं पुन[5]रुपागतः ॥ २६ ॥
अतस्त्वं सर्वथा वैरं त्यक्त्वा सुग्रीवमानय ।
यौवराज्येऽभि[6]षिञ्चाऽऽशु रामं त्वं शरणं व्रज ।
पाहि मामङ्गदं राज्य कुलञ्च हरिपु[7]ङ्गव ॥ २७ ॥
इत्युक्त्वाऽश्रुमुखी तारा पादयोः प्रणिपत्य तम् ।
हस्ताभ्यां चरणौ धृत्वा रुरोद भयविह्वला ॥ २८ ॥
तामालिङ्ग्य [8]ततो वाली सस्नेहमिदमब्रवीत् ।
स्त्रीस्वभावाद्विभेषि त्वं प्रिये नास्ति भयं मम ॥ २९ ॥

---

२४ । समागत सम्मिलित , सख्यञ्च तेन चकार । रा० ।

२५ । सुग्रीवाय सुग्रीवसमीपे प्रतिज्ञां कृतवान् । सा पुन का इत्याह—वालिनमिति । त्वां सुग्रीवमित्यर्थ ।

२६ । इति निश्चित्य परस्परसाहाय्यं प्रतिज्ञाय यातौ स्ववासस्थानमिति शेष । तस्मान्निश्चित निश्चितार्थक मे वच शृणु । इदानीमेव इत्यादेरन्यथेत्यादि । रा० ।

मम वचनं निश्चितमिति यदुक्त तत्समर्थनायाऽऽह—इदानीमेव इत्यादि । तादृशसहायस्यालाभे त्वया पराजितः स कदाऽपि पुनर्नागच्छेदिति भाव ।

२७ । यत स तादृशसहायवान् अत सर्वथा सर्वप्रकारेण तं यौवराज्ये अभिषिञ्च, तत रामं शरणं व्रज इत्यन्वय । मयि रामं शरण गते किं स्यादित्याह—पाहीत्यादि । अन्यथा रामेण वैरे राज्यपुत्रबान्धवादिक सर्वं विनङ्क्ष्यतीति भावः ।

२९ । सस्नेहमिति । नात्र स्नेहस्य गन्धोऽपि वाल्मीकीये ।

तामेव ब्रुवतीं तारां तारापतिनिभाननाम् ।
वाली निर्भर्त्सयामास वाक्यमेतदुवाच ह ॥ ४।१६।१ ।

इत्यादिना भर्त्सनस्यैवोपलब्धेः ।

---

1. च 'आगतस्त्वृष्य-' । 2 च-क '-गम' । 3 च-क 'निश्चय' । 4 च 'भग्नस्ते' । 5 च '-रिहागत' । 6. ग-ङ-च '-षिच्याऽऽशु' । 7. च '-ङ्गवान्' । 8. क-ख-घ 'तदा' ।

रामो यदि समायातो लक्ष्मणेन समं प्रभुः ।
तदा रामेण [1]मे स्नेहो भविष्यति न संशयः ॥ ३० ॥
रामो नारायणः साक्षादवतीर्णोऽखिलप्रभुः ।
भूभारहरणार्थाय श्रुतं पूर्वं मयाऽनघे ॥ ३१ ॥
स्वपक्षः परपक्षो वा नास्ति तस्य परात्मनः ।
आनेष्यामि गृहं साध्वि नत्वा तच्चरणाम्बुजम् ।
भजतोऽनुभज[2]त्येष भक्तिगम्यः [3]परेश्वरः ॥ ३२ ॥
यदि [4]स्वयं समायाति सुग्रीवो हन्मि [5]तं क्षणात् ।
यदुक्तं यौवराज्याय सुग्रीवस्याभिषेचनम् ॥ ३३ ॥
कथमाहूयमानोऽहं युद्धाय रिपुणा प्रिये ।
शूरोऽहं सर्वलोकानां सम्मतः शुभलक्षणे ॥ ३४ ॥
भीतभीतमिदं वाक्यं कथं वाली वदेत् प्रिये ।
तस्माच्छोकं परित्यज्य तिष्ठ सुन्दरि वेश्मनि ॥ ३५ ॥

---

३२ । नरो० । स्वस्य आत्मनः पक्षः सहायः स्वपक्षः । परस्य स्वभिन्नस्य पक्षः परपक्षः ।

---

३० । स्नेहो भविष्यति सुग्रीवतोऽपि मम रामकार्ये समर्थत्वादिति भावः । रा० ।

३२ । स्वपक्षपरपक्षाभावे हेतुगर्भविशेषणं परात्मन इति । तेन सर्वत्र समः स इति ध्वनितम् । भजतो भक्तानित्यर्थः । रा० ।

तच्चरणाम्बुजं तच्चरणाम्बुजे नत्वेत्यर्थः । तं गृहम् आनेष्यामि । ननु कथं स मादृशां गृहमागमिष्यतीत्याह—भजतोऽनुभजत्येष इति । स परेश्वरो भक्तिगम्यः भक्त्या लभ्यः, पुनः भजतोऽनुभजति ।

३४ । कथं तदभिषेचनं कुर्यामिति शेषः । यतोऽहं सर्वलोकानां सम्मतः शूरः । रा० ।

३९ । वाली भीतभीतम् अत्यन्तभयसूचकमिदं वाक्यं कथं वदेत् । रा० ।

---

1 ग च-छ 'मत्स्नेहो' । 2. च '-त्येव' । 3. क-ख-घ 'सुरे-' । 4 ग-ङ 'यौद्ध' । 5 ग-च-छ 'तत्क्ष-' ।

एव[1]माश्वास्य [2]तारां तां शोच[3]न्तीमश्रुलोचनाम् ।
गतो वाली समुद्युक्तः सुग्री[4]वस्य [5]वधाय सः ॥ ३६ ॥
दृष्ट्वा वालिनमायान्तं सुग्रीवो भीमविक्रमः ।
उत्पपात गले बद्धपुष्पमालः पतङ्गवत् ॥ ३७ ॥
मुष्टिभ्यां ताडयामास वालिन सोऽपि तं तथा ।
अहन् वाली च सुग्रीवं सुग्रीवो वालिनं तथा ॥ ३८ ॥
राम विलोकयन्नेव सुग्रीवो युयुधे युधि ।
[6]इत्येवं युध्यमानौ तौ दृष्ट्वा रामः प्रतापवान् ॥ ३९ ॥
बाणमादाय तूणीरा[7]दैन्द्रं धनुषि सन्दधे ।
आकृष्य कर्णपर्यन्तमदृश्यो वृक्ष[8]षण्डग ॥ ४० ॥
निरीक्ष्य वालिनं सम्यग् [9]लक्ष्यं तद्धृदयं हरि· ।
उत्ससर्जाशनिसमं महावेगं महाबल· ॥ ४१ ॥

---

४० । नरो० । सन्दधे सन्धारयामास ।

---

३९ । राम विलोकयन् शीघ्रमेतं जहीति दृष्ट्या सूचयन् । रा० ।

अत्र वाल्मीकि —

वालिना भग्नदर्पे तु सुग्रीवे मन्दतेजसि ।
वालिनं प्रति सामर्षश्चुक्रोधातीव राघवः ॥
तत· सन्धाय रामेण शरमाशीविषोपमम् ।
निहतो हृदये वाली हेममाली महाबलः ॥
स तेन हृदये वाली निहतो निपपात ह ।
हा हतोऽस्मीति विक्रुश्य भ्रष्टमार्गश्च विह्वल ॥ इत्यादि ।४।१९।२७-२९ ।

४० । ऐन्द्रे धनुषि अगस्त्यदत्ते । 'ऐन्द्रमि'ति पाठे ऐन्द्रास्त्राभिमन्त्रितमित्यर्थ । वृक्षखण्डगो वृक्षसमूहगः । रा० ।

वृक्षषण्डगो वृक्षसमूहमध्यवर्त्ती । यतो वृक्षषण्डग· अतोऽदृश्यः । बाण कर्णपर्यन्तम् आकृष्य धनुषि सन्दधे इत्यन्वय· ।

४१ । हरि· राम· वालिनं लक्ष्यं तद्हृदयञ्च निरीक्ष्येत्यर्थ· । अशनिसमं बाणमिति शेष· ।

---

1· क 'माभाष्य' । 2 ग-ड-च 'ता तारा' । 3 च 'न्ती सा-' । 4· क '-वाय' । 5 च 'वधेच्छया' । 6 क 'इत्येव' । 7· '-दैन्द्रं' । 8 ख घ ङ 'खण्डग.' । 9 क 'लक्ष्यते हृदयं' ।

बिभेद स शरो वक्षो वालिनः कम्पयन् महीम् ।
उत्पपात महाशब्दं मुञ्चन् स निपपात ह ॥ ४२ ॥
तदा मुहूर्त्तं [1]नि सञ्ज्ञो भूत्वा चेतनमाप सः ।
ततो वाली ददर्शाग्रे रामं राजीवलोचनम् ।
धनुरालम्ब्य [2]वामेन हस्तेनान्येन सायकम् ॥ ४३ ॥
बिभ्राणं चीरवसनं जटामुकुट[3]धारिणम् ।
विशालव[4]क्षसं भ्राजद्वनमालाविभूषितम् ॥ ४४ ॥
पीनचार्वायतभुजं नवदूर्वादलच्छविम् ।
सुग्रीवलक्ष्मणाभ्याञ्च पार्श्व[5]यो· परिषेवितम् ॥ ४५ ॥
विलोक्य शनकै· प्राह [6]वाली रामं विगर्हयन् ।
किं मयाऽपकृत राम तव येन हतोऽस्म्यहम् ॥ ४६ ॥
राजधर्ममविज्ञाय गर्हित कर्म ते कृतम् ।
वृक्ष[7]षण्डे तिरोभूत्वा [8]त्यजता मयि सायकम् ॥ ४७ ॥

---

४७ । नरो० । राजधर्मं क्षत्रियधर्मम् । ते त्वया ।

---

४२ । मही कम्पयन् स शरो रामधनु·सकाशात् महाशब्दं मुञ्चन् उत्पपात आकाशे इति शेष· । तत स निपपात वालिवक्षसि, ततस्तद् बिभेद । रा० ।

४३ । तदा वक्षोभेदकाले चेतन चैतन्यम् । वामेन धनुरन्येन सायकमन्यमालम्ब्य स्थितमिति शेष· । रा० ।

नि संज्ञ इति पाश्चात्त्यवाल्मीकीयसंवादी । तथाच—

इन्द्रध्वज इवोद्धूत· पौर्णमास्यां महीतले ।
आश्वयुक्समये मासि गतसत्त्वो विचेतन· ॥ इति । ४।१६।३७

प्राच्ये चास्य भ्रष्टमार्गता विह्वलता च न पुनर्विचेतनत्वम् । तथाच—

स तेन हृदये वाली निहतो निपपात ह ।
हा हतोऽस्मीति विक्रुश्य भ्रष्टमार्गश्च विह्वलः ॥ इति । ४।१३।२९ ।

४४ । वक्षसि वनमाला कण्ठमारभ्याऽऽजानु माला वनमाला तया, विभूषितम् । रा० ।

४६ । वालिनो विगर्हणं वाल्मीकीये किष्किन्ध्याकाण्डस्य षोडशे सर्गे ।

४७ । राजधर्ममिति । तिरोभूयान्येन युद्धं कुर्वति बाणपातश्छलत्वान्न राजधर्म इति भावः । ल्यबभाव आर्ष· । रा० ।

---

1 ङ 'नि शब्दो' । 2 च 'हस्तेन वामेन' । 3 ङ '-मण्डितम्' । 4 क-ख '-वक्ष स' । 5 ङ '-योश्चोपशोभितम्' । 6 च 'राम वाली' । 7 ख-घ-ङ '-खण्डे' । 8, ग 'मुञ्चतो', ङ-च 'त्यजतो' ।

यश' किं लप्स्यसे राम [1]चौरवत् [2]सत्यसङ्गरः।
यदि क्षत्रियदायादो मनोर्वंशसमुद्भवः।
युद्ध कृत्वा समक्षं मे [3]प्राप्स्यसे तत्फलं तदा ॥ ४८ ॥
सुग्रीवेण कृत किं ते मया वा न [4]कृतं किमु।
रावणेन हृता [5]भार्या तव राम महावने।
[6]सुग्रीवं शरण यातस्तदर्थ[7]मिति शुश्रुम ॥ ४९ ॥
[8]बत राम न जानीषे [9]मद्बलं लोकविश्रुतम्।
रावणं सकुल बद्ध्वा ससीत लङ्कया सह।
आनयामि मुहूर्[10]त्तार्द्धाद् यदि [11]चेच्छामि राघव ॥ ५० ॥
धर्मिष्ठ [12]इति लोकेऽस्मिन् कथ्यसे रघुनन्दन।
वानरं व्याधवद्धत्वा [13]धर्मं [14]कं लप्स्यसे वद।
अभक्ष्यं वानर मांसं हत्वा मां किं करिष्यसि ॥ ५१ ॥

---

४८। नरो०। क्षत्रियदायाद क्षत्रियपुत्र'। समक्षं प्रत्यक्षम्।

५१। नरो०। अभक्ष्य वानरं मांसमिति, वानरस्येदं वानरम्, वानरस्य पञ्चपञ्चनखेतरपञ्चनखत्वादभक्ष्यत्वमिति भाव। पञ्च पञ्चनखा यथा—

शशक शल्लकी गोधा कूर्म खड्गी च पञ्चम। इति।

---

४८। चोरवत् कृतसङ्गरस्त्व मा हत्वा यशो लप्स्यसे किम्? अपि त्वयश एवेति भाव॰। यदि ते क्षत्रियदायादत्वादभिमानस्तदा मे मया समक्षं युद्धं कृत्वा तत्फलं यशो मरणं वा प्राप्स्यसे प्राप्तो भवे'। अन्यार्थे अन्यशब्दप्रयोगेणासन्नमरणता सूच्यते। रा०।

४९। कृतमुपकृतमित्यर्थ॰। रा०।

अत्राऽऽह वाल्मीकि —

सुग्रीवप्रियकामेन यदहं हिंसितस्त्वया।
कण्ठे बद्ध्वा प्रदत्तः स्यान्मया तव स रावण॰॥
न्यस्तां सागरतोये वा पाताले वाऽपि मैथिलीम्।
आनयेयमहं दर्शे श्वेतामश्वतरीमिव ॥ इत्यादि। ४।१६।४०-४१।

---

1. क-ख घ 'चोर'। 2. क-ख घ 'कृतस'। 3 च 'प्राप्स्यते'। 4 च 'कृतन्तव'। 5 ग घ 'सीता'। 6. छ 'सुग्रीवशरण'। 7 ङ '-मपि'। 8 ग 'त्व' हि', च 'मम', छ ल मे'। 9. च 'यद्बल'। 10 च '-तार्द्धे य-'। 14 च 'चेच्छसि'। 12. ग-छ 'इव'। 13 च 'यश, कि'। 14. छ 'किं'।

इत्येवं बहु भाषन्तं वालिनं राघवोऽब्रवीत् ।
धर्मस्य गोप्ता लोकेऽस्मिंश्चरामि सशरासनः ।
अधर्मकारिणं हत्वा सद्धर्मं पालयाम्यहम् ॥ ५२ ॥
दुहिता भगिनी भ्रातुर्भार्या चैव तथा स्नुषा ।
[1]समा यो रमते तासामेकामपि विमूढधी ।
पातकी स तु विज्ञेयः स वध्यो राजभिः सदा ॥ ५३ ॥

---

९३ । नरो० । दुहितेत्यादि । न च स्नुषादुहित्रोर्गमनस्यातिपातकत्वात्, भगिनी-भ्रातृभार्ययोर्गमनस्यानुपातकत्वात् कथं तासां समात्वमिति वाच्यम्, स्नुषादुहित्रोर्ज्ञानाज्ञानाभ्यां गमने भगिनीभ्रातृभार्ययोर्ज्ञानाद् गमने च मरणरूपप्रायश्चित्तस्योक्तत्वात् । यद्वा, स्नुषा अनौरसपुत्रभार्या औरसपुत्रस्य असवर्णा भार्या वा, दुहिता च अनौरसी, अत एवाऽऽसां समात्व-मिति नास्ति विरोधः । तथाच गौतमः—"सखिसयोनिसगोत्रशिष्यभार्यास्नुषासु गवि चैव गुरुतल्पसम इति । सयोनिः सोदरभगिनी । तथाच सवर्त्तः—

पितृव्यदारगमने भ्रातृभार्यागमे तथा ।
गुरुतल्पव्रतं कुर्यान्नान्या निष्कृतिरुच्यते ॥" इति ।

रमते रन्तुं गच्छतीत्यर्थः । यद्वा प्राप्येत्यध्याहार्यम् । विमूढधी विपरीतबुद्धिरित्यर्थः ।

---

९१ । अत्राऽऽह वाल्मीकि —

अधार्यं चर्म मे सद्भिः करिष्यसि किमस्थिभिः ।
अभक्ष्यं चैव मे मांसं त्वादृशैर्ब्रह्मचारिभिः ॥
पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेषु राघव ।
शशकः शल्लकी गोधा खड्ग कूर्मश्च पञ्चमः ॥
अभक्ष्याणि च पञ्चैव यानि राम श्रुतानि मे ।
शृगालश्चैव नक्रश्च वानरः किन्नरो नरः ॥
चर्म चास्थि च मे राम न स्पृशन्ति मनीषिणः ।
भक्ष्यं नैव च मे मांसं सद्भिः पञ्चनखो ह्यहम् ॥ इत्यादि । ४।१६।३१-३४ ।

९२ । इत्येवं बहुभाषन्तमसम्बद्धं प्रलपन्तमित्यर्थः । अधर्मेति । सद्धर्मरक्षणाद्धत्वा-दधर्मकारिवधस्य न दोषत्वमिति भावः । रा० ।

वालिनं प्रति रामवाक्यं वाल्मीकीये—किष्किन्ध्याकाण्डीय-सप्तदशसर्गे ।

९३ । अधर्मकारित्वं वालिनः समर्थयते—दुहितेत्यादि । भ्रातुः कनिष्ठस्येति

---

1 ग-च छ 'सम' ।

त्वन्तु भ्रातुः कनिष्ठस्य भार्यायां रमसे बलात् ।
अतो मया धर्मविदा हतोऽसि वनगोचर ॥ ५४ ॥

त्वं कपित्वान्न जानीषे महान्तो विचरन्ति [1]यत् ।
लोकं पुनानाः सञ्चारैरतस्तान् [2]नातिभाषयेत् ॥ ५५ ॥

तच्छ्रुत्वा भय[3]संविग्नो ज्ञात्वा रामं रमापतिम् ।
वाली प्रणम्य रभसा[4]द्रामं वचनमब्रवीत् ॥ ५६ ॥

राम राम महाभाग जाने त्वां परमेश्वरम् ।
अजानता मया किञ्चिदुक्तं तत् क्षन्तुमर्हसि ॥ ५७ ॥

साक्षात्त्वच्छरघातेन विशेषेण तवाग्रतः ।
त्यजाम्यसून् महायो[5]गिदुर्लभं तव दर्शनम् ॥ ५८ ॥

---

शेषः । एताः सर्वाः समास्तुल्याः । तासां मध्ये यो विमूढधीरपि एकां रमते स पातकी ज्ञेयः । विमूढधीरपीत्यनेन अज्ञानान्न दोष इति परिहृतम् । ईदृशार्थस्य अज्ञानात् करणेऽपि महानेव दोषः । अत एव तस्य वधपर्यन्तो दण्ड इत्याह—स वध्य इति । रा० ।

५४ । ननु मनुष्याधिकारिकि शास्त्रं न तु तिर्यगादिविषयम्, अतस्तिरश्चामस्माकं कोऽत्र दोष इति चेत् शृणु । तिरश्चामनधिकारो हि अज्ञानकृत, तच्चाज्ञान न तव, बाल्यादिषु स्वयं प्रतिभातवेदत्वाद् देवांशत्वाच्च । एवञ्च कर्तव्याकर्तव्यज्ञानवतामकर्तव्यकरणदोषो भवत्येव, अत एव इन्द्रादीनामहल्याद्यतिक्रमगादौ दोषश्रुतिः सङ्गच्छते । देवानां यज्ञाद्यनधिकारस्तु यजनीय-देवतान्तराभावात् । अत एव ब्रह्मविद्यायामिन्द्रादीनामप्यधिकारः श्रुतिषु श्रूयते, इत्येषोऽत्र भगवतोऽभिप्रायः । रा० ।

५५ । किञ्च, मन्निन्दया दोषान्तरभागपि त्वं जायसे इत्याह—त्वं कपित्वादिति । सञ्चारैर्लोकं पुनाना महान्तो विचरन्ति यत् यतः, अतस्तान्नातिभाषयेत् न निन्देत् । त्वन्तु एवं सञ्चरन्तीति न जानीषे इत्यन्वयः । विचरन्ति हीति पाठान्तरम् । एवञ्च त्वादृशपवित्री-करणार्थ एवायं मम सञ्चार इति ध्वनितम् । रा० ।

५७ । इदानीं त्वां परमेश्वरमिति जाने । अजानता पूर्वमिति शेषः ।

५८ । तवाग्रत इति त्वत्स्वरूपज्ञानपूर्वक तवाग्रत इत्यर्थः । तव दर्शनं त्वत्-स्वरूपज्ञानं महायोगिनामपि दुर्लभम् ।

---

1. ग ङ-छ 'हि' । 2 ग 'नाभिभाषसे', ङ-च-छ 'नाभिभाषये' । 3 क-ख-घ '-सन्त्रस्तो' । 4. ङ-च छ '-त्सा रा-' । 5 ङ '-गिन् दु-' ।

यन्नाम विवशो गृह्णन् म्रियमाणः परं पदम् ।
याति साक्षात् स [1]एवाद्य मुमूर्षोर्मे पुरः स्थितः ॥ ५९ ॥
[2]दैवं जानामि पुरुषं त्वां श्रियं जानकीं शुभाम् ।
रावणस्य वधार्थाय [3]जातं त्वां ब्रह्मणाऽर्थितम् ॥ ६० ॥
अनुजानीहि मां [4]राम यान्त त्वत्पदमुत्तमम् ।
मम तुल्य[5]बले बाले अङ्गदे त्व दयां कुरु ।
विशल्यं कुरु मे राम हृदय पाणिना [6]स्पृशन् ॥ ६१ ॥
तथेति बाणमुद्धृत्य रामः पस्पर्श पाणिना ।
त्यक्त्वा [7]तद्वानर [8]देहममरेन्द्रोऽभवत् क्षणात् ॥ ६२ ॥

---

६० । नरो० । दैव देवसम्बन्धिनम् । श्रिय लक्ष्मीम् ।

६१ । नरो० । विशल्यमिति । 'वा पुंसि शल्यं शङ्कुर्ना' इत्यमरः ।

---

५९ । विवश पुत्रादिममताक्रान्तोऽपि, साक्षात् त्वां पश्यतो म्रियमाणस्य परमपद-प्राप्तिरिति किं वक्तव्यमित्यर्थः । रा० ।

६१ । अत्र केवलमङ्गदमुद्दिश्य वालिनः प्रार्थना , वाल्मीकीये पुनः—

सुग्रीवमङ्गदञ्चैव ताराञ्चैव सुदु खिताम् ।
भवान् परिग्रहैः प्राप्तैर्यथावदनुपश्यतु ॥ ४ १६।९२ ।

इत्यादिना अङ्गदतारासुग्रीवप्रभृतीनुद्दिश्यैव सा ।

सुग्रीवे चाङ्गदे चैव विधत्स्व यदनन्तरम् ।
त्वं हि शास्ता च गोप्ता च भूतानां रघुनन्दन ।
या ते नरपते वृत्तिर्भरते लक्ष्मणे तथा ।
सुग्रीवाङ्गदयोश्चापि तां त्वं वर्त्तितुमर्हसि ।
मद्दोषकृतदोषाञ्च तथा तारां तपस्विनीम् ।
नावमन्येत सुग्रीवस्तथा त्व कर्त्तुमर्हसि ॥ ४।१७।९१-९३ ।

इत्यादिनाऽपि तानेवोद्दिश्य प्रार्थना दृश्यते ।

६२ । अमरेन्द्रोऽभवत् तदंशत्वात् तत्रैव लयमापेत्यर्थः । रा० ।

---

1. च 'एवाद्य' । 2 क-ख-ग-घ-छ 'दैव', च 'दैव' । 3 च 'जातस्त्व ब्रह्मणाऽर्थितः' । 4. च 'ग्राम्स त्वत्पादाम्बुजमुत्तमम्' । 5 ग-छ '-बलो बालो ह्यङ्गदस्त्व', च '-बलो बालो ह्यङ्गदस्त' । 6. च 'स्पृश' । 7. च 'त वान-' । 8. च 'देह सोऽभवद्रामवत्' ।

वाली रघूत्तमशराभिहतो [1]विमृष्टो
रामेण शीतलकरेण सुखा[2]करेण ।
सद्यो विमुच्य कपिदेह[3]मनन्यलभ्यं
प्राप्तः [4]पदं परमहंसगणैर्दुरापम् ॥ ६३ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्ध्याकाण्डे
द्वितीयोऽध्यायः ॥ २ ॥

---

६३ । नरो० । परमहंसगणैर्विवेकिसमूहैः ।

[ किष्किन्ध्याकाण्डे द्वितीयाध्यायव्याख्या समाप्ता ॥ २ ॥ ]

---

1. ङ च 'विसृ-' 2. च '-वहेन' । 3 क-ख-घ '-मवश्य-' । 4. क-ख-घ 'परं' ।

# तृतीयोऽध्यायः

——०——

[1]श्रीमहादेव उवाच—

निहते वालिनि रणे रामेण परमात्मना ।
दुद्रुवुर्वानराः सर्वे किष्किन्ध्यां भयविह्वलाः ॥ १ ॥
तारामूचुर्महाभागे हतो वाली रणाजिरे ।
अङ्गदं परिरक्षाद्य मन्त्रिणः परि[2]णोदय ॥ २ ॥
चतुर्द्वार[3]कपाटादीन् बद्ध्वा रक्षामहे पुरीम् ।
वानराणां[4]न्तु राजानमङ्गदं कुरु [5]भामिनि ॥ ३ ॥
निहतं वालिनं श्रुत्वा तारा शोकविमूर्च्छिता ।
अताडयत् स्वपाणिभ्यां शिरो वक्षश्च भूरिशः ॥ ४ ॥
किमङ्गदेन राज्येन नगरेण धनेन वा ।
इदानीमेव [6]निधनं यास्यामि पतिना सह ॥ ५ ॥

---

२ । नरो० । रणाजिरे रणाङ्गने ।

३ । नरो० । चतुर्द्वारकपाटादीनिति आदिपदेन अर्गलादेः परिग्रहः ।

---

१ । रणे वालिसुग्रीवयोरित्यर्थः ।

२ । परिणोदय नगरादिरक्षार्थमिति शेषः । रा० ।

तारामूचुस्ते वानरा इति शेषः । एतेन राजानं वालिनं तत्सुतमङ्गदं प्रति च वानराणाम् अनुरागातिशयं ध्वनितम् ।

३ । चतुर्द्वारकपाटादीनिति । आदिना सूक्ष्मानेकद्वारकपाटपरिखादिसंग्रहः । रा० ।

६ । निधनं यास्यामि वह्निप्रवेशेनेति शेषः । रा० ।

पतिना सहेति एकचितायामित्यर्थः । पत्या सममेकचितारोहणेन तद्वियोगजं दुःखादिकं नङ्क्ष्यति पातिव्रत्यञ्च मेऽव्याहतं स्थास्यतीति तथाऽहं करिष्यामीत्याशयः । अत्र वाल्मीकिः—

पुत्रेण मम किं कार्यं किं राज्येन किमात्मना ।
कपिसिंहे महाभागे विनष्टे मम भर्त्तरि ॥

---

1 क-ख-ङ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2 ग ङ-च छ '-चोदय' । 3 ङ-च '-द्वारि क-' । 4. ग '-णाञ्च' । 5 च 'मानिनि' । 6 ङ 'यास्यामि निधनं' ।

इत्युक्त्वा त्वरिता तत्र [1]रुदन्ती मुक्तमूर्द्धजा।
ययौ ताराऽतिशोकार्त्ता यत्र [2]भर्त्तृकलेवरम् ॥ ६ ॥
पतितं वालिनं दृष्ट्वा रक्तैः पांशुभिरावृतम्।
[3]रुदन्ती नाथ नाथेति पतिता तस्य पादयोः[4] ॥ ७ ॥
करुणं विलपन्ती सा ददर्श रघुनन्दनम्।
राम मां जहि बाणेन येन वाली हतस्त्वया ॥ ८ ॥
गच्छामि पतिसालोक्यं पतिर्मामभिकाङ्क्षते।
स्वर्गेऽपि न सुखं तस्य मां विना रघुनन्दन ॥ ९ ॥

---

६। नरो०। कलेवरं शरीरम्।

---

पादमूलं गमिष्यामि तस्यैव विदितात्मनः।
एवमुक्त्वा प्रदुद्राव रुदती शोकलालसा ॥ इति। ४।१८।१८-१९।

७। वालिन पतितं रामशरेण निहतमित्यर्थ.। दृष्ट्वा सा तारेति शेष.। रक्तै शराघातोत्थशोणितैः। पांशुभिर्धूलिबहुलपर्वतमध्यस्थत्वेन वायुताडितपर्वतीयधूलिभिरित्यर्थ.।

८। येनेति। येन बाणेन वाली हतस्तेन बाणेन मां जहि। वालिशरीरस्पृष्टतया सतत्स्पर्शस्य मत्सुखावहत्वादिति भाव.। रा०।

सा करुणं विलपन्ती रघुनन्दनं ददर्श, दृष्ट्वा च हे राम, येन बाणेन त्वया वाली हतस्तेन मां जहि इति उवाच इत्यन्वय.। अत्र रामं प्रति तारावाक्यम्, वाल्मीकीये सुग्रीवं प्रति। तथाच—

साधु मामपि सुग्रीव परित्याजय जीवितम्।
धिङ् मे सत्पतिहीनाया' कृपणं जीवितं स्त्रियाः ॥
हतैवाहं त्वया पूर्वं निघ्नता दयितं मम।
परं हि मरणं स्त्रीणां लोके पतिवधेन तु ॥ इति ।४।१९।३५-३६।

९। पतिसालोक्यं पत्युः समानलोकम्। कुतस्तत्र ते गमनवाञ्छा इत्याह—पतिर्मामभिकाङ्क्षते इति। अभिकाङ्क्षते वाञ्छति मत्सान्निध्यमिच्छतीत्यर्थ.। कुतस्त्वामभिकाङ्क्षते इत्याह—स्वर्गेऽपीति। एतेन तारायां कपिराजस्य वालिनः सुमहाननुराग आसीदिति ध्वनितम्।

---

1 घ-ङ 'रुदती'। 2. ग-ङ-छ 'भर्त्तु क॰'। 3. का-ख-घ 'रुदती'। 4. अत: परं ङ-पुस्तके 'त्वयि पञ्चत्वमापन्ने महावानरयूथपे। वज्रसारमयं नूनं हृदयं मे कपीश्वर॥ यत्त्वां दृष्ट्वा हतं भूमौ न विदीर्येत् सहस्रधा।' इत्यधिकम्।

पत्नीवियोगजं दुःखमनुभूतं त्वयाऽनघ ।
वालिने मां प्रयच्छाऽऽशु पत्नीदानफलं [1]भवेत् ॥ १० ॥
सुग्रीव त्वं सुखं [2]राज्यं दापितं वालिघातिना ।
रामेण रुमया सार्द्धं भुङ्क्ष्व सापत्नवर्जितम् ॥ ११ ॥
इत्येव विलपन्तीं तां [3]तारां रामो महामनाः ।
सान्त्वयामास दयया तत्त्वज्ञानोपदेशतः ॥ १२ ॥

श्रीराम उवाच—

किं भीरु शोचसि व्यर्थं शोक[4]स्याविषयं पतिम् ।
पतिस्तवायं देहो वा जीवो वा वद तत्त्वतः ॥ १३ ॥
पञ्चात्मको जडो देहस्त्वङ्मांसरुधिरास्थिमान् ।
कालकर्मगुणोत्पन्नः [5]सोऽप्यास्तेऽद्यापि ते पुरः ॥ १४ ॥

---

११ । नरो० । सपत्नः शत्रुः स एव सापत्नः, तेन वर्जितः सापत्नवर्जितः निष्कण्टकमित्यर्थः ।

१४ । नरो० । पञ्चात्मक इति, पञ्चीकृते आकाशादिपञ्चभूतात्मके इत्यर्थः । अयं देहो न शोकस्याऽऽलम्बनं प्रत्युत बीभत्सरसस्येत्याशयेनाऽऽह—त्वङ्मांसरुधिरास्थिमानिति । पुनर्न भविष्यतीति शोक इति चेत्तत्राऽऽह—कालकर्मगुणोत्पन्न इति । कर्म प्राक्तनम्, कर्मगुणाः सत्त्वरजस्तमांसि, तथाच सत्त्वप्रधानं देवशरीरम्, रजःप्रधानं मनुष्यशरीर[म्, तमःप्रधानं तिर्यगादिशरीरम् ?] इति । यद्वा गुणाः शब्दादयः । अस्मिन् मते शब्दादाकाशः,

---

१० । पत्नीदानफलमिति । तेन धर्मेण तवाऽपि पत्नीलाभो भविष्यतीति भावः । रा० ।

यतः पत्नीवियोगजं दुःखं त्वया अनुभूतम् अतस्तादृशासहनीयदुःखप्रदाने कथमपि ते प्रवृत्तिर्न भविष्यतीति मत्वाह—वालिने इति ।

११ । वालिघातिना रामेण दापितं वालिनेति शेषः । वालिनो दातृत्वञ्च मरणेन स्वत्वत्यागमात्रेणेति बोध्यम् । रा० ।

रुमया स्वभार्यया सार्द्धम् । एतेन रुमायाः सुसमयः स्वस्याश्च दुःसमयः समागत इति ध्वनितम् ।

१३ । [ पतिस्तवायमिति । अयं पुरोवर्त्ती देहः किं तव पतिः, जीवो वा पतिस्तव तत्त्वतो निश्चित्य वद । गो० ]

१४ । देहजीवयोः पतित्वं विकल्प्य नाद्य इत्याह—पञ्चात्मक इति । पञ्चभूतात्मक इत्यर्थः । इदं जडत्वोपपादकम् । त्वङ्मांसेत्यादिना अत्यन्तबीभत्सत्वं दर्शितम् । कालेन

---

1 ङ-च 'लभेत्' । 2. च 'राज्यमर्पितं' । 3 च 'दृष्ट्वा' । 4. च '-स्य विषयः कृतः' । 5 च 'सोऽप्ययमास्तेऽपि' ।

मन्यसे जीवमात्मानं जीवस्तर्हि [1]निरामयः ।
न जायते न म्रियते न तिष्ठति न गच्छति ।
न स्त्री पुमान् [2]वा षण्डो वा जीवः [3]सत्यगतोऽव्ययः ॥ १५ ॥
एक एवाद्वितीयोऽयमाकाशवदलेपकः ।
[4]नित्यो ज्ञानमयः शुद्धः स कथं शोकमर्हति ॥ १६ ॥

---

स्पर्शाद्वायु॰, रूपात्तेज॰, रसाज्जलम्, गन्धात् पृथिवी, एभ्य॰ पञ्चभूतेभ्यः शरीरं जायते इति शरीरोत्पत्तिक्रम॰। इदानीं नास्तीति शोक इति चेत्तत्राऽऽह—सोऽप्यास्तेऽद्यापि ते पुर इति ।

१५ । नरो० । मन्यसे जीवमात्मानमिति । जीवं पतिं मन्यसे इत्यन्वय॰ । निरामयः निरुपद्रवः शान्त इति यावत् । यस्य जन्ममरणे सम्भवतस्तस्यैव शोच्यत्वं जीवस्य तु जन्ममरणे दूरे तिष्ठताम्, अन्यदपि किञ्चिन्नास्तीत्याह—न जायते इत्यादिपद्येन । अत्र हेतुः—सत्यगतोऽव्यय इति । सत्यगत सत्यस्वरूप प्राप्त , अव्ययोऽपक्षयशून्य इत्यर्थ ।

१६ । नरो० । इदानीं जीवस्य स्वरूपं दर्शयन्नशोच्यत्वमुपसंहरति—एक इति

---

कर्मभिर्गुणैः सत्त्वादिभिश्चोत्पन्न इत्यनेन नश्वरत्वम् , एव च तत्रात्यन्तं प्रीत्ययोग्ये का ते पतिबुद्धिरित्यर्थ॰ । अथाप्येव बुद्धिरेव ते तर्हि सोऽस्त्येवेति व्यर्थ॰ शोक इत्यर्थ । रा० ।

१५ । नान्त्य इत्याह—मन्यसे इति । निरामयो नाशादिरहितः । तथाह—न जायते इत्यादि । रा० ।

[ तत्राऽऽद्ये दोषमाह—पञ्चात्मक इति । पञ्च पृथिव्यप्तेजोवाय्वाकाशानि आत्मा स्वरूपं यस्य । अतो देहो जडः, अचेतनजडकारणत्वात् । तत्रापि कान्तबुद्ध्यपाकरणायाऽऽह—त्वगित्यादि । एतेनातिबीभत्स इत्यर्थः । जन्यत्वादवश्यं नाशधर्मित्वमाह—कालेति । काल उद्बोधक॰, कर्म जन्यम्, गुणा उपादानम्, तैरुत्पन्न॰ । अतो जन्यत्वात्तन्नाशे दुःखं परिहर । सोऽपि न नष्ट॰ पुर स्थितत्वादित्याह—सोऽपि देह॰ अद्यापि इदानीमपि तव पुरः सम्मुख एव आस्ते तत् कथं शोचसीत्यर्थ । गो० ]

[ मन्यसे जीवमात्मानमिति । द्वितीयपक्षेऽपि शोकावकाशाभाव इत्याह—जीव इत्यादि । यदि जीवस्तर्हि स निरामय एव नित्यत्वात् चिद्रूपत्वाच्च, कुतः शोकविषयः । निरामयत्वे हेतुमाह—न जायते इत्यादि । जीवो न जायते नित्यत्वात्, अत एव न म्रियते, न तिष्ठति न गच्छतीति निष्क्रियत्वात्, अपरिच्छेद्यत्वेन गन्तव्यदेशाभावाच्च । गो० ]

१६ । सर्वगतश्चेतनो जीव एक एव, अद्वितीय इति द्वितीयसम्बन्धरहितः । तदेवाऽऽह—

---

1. च-टि 'निराश्रय.' । 2. ग 'न' । 3 क-ख-ग घ-ङ-च छ 'सर्द-' । 4 ङ 'नित्यज्ञा-' ।

तारोवाच—

[1]देहोऽचित् काष्ठवद्राम जीवो नित्यश्चिदात्मक ।
सुखदुःखादिसम्बन्धः कस्य स्याद्राम मे वद ॥ १७ ॥

श्रीराम उवाच—

अहङ्कारादि[2]सम्बन्धो यावद्देहेन्द्रियैः सह ।
संसारस्तावदेव स्यादात्मन[3]स्त्वविवेकिन ॥ १८ ॥

---

पद्येन । एक. केवल , निर्द्धर्मक इति यावत् । आकाशवदलेपक इति । सर्वसयोग्यप्याकाशो यथा कस्यापि धर्मं न गृह्णाति तथाऽन्त.करणाद्युपाधिसम्बन्धविशिष्टोऽप्यय न कस्यापि धर्मं गृह्णातीत्यर्थ । ज्ञानमयो ज्ञानस्वरूप , अतोऽलेपक', अत एव च शुद्धो रागादिदोषरहित. ।

१७ । नरो० । चित् आत्मा स्वरूपं यस्य स तथा ।

१८ । नरो० । अहङ्कारादिसम्बन्ध इति । अहङ्कारोऽन्त करणम्, आदिपदेन मन'-

---

आकाशवदलेपक इति । अलिप्त इत्यर्थ. । मायागुणैरिति शेष. । स कथमिति अविनाशित्वादिति भावः । रा० ।

[ स्त्रिया पतिर्हि पुमानेव भवति, न तु स्त्री । अयं न पुमान् , न षण्ड', न क्लीबोऽपि ज्योतिर्मयत्वात्, चिन्मयत्वाच्च । सर्वगत इति सर्वैरङ्गीकृत । अव्ययोऽपक्षयरहित. । किञ्च मिथुनीभावस्तावद् द्वैते सति भवति, स तु न तथेत्याह—एक एवेत्यादि । एको विजातीयभेदरहितः, अद्वितीय सजातीयभेदविहीन । किञ्च असङ्गत्वादपि जीवस्य पतित्वासम्भव इत्याह—आकाशवदिति । अलेपकोऽसङ्ग' 'असङ्गो ह्यय पुरुष ' ( बृह० ४।३।१५ ) इति श्रुते. । यथाकाशः सर्वगतोऽपि क्वचिन्न लिप्यते तथा । नित्योऽविनाशी 'अविनाशी वा अरेऽयमात्मा' (बृह० ४।५।१४) इति श्रुते. । ज्ञानमयो ज्ञानस्वरूपः, कथ शोकमर्हति शोकाविषयत्वात् । गो० ]

१७ । देह. काष्ठवदचित् अचेतन इत्यर्थ । जीवश्चिदात्मको ज्ञानस्वरूप एव न तु सुखादिपरिणामवान् । एवं सति सुखादिसंबन्ध. कस्य स्यात् ? अचेतनत्वान्न स्थूलस्य, सूक्ष्मस्य , नाप्यपरिणामित्वादात्मन इत्यर्थ. । रा० ।

[ निर्द्धारितमपि तत्त्वं सशयविपरीतसम्भावनाभ्यामनिर्द्धारितमेव भवतीति सन्देहात् पृच्छति—देहश्चेदित्यादि । काष्ठवदचेतनत्वात् , जीवस्तु नित्यो नाशादिशून्यश्चिदात्मकश्चिद्रूप., अतो देहस्याचेतनत्वाज्जीवस्य नि.सङ्गत्वाद् दृश्यमानो दु खादिसम्बन्ध. कस्य स्यात् उभयस्यानुपपन्नत्वात् हे राम, मे मम वद । वाक्यभेदात् सम्बोधनावृत्ति. । गो० ]

१८ । उत्तरयति—अहङ्कारादीति । देहेन्द्रियै. सह तेषु इत्यर्थः । अहङ्कारादि-

---

1. ग-ङ-च छ 'देहश्चेत' । 2. च '-सरोधो' । 3 ङ '-श्वावि-' ।

मिथ्यारोपितसंसारो न स्वयं विनिवर्त्तते ।
[1]विषयान् ध्यायमानस्य [2]स्वप्ने मिथ्यागमो यथा ॥ १९ ॥
अनाद्यविद्यासम्बन्धात् तत्कार्याहङ्कृतेस्तथा ।
संसारोऽपार्थकोऽपि स्याद्रागद्वेषादिसङ्कुलः ॥ २० ॥

---

प्राणयोर्ग्रहणम् । संसारः सुखदुःखादिः, आत्मनो जीवस्य । अविवेकिनः इदङ्कारास्पदेभ्यो देहेन्द्रियमनोभ्यः अहङ्कारास्पदस्याऽऽत्मनः पृथक्त्वेनाज्ञानिनः ।

१९ । नरो० । मिथ्या मिथ्याज्ञानेन आरोपितः मिथ्यारोपितः, स चासौ संसारश्चेति स तथा । न स्वयं विनिवर्त्तते इति तत्त्वज्ञानं विना न निवर्त्तते इत्यर्थः । दृष्टान्तमाह—विषयानित्यादि । मिथ्यागमो मिथ्याप्राप्तिः ।

२० । नरो० । संसारः कर्मणो जायते इत्यपेक्षायामाह—अनाद्यविद्यासम्बन्धात् तत्कार्याहङ्कृतेस्तथेति । अनादिर्या अविद्या तस्या यः सम्बन्धस्तस्माद्धेतोर्या तत्कार्याऽविद्याकार्या

---

संबन्धः अहं ममेत्येवंबुद्धिविषयता इत्यर्थः । प्रायः स्थूलसूक्ष्मदेहयोरुभयोरप्यहंबुद्धिरेव, केषाञ्चित्तु स्थूलदेहे पुत्रादौ च ममताबुद्धिः सूक्ष्मे तु सर्वेषामहंबुद्धिरेवेति विवेकः । तावदेवाविवेकिनोऽन्तःकरणादिभ्यः स्वस्मिन् विवेकाग्रहवत आत्मनः संसारः स्यादित्यर्थः । रा० ।

[ अङ्गीकृत्याऽऽत्मनोऽविद्ययाऽन्याध्यासेनैव सुखदुःखादिसम्बन्धो न वास्तव इति सिद्धान्तयति—अहङ्कारेणेत्यादि । यावदात्मनो जीवस्य अहङ्कारेण अहमित्यभिमानेन देहेन्द्रियैः सह सम्बन्धस्तावदेवाविवेकिनः स्वरूपज्ञानहीनस्य जीवस्य पुनः पुनर्जन्ममरणादिप्रवाहः । गो० ]

१९ । एवं शुद्धात्मनोऽन्याविवेकादारोपितः संसारः स्वत एव न विनिवर्त्तते, यथा स्वप्नस्य मिथ्यागमः स्वप्नमिथ्यापदार्थदर्शनं न स्वतो निवर्त्तते, किन्तु जाग्रदवस्थयैव तद्वदिति भावः । रा० ।

[ ननु यदि वास्तवो न तर्हि किं न बुद्बुदवत् स्वयं निवर्तते तत्राऽऽह—मिथ्येत्यादि । मिथ्यैव वास्तवं विनाऽपि आत्मनि आरोपितः स्वीकृतः संसारः स्वयं गुरूपासनतत्त्वज्ञानं विना न निवर्त्तते, यतो विषयान् कामान् ध्यायमानस्य । तत्र दृष्टान्तः—यथा स्वप्ने मिथ्यागमः मिथ्याभूतस्वापस्थितनानाभयशोकहर्षहेतुवस्तूनाम् आगमः समागमः निद्राविच्छेदं विना न निवर्तते, तथेत्यर्थः । गो० ]

२० । तत्र स्वप्नस्य विषयध्यानवत् संसारस्य मूलकारणमाह—अनादीति । अविद्या अनात्मनि आत्मबुद्धिर्माया वा, अयथार्थकोऽत्यन्तमिथ्याभूतः । रा० ।

---

1. ग 'विषय' । 2 ङ 'स्वप्ने नार्था-' ।

मन एव हि संसारो बन्धश्चैव मनः शुभे ।
आत्मा मनःसमानत्वमेत्य [1]तद्गतबन्धभाक् ॥ २१ ॥
यथा विशु[2]द्ध स्फटिको [3]बन्धूकादिसमी[4]पग ।
तत्तद्वर्ण[5]युतो भाति वस्तुतो नास्ति [6]रञ्जना ।
बुद्धीन्द्रियादिसामीप्यादात्मन संसृतिर्बलात् ॥ २२ ॥

---

अहङ्कृतिस्तस्या । अहङ्कृतेरिति इन्द्रियादिषु अहमिति मिथ्याभिनिवेशस्तस्या इत्यर्थ । संसारो देहेन्द्रियादि, अपार्थको निरर्थक इत्यर्थ । रागद्वेषादिसङ्कुल इति । आदिपदेन मात्सर्यासूयादे परिग्रह ।

२१ । नरो० । मरणसमये नियतिप्रयुक्तं सत् मनो यद् यन्मनुष्यादिशरीरं प्रति धावति, तत्राभिनिवेशेन यत् प्राप्नोति तदेव जीव प्राप्नोति इत्यभिप्रेत्याऽऽह—मन एव हीत्यादि । बन्धोऽन्तःकरणाद्युपाधिसम्बन्ध । कार्यकारणयोरभेदमङ्गीकृत्य एतदुक्तिरिति नास्ति विरोध । मन समानत्वमिति, मनसा समानमेकशरीरं यस्य तस्य भावमित्यर्थ ।

२२ । नरो० । आत्मन परमार्थत संसारो नास्तीति सदृष्टान्तमाह—यथेति सार्द्धेन ।

---

[ ननु चैतन्यमयस्य जीवस्य कथमहङ्कारसम्बन्धो घटताम्, तत्राऽऽह—अनाद्यविद्येत्यादि । अनादिर्या अविद्या तत्सम्बन्धात् तया संश्लेषात् । अतोऽविद्यासंश्लेषादेवाहङ्कारसम्बन्धः । कर्मरूपा अविद्याकर्मरूपा अहङ्कृतिरहङ्कार, कारणत्वे कार्यस्याऽऽवश्यकत्वात् । ततो हेतो रागद्वेषादिभि समाकुलो व्याप्त अनर्थकः वस्तुतो मिथ्यारूपोऽपि संसारः पुनः पुनस्तद्रूपः स्यात् । गो० ]

२१ । मन एवेति । मनोऽत्रान्त करणम्, संसारस्तन्मूलकारणमित्यर्थ । बन्ध सुखादि-भोगस्तद्वत् मन एव, मनसा समानत्वमात्ममनसोरैक्यम् । तद्गतबन्धभाक् तद्गतबन्धयुक्तो भवतीत्यर्थ । रा० ।

[ नन्वेवं चेदहङ्कारस्यैव संसारो भवतु न पुनरसङ्गस्याऽऽत्मन इति चेन्मनसि आत्माभि-मानात्तन्मूल एवेत्याह—मन एव हीति । मन एव संसार संसारकृतो बन्ध । एव हीति निश्चयं बोधयति । आत्मा तु मनःसमानत्वं मनसा सहाभिन्नत्वम् एत्य प्राप्य तत्कृतबन्धभाग् भवति । तदुक्तम्—

मन एव मानुषस्य कारणं बन्धमोक्षयो ।
गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये ॥ इति । गो० ]

---

1 ग-ड-च-छ 'ततक्षन-' । 2 ङ-छ '-द्धस्फ-' । 3 क ख-घ 'ऽलक्तकादि-', च 'रक्ता-दीना' । 4 क-ख घ '-पत' । 5 ख '-युता भान्ति ?', घ '-युगाभाति' । 6 क ख-घ 'रञ्जनम्' ।

आत्मा [1]स्वलिङ्गन्तु मनः परिगृह्य [2]तदुद्भवान् ।
कामान् जुषन् गुणैर्बद्ध' ससारे वर्त्ततेऽवशः ॥ २३ ॥
आदौ मनोगुणान् [3]सृष्ट्वा तत' कर्माण्यनेकधा ।
शुक्ललोहितकृ[4]ष्णानि गतयस्तत्समा[5]नजा' ।
एवं कर्मवशाज्जीवो भ्रम[6]त्याभूतसंप्लवम् ॥ २४ ॥

विशुद्धश्चासौ स्फटिकश्चेति स तथा, विशुद्धो मलिनत्वादिदोषरहित । बन्धूकादिसमीपग इति, बन्धूको 'बाँधुली' इति ख्यात । आदिपदेन जवापुष्पादे परिग्रह· । बुद्धीन्द्रियादीति, आदिपदेन मन-आदे· परिग्रह· ।

२३ । नरो० । ननु स्वतन्त्रो जीवः कथ बुद्धीन्द्रियादिसामीप्यादेव संसारे वर्तते इत्यत आह—आत्मेत्यादि । स्वलिङ्गमिति स्वस्य चिह्नम् अभिव्यञ्जकमित्यर्थ· । मनोऽन्त·करणम् । जुषन् सेवमान· । गुणै सत्त्वादिभि । संसारे शरीरे ।

२४ । नरो० । आदौ मनोगुणान् सत्त्वादीन् सृष्ट्वा तत शुक्ललोहितकृष्णानि अनेकधा कर्माणि सृजतीति सम्बन्धः । तत्समाना जायन्ते इति तत्समानजाः । मध्यगतिर्लोहित-कर्मजा, अधोगति' कृष्णकर्मजा । उपसंहरति—एवमित्यादि । आभूतसंप्लवं भूतलयं यावदित्यर्थ· ।

२२ । [ नन्वन्यस्य कृतो दोषः कथमन्यस्मिन् फलतु इत्यत्र दृष्टान्तमाह—यथेति । यथा स्फटिक स्वभावतो विशुद्ध शुद्धस्वभावरूप' बन्धूकपुष्पादिसमीपस्थस्तु तत्तद्वर्णयुक्तः रक्त-नीलादिवर्णयुक्त' सन् भाति अतो वस्तुतो रञ्जनात् तत्तद्वर्णके स्फटिकस्य लेपोऽस्ति, न, किन्तु सामीप्यमात्रम् । एव मन·सामीप्ये भोगसामीप्ये भोगरहितोऽप्यात्मा बध्यते । दार्ष्टान्तिकेऽपि स्फुटयति—बुद्धीत्यादि । बुद्धीन्द्रियाणां सामीप्यात् आत्मनो बलात् पारवश्यात् संसृतिः संसार· । गो० ]

बुद्धीति । यथाऽलक्तकादिसामीप्यात् स्फटिकस्य रक्तत्वादिव्यवहार·, एवं संसारधर्मक-बुद्धीन्द्रियादिसामीप्यादात्मनो बलादवशत· ससारव्यवहारो लोके' क्रियत इत्यर्थः । रा० ।

२३-२४ । तदेवाऽऽह—आत्मेति । मनसो जडत्वेन ज्ञानादिजनकत्वासम्भवात् चेतन-स्याऽऽत्मनो लिङ्गमनुमापकं मनोऽन्त करणं परिगृह्यते । नाविवेकं प्राप्य तदुद्भवान् ततो जातान् कामान् विषयान् जुषन् गुणैस्तदीय रागद्वेषादिभिर्बद्ध इवावशः संसारे वर्त्तते । विषयाणां मन-उद्भवत्वं दर्शयति—आदाविति । गुणान् रागद्वेषादीन् । ततो रागद्वेषादित· । कर्माणि सृष्टिवदिति शेषः । तत्कर्मभेदानाह—शुक्लेत्यादि । शुक्लकर्माणि हिंसादिरहितजपध्यानादि-रूपाणि, लोहितानि हिंसामिश्रफलादीनि, कृष्णानि पापकर्माणि । तत्समानत· कर्मस्वरूपतुल्या

1. च 'हि लि' । 2. ग 'तु तङ्ग-' । 3. ग-च 'दृष्ट्वा' । 4 ग '-ष्णादिग-' । 5. क-ख-घ 'मत', ग 'नता.' । 6. ग-ङ-च '-त्याहृत-' ।

[1]सर्वोपसंहृतौ जीवो वासनाभिः स्वकर्मभि ।
अनाद्यविद्यावशगस्तिष्ठत्यभिनिवेशत ॥ २५ ॥
सृष्टिकाले पुन· [2]पूर्ववासनामानसै सह ॥
जायते पुनर[3]प्येवं घटीयन्त्रमिवावशः ॥ २६ ॥

२६ । नरो० । घटीयन्त्रमिवावश इति । 'उद्‌घाटन घटीयन्त्रं सलिलोद्वाहनं प्रहेरि'-त्यमरः । प्रहेः कूपात् ।

गतयो गती· । सृष्टिवदिति शेष । गतय इति द्वितीयार्थे आर्षम् । तत्र शुक्लकर्मणो ब्रह्मलोक-प्राप्तिरूपोत्तमा गति , लोहितकर्मणो मध्यमा स्वर्गगति , कृष्णकर्मणोऽधमा नरकगतिरित्यर्थ· । भूतसंप्लव· प्रलयस्तावत्पर्यन्तं कर्मवशाद् भ्रमति । रा० ।

[ स आत्मा मनो लिङ्ग कारण परिगृह्य आत्मत्वेन स्वीकृत्य स्वलिङ्गं सवासनं वा मनो विलासजान् कामान् भोगान् जुषन् सेवमान· गुणैरिन्द्रियादिभिर्बद्ध· अवशः सन् ससारे वर्त्तते । मनस· संसारक्रमं वदन् जीवस्य तदध्यासेन संसारक्रममाह—आदाविति । आदौ मनः कर्त्तृ गुणान् विषयेन्द्रियादीन् सृष्ट्वा तदनुगतं भूत्वा ततोऽनेकधा नानारूपाणि कर्माणि कृत्वा तत्समानजा· कर्मानुरूपा जायन्ते, तत्समानजा शुक्ललोहितकृष्णादिगतय· । सात्त्विक-राजसतामसगतीर्देवमनुष्यतिर्यक्त्वादियोनी· कर्मवशाद् भ्रमति । एव जीवोऽपि मनोऽभिनिवेशेन आहूतसंप्लवं भूतप्रलयपर्यन्तम् । भकारस्य हकारश्छान्दस· । गो० । ]

२५ । सर्वोपसंहृतौ प्रलये वासनाभि· कर्मभिश्च सहाभिनिवेशतोऽन्त·करणादितादात्म्या-ध्यासात् अन्त करणादिप्रकृतिभूतानाद्यविद्यावशगस्तल्लीन सस्तिष्ठति । रा० ।

[ प्रलये जीवावस्थितिमाह—सर्वेत्यादि । सर्वमिन्द्रियादि उपसहृत विलीनं यस्य स· । कर्मभि· कर्मसहिताभिर्वासनाभि सह अनाद्यविद्यावशग· सन् सूक्ष्माभिनिवेशेन हेतुना तिष्ठति ईश्वरे लीनो न भवति । सर्वोपाधिनाशादेव मुक्तेः स्वीकृतत्वान्न मुच्यते । गो० ]

२६ । वासनाश्च मानसानि कर्माणि च तै· सह तद्युक्त एव जायते वर्षाकाले मण्डूकवत् प्रादुर्भवति । एव सृष्टिप्रलययोर्घटीयन्त्रमिव वर्त्तमानस्तिष्ठति । रा० ।

[ सृष्टेर्धारावाहिकत्वमाह—सृष्टिकाल इत्यादि । पुन सृष्टिकाले प्राप्ते सति पूर्ववासना-युक्तमानसै· सह । बहुवचनमिन्द्रियादीनामुपसंग्रहार्थम् । पुनरप्येवं कर्मानुरूपं देवतिर्यगादिरूपेण जायते । अवश· कर्माधीनत्वात् । घटीयन्त्रं कूपाज्जलोद्धरणाय गले रज्जुबद्धः कलसः, स यथा कर्त्तृवशादुन्मज्जति निमज्जति च तथेत्यर्थ । गो० ]

1 च 'सर्वोपसङ्गतौ', च-टि 'पूर्वोपमङ्गतौ' । 2 ङ 'सर्वेषा-' । 3 ग '-प्येव' ।

यदा पुण्यविशेषेण लभते सङ्गतिं सताम् ।
मद्भक्तानां सुशान्तानां तदा मद्विषया मतिः ॥ २७ ॥
मत्कथाश्रवणे श्रद्धा दुर्लभा जायते ततः ।
ततः स्वरूपविज्ञानमनायासेन जायते ॥ २८ ॥
[1]सदाचार्यप्रसादेन [2]वाक्यार्थज्ञानतः क्षणात् ।
देहेन्द्रिय[3]मनःप्राणाहङ्कृतिभ्यः पृथक् स्थितम् ॥ २९ ॥
[4]स्वात्मानु[5]भवतः सत्यमानन्दात्मान[6]मद्वयम् ।
ज्ञात्वा सद्यो भवेन्मुक्तः सत्य[7]मेव मयोदितम् ॥ ३० ॥

२७। नरो०। सतां साधूनाम् ।

२८। नरो०। स्वरूपविज्ञानं तत्त्वज्ञानम् ।

२९। नरो०। सदाचार्यप्रसादेन सद्गुर्वनुग्रहेण। वाक्यार्थज्ञानतस्तत्त्वमसीत्यादिवाक्यार्थज्ञानात् ।

३०। नरो०। स्वात्मानुभवतः स्वदेहेऽनुभवादित्यर्थः। आनन्दस्वरूप आत्मा आनन्दात्मा तम् । मुक्तो जीवन्मुक्त ।

२७। नन्वेवमस्य मुक्तिप्रत्याशैव न किं नेत्याह—यदेति। मद्विषया मति ईश्वरो महानित्येवं बुद्धिर्जायते इत्यर्थः। रा०।

[ नन्वेव कर्मणां धारावाहिकत्वात् अनिर्मोक्षः स्यादिति मोक्षहेतुमाह—यदेति। पुण्यविशेषेण प्राचीनार्जितपुण्येन सतां मद्भक्तानां सुशान्तानां जितेन्द्रियाणां सङ्गतिं संसर्गं लभते, तदा मद्विषया मत्परायणा मतिर्भवति। गो० ]

२८। तत ईश्वरविषयबुद्ध्यनन्तरम् , तत स्वरूपविज्ञानं स्वरूपं विज्ञायते अनेन, ततो विषयेषु अनित्याशुचिरूपं वैराग्यं नित्यानित्यविवेकादि च जायते इति शेषः। रा०।

[ ततोऽनन्तरं मत्कथाश्रवणे दुर्लभा अकृतपुण्यैर्दुष्प्रापा श्रद्धा जायते। तत इति, ततो मत्कथाश्रवणे श्रद्धोत्पत्तौ अनायासेन स्वरूपविज्ञानं मम सच्चिदानन्दरूपस्य ज्ञानं जायते। गो० ]

२९-३०। तदा तादृशवैराग्यादौ जाते आचार्यप्रसादेन तत्त्वमस्यादिवाक्यार्थज्ञानतः श्रवणमननरूपात् क्षणात् उत्सवात् श्रवणादिविषयोत्साहात् पुनरनुष्ठानादिति यावत् , देहादिभ्यः पृथक्स्थितं सत्यमानन्दरूपम् अद्वितीयमात्मानं स्वात्मानुभवतः स्वात्मविषयादीदृशं

---

1 क ख घ-च 'तदा-'। 2. छ 'वार्यकारणत'। 3 ग '-प्राणमनोऽहङ्कृ-'। 4 ङ 'स्वस्यानु-', छ 'श्रा'। 5 क घ च '-भावतः'। 6 ङ च 'मव्ययम्'। 7. छ '-मेव'।

एवं मयोदितं सम्यगालोचयति योऽनिशम् ।
तस्य संसारदुःखानि न स्पृशन्ति कदाचन ॥ ३१ ॥
[1]त्वमप्येतन्मया प्रोक्तमालोचय विशुद्धधीः ।
न स्पृश्यसे दुःखजालैः कर्मबन्धाद्विमोक्ष्यसे ॥ ३२ ॥
पूर्वजन्मनि ते सुभ्रु कृता मद्भक्तिरुत्तमा ।
अतस्तव विमोक्षाय रूपं मे दर्शितं शुभे ॥ ३३ ॥
ध्यात्वा मद्रूपमनिशमालोचय मयोदितम् ।
[2]प्रवाहपतितं कार्यं कुर्वत्यपि न लिप्यसे ॥ ३४ ॥

---

३१ । नरो० । संसारदुःखानि जन्ममरणजनितदुःखानीत्यर्थः ।

३२ । नरो० । दुःखजालैर्दुःखसमूहैः । कर्मरूपो बन्धः कर्मबन्धस्तस्मात् । यद्वा कर्मजनितो बन्धः कर्मबन्धः अन्तःकरणाद्युपाधिसम्बन्धस्तस्मात् ।

३४ । नरो० । प्रवाहपतितं धाराधिरूढमित्यर्थः ।

---

ब्रह्माहमेवेत्येवरूपान्निदिध्यासनाज् ज्ञात्वा अपरोक्षीकृत्य सद्यस्तत्कालमेव संसारान्मुक्तो भवेदित्यर्थः । रा० ।

[ सदाचार्यप्रसादेन वाक्यार्थस्य तत्त्वमसीत्यादिवाक्यार्थस्य ज्ञानेन क्षणात् यादृग्ज्ञानं जायते तत् कथयन् 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुत्यनुसारेणाऽऽह—देहेत्यादि । आत्मानुभावतः शुद्धात्मानुभावेन देहादिभ्यः पृथक्स्थितं सत्यम् अबाधितम् आनन्दमद्वयं द्वैतरहितम् आत्मानं ज्ञात्वा सद्यस्तत्क्षणादेव मुक्तो भवेत् । न चैतदर्थवादमात्रं किन्तु सत्यम् । कुत इत्याह—मयोदितमिति, यतो मया परमेश्वरेण उदितम् उक्तं तत इत्यर्थः । गो० ]

३१ । आलोचयति युक्त्या निर्णयति, तस्य क्रमेण ज्ञानप्राप्त्या संसारदुःखास्पर्शः । रा० ।

[ आस्तामेवं ज्ञानवार्त्ता एतदालोचनेनापि संसारदुःखनिवृत्तिर्भवतीत्याह—एवमित्यादि । अनिशं सततं सम्यक् एकचित्तः सन् य आलोचयति विचारयति पठति च तस्य संसारदुःखानि न स्पृशन्ति । गो० ]

३२ । कर्मबन्धात् कर्मकृताद् बन्धात् संसाररूपादित्यर्थः । रा० ।

३३ । मे मया रूपं दर्शितम्, स्वरूपं दर्शितमित्यर्थः । अत्र तारायै भगवता विश्वरूपदर्शनं कारितमिति ध्वनयति । यद्वा दर्शितमित्थं बोधितमित्यर्थः । रा० ।

३४ । मद्रूपं परिदृश्यमानं रूपं दर्शितम्, विश्वरूपञ्च आलोचय विचारय । प्रवाहपतितं

---

1. 'त्वमप्येवं' । 2. 'एवं मयोदितं सम्यक्' ।

श्रीरामेणोदितं सर्वं श्रुत्वा ताराऽतिविस्मिता ।
देहाभिमानजं शोकं त्यक्त्वा नत्वा [1]रघूत्तमम् ।
आत्मानुभव[2]तुष्टात्मा जीवन्मुक्ता बभूव ह ॥ ३५ ॥
[3]क्षणसङ्गममात्रेण रामेण परमात्मना ।
[4]अनादिबन्धं निर्धूय मुक्ता साऽपि विकल्मषा ॥ ३६ ॥
[5]सुग्रीवोऽपि च तच् श्रुत्वा राम[6]वक्त्रात् समीरितम् ।
जहावज्ञानमखिलं [7]स्वस्थचित्तोऽभवत् तदा ॥ ३७ ॥
[8]ततः सुग्रीवमाहेदं रामो वानरपुङ्गवम् ।
भ्रातुर्ज्येष्ठस्य पुत्रेण यद् युक्तं साम्परायिकम् ।
कुरु सर्वं यथान्याय संस्कारादि ममाऽऽज्ञया ॥ ३८ ॥
[9]तथेति बलिभिर्मुख्यैर्वानरैः परिणीय तम् ।
वालिनं पुष्पके क्षिप्त्वा सर्वराजोपचारकैः ॥ ३९ ॥

३५ । नरो० । आत्मानुभवेन तुष्ट आत्मा मनो यस्याः सा तथा ।

३८ । नरो० । वानरपुङ्गवं वानरश्रेष्ठम् ।

संसारप्रवाहपतितं कार्यं सांसारिक कार्यं कुर्वन्त्यपि तद्दोषर्न लिप्यसे इत्यर्थः । रा० ।

[ प्रवाहपतितमिति, ससारधारया पतितं प्राप्तं कार्यं गृहदेहोचितं कुर्वन्त्यपि त्वं न लिप्यसे न बध्यसे । गो० ]

३५ । देहाभिमानजं देहे अहं मम इत्याकारकाभिमानाज्जातम् । जीवन्मुक्ता तदवस्था । रा० ।

३६ । परमात्मना रामेण, सद्गुरुत्वात्, क्षणसङ्गमेनव । साऽपि तिर्यग्योनिरपि तारा अनादिबन्धं संसाररूपं निर्धूय तिरस्कृत्य विकल्मषा निष्पापा कृता मुक्ता जीवन्मुक्ता च कृता । रा० ।

३८ । सुग्रीवं किमाहेत्यत्राऽऽह—भ्रातुरिति । ज्येष्ठस्य भ्रातुर्यत् साम्परायिकं पारलौकिकं युक्तं तत् पुत्रेणाङ्गदेन कुरु कारयेत्यर्थः । ननु भवच्छत्रोः कथमस्माभिः संस्कारादि कार्यं तत्राऽऽह—ममाऽऽज्ञयेति । रा० ।

३९ । तथेतीत्यस्याङ्गीकृत्येति शेषः । परिणीय उत्थाप्य पुष्पविमानतुल्ये वाहने सर्वराजोपचारकैर्युक्तं वालिनं क्षिप्त्वा ।

1 च 'रघूद्वहम्' । 2 क ख घ-च छ '-सन्तुष्टा' । 3 ग ङ 'चणार्द्धसङ्गमा-', छ 'चण सङ्गतिमा-' । 4. ग 'मायादि-', छ 'अनादि दुःख' । 5 घ 'सुग्रीवो वचनं श्रुत्वा' । 6. ग '-वक्त्रसमी-' । 7. ग-ङ-च-छ 'सुस्थ-' । 8 च 'तदा' । 9 च 'तथैव' ।

भेरीदुन्दुभिनिर्घोषैर्ब्राह्मणैर्मन्त्रिभिः सह ।
यूथपैर्वानरैः पौरैस्तारया चाङ्गदेन च ।
गत्वा [1]चकार तत् सर्वं यथाशास्त्रं प्रयत्नतः ॥ ४० ॥

स्नात्वा जगाम रामस्य समीपं मन्त्रिभिः सह ।
नत्वा रामस्य चरणौ सुग्रीवः प्राह हृष्टधीः ॥ ४१ ॥

राज्यं प्रशाधि राजेन्द्र वानराणां समृद्धिमत् ।
दासोऽहं ते पादपद्मं सेवे लक्ष्मणवच्चिरम् ॥ ४२ ॥

इत्युक्तो राघवः प्राह सुग्रीवं [2]सस्मितं वचः ।
[3]त्वमेवाहं न सन्देहः शीघ्रं गच्छ ममाऽऽज्ञया ।
पुरराज्याधि[4]पत्ये त्वं [5]स्वात्मानमभिषेचय ॥ ४३ ॥

---

पुष्पके इति । वाल्मीकीये शिविकायाम् । तथाच—

ततो वालिनमुद्यम्य सुग्रीवः शिविकां तदा ।
आरोपयदतिक्रोशन्नङ्गदेन सह प्रभुः ॥ इति ४।२४।२२ ।

एवं पाश्चात्त्येऽपि ( ४।२९।२८ ) ।

४० । तत् मृतोचितसंस्कारादि । रा० ।

४१ । स्नात्वा पम्पायामिति शेषः । एतच्च व्यक्तं वाल्मीकीये—

वालिनं ते तु सत्कृत्य विधिपूर्वं प्लवङ्गमाः ।
आजग्मुरुदकं कर्त्तुं पम्पां शीतजलां शुभाम् ॥
ततः कृतोदकाः सर्वे पम्पायां क्लिन्नवाससः ।
आजग्मू राघवं द्रष्टुं लक्ष्मणञ्च महौजसम् ॥ इति ४।२०।४३-४४ ।

४२ । वानराणां राज्यं प्रशाधीत्यन्वयः । रा० ।

एतेन वनचारिणो वानरस्यापि शिष्टाचारानुगतत्वं ध्वनयति ।

४३ । त्वमेवाहम् इत्यनेन त्वया क्रियमाणराज्यभोग एव मम भोग इति सूचितम् । किञ्चानासक्तो राज्यं भुङ्क्ष्व, ईश्वरप्रेरितोऽहं राज्य कुर्वे इति मत्या च ; तादृश्या बुद्ध्या क्रियमाणया क्रियया भगवांस्तुष्यत्येवेति ध्वनितम् । पुरराज्याधिपत्ये किष्किन्ध्यापुरराज्याधिपत्ये । रा० ।

---

1 च 'चाकारयत' । 2 ङ 'विस्मि ' । 3 ग-पुस्तके अत आरभ्य षट्चत्वारिंशश्लोकस्य प्राथमिकपादचतुष्टयान्तोऽंशो नास्ति । 4 च '-पत्येन' । 5 ङ-छ 'आ-' ।

नगरं न प्रवेक्ष्यामि चतुर्दश समाः सखे ।
आगमिष्यति [1]मे भ्राता लक्ष्मणः पत्तनं तव ।
अङ्गदं यौवराज्ये त्वमभिषेचय सादरम् ॥ ४४ ॥
अहं [2]समीपे शिखरे पर्वतस्य सहानुजः ।
वत्स्यामि वर्ष[3]दिवसांस्ततस्त्वं यत्नवान् भव ।
[4]कञ्चित् कालं पुरे स्थित्वा सीतायाः परिमार्गणे[5] ॥ ४५ ॥

४४ । तर्हि मदभिषेककाले तत्र सन्निधानं कुर्विति चेत्तत्राऽऽह—नगरमिति । पत्तनं नगरम् । रा० ।

४५ । अहञ्च नगरस्य समीपे पर्वतस्य शिखरे वत्स्यामीत्यन्वयः । वर्षदिवसान् वर्षाकालम् । ततो राज्याभिषेकानन्तरं किञ्चित् कालं वर्षासमयं स्वपुरे स्थित्वा सीतायाः परिमार्गणे अन्वेषणे यत्नवान् भवेत्यन्वयः । रा० ।

वर्षदिवसान् वर्षाकालम् । स च साधारण्येन श्रावणभाद्रमासद्वयात्मकः । वाल्मीकीये—

अनुज्ञातश्च रामेण किष्किन्ध्यां प्रविवेश ह ।
चतुरो वार्षिकान् मासानुषित्वा समयेन सः ॥ १।१।७६ ।

इत्युक्त्या वार्षिकान् चतुरो मासानित्युक्तम् । इयञ्च वर्षर्तोर्मासचतुष्टयात्मकता मतान्तर-विधया समर्थिता, तथा च तस्य टिप्पण्याम्—

"वर्षासु भवा वार्षिकास्तान् चतुरो मासान् । एतच्च 'त्र्यृतुः संवत्सरः' इति मतमव-लम्ब्योक्तमिति ज्ञेयम् । समयेन—

'प्रथमो वार्षिको मासः श्रावणः सलिलाप्लुतः ।
प्रवृत्ताः सौम्य चत्वारो मासाश्च वार्षिका इमे ॥
नायमुद्योगसमयः प्रविश त्वं पुरीमिमाम् ।
इह वत्स्याम्यहं सौम्य पर्वते नियतेन्द्रियः' ॥ ४।२९।१२-१३ ।
कार्त्तिकीं समतिक्रम्य त्वं रावणवधे यत । ४।२९।१९ ।
एष नः समयः सौम्य प्रविश त्वं पुरीं शुभाम् ॥ ४।२९।१६ ।

इत्यादिरामोक्तनियमेन ।" इत्यप्युक्तं श्रीमदमरेश्वरवेदान्तशास्त्रिणा ।

तच्छ्रुत्वा माल्यवत्पृष्ठे चातुर्मास्यं चकार सः । ९।९ ।

इत्यग्निपुराणवचनमपि वर्षाकालस्य मासचतुष्टयात्मकत्वमतमेव समर्थयते ।

---

1 च 'मद्भ्राता', छ 'भ्राता मे' । 2 ङ च छ 'समीपशि-' । 3. ग-ङ-छ '-पर्यन्तस-' । 4 क-ख-घ- 'किञ्चित्' । 5 अत परं ग-च-पुस्तकयोः 'यास्यसि त्व महाबाहो ससैन्यबलवाहन' । इत्यधिकम् ।

साष्टाङ्ग प्रणिपत्याऽऽह सुग्रीवो रामपादयोः ।
[1]यदाज्ञापयसे [2]देव [3]तत् तथैव करोम्यहम् ॥ ४६ ॥
अनुज्ञा[4]तस्तु रामेण सुग्रीव[5] सहलक्ष्मणः ।
गत्वा [6]पुरीं तथा चक्रे यथा रामेण चोदित· ॥ ४७ ॥
सुग्रीवेण यथा[7]न्याय पूजितो लक्ष्मणस्तदा ।
आगत्य राघवं शीघ्र प्रणिपत्योपतस्थिवान् ॥ ४८ ॥
ततो रामो जगामाऽऽशु लक्ष्मणेन समन्वित· ।
[8]प्रवर्षणगिरेरूर्ध्वं शिखरं भूरिविस्तरम् ॥ ४९ ॥
[9]तत्रैकं गह्वरं दृष्ट्वा [10]स्फाटिकं [11]दीप्तिमच्छुभम् ।
[12]वर्षवातातपसहं फलमूलसमीपगम् ।
वासाय रोचयामास तत्र रामः सलक्ष्मण· ॥ ५० ॥

४९ । नरो० । प्रवर्षणगिरेरिति । जरासन्धभयात् प्रपलाय्य रामकृष्णौ यमारूढौ स प्रवर्षणगिरिः ।

४८ । आगत्य सुग्रीवसकाशाद् रामसकाशे इत्यर्थ· ।

४९ । प्रवर्षणगिरेरिति । जरासन्धभयात् प्रपलाय्य रामकृष्णौ यमारूढौ स प्रवर्षणगिरिरिति नरोत्तमः । अस्य गिरेराख्यानं भागवते दशमस्कन्धे—

प्रद्रुत्य दूरं संश्रान्तौ तुङ्गमारोहतां गिरिम् ।
प्रवर्षणाख्य भगवान् नित्यदा यत्र वर्षति ॥ इति । ९२।१० ।

वाल्मीकीये प्रस्रवणगिरावारोहणं सभ्रातृकस्य रामचन्द्रस्य । तथाच—

अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे गुहाम् ।
आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिम् ॥ इति । ४।२६।१ ।

एवं पाश्चात्येऽपि । ( ४।२७।१ ) । अग्निपुराणे माल्यवत्पर्वतारोहणम् । तथाच—

तच् श्रुत्वा माल्यवत्पृष्ठे चातुर्मास्यं चकार स· । इति । ९।९ ।

न जाने प्रवर्षणप्रस्रवणमाल्यवन्नामभि प्रख्यात एक एव गिरिरुत तत्तन्नामभि प्रख्याता विभिन्ना गिरय इति । तदत्र भौगोलिकानां सिद्धान्त एव प्रमाणमिति ।

९० । गह्वरं गुहाम् । फलमूलानि समीपगानि यस्य तत् । रा० ।

1 ग-च-छ 'यथा-' । 2 ङ 'राम' । 3 च 'तत्तथैव' । 4 च छ '-तश्च' । 5 क-ख घ '-वस्तु सल-', च-छ '-वश्च सल-' । 6 क-ख-घ 'पुर' । 7 ख-ङ-छ '-न्याय्य' । 8 छ 'प्रविवेश गि ' । 9. ग-ङ '-तत्रैक-ग-' । 10 क-घ 'स्फटिकं' । 11 च 'दीप्तमदभुतम्' । 12. ङ 'वृषावा-' ।

दिव्यमूलफलपुष्पसयुते मौक्तिकोपमजलौघपल्वले ।
चित्रवर्णमृगपक्तिशोभिते पर्वते [1]रघुकुलोत्तमोऽवसत् ॥ ५१ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसवादे किष्किन्ध्याकाण्डे
तृतीयोऽध्याय ॥ ३ ॥

---

५१ । नरो० । दिव्यानि मनोहराणि यानि फलमूलानि तै॰ सवृत , तस्मिन् तथा, मौक्तिकोपमजलौघो नीरसमूहो यत्र तादृशं पल्वल यत्र तस्मिन् तथा, चित्रवर्णा ये मृगपक्षिणस्तैः शोभितस्तस्मिन् तथा ।

[ किष्किन्ध्याकाण्डे तृतीयाध्यायव्याख्या समाप्ता ॥ ३ ॥ ]

---

अत्राऽऽह वाल्मीकि —

मेघराशिनिभं शैलं नित्य गिरिगुहाकुलम् ।
तस्य शैलस्य शिखरे महतीमायतां गुहाम् ॥
प्रतिजग्राह वासार्थं राम सौमित्रिणा सह ।
गुहायाश्चाप्यदूरस्थं गिरिकुण्डं बहूदकम् ॥ इत्यादि । ४।२६।३-४ ।

५१ । मौक्तिकोपम जलौघो जलसमूहो येषु तादृशानि पल्वलानि यस्मिंस्तादृशे पर्वते इत्यर्थ॰ । नानावर्णैर्मृगः पक्षिभिश्च शोभिते । रा० ।

---

1. च 'रघुवरोत्त-' ।

# चतुर्थोऽध्यायः

[1]श्रीमहादेव उवाच—

तत्र वार्षिकदिनानि [2]राघवो लीलया मणिगुहासु सञ्चरन् ।
पक्वमूलफलभोग[3]तोषितो लक्ष्मणेन सहितोऽवसत् सुखम् ॥ १ ॥
वातनुन्नजलपूरितमेघा[4]नन्तरस्तानित[5]वैद्युतगर्भान् ।
वीक्ष्य विस्मयमगाद्गजयूथान् यद्वदाहितसुकाञ्चनकक्षान् ॥ २ ॥

[6]नवघाससमास्वादहृष्टपुष्टमृगद्विजाः ।
धावन्तः परितो राम वीक्ष्य विस्फारितेक्षणाः ।
न चलन्ति सदा [7]ध्याननिष्ठा इव मुनीश्वराः ॥ ३ ॥

---

१ । नरो० । मणिसम्पन्ना गुहा मणिगुहास्तासु तथा ।

२ । नरो० । वातेन नुन्नाः प्रेरिता ये जलपूरितमेघास्तान् तथा । अन्तरं स्तनितं शब्दितं शब्दो येषां ते च विद्युद् गर्भे येषां ते चेति तान् तथा । आहिता सुकाञ्चनकक्षाः शोभनस्वर्णोज्ज्वलाः ( कक्षाः ? ) यत्र तान् तथा ।

३ । नरो० । नवघाससमास्वादेन हृष्टाः पुष्टाश्च ये मृगद्विजा मृगपक्षिणस्ते तथा ।

---

१ । तत्र पर्वते इत्यर्थः । वार्षिकदिनानि व्याप्येति शेषः, अवसदित्यन्वयः । रा० ।

२ । वातप्रेरितजलपूर्णमेघान्, अन्तरे मध्ये युक्तं वैद्युतं विद्युत्समूहो गर्भे येषां तान्, आहितसुकाञ्चन्य कक्षाः पृष्ठास्तरणानि येषां तादृशान् गजयूथान् यद्वत् तानिव वीक्ष्य विस्मयमगात् । अत्र गजा बृंहितयुक्ता बोध्याः । अत एव स्तनितेनाऽऽधिक्यम् । रा० ।

अत्र 'विद्युद् गर्भे येषाम्' इति नरोत्तमव्याख्यानानुसारिपाठमनुसरता छन्दोभङ्गदोषो दुष्परिहर इति स पाठो नाङ्गीकृतः ।

३ । नवघासं नवतृणम् । विस्फारितेक्षणा भगवत्सौन्दर्यदर्शनायेति भावः । तादृशाः सन्तो ध्याननिष्ठा मुनीश्वरा इव न चलन्ति । रा० ।

---

1. क-ख-ङ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2 छ 'निनाय' । 3 घ '-तोषतो' । 4. ख-ग 'मेघान्तरस-' । 5 ग-ङ च-छ '-विद्यु- । 6 क-ख-ङ च छ 'नवघास समासाद्य', घ 'नवघासं समास्वाद्य' । 7 'ध्यान नि-' ।

रामं मानुषरूपेण गिरिकाननभूमिषु ।
चरन्तं परमात्मानं ज्ञात्वा सिद्धगणा भुवि ।
मृगपक्षिगणा भूत्वा राममेवानुसेविरे ॥ ४ ॥
सौमित्रिरेकदा राममेकान्ते ध्यानतत्परम् ।
समाधिविरमे भक्त्या प्रणयाद्विनयान्वितः ॥ ५ ॥
अब्रवीद्देव ते वाक्यात् पूर्वोक्ताद्विगतो मम ।
अनाद्यविद्यासम्भूतः संशयो हृदि संस्थितः ॥ ६ ॥
इदानीं [1]ज्ञातुमिच्छामि क्रियामार्गेण राघव ।
भवदाराधनं लोके यथा कुर्वन्ति योगिनः ॥ ७ ॥
इदमेव सदा [2]प्राहुर्योगिनो मुक्तिसाधनम् ।
नारदोऽपि तथा व्यासो ब्रह्मा कमलसम्भवः ॥ ८ ॥
ब्रह्मक्षत्रादि[3]वर्णानामाश्रमाणाञ्च मोक्षदम् ।
स्त्रीशूद्राणाञ्च राजेन्द्र सुलभं [4]मुक्तिसाधनम् ।
तव भक्ताय मे [5]भ्रात्रे ब्रूहि लोकोपकारकम् ॥ ९ ॥

श्रीराम उवाच—

मम पूजाविधानस्य नान्तोऽस्ति रघुनन्दन ।
तथाऽपि वक्ष्ये संक्षेपाद् यथावदनुपूर्वशः ॥ १० ॥

५ । नरो० । ध्यानतत्परं ध्यानासक्तम् । समाधिविरमे समाधिभङ्गे इत्यर्थः ।

४ । राममित्याद्युत्तरान्वयि । तत्रैते चरन्तो मृगपक्षिगणा न किन्तु सिद्धगणा इत्यपह्नुतिर्व्यङ्ग्या । रा० ।

६ । अनादिभूतया अविद्यया संभूतो जातः संशयो विगत इत्यन्वयः । रा० ।

७ । क्रियामार्गेण लौकिकपुष्पादिभिः पूजारूपेण यथा तत्प्रकारविशिष्टेन पूजामार्गेण योगिनो भवदाराधनं कुर्वन्ति तच्छ्रोतुमिच्छामीत्यन्वयः । रा० ।

८ । इदमेव क्रियामार्गेणाऽऽराधनमेव । योगिन एवाऽऽह—नारद इत्यादि ।

[ नारदोऽपि तथा व्यास इति । व्यासावतारात् प्राग्भवत्वेन श्रीरामावतारस्य व्यास इति वृद्धव्यासो न तु कृष्णद्वैपायनः, अष्टाविंशतिव्यासानां पराशरेणोक्तत्वात् । गो० ]

---

1. घ 'श्रोतु-' । 2 ङ-च 'लाहु' । 3 च 'वैश्यानां-' । 4 ग 'भक्ति' । 5 च छ 'भ्रातुर्ब्रू-' ।

स्वगृह्योक्त[1]प्रकारेण द्विजत्व प्राप्य मानवः ।
सकाशात् सद्गुरोर्मन्त्रं लब्ध्वा मद्भक्तिसंयुतः ।
तेन सन्दर्शितविधिर्मामेवाऽऽराधयेत् सुधीः ॥ ११ ॥
हृदये [2]वाऽनले [3]वाऽर्चेत् प्रतिमादौ विभावसौ ।
शालग्रामशिलायां वा पूजयेन्मामतन्द्रितः ॥ १२ ॥
प्रातःस्नानं प्रकुर्वीत प्रथम देहशुद्धये ।
वेदतन्त्रोदितैर्मन्त्रैर्मृल्लेपनविधानतः ।
सन्ध्यादिकर्म यन्नित्य तत् कुर्याद्विधिना बुधः ॥ १३ ॥

---

११ । नरो० । तेन सद्गुरुणा ।
१२ । नरो० । विभावसौ सूर्ये ।

---

११ । द्विजत्वमुपनयनसंस्कारं प्राप्य । त्तवान्तयोरव्यययोः प्राप्य लब्ध्वा एतयोराराधयेदित्यनेनान्वयः । रा० ।

[ द्विजत्वमुपनयनसंस्कारम् । मन्त्रम् आगमाद्युक्तम् । गो० ]

मन्त्रमिति । राममन्त्रमित्यर्थः । राममन्त्राश्च रामरहस्योपनिषदि, अगस्त्यसंहितायां संग्रहसारे तन्त्रसारे बहवो दृश्यन्ते । विस्तृतिभियाऽत्रास्माभिरेक एव मन्त्रः प्रदर्श्यते । तथाच 'वङ्गवासि'मुद्रिते तन्त्रसारे—

अनन्तोऽग्न्यासनः सेन्दुर्बीज रामाय हृन्मनुः ।
षडक्षरोऽयमादिष्टो भजतां कामदो मणि ॥ २९ पृ० । इति ।

१२ । पूजास्थानान्याह—हृदय इत्यादि, स्वहृदयदेशे इत्यर्थः । हृदञ्च मूर्द्धादीनामपि स्मृत्युक्तानामुपलक्षणम् । अनले वह्नौ, प्रतिमादौ प्रतिमा स्वर्णरूप्यादिमयी । आदिना ब्राह्मणे । विभावसौ सूर्यमण्डले अर्चयेत् पूजयेत् । रा० ।

हृदय इत्यादि ।

पूजा श्रीरामचन्द्रस्य कोटिकोटिगुणाधिका ।
प्रतिमायाञ्च यन्त्रे वा भूमावग्नौ विवस्वति ॥
जले वा हृदये वाऽपि विधायाऽऽवाहयेद्रह । अगस्त्यस० (९९ पृ०) ।

इत्याद्युक्तेः ।

१३ । प्रातःस्नानमिति सकलप्रातःकृत्योपलक्षणम् । वेदेति । द्विजो वेदोदितैः, शूद्रादिस्तन्त्रोदितैः । मृल्लेपनं सकलस्नानविधेरुपलक्षणम् । तेन स्नानं कुर्वन्नित्यन्वयः । सन्ध्यादि आदिना होमतर्पणादि । रा० ।

---

1, क '-विधानेन' । 2 ख 'चानले' । 3 ग 'कुर्यात', ड 'चार्चेत', च 'तोये' ।

सङ्कल्पमादौ कुर्वीत [1]सिद्ध्यर्थं कर्मणां सुधीः ।
स्वगुरुं पूजयेद् भक्त्या मद्बुद्ध्या पूजको मम ॥ १४ ॥
शिलायां [2]स्नपनं कुर्यात् प्रतिमासु प्रमार्जनम् ।
प्रसिद्धैर्गन्धपुष्पा[3]द्यैर्मत्पूजा सिद्धिदायिका ॥ १५ ॥
अमायिकोऽनुवृत्त्या मां पूजयेन्नियतव्रतः ।
प्रतिमादिष्वलङ्कारः प्रियो मे [4]कुलनन्दन ॥ १६ ॥
अग्नौ यजेत हविषा भास्करे [5]स्थण्डिले यजेत् ।
भक्तेनोपहृतं [6]प्रीत्यै श्रद्धया मम वार्यपि ।
किं पुनर्भक्ष्यभोज्यादिगन्धपुष्पाक्षतादि[7]कम् ॥ १७ ॥

---

१६। नरो०। अमायिकोऽकपटी। अनुवृत्त्या आनुकूल्येन श्रद्धया वा। नियतव्रतः कृतनियमः।

१७। नरो०। स्थण्डिले संस्कृतभूमौ।

---

वेदतन्त्रोदितैरित्यनेन वेदोक्तानां तन्त्रोक्तानाञ्च नित्यकार्याणां कर्त्तव्यता ध्वनिता। नित्यं प्रतिदिनकर्त्तव्यं यत् सन्ध्यादिकर्म तत् कुर्यात् आदाविति शेषः।

१४। मम पूजको मद्बुद्ध्या भक्त्या स्वगुरुं पूजयेदित्यन्वयः। अत्र गुर्वसान्निध्येऽपि ध्यानेन जलादौ गुरुं पूजयेदिति संप्रदायः। रा०।

[ सङ्कल्पमादौ कुर्वीत इति।

वरं प्राणपरित्यागः शिरसश्छेदनं परम्।
न त्वनभ्यर्च्य भुञ्जीत भगवन्तं जनार्दनम्॥

इत्यागमोक्तं निश्चयं कुर्वीत, यद्वा मासपक्षाद्युल्लेखरूपम्। गो० ]

१५। शिलायां शिलानिर्मितप्रतिमायाम्। प्रतिमासु मृद्वस्त्रादिनिर्मितास्वित्यर्थः। प्रसिद्धैः स्मृतिप्रसिद्धैः। तेन तन्निषिद्धपुष्पादि पूजानर्हमिति सूचितम्। ते च निषेधा निबन्धेषु द्रष्टव्या विस्तरभयान्नेह लिखिता। रा०।

१६। अमायिकः माया दम्भादिरूपा तद्रहितः। अनुवृत्त्या गुरूपदिष्टमार्गानुवर्त्तनेन। प्रतिमादिषु प्रतिमाश्च ते आदयश्च प्रतिमादयः, तेषु प्रतिमादिषु प्रतिमादिरूपेषु आश्रयेषु पूजाधिकरणेष्वित्यर्थः। तत्पुरुष समानाधिकरण कर्मधारयः। प्रतिमारूपेष्वाश्रयेषु। आदिशब्द आश्रयवाची भीष्मादिश्च सुयोधन इत्यादौ प्रसिद्धः। अलङ्कारः पुष्पादिरूपः। रा०।

१७। आधारान्तरे पूजाविशेषमाह—अग्नाविति। अग्नौ तत्तद्देवतामन्त्रेण होम एव

---

1 ग 'प्रथम'। 2 ङ 'स्नापन'। 3 छ '-द्यै पूजा च'। 4. च 'रघु-'। 5. छ 'मण्डले'। 6, ङ 'प्रीत्या'। 7. ङ '-दिव', छ '-दिभि,'।

पूजाद्रव्याणि सर्वाणि सम्पा[1]द्यैवं समारभेत् ।
[2]चेलाजिनकुशैः सम्यगासनं परिकल्पयेत् ॥ १८ ॥
तत्रोपविश्य देवस्य सम्मुखे शुद्धमानसः ।
ततो न्यासं प्रकुर्वीत मातृ[3]काबहिरान्तरम् ॥ १९ ॥
[4]केशवादि ततः कुर्यात् तत्त्वन्यासं ततः परम् ।
मन्मूर्त्तिपञ्जरन्यासं मन्त्रन्यासं ततो न्यसेत् ।
प्रतिमादावपि [5]तथा [6]कुर्यान्नित्यमतन्द्रितः ॥ २० ॥

---

१८ । नरो० । चेलञ्च वस्त्रम् अजिनञ्च चर्म कुशश्च तैस्तथा ।
१९ । नरो० । मातृकादिन्यासस्तन्त्रसारेऽनुसन्धेयः ।

---

तत्तद्देवतापूजेत्यर्थः । भास्करे स्थण्डिले यजेदिति । भास्करे यजेदिति यत् तत् तदाकारे स्थण्डिले इत्यर्थः । भक्तेन श्रद्धयोपहृत वार्यपि मम प्रीत्यै भवतीति शेषः । अनेन भक्तेरेव मुख्यत्वं दर्शितम् । भक्ष्यादिकमुपहृत प्रीत्यै इति किं पुनर्वक्तव्यमित्यर्थः । रा० ।

वार्यपीति—

अभावे गन्धपुष्पाभ्यां केवलेन जलेन वा ।

इत्यादिवचनबलात् अभावपक्षे भक्त्या केवलेन वारिणाऽर्चनेऽपि तत्तत्फलसिद्धिरित्याशयः ।

१८ । समारभेत् पूजामिति शेषः । तत्र पूजाप्रकारमाह—चैलेति । अधः कुशासनं तदुपर्यजिनं तदुपरि चैलमिति क्रमः । रा० ।

१९ । तत्रोपविश्य पद्मासनाद्यन्यतमासनेनेत्यर्थः । देवस्य सम्मुखे इत्यनेन स्थिरासु प्रतिमासु पश्चिमाद्यभिमुखतया अपि पूजा भवतीति सूचितम् । मातृका अकारादिपञ्चाशद्वर्णात्मिका, तन्न्यासप्रकारश्च तन्त्रे स्फुटः । बहिरिति, बहिर्न्यासमान्तरं न्यासञ्चेत्यर्थः । रा० ।

आराधनाय देवस्य वेदिकायां सुखासने ।
कुशास्तरणवैयाघ्रचर्मवासोविनिर्मिते ॥
उपविश्य शुचिर्मौनी भूत्वा पूजां समारभेत् । अगस्त्यस० ७८ पृ० ।

इत्युक्तदिशा चैलेन, अजिनेन कुशेन वा परिकल्पिते आसने उपविश्येत्यर्थः ।

२० । केशवादिचतुर्विंशतिनामभिरित्यर्थः । स च नारदपञ्चरात्रादौ स्पष्टः । तत्त्वन्यासोऽपि तत्रैवोक्तः । मन्मूर्त्तिपञ्जरन्यासो विष्णुपञ्जरस्तोत्रोक्तो महान्यास इति संप्रदायः । मन्त्रन्यासं मन्त्रवर्णैस्तत्तत्कल्पोक्त षडङ्गादिन्यासम् । प्रतिमादावपीति, 'यथात्मनि तथा देवे' इत्युक्तेः । रा० ।

---

1 ग-ङ-च छ '-द्यैव' । 2 क-ख घ-च चैला-' । 3 घ-च 'कां बहिरन्तरम्' । 4. च 'केश-वादिं' । 5 ङ 'कुर्यात् नित्यमेतद' । 6 छ 'नित्यमेव व्रत' ।

कलशं [1]स्वपुरो वामे क्षिपेत् पुष्पादि दक्षिणे ।
अर्घ्यपाद्यप्रदानार्थं मधुपर्कार्थमेव च ।
तथैवाऽऽचमनार्थन्तु न्यसेत् पात्रचतुष्टयम् ॥ २१ ॥
हृत्पद्मे भानुबिम्ब[2]लां मत्कलां जीव[3]संज्ञिताम् ।
ध्यायेत् स्वदेहमखिलं तया व्याप्तमरिन्दम ।
तामेवाऽऽवाहयेन्नित्यं प्रतिमादिषु मत्कलाम् ॥ २२ ॥
पाद्यार्घ्याचमनीयाद्यैः स्नानवस्त्रविभूषणैः ।
यावच्छक्योप[4]चारैर्वा [5]त्वर्चये[6]न्मामममायया ॥ २३ ॥

[ तत्रोपविश्य इत्यादि । बहिर्मातृकामन्तर्मातृकाञ्च । केशवादि केशवकीर्त्यादि-न्यासम् । गो० ]

मातृकान्यासोऽगस्त्यसंहितायाश्चतुरशीतितमपृष्ठे द्रष्टव्यः । केशवादिन्यासः तस्या एव पञ्चाशीतितमपृष्ठे, तत्त्वन्यासोऽपि तस्या एव अष्टाशीतितमपृष्ठे ।

मूर्त्तिपञ्जरन्यासादयोऽगस्त्यसंहिताया एकनवतितमपृष्ठे उक्ता ज्ञेयाः ।

२१ । ईषद्वामभागावच्छिन्नपुरोभागे कलशं जलपूर्णं स्थापयेदिति शेषः । पुष्पादि दक्षिणे क्षिपेत् स्थापयेदित्यर्थः । अर्घ्यादिपात्रस्थापनदेशः स्मृतावुक्तः —

अर्घ्यपात्रन्तु वायव्ये नैरृत्यां पाद्यपात्रकम् ।
मध्ये तु मधुपर्कं स्यादैशे त्वाचमनीयकम् ॥ इति । रा० ।

कलशमित्यादि स्वपुरो वामे

कलशं स्वपुरो वामभागे तु विनियोजयेत् ।
अन्यानि पूजाद्रव्याणि पुरस्तादेव निक्षिपेत् ॥ अगस्त्यसं० ७७ पृ० ।

इत्याद्युक्तेः ।

२२ । जीवसञ्ज्ञितां मत्कलामित्यनेन चेतनः सर्वत्रैक एवेति बोधितम् । युक्तञ्चैतत्— व्यापकेनैकेनैव चेत(ने?)नोपपत्तावनेकतत्कल्पनाया मानाभावात् । प्रतिकर्मव्यवस्था त्वन्तःकरण-भेदेनैवोपपन्नेति । हृत्पद्मे तां ध्यायेत् । तया व्याप्तमखिलं स्वदेहं भावयेत् । तथा भावयित्वा तामेव मत्कलां प्रतिमादिष्वावाहयेत् । तदावाहनेन तामपि चेतनत्वेन ध्यात्वा । रा० ।

२३ । यावच्छक्यैरुपचारैर्वा षोडशभिः पञ्चभिर्वा । तु पादपूरणार्थः । अमायया अदम्भादिना मां पूजयेत् । रा० ।

1. ङ 'च पु-' । 2. ख '-लात्', घ-च-ङ '-ले' । 3 च '-हृस्थिताम्' । 4. च '-द्दा-' 5. ग 'ह्यर्चे-' । 6. च '-न्मां तमा-' ।

विभवे सति कर्पूरकुङ्कुमागुरुचन्दनैः ।
अर्चयेन्मन्त्रवन्नित्यं सुगन्धकुसुमैः शुभैः ॥ २४ ॥
दशावरण[1]पूजां वै ह्यागमोक्तां[2] प्रकारयेत् ।
नीराजनैर्धूपदीपैर्नैवे[3]द्यैर्बहुविधैस्तथा ।
श्रद्धयोपहरेन्नित्यं श्रद्धाभुगहमीश्वर ॥ २५ ॥
होमं कुर्यात् प्रयत्नेन विधिना मन्त्रकोविदः ।
[4]अगस्त्येनोक्तमार्गेण कुण्डनागमवित्तम ॥ २६ ॥
जुहुयान्मूलमन्त्रेण पुंसूक्तेनाथवा बुधः ।
अथ[5]वौपासनाग्नौ वा चरुणा [6]हविषा तथा ॥ २७ ॥
तप्तजाम्बूनदप्रख्यं दिव्याभरणभूषितम् ।
ध्यायेदनलमध्यस्थं होमकाले सदा बुधः ॥ २८ ॥

---

२४। नरो०। विभवे ऐश्वर्ये।

---

२४। विभवे सति कर्पूरादिभिः सुगन्धपुष्पैश्च मन्त्रवदर्चयेत्। रा०।

२५। आगमोक्ताम् अगस्त्यसंहितोक्ताम्, प्रकारयेत् प्रकुर्वीतेत्यर्थः। नीराजनैरिति पाठक्रमादर्थक्रमस्य बलवत्त्वाद्धूपदीपनैवेद्यनीराजनानीति क्रमः। नीराजन(नै?) पञ्चारार्त्ति(त्रि?)-कादिभिः। तद्धूपादि श्रद्धयोपहरेद् दद्यात्, यतोऽहं श्रद्धाभुक् श्रद्धादत्तभोक्ता। रा०।

२६। अगस्त्येनेति अगस्त्यसंहितोक्तमार्गेण कृतं यत् कुण्डं तेन, तस्मिन्नित्यर्थः। अधिकरणस्य करणत्वविवक्षया तृतीया। रा०।

अगस्त्योक्तहोमकुण्डविधानमगस्त्यसंहितायाम् ( १०४-तम-पृष्ठे )।

२७। मूलमन्त्रेणाऽऽगमोक्तेन, पुंसूक्तेन पुरुषसूक्तेन। एतद् ब्राह्मणविषयम्। तद्विषये एवाऽऽह—अथवौपासनाग्नाविति, चरुणा हविषा हवीरूपेण चरुणा। रा०।

२८। ध्यायेन्मामिति शेषः। रा०।

ध्यायेदिति। ध्यायेत् तद्रूपं चिन्तयेत्। रामस्य ध्यानान्यपि बहूनि। अत्रास्मत्प्रदर्शितमन्त्रस्यैव (पृ० ४७९) ध्यानमस्माभिः प्रदर्श्यते।

तथाच 'वङ्गवासि'मुद्रिते तन्त्रसारे—

कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासिनं
मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि।

---

1. च '-पूजा'। 2 च '-मोक्ता प्रकल्पयेत्'। 3 ग च '-द्यैर्वस्तुविस्तरैः', घ ङ-छ '-द्यैर्बहुविस्तरैः'।
4. च 'आगस्त्योक्तेन मन्त्रेण'। 5 घ 'वौपा-'। 6 ङ 'हविषाऽथवा'।

पार्षदेभ्यो बलिं दत्त्वा होमशेषं समापयेत् ।
ततो जपं प्रकुर्वीत ध्यायन्मां [1]यतवाक् स्मरन् ॥ २९ ॥

मुखवासञ्च ताम्बूलं दत्त्वा प्रीतिसमन्वितः ।
मदर्थे नृत्यगीतादि[2]स्तुतिपाठादि कारयेत् ॥ ३० ॥

प्रणमेद्दण्डवद्भूमौ हृदये मां निधाय च ।
शिर[3]स्याधाय मद्दत्तं प्रसादं भावना[4]मयः ॥ ३१ ॥

पाणिभ्यां [5]मत्पदे मूर्ध्नि गृहीत्वा भक्तिसंयुतः ।
रक्ष मां घोरसंसारादित्युक्त्वा प्रणमेत् सुधीः ।
उद्वासयेद्‌ यथापूर्वं [6]प्रत्यग्ज्योतिषि [7]स स्मरन् ॥ ३२ ॥

एवमुक्तप्रकारेण पूजयेद्विधिवद्‌ यदि ।
[8]इहामुत्र [9]च संसिद्धिं प्राप्नोति मदनुग्रहात् ॥ ३३ ॥

---

सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यन्तं मुकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे ॥ (२९ पृ०) इति ।

२९ । पार्षदेभ्यस्तन्त्रोक्तहनूमदादिभ्यः । मां ध्यायन् स्मरन्नित्यस्य मनुवर्णानिति शेषः । तदेवाऽऽह—यतवागिति । अनेन प्रशस्ततरो मानसो जप उक्तः । रा० ।

३० । मुखवासं तद्रूपकर्पूरादियुक्तं ताम्बूलं दत्त्वेत्यर्थः । मदर्थे मत्प्रीतये इत्यर्थः । कारयेत् कुर्वीतेत्यर्थः । निवृत्तप्रेषणाण्णिच् । रा० ।

३१ । दण्डवदित्यनेनाष्टाङ्गप्रणाम उक्तः । भावनामयं मद्दत्तं प्रसादं शिरसि आधाय स्थापयित्वा । अनेन मह्यं प्रसादं पुष्पादिरूपं भगवान् ददातीति भावनया प्रसादं गृह्णीयादिति सूचितम् । रा० ।

३२ । तं गृहीत्वा शिरसि स्थापयित्वा भावनाभाविते मत्पदे पाणिभ्यां मूर्ध्नि गृहीत्वा धृत्वा । इत्युक्त्वा प्रणमेदित्यन्वयः । प्रत्यग्ज्योतिषि स्वहृदयस्थे, यत एव ध्याता जीवकला प्रतिमायामावाहिता पूर्वम्, तत्रैवोद्वासयेत् तत्रैव प्रविष्टां ध्यायेत्, एतदेव विसर्जनम् । रा० ।

३३ । इहामुत्र च ऐहलौकिकीं पारलौकिकीञ्चेत्यर्थः । रा० ।

---

1. च 'यतवान्नर' । 2 च '-नुति' । 3 ग ङ-च-छ '-स्यादाय' । 4. क-ख-घ-ङ '-मयम्' । 5. च 'मत्पद' । 6. ङ 'प्रत्यागत्याभि', च 'प्राग्ज्योतीषि' । 7. ङ च-छ 'ससारन्' । 8. ग 'इहान्यच' । 9. ग 'लभेत् सिद्धिमुत्तमा', ङ-चटि-छ 'वसन् सिद्धिं' ।

मद्भक्तो यदि मामेवं पूजाञ्चैव दिने दिने ।
करोति मम सारूप्यं प्राप्नोत्येव न संशयः ॥ ३४ ॥
इदं रहस्यं पर[1]मञ्च पावनं मयैव साक्षात् कथितं सनातनम् ।
पठत्यजस्रं यदि वा शृणोति यः स [2]नित्यपूजाफलभाङ् न संशयः ॥ ३५ ॥
एवं परात्मा श्रीराम' क्रियायोगमनुत्तमम् ।
पृष्टः प्राह [3]स्वभक्ताय [4]शेषांशाय महात्मने ॥ ३६ ॥
पुनः प्राकृतवद्रामो मायामालम्ब्य दुःखितः ।
हा सीतेति वद[5]न्नेव निद्रां लेभे कथञ्चन ॥ ३७ ॥
एतस्मिन्नन्तरे [6]तत्र किष्किन्ध्यायां सुबुद्धिमान् ।
हनूमान् प्राह सुग्रीवमेकान्ते कपिनाय[7]कम् ॥ ३८ ॥

---

३४। मद्भक्तो यदि मामेवं ध्यात्वा आवाह्य च दिने (दिने ?) प्रतिदिनं मम पूजां करोति तदा मम सारूप्यं प्राप्नोति । रा० ।

३६। शेषांशाय लक्ष्मणाय । रा० ।

[ शेषाङ्गाय शेषस्य अङ्गाय लक्ष्मणाय । गो० ]

क्रियायोग कर्ममार्गेणाऽऽराधनाप्रकारं लक्ष्मणेन पृष्टः तस्मै शेषांशाय लक्ष्मणाय एव प्राहेत्यर्थः ।

३७। प्राकृतवत् प्रकृतिकार्य-मनुष्यवत् । मायामालम्ब्य दुःखित इत्यनेन स्वतस्तस्य दुःखलेशोऽपि नेति सूचितम् । रा० ।

पुन' क्रियायोगकथनानन्तरमित्यर्थः । कथञ्चन अत्यायासेनेति भावः ।

३८। एतस्मिन्नन्तरे रामस्य निद्रावस्थाभ्यन्तरे ।

अत्र वाल्मीके रचनापाटवम् ।

निश्चितार्थोऽर्थतत्त्वज्ञः कार्यकालविशेषवित् ।
प्रसादमधुरैर्वाक्यैर्हरीणां मानयन् पतिम् ॥
वाक्यविद् वाक्यतत्त्वज्ञं सुग्रीवं मारुतात्मजः ।
हितं तथ्यञ्च पथ्यञ्च धर्मकामार्थहेतुमत् ॥
प्रणयप्रीतिसंयुक्तं विश्वासकृतनिश्चय ।
हरीश्वरमुपामन्त्र्य हनूमान् वाक्यमब्रवीत् ॥ इत्यादि ।४।२८।६-८।

---

1. च '-मं सुपा-'। 2. क-ख-घ 'सर्वपू-'। 3. ङ छ 'स भ-'। 4. छ 'नागांशा-'। 5. ग-ङ-छ '-न्नेवं', घ '-न्नैव', च 'न्नेव'। 6. च 'वीर'। 7. क '-कं', च-ग '-कः'।

शृणु [1]राजन् प्रवक्ष्यामि तवैव हितमुत्तमम् ।
रामेण ते कृत' पूर्वमुपकारो ह्यनुत्तम· ।
[2]कृतघ्नवत् त्वया नूनं विस्मृत' प्रतिभाति मे ॥ ३९ ॥
त्वत्कृते निहतो वाली वीरस्त्रैलोक्यसम्मतः ।
राज्ये प्रतिष्ठितोऽसि त्वं तारां [3]प्राप्तोऽसि दुर्लभाम् ॥ ४० ॥
स रामः पर्वतस्याग्रे भ्रात्रा सह वसन् सुधीः ।
त्वदागमनमेका[4]ग्रमीक्षते कार्यगौरवात् ।
त्वन्तु वानरभावेन स्त्रीसक्तो नावबुध्यसे ॥ ४१ ॥
करोमीति प्रतिज्ञाय सीताया परिमार्गणम् ।
न करोषि कृतघ्नस्त्वं हन्यसे वालिवद् [5]द्रुतम् ॥ ४२ ॥
हनूमद्वचनं श्रुत्वा सुग्रीवो भयविह्वल' ।
प्रत्युवाच हनूमन्तं सत्यमेव त्वयोदितम् ॥ ४३ ॥
शीघ्र कुरु मदाज्ञां त्व वानराणां तरस्विनाम् ।
[6]सहस्राणि दशेदानीं [7]प्रेषयाऽऽशु दिशो दश ॥ ४४ ॥

---

३९ । अनुत्तम· न विद्यते उत्तमो यस्मादित्यर्थ· । रा० ।

उपकारफलञ्च वाल्मीकीये—

राज्यं राजन् यशो दिव्यं कौली श्रीरात्मसात् कृता ।
रञ्जिताश्च प्रकृतय' स्वजना प्रतिपूजिता ॥ इति ।४।२८।९ ।

४० । दुर्लभां तारामिति वालिपरिग्रहात्त्वया सर्वथा कामिभावेन द्रष्टुमप्यशक्यामित्यर्थ· । रा० ।

४१ । एकाग्रं तन्मात्रचित्तत्वं यथा भवति तथा ईक्षते प्रतीक्षते, कार्यस्य सीतान्वेषणरूपस्य गौरवात् त्वदेकसाध्यत्वादित्यर्थं । रा० ।

४२ । कृतघ्नस्त्व यदि न करोपि तदा वालिवत् हन्यसे रामेणेति शेषः । अतः सर्वथाऽन्वेषणमुचितमिति व्यङ्ग्यम् । रा० ।

४४ । वानराणां मदाज्ञां कुरु बोधय । रा० ।

सुग्रीवस्याऽऽज्ञा वाल्मीकीये—

सुग्रीव सत्त्वमापन्नश्चकार मतिमात्मवान् ।
स संदिदेशाथ कपिं नील नित्यकृतोद्यमम् ॥
दिक्षु सर्वासु सैन्यानां सर्वेषां कुरु संग्रहम् ।
यथा सेनाः समग्रा मे यूथपालाश्च सर्वश· ॥

---

1. च 'राजेन्द्र' । 2 ग ङ-च 'कृतघ्नेन' । 3 च-छ 'प्राप्नोषि' । 4 ग-ङ-च-छ '-ग्र' द्रक्ष्यते' । 5 ग च-छ 'भ्रमम्' । 6. ङ 'सहस्रशो' । 7 ग-ङ छ 'प्रेषयस्व', च 'प्रेरयस्व' ।

सप्तद्वीपगतान् सर्वान् वानरानानयन्तु ते ।
पक्षमध्ये समायान्तु सर्वे वानरपुङ्गवाः ॥ ४५ ॥
ये पक्षमतिवर्त्तन्ते ते वध्या मे न संशयः ।
इत्याज्ञाप्य हनूमन्तं सुग्रीवो गृहमाविशत् ॥ ४६ ॥
सुग्रीवाज्ञां पुरस्कृत्य हनूमान् मन्त्रिसत्तमः ।
तत्[1]क्षणात् [2]प्रेषयामास [3]हरीन् दश दिशः सुधी ॥ ४७ ॥
अगणितगुणसत्त्वान् वायुवेगप्रचारान् वनचरगणमुख्यान् पर्वताकाररूपान् ।
पवनहितकुमारः प्रेषयामास दूतानतिरभस[4]भरात्मा [5]ज्ञानमानादि[6]दृप्तान् ॥ ४८ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्ध्याकाण्डे चतुर्थोऽध्यायः ॥ ४ ॥

---

४६ । नरो० । पक्ष सहायमतिवर्त्तन्ते अतिक्रामन्ति ।

४७ । नरो० । हरीन् वानरान् ।

४८ । नरो० । अगणितानि गुणसत्त्वानि येषां तान् तथा । सत्त्वं बलम् । वायुवेगेन प्रचारो येषां तान् तथा । वनचरगणेभ्यो मुख्यास्तान् । पर्वताकार इव रूपं येषां तान् तथा । पवनहितकुमार इति । हिते अर्थाद् रामस्य भूताना वा, रत हितरतः स चासौ कुमारश्चेति मध्य-पदलोपी कर्मधारयस्ततः षष्ठीतत्पुरुषः । अति रभसभरः वेगभरो यस्य तादृश आत्मा मनो यस्य स तथा, यद्वा अति रभसभरो हर्षभरो यस्य तादृश आत्मा मनो यस्य तथा । ज्ञायतेऽनेन इति ज्ञानं शास्त्रं तच्च मानश्च तावादी येषां तैः दृप्ता दर्पाश्रयास्तान् तथा । तथाचोक्तम्—

गर्वो मदः प्रभाव-श्री-विद्या-सत्कुलतादिज ।
अवज्ञासविलासाङ्गदर्शनाविनयादिकृत् ॥ ( सा० द० ३।१९९ ) इति ।

[ किष्किन्ध्याकाण्डे चतुर्थाध्यायव्याख्या समाप्ता ॥ ४ ॥ ]

---

समागच्छन्त्यसमोद्वात् सेनाग्राणि तथा कुरु ।
ये चान्तपालाः प्लवगा शीघ्रगा व्यवसायिनः ॥
स्वय चानन्तर सैन्य भवानेवानुपश्यतु ।
य पञ्चरात्राद्दूर्ध्वं मे नागमिष्यति वानर ।
तस्य प्राणान्तिकं दण्डं कुर्यामिति मतिर्मम ॥ इति ।४।२८।२९।३२ ।

४६ । इत्याज्ञाप्य एव वानरेषु कर्त्तव्यामाज्ञा बोधयित्वा । रा० ।

४८ । अगणिता गुणा सत्त्वं पराक्रमश्च येषा तान् । पर्वताकारसदृश रूपमाकारो येषां तान् । पवनस्य वायोर्हित अतिप्रियः कुमारो हनूमान् । दानमानादितृप्तानित्यनेनावश्यं कार्यसिद्धिकारित्व दर्शितम् । रा० ।

---

1. घ 'चर्या', च 'चण' । 2 ङ 'प्रेरया-' । 3 च 'कपीन्' । 4. क-ख-ग-घ-ङ-च-छ '-तरात्मा' । 5 क-ख-ग घ-ङ-च-छ 'दानमा' । 6. क ख ग घ '-तृप्तान्' ।

# पञ्चमोऽध्यायः

—— ० ——

[1]श्रीमहादेव उवाच—

रामस्तु पर्वतस्याग्रे मणिसानौ निशामुखे ।
सीताविरहजं [2]शोकमसहन्निदमब्रवीत् ॥ १ ॥
पश्य लक्ष्मण मे सीता राक्षसेन हृता बलात् ।
मृताऽमृता वा निश्चेतुं न जानेऽद्यापि [3]भामिनी ।
[4]जीवतीति मम ब्रूयात् कश्चिद्वा प्रियकृत् स मे ॥ २ ॥
यदि जानामि तां साध्वीं जीवन्तीं यत्र कुत्र वा ।
हठादे[5]वाऽऽहरिष्यामि सुधामिव पयोनिधेः ॥ ३ ॥
प्रतिज्ञां शृणु मे भ्रातर्येन मे जनकात्मजा ।
नीता त भस्मसात् कुर्यां सपुत्रबलवाहनम् ॥ ४ ॥
हा सीते चन्द्रवदने वसन्ती राक्षसालये ।
दुःखार्त्ता [6]मामपश्यन्ती कथं प्राणान् धरिष्यसि ॥ ५ ॥

---

१ । रामस्त्विति । पर्वताग्रे स्थितः, मणियुक्तसानौ शिखरे । रा० ।

२ । न जाने न शक्नोमीत्यर्थः, धातूनामनेकार्थत्वात् । यः कश्चिदपि जीवतीति ब्रूयात् स मे प्रियकृत् । रा० ।

३ । यत्र कुत्र वा यत्र कुत्रापीत्यर्थः । रा० ।

६ । वसन्ती त्वं कथं प्राणान् धरिष्यसीत्यन्वयः । रा० ।

अत्र वाल्मीकेर्भङ्ग्यन्तरम्—

कथं मे वर्त्तते बाला पश्यन्ती मामपश्यती ।
या पुरा कलहंसानां स्वनेन कलभाषिणी ॥
बोध्यते चारुसर्वाङ्गी साऽद्य मे बोध्यते कथम् ।
क्रीडतां चक्रवाकाणां विश्रम्य सहचारिणाम् ॥

---

1. क-ख ङ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2 च 'दुःख-' । 3 घ-छ 'भामिनीम्', ग-ङ 'भाविनीम्', च 'मानिनीम्' । 4. च 'यो जीवतीति मे' । 5 'देव हरि-' । 6. घ-च 'मां न ।

चन्द्रोऽपि भानुवद्भाति मम चन्द्रा[1]ननां विना ।
चन्द्र त्व जानकीं स्पृष्ट्वा करैर्मां स्पृश शीतलैः ॥ ६ ॥

सुग्रीवोऽपि दयाहीनो दुःखित मां न पश्यति ।
राज्य निष्कण्टक प्राप्य स्त्रीभि' परिवृतो रहः ॥ ७ ॥

कृतघ्नो दृश्यते व्यक्तं पानासक्तोऽतिकामुकः ।
नाऽऽयाति शरदं [2]पश्यन्नपि मार्गयितुं प्रियाम् ॥ ८ ॥

[3]पूर्वोपकारिणं दुष्ट' कृतघ्नो विस्मृतो हि माम् ।
हन्मि सुग्रीव[4]मद्येवं सपुरं सहबान्धवम् ।
वाली [5]यथा हतो मेऽद्य सुग्रीवोऽपि तथा भवेत् ॥ ९ ॥

इति रुष्टं समालोक्य राघवं [6]लक्ष्मणोऽब्रवीत् ।
इदानीमेव गत्वाऽहं सुग्रीवं दुष्टमानसम् ।
मामाज्ञापय हत्वा तमायास्ये राम तेऽन्तिकम् ॥ १० ॥

---

७ । नरो० । निष्कण्टक नि शत्रु । परिवृतो वेष्टितः ।
१० । नरो० । रुष्ट रोषाश्रयम् ।

---

पुण्डरीकविशालाक्षी कथमेका भविष्यति ।
तां विना मृगशावाक्षीं चिरं नाद्य सुखं लभे ॥ इति ।४।२९।१७-१९ ।

६ । विरहदु खमभिनयति—चन्द्रोऽपीति । भानुवत् दाहकत्वात् । चन्द्र त्वमिति । कर्पूरतोऽप्यतिशीतलस्य मम कामदु.खशामकस्य तद्गात्रस्य स्पर्शो तव करा अपि तथागुणशैत्य-युक्ता भूत्वा मां सुखयिष्यन्तीति भाव. । रा० ।

७ । विरहवेदनाऽसहत्वादेव सुग्रीवं निन्दति सुग्रीवोऽपीति । रा० ।

८ । यन्मां न पश्यति तत् कृतघ्नः स इव दृश्यते । रा० ।

९ । एवम्, यथा सीताहर्त्तारं हन्तुमिच्छामि एवमित्यर्थ. । अद्य यथा मे मया वाली हतस्तथा सुग्रीवोऽपि भवेदित्यर्थ. । रा० ।

१० । इदानीमेवेत्याद्युक्त्वा राजाज्ञां विनेदृशकार्यकरणमनुचितमिति प्रतिसन्धायाऽऽह—मामाज्ञापयेति । ईदृशे स्थले प्रथमतोऽप्रतिसन्धानं तु रामरोषेण लक्ष्मणस्यापि रोषाविष्टत्वात्, अतो गर्भितत्व न दोष. । रा० ।

---

1 क 'ननी' । 2 च 'प्राप्य ह्यपि' । 3 क 'पूर्वोक्तका-' । 4 ग च '-मद्यैव' ङ-छ '-मप्यद्य' ।
5. क 'हतो यथा' । 6 ग 'प्राह लक्ष्मण' ।

इत्युक्त्वा धनुरादाय खड्ग तूणीरमेव च ।
गन्तुमभ्युद्यत [1]वीक्ष्य रामो लक्ष्मणमब्रवीत् ॥ ११ ॥
न हन्तव्यस्त्वया [2]वत्स सुग्रीवो मे प्रियः सखा ।
किन्तु भीषय सुग्रीव वालि[3]वन्न हनिष्यसे ॥ १२ ॥

---

१२ । वालिवन्न हनिष्यसे इत्युक्त्वा भीषयेत्यन्वयः । न हनिष्यसे इति काकुः ।

लक्ष्मणं प्रति रामवाक्यं वाल्मीकीये—

न खल्वस्मद्विधास्तात पापमेवं प्रकुर्वते ।
पापाभावेन यो हन्ति स वीरः पुरुषोत्तम• ॥
नेदमद्य त्वया कार्यं साधुवृत्तेन लक्ष्मण ।
ता वृत्तिमनुवर्तस्व पूर्ववत् त च सौहृदम् ॥
सामोपहितया वाचा रूक्षाणि परिवर्जयन् ।
वक्तुमर्हसि सुग्रीवमतीतं कालसग्रहे ॥ इति ।४।३१।६-८ ।

अन्यत्र च—

तमसौ नाभिजानाति कृतार्थ• प्लवगेश्वर• ।
सामात्य• परिसक्रीडन् कामस्य वशमागत• ॥
शोकदीनेषु चास्मासु रमते निरपत्रप ।
तदेवं विहिते काले हितं यत् पुरुषर्षभ ॥
तच्चिन्तयाऽऽशु वैदेह्या न कालोऽतिक्रमेद् यथा ।
नूनं काञ्चनपृष्ठस्य विकृष्टस्य मया रणे ॥
द्रष्टुमिच्छामि चापस्य रूपं विद्युदगणोपमम् ।
घोरं ज्यातलनिर्घोष क्रुद्धस्य मम स्युगे ॥
निष्पेषमिव वज्रस्य श्रोतुमिच्छसि वानर ।
न हि सङ्कुचितः पन्था येन वाली हतो गतः ॥
समये तिष्ठ सुग्रीव मा वालिपथमन्वगा• ।
एक एव मया वाली बाणेन निहत• पुरा ।
त्वां तु सत्यादपक्रान्तं हनिष्यामि सबान्धवम् ॥ इति ४।३०।१६-२१।

---

1, च 'मीर' । 2 ग 'वीरः' । 3 ग '-वद्विहनिष्यसि', च '-वन्निहनिष्यसि', छ '-वन्निहनिष्यसि' ।

इत्युक्त्वा शीघ्रमादाय सुग्रीवप्रतिभाषितम् ।
[1]आगच्छ पश्चाद् यत् कार्यं तत् करि[2]ष्याम्यसंशयम् ॥ १३ ॥

तथेति लक्ष्मणोऽ[3]गच्छत् त्वरि[4]तो भीमविक्रमः ।
किष्किन्ध्यां प्रति कोपेन निर्दहन्निव वानरान् ॥ १४ ॥

सर्वज्ञो नित्यलक्ष्मीको विज्ञानात्माऽपि राघवः ।
[5]सीतामनुशुशोचाऽऽर्त्तः प्राकृतः प्राकृतामिव ॥ १५ ॥

बुद्ध्यादिसाक्षिणस्तस्य मायाकार्यातिवर्त्तिनः ।
रागादिरहितस्यास्य तत्कार्यं कथ[6]मुद्भवेत् ॥ १६ ॥

---

१३ । नरो० । सुग्रीवमित्युक्त्वा प्रतिभाषितमादाय शीघ्रमागच्छेत्यन्वयः । कार्यं कर्त्तुं योग्यम् ।

१५ । नरो० । तर्हि तस्य परमात्मत्वं कुत इति सूचनाय सर्वज्ञ इत्यादि । अज्ञानजं दुःखं भवति, राघवस्य अज्ञानमेव नास्तीति सूचनाय सर्वज्ञ इत्युक्तम् । किञ्च राघवस्य सीता-विरह एव नास्ति तज्जन्यं दुःखं कुत इति सूचनाय नित्यलक्ष्मीक इत्युक्तम् । नित्या सदा वर्त्तमाना लक्ष्मीर्यस्य स तथा । किञ्च सुखदुःखादिको धर्मोऽन्तःकरणस्यैव न ह्वात्मन इति सूचनाय विज्ञानात्माऽपीत्युक्तम् । विज्ञानमात्मा स्वरूपं यस्य स तथा ।

१६ । नरो० । तदेव द्रढयति—बुद्ध्यादिसाक्षिण इत्यादिना । यतो बुद्ध्यादिसाक्षिणोऽतो मायाकार्यातिवर्त्तिनः, यतो मायाकार्यातिवर्त्तिनोऽतो रागादिरहितस्य । तत्कार्यं माया-गुणकार्यम् ।

---

१३ । ततः सुग्रीवप्रतिभाषितं तद्दत्तोत्तरमादाय । तत् श्रुत्वा पश्चात् यत् कार्यं कर्त्तुं योग्यं तत् करिष्यामि । रा० ।

१४ । अगच्छदिति च्छेदः । रा० ।

१५ । नित्यलक्ष्मीकः अविभक्ततन्नामकमायाशक्तिः, तत्सम्बोधनादेव सर्वज्ञः । स्वतस्तु विज्ञानात्मा निर्विषयज्ञानस्वरूपोऽपि सीतामनुशुशोचेति विरोधः, प्राकृतोऽज्ञो जनः प्राकृतां संयोगवियोगशालिनीम् । रा० ।

१६ । तत्र शङ्कते बुद्ध्येत्यादिना कथमुद्भवेदित्यन्तेन । मायाकार्यातिवर्त्तिनः तद-स्पृष्टस्य, अत एव रागादिरहितस्य ।

---

1 क-ख-घ 'आगत्य' । 2. क-ङ 'ष्यस-' । 3 ग 'गत्वा' । 4 च '-तं' ।
5 छ 'सीतावानु-' । 6 छ '-मुद्वहेत्' ।

ब्रह्मणोक्तमृतं कर्त्तु राज्ञो दशरथस्य [1]हि ।
तपसः फलदानाय जातो मानुष[2]वेषधृक् ॥ १७ ॥
मायया मोहिताः सर्वे जना अज्ञानसंयुताः ।
कथमेषां भवेन्मोक्ष इति विष्णु[3]र्विचिन्तयन् ॥ १८ ॥
कथां प्रथयितुं लोके सर्वलोकमलापहाम् ।
रामायणाभिधां रामो भूत्वा मानुषचेष्टकः ॥ १९ ॥
क्रोधं मोहञ्च कामञ्च व्यवहारार्थसिद्धये ।
तत्तत्कालोचितं गृह्णन् मोह[4]यत्यवशाः प्रजाः ॥ २० ॥

---

१७। नरो०। तर्हि किमर्थं दशरथगृहे धृतमानुषरूपो जातः, किमर्थं वा क्रोधादीन् गृह्णातीत्यपेक्षायामाह—ब्रह्मणोक्तमित्यादि। ऋतं सत्यम्।

१८। नरो०। मोहिता मोहसम्बद्धाः कृता इत्यर्थः। अत एवाज्ञानसंयुतास्तत्त्वज्ञानशून्या इत्यर्थः, ईश्वरविषयकज्ञानशून्या इत्यर्थो वा। मोहश्चात्र वस्त्ववस्तुविवेकाभावः।

१९। नरो०। सर्वलोकमलापहां सर्वलोकाज्ञाननाशिनीम्। रामायणाभिधां कथां लोके प्रथयितुं रामो मानुषचेष्टको भूत्वा।

२०-२१। नरो०। व्यवहारार्थसिद्धये तत्तत्कालोचितं क्रोधं मोहं कामञ्च गृह्णन्

---

[मायाकार्यातिवर्त्तिन इति। मायाकार्यं गुणत्रयं तदतिक्रम्य वर्त्तमानस्य निर्गुणस्येत्यर्थः। तत्कार्यं शोकादि। गो० ]

१७। समाधत्ते—ब्रह्मणेति। ब्रह्मप्रार्थितं रावणवधफलकावतरणमृतं सत्यं कर्त्तुं जातम्। फलान्तरमाह—राज्ञस्तपःफलदानाय च मानुषवेषधृग् जातः। एवञ्च तद्वेषनिर्वाहायैवं चेष्टाकरणमिति भावः। रा०।

१८। फलान्तरमपि तथा व्यवहरणस्याऽऽह—माययेति। मायामोहितत्वादेवाज्ञानसंयुताः। रा०।

१९। मानुषचेष्टको मनुष्यसदृशचेष्टाकर्त्ता। रा०।

२०। लोकानां क्रोधादिकालिकस्य व्यवहारस्य सिद्धये ज्ञानायार्थस्य तत्फलस्य च सिद्धये तत्तत्कालोचितं व्यवहारं गृह्णन् व्यवहरन् प्रजाः मोहयति, रामोऽप्येवं व्यवहृतवान् तस्मादेवं व्यवहारो युक्त इति बोधयति। मोहकत्वञ्चास्य निवृत्तिमार्गविपरीतत्वेन। रा०।

---

1. च 'च'। 2. ग ङ-च छ '-रूप-'। 3. च '-र्व्यचिन्तयत्'। 4. च '-यत्येव च', छ '-यन्नवशः'।

अनुरक्त इवाशेषगुणेषु गुणवर्जितः ।
विज्ञानमू[1]र्त्तिरज्ञानशक्तिसाक्षी गुणात्मकः ।
अतः [2]कामादिभिर्नित्यमविलिप्तो यथा नभः ॥ २१ ॥
[3]विन्दन्ति मुनयः केचिज्जानन्ति [4]सनकादयः ।
[5]तद्भक्ता निर्मलात्मानः सम्यग् जानन्ति [6]नित्यदा ।
भक्तचित्तानुसारेण जायते भगवानजः ॥ २२ ॥
लक्ष्मणोऽपि तदा गत्वा किष्किन्ध्यानग[7]रान्तिकम् ।
ज्याघोषमकरोत् तीव्रं भीषयन् सर्ववानरान् ॥ २३ ॥

---

अशेषगुणेषु अनसूयाद्यखिलगुणेषु अनुरक्तः अवशाः प्रजा मोहयन् वर्त्तते इत्यन्वयः । इवात्र वाक्यालङ्कारे । रामः कीदृशः ? विज्ञानं मूर्त्तिः स्वरूपं यस्य तादृशः । पुनः कीदृशः ? अज्ञानं माया तस्याः शक्तयस्तासां साक्षी अज्ञानशक्तिसाक्षी । गुणवर्जितत्वगुणात्मकत्वयोर्विरोधः, भक्तानुग्रहार्थशरीरधारणादविरोधः । अतो गुणवर्जितत्वात् । दृष्टान्तमाह—यथा नभ इति ।

२२ । नरो० । विन्दन्तीति तत्त्वत इति शेषः । निर्मलो रागादिरहित आत्मा मनो येषां ते तथा । सम्यग् जानन्ति साक्षात् कुर्वन्तीत्यर्थः । यद्वा पूर्ववाक्ये किञ्चिदित्यध्याहार्यम् । तथाऽप्यजस्य जन्मानुचितमिति चेत्तत्राऽऽह—भक्तेत्यादि ।

---

२१ । गुणवर्जितोऽपि अशेषगुणेषु शत्रुवधकान्तानुरागादिषु अनुरक्त इव तत्तद्भावहरन् । कामाद्यलिप्तत्वमेव हेतुपूर्वं निरूपयति—विज्ञानेति । स्वयं विज्ञानमूर्तिस्तद्घनः, तथा विज्ञानरूपैव शक्तिर्यस्य, तेन शक्तिसंसर्गकृतोऽन्यथाभावो वारितः । अत एव सर्वप्राणिनां शुभाशुभसाक्षी विशिष्टज्ञानशक्तित्वात् । अगुणान्वितः गुणान्वितभिन्नः, निर्गुण इति यावत् । अत इति स्पष्टम् । यथा नभ आकाशः पवनानीतमलेनालिप्तस्तद्वत् । रा० ।

[ विज्ञानशक्तिर्बुद्धिस्तस्याः साक्षी द्रष्टा । गुणात्मको गुणानां नियन्ता । अतः कामादिरहितः, यथा नभः सर्वगतमपि न क्वचिदासक्तं तथेत्यर्थः । गो० ]

२२ । नन्वेवंभूतोऽस्माभिर्न गृह्यते किम् ? तत्राऽऽह—विन्दन्तीति । केचिदेव सनकादयो मुनयो जानन्ति श्रुतिवाक्यैर्विन्दन्ति लभन्ते, अपरोक्षतयाऽपि साक्षात्कुर्वन्तीति यावत् । ततः किमन्ये न जानन्त्येव सर्वथा ? नेत्याह—तद्भक्ता इति । ईदृशाः सम्यग् जानन्त्येवेति भावः । तत्र हेतुमाह—भक्तेति । जायते ज्ञानविषयो जायत इत्यर्थः । रा० ।

---

1. क-ख घ-च '-र्त्तिर्विज्ञानशक्तिः साक्ष्यगुणान्वितः' । 2 ग 'कर्मा-' । 3 ङ 'विदन्ति', छ 'निन्दन्ति' । 4 च 'शौनका-' । 5 क ख 'तद्भावनि-' । 6 ङ च 'नित्यशः' । 7 ङ 'रं प्रति' ।

तं दृष्ट्वा प्राकृतास्तत्र वानरा वप्रमूर्द्धनि ।
चक्रुः किलकिलाशब्दं धृतपाषाणपादपाः ॥ २४ ॥

तान् दृष्ट्वा क्रोधताम्राक्षो वानराँल्लक्ष्मणस्तदा ।
निर्मूलान् कर्त्तुमुद्युक्तो धनुरा[1]नम्य वीर्यवान् ॥ २५ ॥

ततः शीघ्रं समा[2]गत्य ज्ञात्वा लक्ष्मणमागतम् ।
[3]निवार्य वानरान् सर्वानङ्गदो मन्त्रिसत्तमः ।
गत्वा लक्ष्मणसामीप्यं प्रणनाम स दण्डवत् ॥ २६ ॥

ततोऽङ्गदं परिष्वज्य लक्ष्मणः [4]प्रियवर्द्धनः ।
उवाच वत्स गच्छ त्वं पितृव्याय निवेदय ।
मामागतं राघवेण [5]चोदितं रौद्रमूर्तिना ॥ २७ ॥

तथेति त्वरितं गत्वा सुग्रीवाय न्यवेदयत ।
लक्ष्मणः क्रोधताम्राक्षः पुरद्वारि [6]बहिः स्थितः ॥ २८ ॥
तच्छ्रुत्वाऽतीव [7]सन्त्रस्तः सुग्रीवो वानरेश्वरः ।
आहूय मन्त्रि[8]णां श्रेष्ठं हनूमन्तमथाब्रवीत् ॥ २९ ॥

---

२४ । नरो० । वप्रमूर्धनि वप्रोपरीत्यर्थः । 'स्याच्चयो वप्रमस्त्रियाम्' इत्यमरः ।
२५ । नरो० । क्रोधेन ताम्रे इवाक्षिणी यस्य स तथा ।
२७ । नरो० । परिष्वज्य आलिङ्ग्य ।

---

२४ । वप्रं प्राकारः । किलकिलाशब्दो वानराणां क्रोधभयादिकालिकः शब्दः । रा० ।
२६ । अङ्गदस्यात्र लक्ष्मणसमीपे गमनं वाल्मीकीये नास्ति । तत्र वानराणां सिंहनादेन ताराया प्रबोधेन च सुग्रीवस्य ज्ञानोदयः । ततो मन्त्रिभिः सार्द्धं तस्य परामर्शः । तथाच—

सिंहनादं ततश्चक्रुर्लक्ष्मणस्य समीपतः ।
तेन शब्देन महता तारया च विबोधितः ॥
सुग्रीवः सचिवैः सार्द्धं मन्त्रार्थं समुपाविशत् । इत्यादि । ४।३१।२८-२९ ।

२७ । प्रियवर्द्धनः प्रियाणां वृद्धिकरणशीलः । रौद्रमूर्त्तिना वालिवधकालिकमूर्त्तिना । रा० ।
२८ । लक्ष्मणो बहिः स्थित इति न्यवेदयदित्यन्वयः । रा० ।

---

1. ग च 'लब्ध्वा' । 2. ख-ङ '-पत्य', ग '-गम्य' । 3. ग ङ 'निवार्य' । 4. ग-ङ च-छ 'प्रीतिव-' । 5. च 'प्रेरितं' । 6. च 'व्यवस्थितः' । 7. छ 'विलस्त' । 8. च '-णः' ।

गच्छ त्वमङ्गदेनाऽऽशु लक्ष्मणं विनयान्वितः ।
सान्त्वयन् कोपितं वीर शनैरानय मन्दिरम् ॥ ३० ॥

प्रेषयित्वा हनूमन्तं तारामाह कपीश्वरः ।
त्वं गच्छ सान्त्वयन्ती तं लक्ष्मणं मृदुभाषितैः ।
शान्तमन्तःपुरं नीत्वा पश्चाद्दर्शय मेऽनघे ॥ ३१ ॥

भवत्विति ततस्तारा मध्य[1]कक्षं समाविशत् ।
हनूमानङ्गदेनैव सहितो लक्ष्मणान्तिकम् ।
गत्वा ननाम शिरसा भक्त्या स्वागतमब्रवीत् ॥ ३२ ॥

एहि वीर महाभाग भवद्गृहम[2]शङ्कितम् ।
प्रविश्य राजदारादीन् दृष्ट्वा सुग्रीवमेव च ।
यदाज्ञा[3]पयसे पश्चात् तत् सर्वं करवाणि भोः ॥ ३३ ॥

इत्युक्त्वा लक्ष्मणं भक्त्या करे [4]गृह्य स मारुतिः ।
आनयामास नगरमध्याद्राजगृहं प्रति ॥ ३४ ॥

---

३० । कोपितं सञ्जातकोपं सान्त्वयन् क्षमावन्तं कुर्वन् मन्दिरमानय प्रापय । रा० ।

३१ । मृदुभाषितैः सान्त्वयन्ती लक्ष्मणं प्रति गच्छ, ततः शान्तकोपं कृत्वा, ततोऽन्तःपुरं नीत्वा । अनेन अत्यन्तमित्रत्वप्रदर्शनम् । मे मां दर्शय । रा० ।

सुग्रीवेण हनूमत्प्रेषणं ताराप्रेषणं वा वाल्मीकीये नास्ति । तत्र केनापि अप्रार्थितस्य स्वयं लक्ष्मणस्यैवान्तर्भवनं प्रवेशः, काञ्चनासनासीनसुग्रीवदर्शनञ्च । तथाच—

ततो रोषपरीतात्मा लक्ष्मणः परवीरहा ।
प्रविवेश गुहां घोरां किष्किन्ध्यां रामशासनात् ॥ इति । ४।३३।१ ।
ततः सुग्रीवमासीनं काञ्चने परमासने ।
महार्हास्तरणोपेते ददर्शाऽऽदित्यसन्निभे ॥ इति च । ४।३३।२४ ।

३२ । मध्यकक्षं स्त्रीणां सञ्चारमर्यादास्थलम् । रा० ।

३३ । अशङ्कितम् एहि, यत इदं भवद्गृहम् । राजदारादीन् दृष्ट्वेत्यनेन सेवकदारदर्शने यथा राज्ञो न सङ्कोचस्तथाऽस्मद्राजदारदर्शने तव सङ्कोचो नोचित इति भावः । रा० ।

३४ । गृह्येत्यार्षम् । रा० ।

---

1 ङ '-कक्षां' । 2 च-छ '-ङ्कित' । 3 ग 'पयते' । 4. च 'संगृह्य मारुतिः' ।

पश्यंस्तत्र महा[1]योधान् यूथपानां समन्ततः ।
जगाम भवनं राज्ञः सुरेन्द्रभवनोपमम् ॥ ३५ ॥

मध्य[2]कक्षे गता तत्र तारा ताराधिपानना ।
सर्वाभरण[3]सम्पन्ना [4]मन्दरक्तान्तलोचना ।
उवाच लक्ष्मणं नत्वा स्मितपूर्वाभि[5]भाषिणी ॥ ३६ ॥

[6]एहि देवर भद्रं ते साधुस्त्वं भक्तवत्सलः ।
किमर्थं कोपमाकार्षीर्भक्ते भृत्ये कपीश्वरे ॥ ३७ ॥

बहुकालमनाश्वासं दुःखमेवानुभूतवान् ।
इदानीं बहुदुःखौघाद् भवद्भिरभिरक्षितः ॥ ३८ ॥

भवत्प्रसादात् सुग्रीवः प्राप्तसौख्यो महामतिः ।
कामासक्तो रघुपते सेवा[7]र्थं नाऽऽगतो हरिः ॥ ३९ ॥

आगमिष्यन्ति हरयो नानादेशगताः प्रभो ।
प्रेषिता दशसाहस्रा हरयो रघुसत्तम ।
आनेतुं वानरान् दिग्भ्यो महापर्वतसन्निभान् ॥ ४० ॥

---

३६ । नरो० । मध्यकक्षे मध्यकक्षद्वारि गता स्थितेत्यर्थः । ताराधिपश्चन्द्र इव आननं यस्याः सा तथा । मन्दौ रक्तौ अन्तौ ययोः, तादृशे लोचने यस्याः सा तथा । स्मितपूर्वमभिभाषितुं शीलं यस्याः सा स्मितपूर्वाभिभाषिणी ।

३९ । नरो० । हरिर्वानरः ।

४० । नरो० । दश साहस्राणि येषां ते तथा । सहस्रमेव साहस्रम् ।

---

३७ । आदौ स्वस्य सेवकत्वाल्लक्ष्मणस्य भगवदवतारत्वाच्च नत्वा पश्चान्मित्रभावेन देवरेत्युक्तिः । त्वं साधुर्भक्तवत्सलः, अतो भक्तेष्वीदृशः कोपोऽनुचित इति भावः । आकार्षीः अतिशयेन कृतवान् । रा० ।

३८ । अनाश्वासं निरन्तरमित्यर्थः ।

३९ । यतः प्राप्तसौख्योऽतः कामासक्तोऽपि सेवार्थं नागत इति न, अपि त्वागत एव । काकुरत्र । रा० ।

४० । कथमागतस्तत्राऽऽह—आगमिष्यन्तीति । रा० ।

---

1 ग 'योधान्' । 2 ङ '-कक्षगता' । 3 ङ '-सम्पूर्णा' । 4 क-ख ग घ ङ-च 'मदर-', छ 'मदार-' । 5. ङ '-वादिनी' । 6. क-ख-घ छ 'याहि' । 7. ग छ 'र्थं' ।

सुग्रीवः स्वयमागत्य सर्ववानरयूथपैः ।
[1]वधयिष्यति दैत्यौघान् रावणञ्च हनिष्यति ।
त्वयैव सहितोऽद्यैव गन्ता वानरपुङ्गवः ॥ ४१ ॥
पश्यान्तर्भवनं तत्र पुत्रदारसुहृद्वृतम् ।
दृष्ट्वा सुग्रीवमभयं दत्त्वा नय [2]सहैव ते ॥ ४२ ॥
ताराया वचनं श्रुत्वा [3]कृशक्रोधोऽथ लक्ष्मणः ।
जगामान्तः[4]पुरं [5]यत्र सुग्रीवो [6]वानरेश्वरः ॥ ४३ ॥
रुमामालिङ्ग्य सुग्रीवः [7]पर्यङ्के पर्यवस्थितः ।
दृष्ट्वा लक्ष्मणमत्यर्थमुत्पपातातिभीतवत् ॥ ४४ ॥
तं दृष्ट्वा लक्ष्मणः क्रुद्धो मदविह्वलितेक्षणम् ।
सुग्रीवं प्राह दुर्वृत्त विस्मृतोऽसि रघूत्तमम् ॥ ४५ ॥
वाली येन हतो वीरः स बाणोऽद्य प्रतीक्षते ।
त्वमेव वालिनो मार्गं गमिष्यसि मया हतः ॥ ४६ ॥

---

४५ । नरो० । दुर्वृत्तो दुश्चरित्र ।

[ किष्किन्ध्याकाण्डे पञ्चमाध्यायव्याख्या समाप्ता ॥ ५ ॥ ]

---

४१ । रामभ्रातृत्वात् त्वयैव सहितो वानरपुङ्गवोऽद्यैव गन्ता रामसमीपमिति शेषः । रा० ।

४२ । अन्तर्भवनस्य मध्ये । ते सहैव नय स्वेनैव सह नयेत्यर्थः । रा० ।

४३ । तारावचनेनातिमधुरेण ललितेन कृशक्रोधः । रा० ।

४४ । अतिभीतवत् अत्यर्थमतिशयेन उत्पपात पर्यङ्कादिति शेषः । रुमामालिङ्ग्य इति । एतेनाध्यात्मरामायणे सुग्रीवस्य वानरत्वं वानरबुद्धित्वञ्च बाहुल्येन प्रकटीकृतम् । अन्यथा ज्ञातलक्ष्मणागमनवृत्तान्तस्य प्रहिताङ्गदतारारूपदूतस्य राज्ञः सुग्रीवस्य तदा कथमपि रुमालिङ्गन-कल्पना न सम्भवति । वृत्तान्तोऽयं वाल्मीकीयान्नवीनो विस्मयकरश्च । वाल्मीकीये—

स्त्रीभिः परमरूपाभिर्वृतः शतसहस्रशः ।
अप्सरोभिः परिवृतः कुबेरमिव मन्दरे ॥
वामपार्श्वे स्थिताञ्चास्य भार्यां तारामपश्यत ।
रुमां च दक्षिणे पार्श्वे सुग्रीवस्य महात्मनः ॥ ४।३३।३६-३७

वर्णनमिदं न दोषजनकम् अपि तु राजोचितमेव ।

४५ । मदविह्वलितेक्षणं मदविकलितनेत्रम् । रा० ।

४६ । प्रतीक्षते त्वां हन्तुमिति शेषः । रा० ।

---

1 ग ङ च 'विधमिष्यति' । 2 ग-च 'महामते' । 3 च 'त्यक्त', छ 'क्षत' । 4 छ 'पुरी' । 5 ग छ 'तत्र' । 6 च 'वानराधिप' । 7 छ 'पालङ्के' ।

एवमत्यन्तपरुषं वदन्तं लक्ष्मणं [1]तदा ।
उवाच हनुमान् वीरः कथमेव प्रभाषसे ॥ ४७ ॥
त्वत्तोऽधिक[2]तरो [3]रामे [4]भक्तोऽयं वानराधिप[5] ।
रामकार्यार्थमनिशं जागर्त्ति न [7]तु विस्मृतः ॥ ४८ ॥
आगताः[6] परितः [7]पश्य वानराः[8] कोटिश प्रभो ।
गमिष्यन्त्यचिरेणैव सीतायाः परिमा[9]र्गणे ।
साधयिष्यति सुग्रीवो रामकार्यमशेषतः ॥ ४९ ॥
श्रुत्वा हनूमतो वाक्यं सौमित्रिर्लज्जितोऽभवत् ।
सुग्रीवोऽप्यर्घ्यपाद्याद्यैर्लक्ष्मणं [10]समपूजयत् ॥ ५० ॥
आलिङ्ग्य प्राह रामस्य दासोऽहं तेन रक्षितः ।
[11]रामः स्वतेजसा लोकान् क्षणार्द्धेनैव जेष्यति ।
सहायमात्रमेवाहं वानरैः सहितः प्रभो ॥ ५१ ॥
सौमित्रिरपि सुग्रीवं प्राह किञ्चिन्मयोदितम् ।
तत् क्षमस्व महाभाग प्रणयाद्भाषितं मया ॥ ५२ ॥
गच्छा[12]मोऽद्यैव सुग्रीव रामस्तिष्ठति कानने ।
एक एवातिदुःखार्त्तो जानकीविरहात् प्रभुः ॥ ५३ ॥
तथेति रथमारुह्य लक्ष्मणेन समन्वितः ।
वानरैः सहितो राजा राममेवान्वपद्यत ॥ ५४ ॥
भेरीमृदङ्गैर्बहु[13]ऋक्षवानरैः श्वेतात[14]पत्रैर्व्यजनैश्च शोभितः ।
नीलाङ्गदाद्यैर्हनुमत्प्रधानैः [15]समावृतो राघव[16]मभ्यगाद्धरिः ॥ ५५ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्ध्याकाण्डे पञ्चमोऽध्यायः ॥ ५ ॥

४७। अत्र हनूमद्वाक्यं वाल्मीकीये तारावाक्यम् ।

४९। अस्मिन्नेव समये आकारणार्थं गता वानराः सेनां कर्षन्त आगता इत्याह—आगता इति। परिमार्गणं कर्त्तुमिति शेषः । रा० ।

५२। यत् किञ्चिन्मयोदितं तत् क्षमस्वेत्यन्वयः । प्रणयात् प्रणयकोपात् । रा० ।

1. क 'ततः'। 2 ग '-तरं'। 3 ङ 'रामभ-'। 4 च 'भक्तिमान्'। 5 च 'च'। 6 क '-तान्'। 7 च 'सर्वे'। 8. क '-रान्'। 9 क-ख-घ '-र्गणम्'। 10 घ 'सम्प्रपूजयत्'। 11. क-ख 'रामस्य ते-', ग 'रामश्च ते-'। 12 च 'स्यद्यैव'। 13 च 'भल्ल'। 14. क 'पत्य-'। 15. ग-छ 'समागतो'। 16 ग-ङ-च छ '-मन्वगा-'।

# षष्ठोऽध्यायः

—— ० ——

[1]श्रीमहादेव उवाच—

दृष्ट्वा राम समासीन गुहाद्वारि शिलातले ।
[2]चैलाजिनधर श्याम जटामौलिविराजितम् ॥ १ ॥
विशालनयन शान्त स्मितचारुमुखाम्बुजम् ।
सीताविरहसन्तप्त पश्यन्त मृगपक्षिणः[3] ॥ २ ॥
रथाद् दूरात् [4]समुत्पत्य वेगात् सुग्रीवलक्ष्मणौ ।
रामस्य पादयोरग्रे पेततुर्भक्ति[5]सयुतौ ॥ ३ ॥

---

१ । नरो० । चैलाजिनधरमिति । चेलस्य वस्त्रस्य खण्ड चैलम्, अजिनं चर्म । जटाभी रचितो मौलि किरीटं चूडा वा तेन विराजितस्तं तथा ।

---

१ । दृष्ट्वेति । चैलं जीर्णं वास. अजिनञ्च । रा० ।

३ । रथादिति । वाल्मीकीये यानमिदं शिविकानाम्ना व्यपदिष्टम्, तदपि यानमश्ववाहितमिति रथभेद एव स्यात् । तथाच—

स तामुपस्थितां दृष्ट्वा शिविकां वानराधिप. ।
लक्ष्मणाऽऽरुह्यतां क्षिप्रमिति सौमित्रिमब्रवीत् ॥
इत्युक्त्वा काञ्चन यानं सुग्रीव सूर्यसन्निभम् ।
बृहद्भिर्हरिभिर्युक्तमारुरोह सलक्ष्मण ॥ इति । ४।३८।२९-३० ।

अग्रेऽपि—

स गत्वा क्षणमात्रेण माल्यवन्तं महागिरिम् ।
दूराद्राघवमासाद्य तस्थौ हरिगणेश्वर. ॥
सोऽवतीर्य च सुग्रीव शिविकाया सलक्ष्मण. ।
मूर्ध्नि कृताञ्जलि श्रीमान् राममभ्याजगाम ह ॥ इति ४।३८।३६-३७ ।

एवं पाश्चात्त्येऽपि ( ४।३८ ) ।

---

1. क-ख-ग-घ-ङ पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2 च-छ 'चेला-' । 3 च-छ '-णम्' । 4 ग 'समाप्लुत्य', च 'समुत्प्लुत्यागाता' । 5 ग '-सन्नतौ' ।

रामः सुग्रीवमालिङ्ग्य पृष्ट्वाऽनामयमन्तिके ।
स्थापयित्वा यथान्यायं पूजयामास धर्मवित् ॥ ४ ॥
ततोऽब्रवीद्रघुश्रेष्ठं सुग्रीवो भक्तिनम्रधीः ।
देव पश्य समायान्तीं वानराणां महाचमूम् ॥ ५ ॥
कुलाचलाद्रि[1]सम्भूतमेरुमन्दर[2]सम्भवाः ।
नानाद्वीपसरिच्छैलवासिनः पर्व[3]तोपमाः ।
[4]असंख्याताः समायान्ति हरयः कामरूपिणः ॥ ६ ॥
[5]सर्वे देवांशसम्भूताः सर्वे युद्धविशारदाः ।
अत्र केचिद् गजबलाः केचिद्दशगजोपमाः ।
गजायुतबलाः केचिदन्येऽमितबलाः प्रभो ॥ ७ ॥

---

६ । नरो० । कुलाचलनामा अद्रिः पर्वतस्तत्र सम्भूताश्च मेरुमन्दरसम्भवाश्च ते तथा । नानेति सर्वेषां विशेषणं बोध्यम् ।

७ । नरो० । दशगजोपमा बलेनेति शेषः । गजायुतस्येव बलं येषां ते गजायुतबलाः । अमितम् अपरिमितं बलं येषां ते तथा ।

---

४ । धर्मविद्रामः सुग्रीवमालिङ्ग्य अनामयं कुशलं पृष्ट्वा अन्तिके स्थापयित्वा उपवेश्य च यथान्यायं पूजयामास सुहृद्बुद्ध्या सन्तोषयामासेत्यर्थः । पूजयामासेति वाल्मीकीयान्नवीनम् । तथाच—

वानराणां महत् सैन्यं सुग्रीवे प्रीतिमानभूत् ।
स सुग्रीवं परिष्वज्य बाहुभ्यां रघुनन्दनः ॥
अमात्यांश्च समाभाष्य निषीदेत्यब्रवीद्वच ।
तं निषण्णं क्षितितले सचिवैः सह वानरम् ॥ इति । ४।३८।४१-४२ ।

५ । ततो भक्तिनम्रधीः सुग्रीवः हे देव समायान्तीं वानराणां महाचमूं पश्य, रघुश्रेष्ठम् इत्यब्रवीदित्यन्वयः ।

६ । कुलाचला हिमालयादयः सप्त पर्वताः । रा० ।

वानरान् विशिनष्टि—कुलाचलेति । कामरूपिणो हरयः समायान्तीति द्वाभ्यामन्वयः । वानराणामागमनं वाल्मीकीये किष्किन्ध्याकाण्डीयोनचत्वारिंशसर्गे ।

---

1. क-ख-ग-घ-ङ-च-छ '-सम्भूता मेरु-' । 2 क-ख घ '-सन्निभा' । 3 ङ '-तैः समा' । 4 ग-पुस्तके ततोऽर्द्धंद्वयं नास्ति । 5 क-ख-घ ङ 'सर्वदेवा-' ।

केचिदञ्जनकूटाभाः केचित् कनकसन्निभाः ।
केचिद्रक्तान्त[1]वदना दीर्घवालास्तथाऽपरे ॥ ८ ॥
शुद्धस्फटिकसङ्काशाः केचिद्राक्षससन्निभाः ।
गर्जन्तः परि[2]तो यान्ति वानरा युद्धकाङ्क्षिणः ।
त्वदाज्ञाकारिणः सर्वे फलमूलाशना प्रभो ॥ ९ ॥
ऋक्षाणामधिपो वीरो जाम्बवान् नाम बुद्धिमान् ।
एष मे मन्त्रिणां श्रेष्ठ कोटिभल्लूक[3]वृन्दपः ॥ १० ॥
हनूमानेष विख्यातो महासत्त्वपराक्रमः ।
वायुपुत्रोऽतितेजस्वी मन्त्री बुद्धिमतां वरः ॥ ११ ॥
नलो नीलश्च गवयो गवाक्षो गन्धमादनः ।
शरभो [4]द्विविदो मैन्दो [5]गयः [6]पनस एव च ॥ १२ ॥

---

८ । नरो० । अञ्जनकूटस्येव आभा दीप्तिर्येषां ते तथा । रक्ता अन्ता येषां तादृशानि वदनानि येषां ते तथा । दीर्घा वाला केशा येषां ते तथा ।

९ । नरो० । शुद्धस्फटिकसङ्काशा निर्मलस्फटिकतुल्या इत्यर्थः ।

१० । नरो० । कोटिभल्लूकवृन्दप इति । कोटिसंख्यकानि भल्लूकवृन्दानि पातीत्यर्थः ।

११ । नरो० । महान्तौ सत्त्वपराक्रमौ यस्य स तथा । सत्त्वं वीर्यम्, पराक्रम उद्योगः शौर्यं वा ।

---

१० । कोटिभल्लूकवृन्दप । कोटीति वृन्दविशेषणम् । रा० ।

१२ । 'द्विविदो मैन्दो गयः' इत्येव पाठः समीचीनतया प्रतिभाति, वाल्मीकीयेनैकवाक्यत्वात् । तथाच—

आजगाम महावीर्यस्त्रिभिः कोटिशतैर्वृतः ।
मैन्दश्च द्विविदश्चोभौ वानरौ भीमविक्रमौ ॥ इति । ४।३९।३०
कोटिभिरेकादशभिः संवृतस्तु गयस्तदा ।
यूथपाधिपतिः श्रीमान् वानरः प्रत्यदृश्यत ॥ इति च । ४।३९।३६ ।

अग्रेऽपि—

गयं गवाक्षं गवयं कुमुदमृषभं तथा ।
मैन्दञ्च द्विविदञ्चैव शरभं गन्धमादनम् ॥ इति ।४।४१।४ ।

---

1 ग ङ-च '-नयना', छ '-दशना' । 2 च '-धावन्ति' । 3 ङ-च '-यूथप' । 4 क-ख-घ-छ 'द्विवदो मन्दश्चैव', क 'मैन्दवश्चैव' । 5 क-ख-घ-ङ-छ 'गज' । 6 छ 'पवन' ।

[1]वलीमुखो दधि[2]मुखः सुषेणस्तार एव च ।
[3]केशरी च महासत्त्वः पिता हनुमतो बली ॥ १३ ॥
एते मे यूथपा राम प्राधान्येन मयोदिताः ।
महात्मानो महावीर्याः शक्रतुल्यपराक्रमाः ॥ १४ ॥
एते प्रत्ये[4]कतः कोटिकोटिवानरयूथपाः ।
तवाऽऽज्ञाकारिणः सर्वे सर्वे देवांशसम्भवाः ॥ १५ ॥
एष वालिसुतः श्रीमानङ्गदो नाम विश्रुतः ।
वालितुल्यबलो [5]वीरो राक्षसानां [6]कुलान्तकः ॥ १६ ॥
एते चान्ये च बहवस्त्वदर्थे त्यक्तजीविताः ।
योद्धारः पर्वताग्रैश्च निपुणाः शत्रु[7]घातने ।
आज्ञापय रघुश्रेष्ठ सर्वे ते वशवर्त्तिनः ॥ १७ ॥
रामः सुग्रीवमालिङ्ग्य हर्षपूर्णाश्रुलोचनः ।
[8]प्राह [9]सुग्रीव जानासि[10] सर्वं त्वं कार्यगौर[11]वम् ।
मार्ग[12]णार्थं हि जानक्या नियुङ्क्ष्व यदि रोचते ॥ १८ ॥
श्रुत्वा रामस्य वचनं सुग्रीवः [13]प्रीतिमानसः ।
प्रेषयामास बलिनो वानरान् वानरर्षभः ॥ १९ ॥

---

१५ । नरो० । कोटिकोटिवानरयूथपा इति । कोटिः कोटिः कोटिकोटिरिति 'क्वचिदन्यत्रापी'ति तत्पुरुषः । ततो मध्यपदलोपी कर्मधारयः ।

१७ । नरो० । त्यक्तं त्यक्तुमिष्टं जीवितं यैस्ते तथा ।

१८ । नरो० । हर्षपूर्णश्चासौ अश्रुपूर्णश्चेति हर्षपूर्णाश्रुलोचनः, यद्वा हर्षेण पूर्णे अश्रुणा लोचने यस्य स तथा । यद्वा हर्षेण पूर्णमुच्छलितम् अश्रु यत्र तादृशे लोचने यस्य स तथा ।

---

१५ । प्रत्येकतः सार्वविभक्तिकस्तसिः । एकैक इत्यर्थः । रा० ।

१८ । कार्यगौरवं जानासि, ततो यस्यां दिशि ये योग्यास्तांस्तत्र नियुङ्क्ष्वेत्यर्थः । रा० ।

१९ । वानराणां प्रेषणं वाल्मीकीये किष्किन्ध्याकाण्डे चत्वारिंशसर्गादारभ्य चतुश्चत्वारिंशसर्गान्ते अध्यायपञ्चके वर्णितम् ।

---

1. ग 'वलि-' । 2 ग '-मुखस्तारः केशरी एव च' । 3 ग 'चमसश्च' । 4. ङ '-कश ' । 5. ग 'लोके' । 6. क-ख घ 'बला-' । 7. च '-घातिनः' । 8 ग-च छ 'आह' । 9 च 'सखे वि-' । 10 ग-च-छ '-सि सर्वं त्वं' । 11. छ '-वात्' । 12. ग ङ-छ '-णार्थे' । 13 क-ख-घ 'प्रीत-' ।

दिक्षु सर्वासु विविधान् वानरान् प्रेष्य सत्वरम् ।
दक्षिणां दिशमत्यर्थं प्रयत्नेन महाबलान् ॥ २० ॥
युवराजं जाम्बवन्तं हनूमन्तं महाबलम् ।
नलं सुषेणं शरभं मैन्दं द्विविदमेव च ।
प्रेषयामास सुग्रीवो वचनञ्चेदमब्रवीत् ॥ २१ ॥
विचिन्वन्तु प्रयत्नेन भवन्तो जानकीं शुभाम् ।
मासा[1]दर्वाग् निवर्त्तध्वं मच्छासनपुरःसराः ॥ २२ ॥

---

२१ । नरो० । युवराजमङ्गदम् ।

२२ । नरो० । विचिन्वन्तु अन्विष्यन्तु । मम शासनं पुरःसरं येषां ते तथा ।

---

२०-२१ । अत्यर्थमतिशयेन महाबलान् ज्ञात्वा प्रयत्नेन प्रेषयामासेत्यग्रेणान्वयः । तानेवाऽऽह—युवराजमिति ।

अत्राऽऽह वाल्मीकिः—

अथ प्रस्थाप्य स हरीन् दिशं पूर्वां हरीश्वरः ।
अपरान् प्रेषयामास वानरान् दक्षिणां दिशम् ॥
अब्रवीद् गिरिसङ्काशं हनूमन्तमुपस्थितम् ।
पितामहसुतञ्चैव जाम्बवन्तं महाकपिम् ॥
नीलमग्निमुखञ्चैव नलं चन्दनमेव च ।
शरार्चिषं सुहोत्रञ्च शरगुल्मं तथैव च ।
गयं गवाक्षं गवयं कुमुदमृषभं तथा ।
मैन्दञ्च द्विविदञ्चैव शरभं गन्धमादनम् ॥
दरीमुखं भीममुखं तारं च वनगोचरम् ।
अङ्गदप्रमुखानेतान् हरीन् कपिगणेश्वरः ॥ इत्यादि । ४।४१।१-९ ।

२२ । मच्छासनपुरःसराः मच्छासनं पुरःसरमग्रे येषां तादृशाः । अनेन मच्छासनं न विस्मर्त्तव्यमिति सूचितम् । रा० ।

अत्राऽऽह वाल्मीकीये—

अवगम्य तु वैदेहीं निलयं रावणस्य च ।
मासादूर्द्ध्वं न वस्तव्यं वसन् वध्यो भवेन्मम ॥ इति । ४।४४।१२९ ।

---

1, '-दूर्द्ध' ।

सीतामदृष्ट्वा यदि वो मासादूर्ध्वं दिनं भवेत् ।
तदा प्राणान्तिकं दण्डं मत्तः प्राप्स्यथ वानराः ॥ २३ ॥
इति प्रस्थाप्य सुग्रीवो वानरान् भीमविक्रमान् ।
रामस्य पार्श्वे श्रीरामं नत्वा चोपविवेश स ॥ २४ ॥
गच्छन्तं मारुतिं दृष्ट्वा रामो वचनमब्रवीत् ।
अभिज्ञानार्थमेतन्मे ह्यङ्गुलीयकमुत्तमम् ।
मन्नामाक्षरसंयुक्तं सीतायै दीयतां रहः ॥ २५ ॥
अस्मिन् कार्ये प्रमाणं हि त्वमेव कपिसत्तम ।
जानामि सत्त्वं ते सर्वं गच्छ पन्थाः शुभस्तव ॥ २६ ॥
एवं कपीनां राज्ञा ते विसृष्टाः परिमार्गणे ।
सीतायाः अङ्गदमुखा बभ्रमुस्तत्र तत्र ह ॥ २७ ॥

---

२६ । नरो० । सत्त्व वीर्यम् ।

---

२३ । प्राणान्तिकं प्राणान्तसम्बन्धिनं तत्सम्पादकमिति यावत् । अध्यात्मादित्वाट्ठञ् । रा० ।

२४ । श्रीरामं नत्वा तत्पार्श्वे उपविवेशेत्यन्वयः । रा० ।

२५ । मे मम अङ्गुलीयकं गृहाणेति शेषः । हि पादपूरणे । रा० ।

अत्राऽऽह आदिकविर्वाल्मीकिः—

स समीक्ष्य महातेजा व्यवसायोत्तरं कपिम् ।
करिष्यति ध्रुवं कार्यमयमित्यन्ववेक्षत ॥
ददौ चास्य तदा प्रीतः स्वनामाङ्काभिचिह्नितम् ।
अङ्गुलीयमभिज्ञानं राजपुत्र्याः परन्तपः ॥
अस्य सा हरिशार्दूल दर्शनाज्जनकात्मजा ।
मस्यते मन्नियुक्तं त्वां न चोद्वेगं करिष्यति ॥ इत्यादि ४।४२।११-१३ ।

२६ । ननु अङ्गदादीन् विहाय मह्यमेव किमर्थं दीयते तत्राऽऽह—अस्मिन्निति । सत्त्वं बलं बुद्धिश्च । रा० ।

२७ । कपीनां राज्ञा सुग्रीवेण । परिमार्गणे अन्वेषणे, विसृष्टा नियुक्ताः । तत्र तत्र सुग्रीवोक्तेषु स्थानेष्वित्यर्थः । वानराणां दिग्भ्रमणप्रवृत्तिर्वाल्मीकीये—

---

1 ग-ङ-च क 'लीयक-' । 2 ङ क 'रह' । 3 च 'सर्वन्ते' । 4 ग 'यऽङ्गद-' । 5 ग क 'हि', अत परं च-पुस्तके 'आशीर्दत्त्वा विसृष्टास्ते वानरा भीमविक्रमाः । राघवेण महावीर्या सर्वलोकाधिपेन वै ॥' इत्यधिकम् ।

भ्रम[1]न्तो विन्ध्यगहने ददृशु पर्वतोपमम्।
राक्षसं भीषणाकारं भक्षयन्तं मृगान् गजान् ॥ २८ ॥

तदुग्रशासनं भर्तुर्विज्ञाय हरिपुङ्गवाः ।
शलभा इव संछाद्य पृथिवीं संप्रतस्थिरे ॥
पूर्वान्तु दिशमास्थाय विनतः प्लवगैः सह ।
प्रतस्थे कपिशार्दूलो वानरैर्बहुभिर्वृतः ॥
ताराङ्गदाभ्यां सहितः प्लवगः पवनात्मजः ।
अगस्त्यचरितामाशां प्रतस्थे प्लवगैः सह ॥
सुषेणः कपिशार्दूलो हृष्टो वरुणपालिताम् ।
प्रतस्थे विक्रमोपेतैः सुदुर्गां प्लवगैः सह ॥
उत्तरान्तु दिशं दुर्गां गिरिराजसमावृताम् ।
वीरः शतबलिर्नाम ययौ बहुबलानुगः ॥ इति ४।४९।१-९।

२८। भ्रमन्तो वानरा इति शेषः। प्राच्ये वाल्मीकीये नायं वृत्तान्तो विन्ध्यगहनीयः, न वा मिलितैर्वानरै राक्षसस्य वधः ।

त्यक्त्वा तु तं ततो देशं सर्वे ते हरियूथपाः ।
देशमन्यं दुराधर्षमन्वैषन्नकुतोभयाः ॥ ४।४८।७

इत्यादिना पूर्वं तेषां विन्ध्यपर्वतादवतरणम्, ततश्च—

अवगतन्तु ते कृत्वा तत् सर्वं काननं पुनः ।
अन्यदेव महाघोरं प्राविशन् गिरिगह्वरम् ॥
ते प्रविश्य तु तद्भीमं लतागुल्मसमावृतम् ।
ददृशुः सुमहाकायमसुरं सुरनिर्भयम् ॥ ४।४८।१६-१७

इत्यादिना अन्यस्मिन् कस्मिंश्चिद् गह्वरे असुरदर्शनम्। असुरश्च—

सोऽपि मारीचतनयस्तृणवत् तानपश्यत ।
तमङ्गदः सुसक्रुद्धो युद्धाय समुपाद्रवत् ॥ ४।४८।१९

इत्यादिना राक्षस एवेति ज्ञायते ।

स वालिपुत्राभिहतो वक्त्राच्छोणितमुद्गिरन् ।
राक्षसो न्यपतद्भूमौ वज्राहत इव द्रुमः ॥ ४।४८।२२

इत्यादिना च अङ्गदेन तस्य विनिपातनम् ।

1 च 'न्तोऽत्यन्तगहने'।

रावणोऽयमिति ज्ञात्वा केचिद् वानरपुङ्गवाः ।
जघ्नुः किलकिलाशब्दं मुञ्चन्तो मुष्टिभिः क्षणात् ॥ २९ ॥
नायं रावण इत्युक्त्वा ययुरन्यन्महद् वनम् ।
तृषार्त्ताः सलिलं तत्र नाविन्दन् हरिपुङ्गवाः ॥ ३० ॥
विभ्रमन्तो महारण्ये शुष्क[1]कण्ठौष्ठतालुकाः ।
ददृशुर्गह्वरं तत्र तृणगुल्मावृतं महत् ।
आर्द्रपक्षान् क्रौञ्चहंसान् निःसृतान् ददृशुस्ततः ॥ ३१ ॥
अत्राऽऽस्ते सलिलं नूनं प्रविशामो महागुहाम् ।
इत्युक्त्वा हनुमानग्रे प्रविवेश तमन्वयुः ।
सर्वे परस्परं धृत्वा बाहून् बाहुभिरुत्सुकाः ॥ ३२ ॥

---

३१ । नरो० । शुष्कं कण्ठौष्ठतालुकं येषां ते तथा । तृणानि च गुल्माश्चाप्रकाण्डवृक्षास्तैरावृतं वेष्टितम् ।

---

ते तु तस्मिन् निपतिते वानरा जितकाशिनः ।
प्रत्यचिन्वन् प्रयत्नेन सर्वं तं गिरिगह्वरम् ॥
ते विचित्य पुनः खिन्ना विनिष्पत्य समागताः ।
एकान्ते वृक्षमूलेषु निषेदुर्दीनमानसाः ॥

इत्यादिना तस्य वधात् परं तद्गह्वरान्वेषणम्, ततश्च तत्रैव वृक्षमूले उपवेशनं वानराणामिति ।

२९ । किलकिलाशब्दं मुञ्चन्तो मुष्टिभिः क्षणाज्जघ्नुः, राक्षसमिति शेषः । रा० ।

३० । नायमिति छकरवधत्वादिति भावः । रा० ।

३१ । गह्वरं गिरिगुहाम् । वाल्मीकीयेऽपि—

अवीक्षमाणा सीताञ्च रावणञ्च सुदुःखिताः ।
बुभुक्षिताः परिश्रान्तास्तृषिताः सलिलार्थिनः ॥
अथावकीर्णं ददृशुर्बिलं वृक्षैः समावृतम् ।
तमसा महता ग्रस्तमिन्द्रस्यापि भयावहम् ॥ इति । ४।५०।१०-११ ।

ततो गुहायाः ।

३२ । उत्सुका जलविषयोत्कण्ठावन्त इत्यर्थः । परस्परं बाहुभिर्बाहून् धृत्वा सर्वे हनुमन्तमन्वयुः । अत्यन्धकारादेतत्करणम् । रा० ।

अत्र सलिलम् आस्ते, अतः पिपासार्त्ता वयम् इमां महागुहां प्रविशाम पिपासाप्रशमायेत्यर्थः । अत्रापि वाल्मीकीये—

1. ख घ 'कण्ठोष्ठ-' ।

अन्धकारे महद्दूरं गत्वाऽ[1]पश्यन् कपीश्वराः ।
जलाशयान् मणिनि[2]भतोयान् कल्पद्रुमोपमान् ।
वृक्षान् पक्वफलैर्नम्रान् मधु[3]द्रोणसमन्वितान् ॥ ३३ ॥

---

३३ । नरो० । मधुयुक्ता द्रोणा मधुद्रोणाः, तैः समन्वितास्तान् तथा । द्रोणा इव द्रोणाः ।

---

ततः क्रौञ्चाश्च हंसाश्च सारसाः कुकरास्तथा ।
जलार्द्राश्चक्रवाकाश्च पद्मरेण्वभिरञ्जिताः ॥
कुररा मञ्जुलाश्चैव तथैव जलकुक्कुटाः ।
रक्ताङ्गाश्चैव कादम्बा निष्पतन्तः समन्ततः ॥
कलहंसाः प्लवाश्चैव तथाऽन्ये जलचारिणः ।
ते तु दृष्ट्वा विलं सर्वे विस्मयाकुलचेतसः ॥ इत्यादि ४।५०।१२-१४।

अग्रे इति । व्यक्तं वाल्मीकीये—

ततस्तस्मिन् विले दुर्गे लतापादपसङ्कुले ।
हनूमानग्रतस्तेषामङ्गदाद्या अनन्तरम् ॥
अन्योन्यं संपरिष्वज्य जग्मुर्योजनमन्तरम् ।
स्वसंज्ञया विमूढास्ते वानराश्चक्रुरारवम् ॥ इति ४।५०।२२-२३।

३३ । महद्दूरं बहुदूरमित्यर्थः । मणिनिभतोयान् मणितुल्यनिर्मलजलान् । कल्पद्रुमोपमानिति उत्तरान्वयि । मधुद्रोणसमन्वितान् द्रोणपरिमितमधुयुतान् । रा० ।

अत्राऽऽह वाल्मीकिः—

जातरूपमयैश्चापि चरद्भिर्मत्स्यकच्छपैः ।
नलिनीस्तत्र ददृशुः प्रसन्नसलिलाः शुभाः ॥ इति ४।५०।२८।

विलवैचित्र्यवर्णनं वाल्मीकीये किष्किन्ध्याकाण्डे पञ्चाशसर्गे ।

[ मधुद्रोणसमन्वितानिति मधुद्रोणः क्षौद्रपटलं तद्युक्तान् । गो० ]

---

1 ग-ङ-च-छ 'पश्यत कपीश्वर' । 2 ग-ङ-च-छ '-भासोयान् कल्प-' । 3 क-ग '-द्रोणि-', छ '-द्रोणी-' ।

[1]गृहान् सर्वगुणोपेतान् मणि[2]रत्नादिपूरितान् ।
दिव्यभक्ष्यान्नसहितान् मानुषैः परिवर्जितान् ॥ ३४ ॥
विस्मितास्तत्र भवने दिव्ये कनक[3]विष्टरे ।
प्रभया दीप्यमा[4]नां ते ददृशुः स्त्रिय[5]मेकलाम् ॥ ३५ ॥
ध्यायन्तीं चीरवसनां योगिनीं योगमास्थिताम् ।
प्रणेमुस्तां महाभागां भक्त्या भीत्या च वानराः ॥ ३६ ॥

---

३४ । नरो० । मणिरत्नादिपूरितानिति । मणिरश्मजातिः, रत्नं मुक्तादि, आदिपदेन सुवर्णादिपरिग्रहः । यद्वा 'रत्नं स्वजातिश्रेष्ठेऽपी'त्यमरकोषाद्रत्नशब्दः श्रेष्ठवाचकः । आदिपदेन दिव्यसुवर्णादिपरिग्रहः ।

३५ । नरो० । कनकविष्टरे कनकासने ।

३६ । नरो० । चीरमेव वसनम् आच्छादनं यस्यास्तां तथा । चीरं वस्त्रखण्डम् । योगं ध्यानम् आस्थितां प्राप्ताम् ।

---

३४ । गृहान् गृहाणि । अर्धर्चादिः । रा० ।

३५ । कनकविष्टरे स्वर्णासने । वाल्मीकीयेऽपि—

ददृशुस्तत्र चाऽऽसीनां विष्टरे काञ्चने शुभे ।
प्रभया दीप्यमानान्तु चीरकृष्णाजिनाम्बराम् ॥ इति । ४।५०।३७ ।

३६ । योगमास्थितां चित्तवृत्तिनिरोधजसिद्धिं प्राप्ताम् । भक्तिर्भीतिर्योगिनीविषये । रा० ।
अत्र वानराणां सर्वेषामेव अभिवादनं वाल्मीकीये केवलं हनूमतः । तथाच—

ततो हनूमान् गिरिसन्निकाशः कृताञ्जलिस्तामभिवाद्य विद्वान् ।
पप्रच्छ का त्वं भवनं बिलञ्च रत्नानि चेमानि वराणि कस्य ॥ ४।५०।३८ ।

बिलनिर्माणप्रकारमाह वाल्मीकीये—

मयो नाम महातेजा मायावी दानवर्षभः ।
तेनेदं निर्मितं सर्वं मायया काञ्चनं बिलम् ॥
पुरा दानवमुख्यानां विश्वकर्मा बभूव सः ।
तेनेदं काञ्चनमयं निर्मितं भवनोत्तमम् ॥ इति । ४।५१।११-१२ ।

---

1. ङ-च-छ 'गृहान्' । 2 क-ङ-च-छ 'वस्त्रादि-' । 3. ग '-विस्तर' । 4. क ख-घ-ङ 'नां तु' । 5. ग-च '-मैकिकाम्' ।

दृष्ट्वा तान् वानरान् देवी प्राह यूयं [1]किमागताः ।
कुतो वा कस्य [2]दूता वा मत्स्थानं किं प्रधर्षथ ॥ ३७ ॥
तच्छ्रुत्वा हनुमानाह शृणु वक्ष्यामि देवि ते ।
अयोध्याधिपतिः श्रीमान् राजा दशर[3]थः प्रभुः ।
तस्य पुत्रो महाभागो ज्येष्ठो राम इति [4]श्रुतः ॥ ३८ ॥
पितुराज्ञां पुरस्कृत्य सभार्यः सानुजो वनम् ।
गतस्तत्र हृता भार्या तस्य साध्वी दुरात्मना ।
रावणेन ततो रामः सुग्रीवं सानुजो ययौ ॥ ३९ ॥
सुग्रीवो मित्रभावेन रामस्य प्रियवल्लभाम् ।
मृगयध्वमिति प्राह ततो वयमुपागताः ॥ ४० ॥
[5]ततो [6]वनं [7]विचिन्वन्तो जानकीं जलकाङ्क्षिणः ।
प्रविष्टा गह्वरं घोरं दैवादत्र समागताः ।
त्वं वा किमर्थमत्रासि [8]का वा त्वं वद नः शुभे ॥ ४१ ॥
योगिनी च तथा दृष्ट्वा वानरान् प्राह हृष्टधीः ।
यथेष्टं फलमू[9]लानि जग्ध्वा पीत्वाऽमृतं पयः ।
आगच्छत ततो वक्ष्ये मम वृत्तान्तमादितः ॥ ४२ ॥
तथेति [10]भुक्त्वा पीत्वा च हृष्टास्ते सर्ववानराः ।
देव्याः समीपं [11]गत्वा ते बद्धाञ्जलिपुटाः स्थिताः ॥ ४३ ॥

---

४१ । नरो० । गह्वरं गुहाम्, घोरं भयानकम् ।
४२ । नरो० । अमृतम् अमृतमिव पयो जलम् ।

---

३७ । किं किमर्थमागताः । कुत आगता इति शेषः । मत्स्थानं किं प्रधर्षथ किमिति बलात् प्रविष्टाः । रा० ।
४२ । अत्राऽऽह वाल्मीकिः—

सा तु तस्य वचः श्रुत्वा तापसी धर्मचारिणी ।
आदाय फलमूलानि विधिनोपजहार ह ॥
प्रतिगृह्य तु ते तस्यास्तदातिथ्यं वनेचराः ।
विधिवद् भक्षयामासुस्तां चैव समपूजयन् ॥ इति । ४।५१।२१-२२ ।

---

1 च 'समा-' । 2 ख-ङ-च-छ 'दूती वा मत्-' । 3 च-छ '-थो महान्' । 4. च 'स्मृत' । 5. च 'अतो' । 6 ग च छ 'वय' । 7 च 'विचिन्वाना' । 8. ग 'कारण' । 9. च '-लादि' । 10. ग च 'पीत्वा भुक्त्वा' । 11. च 'ते गत्वा' ।

ततः प्राह हनूमन्तं योगिनी दिव्यदर्शना ।
हेमा नाम पुरा दिव्यरूपिणी विश्वकर्मणः ।
पुत्री महेशं नृत्येन तोषयामास [1]भामिनी ॥ ४४ ॥
तुष्टो महेशः प्रददाविदं [2]दिव्यपुरं महत् ।
अत्र स्थिता सा सुदती वर्षाणामयुतायुतम् ॥ ४५ ॥
तस्या अहं सखी विष्णुतत्परा मोक्षकाङ्क्षिणी ।
नाम्ना स्वयंप्रभा दिव्यगन्धर्वतनया पुरा ॥ ४६ ॥
गच्छन्ती ब्रह्मलोकं सा मामाहेदं तपश्चर ।
अत्रैव निवसन्ती त्वं सर्वप्राणिविवर्जिते ॥ ४७ ॥

---

४६ । नरो० । यतो मोक्षकाङ्क्षिणी अतो विष्णुतत्परा ।

---

४५ । प्रददौ हेमायै इति शेषः । रा० ।

महेशः प्रददाविति । वाल्मीकीये ब्रह्मणा दत्तम् । तथाच—

तदिदं ब्रह्मणा दत्तं हेमायां वनमुत्तमम् ।
शाश्वताः कामभोगाश्च गृहञ्चेदं हिरण्मयम् ॥ इति । ४।५१।१६ ।

४६ । दिव्यगन्धर्वो दिव्याख्यो गन्धर्वस्तस्य कन्या । रा० ।

पुरेति अग्रेणान्वयः । स्वयप्रभेति । अग्निपुराणे सुप्रभेति नाम । तथाच—

दक्षिणे मार्गयामास सुप्रभाया गृहान्तिके । इति । ८।११ ।

४७ । गच्छन्ती ब्रह्मलोकं सा इत्यादि स्वयंप्रभाया बदरीवनगमनान्तं वृत्तजातं वाल्मीकीयान्नवीनम् । तथाच तत्र—

दुहिता हेमसावर्णेरहं नाम्ना स्वयंप्रभा ।
इदं रक्षामि भवनं हेमाया वानरर्षभा ॥
मम प्रियसखी हेमा नृत्यगीतविशारदा ।
तया सखित्वाद्धद्धाऽहं रक्षामि भवनोत्तमम् ॥ ४।५१।१७-१८ ।

इत्यादिना हेमाया रक्षयित्रीत्वे नियुक्तेयम् ।

एष प्रस्रवणः शैल एष पार्श्वे महोदधिः ।
स्वस्ति वोऽस्तु गमिष्यामि भवनं वानरोत्तमाः ।
इत्युक्त्वा तद्बिलं घोरं प्रविवेश तपस्विनी ।
तपोयोगप्रभावेण निमेषान्तरचारिणी ॥ ४।५१।२७-२८ ।

इत्यादिना च तत्र गुहायामेव पुनः प्रवेशः ।

---

1. च 'मानिनी' । 2. घ 'दिव्यं पु-' ।

त्रेतायुगे दाशरथिर्भूत्वा नारायणोऽव्ययः ।
भूभारहरणार्थाय विचरिष्यति कानने ॥ ४८ ॥
मार्गन्तो वानरास्तस्य भार्यामायान्ति ते [1]गुहाम् ।
पूजयि[2]त्वाऽथ [3]तान् [4]गत्वा [5]रामं स्तुत्वा प्रयत्नतः ।
यातासि [6]भवनं विष्णोर्योगिगम्यं सनातनम् ॥ ४९ ॥
इतोऽहं गन्तुमिच्छामि रामं द्रष्टुं त्वरान्विता ।
यूयं [7]पिदध्वमक्षीणि गमिष्यथ बहिर्गुहाम् ॥ ५० ॥
तथैव चक्रुस्ते [8]वेगाद् गताः पूर्वस्थितं वनम् ।
साऽपि त्यक्त्वा गुहां शीघ्रं ययौ राघवसन्निधिम् ॥ ५१ ॥
तत्र रामं ससुग्रीवं लक्ष्मणञ्च ददर्श ह ।
कृत्वा प्रदक्षिणं रामं प्रणम्य बहुशः सुधीः ।
आह गद्गदया वाचा रोमाञ्चिततनूरुहा ॥ ५२ ॥

---

५२ । नरो० । रोमाञ्चितानि तनूरुहाणि यस्या सा तथा । तनूरुहशब्दसमभिव्याहारसत्त्वे रोमाञ्चशब्दः स्वार्थैकदेशे हर्षणे निरूढलाक्षणिकः ।

---

सर्वप्राणिविवर्जिते इति । प्राणिशब्दोऽत्र मनुष्यवाची, अन्यथा अस्यैव

आर्द्रपक्षान् क्रौञ्चहंसान् निःसृतान् ददृशुस्ततः । ४।३१ ।

इत्यनेन

अस्मादपि तु पश्यामो विलान्निष्पततो बहून् ।
जलेचरान् पक्षिगणाञ्छतशोऽथ सहस्रशः ॥ ४।५०।१७ ।

इत्यादिवाल्मीकीयेन च विरोधापत्तेः । यद्वा, भिन्नमेवेदं गृहं गुहायाः, ततश्च युक्तमेव तस्य स्वामिभिन्नसर्वप्राणिविवर्जितत्वम् ।

४९ । तान् वानरान् । रामं गत्वा तत्समीपं गत्वा स्तुत्वा अर्थाद् राममेव । यातासि लुटि रूपम् । रा० ।

५० । इतः पूर्वोक्तहेमानियोगात् अस्माद्देशाच्च । रा० ।

५१ । वेगात् वेगादिव क्षणेनैवेत्यर्थः । पूर्वस्थितं वनं गताः । रा० ।

---

1 ग 'गहम्' । 2 ङ '-त्वा तथा गत्वा' । 3 ग-छ 'तं' । 4 घ 'मत्वा' । 5 छ 'तुत्वा रामं' । 6. ग 'भवने' । 7 च 'पिनध्व' । 8 ग-ङ 'वेग' ।

दासी तवाहं राजेन्द्र दर्शनार्थमिहाऽऽगता ।
बहुवर्षसहस्राणि तप्तं मे दुश्चरं तप' ।
गुहायां दर्शनार्थं ते फलितं [1]मेऽद्य तत् तपः ॥ ५३ ॥
[2]आद्यं हि त्वां नमस्यामि मायायाः [3]परतः स्थितम् ।
सर्वभूतेषु [4]वालक्ष्यं बहिरन्तरवस्थितम् ॥ ५४ ॥
योगमायाजवनिकाच्छन्नो मानुषविग्रहः ।
न लक्ष्यसेऽज्ञान[5]दृशां शैलूष इव [6]वेशधृक् ॥ ५५ ॥

---

५४। नरो०। श्रीराम दृष्ट्वात्मानं कृतकृत्यं मन्यमाना नमस्कुर्वती स्तौति—आद्यमित्यादि सुग्रीवादिभिरन्वितमित्यन्तेन। यतो मायाया जगदाकारेण परिणमनकालीनमायायाः पूर्वत॰ पूर्वं स्थितमत आद्यम् आदिकारणम्। भवतु ममाऽऽदिकारणत्व दर्शनार्थं कथ दुश्चर तपस्तप्तमिति चेत्तत्राऽऽह—सर्वभूतेषु चेति। अलक्ष्यमदृश्यम्। असन्निहित वस्तु अदृश्यं भवति किं चित्रमिति चेत्तत्राऽऽह—बहिरन्तरवस्थितमिति।

५५। नरो०। ननु तर्हि कथ ममादृश्यत्वमित्यत आह—योगमायेत्यादि। योगमायेव जवनिका अन्त पटस्तया आच्छन्न आवरणशक्त्या अवलोकयितृबुद्धिपिधायकतया पिहित इवेत्यर्थ। मानुषस्येव विग्रहो यस्येति मानुषविग्रह एव विग्रहो यस्येति वा बहुव्रीहि। प्राक्तनकर्माधीनतया इदं शरीरं गृहीतं कथमेव वदसीति चेत्तत्राऽऽह—शैलूष इव वेशधृगिति। स्वेच्छया नटो यथा वेश गृह्णाति त्यजति च तथा त्वमपीति भाव॰।

५४। मायायाः परत॰ स्थित तदनधीनम्। विवर्त्तोपादानतयाऽन्तर्यामितया च सर्वभूतानां बहिरन्तरवस्थितमपि तैरलक्ष्यम्। रा०।

[ आद्य हीत्यादि। त्वा त्वां नमस्यामि। ननु देवी त्वं मानुष मां कथं प्रणमसि तत्राऽऽह—आद्यमिति। त्व न मानुप॰ हि निश्चितम् आद्य सर्वकारणम्। ननु जगत प्राक्तत्वात् मायैव आद्या, न, तस्या अपि त्वं कारणमित्याह—मायाया परत पूर्वत स्थित वर्त्तमानम्। सर्वभूतेषु बहिरन्तःस्थितमपि अलक्ष्यम्। गो० ]

५५। जवनिका नटानां वेशग्रहणस्थानावरणं पटनिर्मितम्। नटाश्च तत्र प्रविष्टास्तयाच्छन्ना भवन्ति तद्वद् योगमायया त्व छन्नो गुप्त॰ कृत सन्। अज्ञानदृशां तैरित्यर्थ॰, न लक्ष्यसे। रूपधृक् तस्माद्रामादिरूपधृक् शैलूषो नट इव। स यदा रामादिवेश कृत्वा रामाद्यनुकरण करोति तदा राम इत्येव गृह्यते न तु पूर्वदृष्टोऽपि तद्रूपेण तद्वत्। रा०।

---

1 क 'मे मद्दत्तप.'। 2 क ख-घ 'अद्य'। 3 ग 'परित', च-छ 'पुरत.'। 4 ग-छ 'वाऽल-'। 5 ड छ '-दृशा शै'। 6 क-ख-घ 'रूप'।

महाभागवतानां त्वं भक्तियोगविधित्सया।
अवतीर्णोऽसि भगवन् कथं जानामि तामसी ॥ ५६ ॥
लोके जानातु यः कश्चित् तव तत्त्वं रघूत्तम।
[1]ममैतदेव रूप ते सदा भातु हृदालये ॥ ५७ ॥
राम ते पादयुगल दर्शितं [2]मोक्षदर्शनम्।
अदर्शनं भवा[3]र्त्तानां सन्मार्गपरिदर्शनम् ॥ ५८ ॥

---

५६। नरो०। तर्हि किमर्थमत्र जन्मेति चेत्तत्राऽऽह—महाभागवतानामित्यादि। मम तव तत्त्वं ज्ञातुं योग्यता नास्त्येव यस्य कस्यचित्तिष्ठत्वित्याह—कथमित्यादिना।

५७। नरो०। तर्हि किं कर्त्तुं योग्यताऽस्तीत्यत आह—ममैतदित्यादि।

५८। नरो०। तत्त्वज्ञानं विना मुक्तिरेव नास्तीति चेत्तत्राऽऽह—राम ते इत्यादि। ते त्वया। मोक्षाय दर्शन यस्य तत्तथा। तर्हि इदानीन्तनजनानां सर्वेषामेव मुक्तिश्चेत्तत्राऽऽह—अदर्शनमित्यादि। नास्ति दर्शनं यस्य तददर्शनम्। भवार्त्तानां ससारपीडितानाम्। तर्हि केषां दर्शनं भवतीत्यपेक्षायामाह—सन्मार्गपरिदर्शनमिति। सन् शोभनो मार्गो येषां तेषाम्, सतां

---

[योगमायैव जवनिका अन्त पटस्तया आच्छन्न.। मानुषस्य विग्रहो देहो यस्य स। वेशधृक् अन्यवेशधारी शैलूषो नट इव। गो० ]

५६। [नन्वहं चेद् ब्रह्म मायाधीशन्तर्हि किं नटवद्वतारेण तत्राऽऽह—महाभागवतानामिति। तव भक्तानां भक्तियोगविधानेच्छया अवतीर्णोऽसि, त्वत्कथाश्रवणस्मरणादिना भक्ता ससार तरिष्यन्तीत्येतदर्थं त्वमवतीर्ण इत्याशय। तामसी तमोगुणप्रधानाऽहं कथं त्वां जानामि। गो० ]

भागवतानां भगवद्भक्तीच्छावताम्। एवम्भूते रूपे भक्तिरूपो योगस्तद्वाञ्छया त्वमवतीर्णोऽसि। तादृश त्वां स्त्रीशरीरत्वात्तामसी अहं कथं जानामि।

५७। अथ योग्यतासत्त्वेऽपि तज्ज्ञानापेक्षा मे नास्तीत्याह—लोके इति। तव तत्त्वं चिदानन्दादिरूपम्। स्वापेक्ष्यमर्थमाह—ममैतदिति। रा०।

[लोके भुवने य कश्चिदतिविरलस्तव तत्त्वं याथार्थ्यं जानातु। मम तु हृत् हृदयमेव आलयो गृहं तत्र दृश्यमानमेतद्रूपमेव सदा भातु। गो० ]

५८। मोक्षदर्शनं मोक्षोपायदर्शकं पादयुगलं ते त्वया दर्शितमतोऽन्याकाङ्क्षा मे नास्तीत्यर्थ। तदेव विशिनष्टि—अदर्शनमिति। भवार्णानां भवार्णवानामित्यर्थ.। वर्णलोप आर्ष। सन्मार्गस्तत्त्वज्ञानोपायः। रा०।

---

1 च 'नूनन्ते देव रूप मे'। 2 च 'मे सुदर्शनम्'। 3 क ख घ '-र्णाना'।

धनपुत्रकलत्रादिविभूतिपरिद[1]र्पितः ।
अकिञ्च[2]नधनं त्वाद्य नाभिधातुं जनोऽर्हति ॥ ५९ ॥
[3]निवृत्तगुणमार्गाय निष्किञ्चन[4]धनाय ते ।
[5]नमः स्वात्माभिरामाय निर्गुणाय गुणात्मने ॥ ६० ॥

साधूनां मार्ग एव मार्गो येषां वा, परिदर्शनं परिदृश्यते यत्तत् परिदर्शनं सन्मार्गपरिदर्शनम् । यद्वा सन्मार्गस्य परिदर्शनं यस्मात्तत्तथा ।

५९ । नरो० । ननु यद्यहं परमेश्वरः स्यां तर्हि सर्वे मां परमेश्वरं ब्रूयुरित्यत आह—धनेत्यादि । धनञ्च पुत्रश्च कलत्रञ्च भार्या एतानि आदयो येषां ते च विभूतिश्च ऐश्वर्यं तैर्जनितगर्व इत्यर्थः । त्वा त्वाम्, तत्र हेतु अकिञ्चनधनमिति, नास्ति किञ्चन यस्य तस्य धनमित्यर्थ । यद्वा अकिञ्चन एव भक्त एव धन यस्य तं तथा । अकिञ्चन एव त्वामभिधातुमर्हतीति भाव ।

६० । नरो० । अयमेव सर्वेषां नमस्यो न त्वन्य इति अयमेव परं पद ददातीति वा हृदि निधाय नमस्करोति—निवृत्तगुणमार्गायेति पद्येन । ते तुभ्यम् । आत्मनि अभिरमते आत्माभिरामस्तस्मै आत्माभिरामाय, निर्गुणाय गुणशून्यायेत्यर्थः । निर्गुणत्वसगुणत्वयोर्विरोध कार्यार्थं धृतशरीरत्वादविरोधः ।

[ हे राम, ते त्वया पादयुगल दर्शितम् । तव एतन्मोक्षस्य दर्शनमेव भवान्धानां भवान्धैरदर्शनम् अदृश्यं सन्मार्गं परिदर्शयति । गो० ]

५९ । [ अकिञ्चनधनं त्वाद्येति । हे आद्य, त्वां धनादिदर्पितो जनोऽभिधातुं राम इति वक्तुमपि नार्हति, आस्तां तव भजनकथा । कीदृशम् ? अकिञ्चनधनम्, अकिञ्चनानां धनं सर्वरत्नस्वरूपम् । यद्वा अकिञ्चना अनन्यचिन्ता धनमिव सर्वतो रक्षणीया यस्य तम् । गो० ]

अकिञ्चनानां त्यक्तसर्वविषयाणां धनभूत दरिद्रस्य धनमिवेच्छाविषयं त्वामभिधातुं वार्त्तालापं कर्त्तुं च नार्हति तथाऽपि स्तौमीति शेषः । रा० ।

६० । निवृत्तो गुणमार्गः प्रवृत्तिमार्गरूपः संसारः स्वत एव यस्मात्तस्मै । स्वात्मन्येव चिदानन्दरूपे अभिरमते तस्मै, अत एव निर्गुणाय, गुणानां विषयाणामपि विवर्त्तोपादानत्वात्तदात्मने । रा० ।

[ निवृत्तेत्यादि । निवृत्तो गुणानां मार्गो रागादिर्यस्मिन् स तस्मै, यद्वा गुणेभ्यो निवृत्ता निवृत्तगुणा निर्गुणास्तेषां मार्गाय प्राप्याय । निष्किञ्चनानां परधनस्वरूपाय गुणात्मने गुणनियन्त्रे । गो० ]

1. छ '-र्पितात्' । 2 ग-छ '-न धनं । 3 ङ-छ 'निवृत्ति-' । 4. छ '-जनाय' । 5 ग ङ-च-छ 'नमोऽस्त्वात्मा-' ।

[1]कालरूपिणमीशानमादिमध्यान्तवर्जितम् ।
समं चरन्तं सर्वत्र मन्ये त्वां पुरुषं परम् ॥ ६१ ॥
देव ते चेष्टितं कश्चिन्न वेद नृविडम्बनम् ।
न [2]तेऽस्ति कश्चिद्दयितो द्वेष्यो वा पर एव [3]च ।
त्वन्माया[4]मोहितात्मानस्त्वां पश्यन्ति तथाविधम् ॥ ६२ ॥

---

६१ । नरो० । अन्यो जनो यं मन्यते तं मन्यताम्, त्वं कं मां मन्यसे इत्यपेक्षायामाह—कालरूपिणमित्यादि । ईशान सर्वनियन्तारम् । आदिमध्यान्तवर्जितमित्यनेन निर्विशेषत्वमुक्तम् । समं चरन्तं तिष्ठन्तम्, सर्वत्र चराचरेषु, परं मूलकारणम् ।

६२ । नरो० । तर्हि कथं सर्वे मां परं पुरुषं न मन्यन्ते इति चेत्तत्राऽऽह—देवेत्यादि । हे देव, ते तव चेष्टितं यतो नृविडम्बन मानुषसदृशीकरणमतस्त्वां परं पुरुषं कश्चिदपि न वेदेत्यर्थ । यद्वा इदमीश्वरचेष्टितमिति कृत्वा ते तव चेष्टितं कश्चिदपि न वेद, यतो नृविडम्बनमित्यर्थ । ननु मनुष्य एवाहम्, यद्यह मनुष्यो न स्यां तदा मम प्रियाप्रियोदासीना न स्युरित्यत आह—न तेऽस्तीत्यादि । दयितः प्रिय परस्ताभ्यां भिन्न उदासीन इत्यर्थ । अथवा मम प्रियद्वेष्यौ स्त इत्यत आह न तेऽस्ति कश्चिदित्यादि । अत पर एव नास्ति, अत· कश्चिन्न द्वेष्य· पर· शत्रु । यद्वा यत पर स्वाभिन्न एव नास्ति, अतो न दयितो द्वेष्यो वा । मोहित पिहित आत्मा बुद्धिर्येषां ते । तथाविधं मानुषरूपिणम् ।

---

६१ । कालरूपिणं तेन सर्वसंहर्तृत्वम् । ईशानत्वेन जगत्स्रष्टृत्वतत्पालकत्वे उक्ते, सर्वस्रष्टृत्वादेव तस्याऽऽदिमध्यान्तवर्जितत्वम् । मध्यस्याऽऽद्यन्तसापेक्षत्वात्तस्याप्यभाव· । समं चरन्तमन्तर्यामितयेत्यर्थ· । रा० ।

[ ईशानम् ईश्वरं नियन्तारम्, तत्र हेतु· कालरूपिणम्, अत एव आदिमध्यान्तहीनं सर्वदैकरूपम् । गो० ]

ननु दशरथात्मजं मां कथमेवं स्तौषीति चेत्तत्राऽऽह—त्वां परम् आद्यं पुरुषं मन्ये, न तु कस्याप्यात्मजम्, सर्वत्र समं तुल्यं यथा स्यात्तथा चरन्तं वर्त्तमानम् । ननु सुग्रीवसाहाय्य-करणाद् वालिवधाच्च कथं समत्वं तत्राऽऽह—देवेत्यादि । हे देव स्वप्रकाश, ते तव नृविडम्बन चेष्टित मैत्रीकरणं शोकादि वा कश्चिन्न वेद ।

६२ । नृविडम्बन मनुष्यव्यवहारानुकरणरूपमनुकरणम् एतदिति कश्चिन्न वेद । समत्वा-देवाऽऽह—न ते इत्यादि । परो भिन्न सर्वरूपत्वात्तवेति भाव· । यद्वा दयितद्वेष्याभ्यां पर उदासीन , तथाविधं शत्रुमित्रोदासीनवन्तम् । यथा रावणः शत्रुर्विभीषणो मित्रमन्ये उदासीना इति । रा० ।

---

1. च-छ 'काम-' । 2 छ 'तेऽस्तु' । 3. च-छ 'वा' । 4. क-ख-ग-घ-ङ-च-छ '-पिहिता-' ।

अज[1]स्याकर्त्तुरीशस्य देवतिर्यङ्नरादिषु ।
जन्मकर्मादिकं यद् यत् तदत्यन्तविडम्बनम् ॥ ६३ ॥

त्वामाहुरक्षरं जात कथाश्रवणसिद्धये ।
केचित् कोशलराजस्य तपसः फलसिद्धये ।
कौश[2]ल्यया प्रार्थ्यमान जातमाहुः परे जना· ॥ ६४ ॥

दुष्टराक्षसभूभारहरणायार्थितो विभुः ।
ब्रह्मणा नररूपेण जातोऽयमिति केचन ॥ ६५ ॥

---

६३ । नरो० । यस्तु जातो भवति, कर्त्ता भवति, कर्त्तुमकर्त्तुमसमर्थश्च भवति तस्यैव जन्मकर्मादिकं सूचित भवति ; तव तदत्यन्तविडम्बनमित्याह—अजस्येत्यादिना ।

६४ । नरो० । तर्हि किमत्राह जात इत्यपेक्षायामाह—त्वामाहुरित्यादि । अक्षरं ब्रह्म यत् तदेव त्वामाहुरित्यन्वय इति दिक् ।

---

[ ते तव कश्चिद्दयित· प्रियो न द्वेष्यो न ( चकारात् ? ) परश्च न । तर्हि कथं वानराद्य· ात्रवमाचरन्ति—तत्राऽऽह त्वन्मायेति । यस्य तव मायया पिहित आच्छादित आत्मा बुद्धिर्येषां े, तथाविधम् अपकारकत्वादिरूप पश्यन्ति जानन्ति । गो० ]

६३ । अजस्य सर्वकारणत्वात् स्वकारणहीनस्य, अकर्त्तु कर्त्तृत्वादिधर्महीनस्य अपरि- ामित्वादिति भाव । ईशस्य सन्निधानमात्रेण सर्वनियन्तु· । तिर्यङ्नरादिषु तिर्यञ्चो त्स्यादयस्तेषु मनुष्येषु च यज्जन्मकर्मादि तदत्यन्तविडम्बनमनुकरण तत्तज्जातेरिति शेष· । न वास्तवमिति भावः । रा० ।

[ अजस्येत्यादि । अजस्य तव जन्म अकर्त्तु कर्म ईशस्य आदिना दशरथस्य आज्ञया नगमनादि यत्तत् अत्यन्तविडम्बन न तु वास्तवम् । गो० ]

६४ । तत्र प्रकृतावतारप्रयोजनमाह—त्वामिति । अक्षरमपि लोकानां स्वकथाश्रवणज- द्धिप्राप्तये जातमाहुः । केचित् कोसलराजस्य । रा० ।

[नन्वजस्य जन्मादिविडम्बनमपि किमर्थम् ? तत्रानेकवादिमतमाह—त्वामित्यादि, अन्यथा च्छामात्रेण सर्वकार्यस्य सुसिद्धत्वात् । गो० ]

६५ । ब्रह्मणा प्रार्थितो नररूपेण जात इत्यन्वयः । रा० ।

---

1. ग '-स्य कर्त्तु-' । 2 ग क '-ल्याया.' ।

शृण्वन्ति गायन्ति च ये कथास्ते रघुनन्दन ।
पश्यन्ति तव पादाब्जं भवार्णवसुतारणम् ॥ ६६ ॥
त्वन्मायागुण[1]बद्धाऽहं व्यति[2]रिक्तं गुणाश्रयम् ।
कथं त्वां देव जानीयां स्तोतुं वाऽविषयं [3]विभुम् ॥ ६७ ॥
नमस्यामि रघु[4]श्रेष्ठ बाणा[5]सनशरान्वितम् ।
लक्ष्मणेन सह भ्रात्रा सुग्री[6]वादिभिरन्वितम् ॥ ६८ ॥
एवं स्तुतो रघुश्रेष्ठः प्रसन्नः [7]प्रणताघहृत् ।
उवाच योगिनीं भक्तां किं ते मनसि काङ्क्षितम् ॥ ६९ ॥
सा प्राह राघवं भक्त्या भक्तिं ते भक्तवत्सल ।
यत्र कुत्रापि जाताया निश्चलां देहि मे प्रभो ॥ ७० ॥

---

६६ । नरो० । इदानीमुपसंहरति—शृण्वन्तीतिसार्द्धत्रयेण(?) । भवार्णवस्य संसार-समुद्रस्य सुतारणम् । सुतारणमिति करणे ल्युट् ।

६७ । नरो० । व्यतिरिक्तं बुद्ध्यादिभ्य इति शेषः । गुणाश्रयं गुणात्मकमाया-श्रयमित्यर्थः ।

६८ । नरो० । बाणासनशरान्वितं धनुर्बाणयुक्तमित्यर्थः ।

---

६६ । आद्यप्रयोजनस्यैव मुख्यत्वं प्रतिपादयितुं तच्छ्रवणजां सिद्धिमाह—शृण्वन्तीत्यादिना । पश्यन्तीति । ते तव पादाब्जं पश्यन्तीत्यन्वयः । त्वत्पादाब्जदर्शनमेव तच्छ्रवणजा मुख्या सिद्धिरित्यर्थः । रा० ।

६७ । त्वत्पादाब्जशब्देन मुख्यचिदानन्दात्मकं त्वत्स्वरूपमेव विवक्षितमित्याह—त्वन्मायेति । त्वन्मायागुणैः सत्त्वरजस्तमोभिर्बद्धा ये अहम् अहङ्कारविशिष्टास्तेभ्यो व्यतिरिक्तं तद्दोषास्पृष्टम् । गुणानामाश्रयं प्रवर्तकं यद्रूपं तद्दर्शनमेव तज्जन्या सिद्धिरित्यर्थः । अविषयं वाङ्मनोऽविषयं त्वां स्तोतुं च कथं जानीयां प्रवृत्ता भवेयम् । तज्ज्ञानं दुर्लभमेव, स्तोतुमपि न सामर्थ्यमिति भावः । रा० ।

[ त्वन्मायेत्यादि । व्यतिरिक्तं सर्वस्मात् कारणादभिन्नम्, गुणाश्रयं गुणानामाधारम् । अविषयं मनोवचनाद्यगोचरं विभुं व्यापकम् । गो० ]

६८ । एवञ्च स्तुतेरशक्यत्वात् केवलं प्रणाममेव करोमीत्याह—नमस्यामीति । रा० ।

[ अतो नमस्कार एव त्वयि युज्यते इत्याह—नमस्यामीति । बाणासनं धनुस्तद्-युक्तम् । गो० ]

---

1 ग 'बद्धा च' । 2. घ-च '-रिक्तगुणा-' । 3 ङ 'प्रभुम्' । 4 ग ङ च '-श्रेष्ठ' । 5 ङ '-शनि-' । 6. ग '-वादिसमन्वितम्', च '-वादिभिरावृतम्' । 7. च 'प्रणतार्त्तिहा' ।

त्वद्भक्तेषु सदा सङ्गो भूयान्मे प्राकृतेषु न ।
जिह्वा मे राम रामेति भक्त्या [1]स्मरतु सर्वदा ॥ ७१ ॥
[2]मानस श्यामलं रूपं सीतालक्ष्मणसंयुतम् ।
धनुर्बाणधरं पीतवाससं मुकुटोज्ज्वलम् ॥ ७२ ॥
अङ्गदैर्नूपुरैर्मुक्ताहारै. कौस्तुभ[3]कुण्डलैः ।
[4]भान्तं स्मरतु मे राम वरं नान्यं वृणे प्रभो ॥ ७३ ॥

श्रीराम उवाच—

भव[5]त्येव महाभागे गच्छ त्व बदरीवनम् ।
तत्रैव मां स्मरन्ती त्व [6]त्यक्त्वेद भूतपञ्चकम् ।
मामेव परमात्मानमचिरात् प्रतिपद्यसे ॥ ७४ ॥

श्रुत्वा रघूत्तमवचोऽमृतसारकल्पं गत्वा तदैव बदरीतरु[7]षण्डजुष्टम् ।
तीर्थं [8]तदा रघुपति मनसा स्मरन्ती त्यक्त्वा कलेवरमवाप [9]पर पद सा ॥७५॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसवादे किष्किन्ध्याकाण्डे
षष्ठोऽध्याय· ॥ ६ ॥

---

७२ । नरो० । रूप लावण्यविशिष्ट देहमिति शेष । सीतालक्ष्मणसंयुतमिति विशेषणदानात् अङ्गदैरित्यादिपु न बहुवचनानुपपत्ति ।

७४ । नरो० । भूतपञ्चक पञ्चीकृताकाशादिभूतपञ्चकमित्यर्थ ।

७५ । नरो० । अमृतसारकल्पमिति 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमर । 'मनागूने कल्प' इति कल्पप्रत्यय । बदरीतरुषण्डजुष्टमिति, कोलीवृक्षसमूहसेवितमित्यर्थ । परं पदं वैकुण्ठं मोक्षं वा ।

[ किष्किन्ध्याकाण्डे षष्ठाध्यायव्याख्या समाप्ता ॥ ६ ॥ ]

---

७१ । प्राकृतेषु त्वद्भक्तिहीनेषु समारम्भक्तेषु इति यावत् । रा० ।

७२-७३ । मे मानसं वक्ष्यमाणगुणविशिष्टरूप वस्तु । पीतवासस भान्तमिति पुंस्त्वमार्षम् । रा० ।

७४ । बदरीवनं बदरिकाश्रमम् । इत्थं भूतपञ्चकं भूतपञ्चकात्मकमिमं देहमित्यर्थः । परमात्मान मां प्रतिपद्यसे । वर्त्तमानसामीप्ये लट् । अनेन स्वसायुज्यरूपा मुक्तिस्तपःपूर्वकं तत्र देहत्यागेन दर्शिता । रा० ।

[ भूतपञ्चकं पाञ्चभौतिकं देहम् । गो० ]

७५ । तरुखण्डं तरुसमूहं । रा० ।

[ अमृतसारकल्पम् अमृतनिर्यासतुल्यम् । गो० ]

---

1 क-ख-घ 'वद्तु' । 2 ग ङ-छ 'नमस्ते', च 'मनस्ते' । 3 ग-ङ-च '-मण्ड-' । 4. क-ख 'शान्त' । 5 घ-ङ-च '-त्वेव' । 6. ग 'त्यक्त्वैव' । 7. क-ख-घ-छ '-खण्ड-' । 8. च 'तथा' । 9. च 'पदं परं' ।

# सप्तमोऽध्यायः

—:*:—

[1]श्रीमहादेव उवाच—

अथ तत्र समासीना [2]वनषण्डेषु वानराः

चिन्तयन्तो [3]विमुह्यन्तः सीता[4]मार्गणकर्षिताः ॥ १ ॥

ततोवाचाङ्गदः कांश्चिद्वानरान् वानरर्षभ ।

[5]भ्रमतां गह्वरेऽस्माकं मासो [6]नून [7]गतोऽभवत् ॥ २ ॥

सीता नाधिगताऽस्माभिर्न कृतं राजशासनम् ।

यदि गच्छा[8]म किष्किन्ध्यां सुग्री[9]वोऽस्मान् हनिष्यति ॥ ३ ॥

विशेषत [10]शत्रुसुतं मां मिषान्निहनिष्यति ।

[11]मयि तस्य कुतः प्रीतिरहं रामेण रक्षितः ॥ ४ ॥

---

१ । नरो० । वनषण्डेषु वनसमूहेषु ।

२ । नरो० । 'विचिन्वन्तु प्रयत्नेन भवन्तो जानकीं शुभाम्' (५०३ पृ० २२ श्लो०) इत्यादि वाक्यजातं सुग्रीवस्य स्मृत्वाह—भ्रमतामित्यादि ।

४ । नरो० । विशेषतो विशेषेण । यतः शत्रुसुतमतो मां मिषादस्मादेव छलाद्ध-निष्यति । प्रीत्या न हनिष्यतीति चेत्तत्राऽऽह—मयि तस्य कुतः प्रीतिरिति । कथं तर्हीदानीं

---

१ । अथ तत्रेति । विमुह्यन्तः सीतालाभादिति शेषः । सीतामार्गणेन तत्र प्राप्तक्लेशेन कर्शिताः कृशत्वं प्राप्ताः । रा० ।

२ । मासो गतः सुग्रीवाज्ञप्तकालादधिककालो गत इत्यर्थः । रा० ।

३ । राजशासनं मासान्तः सीतान्वेषणरूपम् । रा० ।

सीतालाभेऽपि मासाभ्यन्तरमेव किष्किन्ध्यायां प्रत्यावर्त्तनरूपं राजशासनं न कृतमिति हेतोः हनिष्यतीति भावः ।

४ । शत्रुसुतमिति । वाल्मीकीयेऽपि—

---

1 क-ख-ग ङ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2 क ख घ 'वृक्षखण्डेषु', ग-च-छ 'वृक्षषण्डेषु' । 3 ग छ 'विमुह्यन्त' । 4 च 'मार्गानुक-' । 5 घ 'भ्रमतो' । 6 क ख 'न्यूनं' । 7 ङ छ 'गतो भवेत्' । 8 ग च '-मि कि-' । 9 ग 'वो मा' । 10 क-ग छ 'शत्रुभूत' । 11 क 'यदि', छ पुस्तके इदमर्द्धं नास्ति ।

इदानीं रामकार्यं मे न कृतं [1]तन्मिषं भवेत् ।
तस्य मद्धनने नूनं सुग्रीवस्य दुरात्मनः ॥ ५ ॥
मातृ[2]कल्पां भ्रातृ[3]भार्यां पापात्माऽनुभवत्यसौ ।
न [4]गच्छेयमतः पार्श्वं तस्य वानरपुङ्गवाः ॥ ६ ॥

रक्षित इति चेत्तत्राऽऽह—अहं रामेण रक्षित इति। अथवा तदानीमेव कथं न मारित इत्यत आह—अहं रामेण रक्षित इति।

५। नरो०। अधुनाऽपि रामेण रक्षितस्य इति चेत्तत्राऽऽह—इदानीमित्यादि। पापभीत्या वधं न करिष्यतीति चेत्तत्राऽऽह—तस्येत्यादि। नूनं निश्चितम्, मतिर्भवेदिति शेषः। दुष्ट आत्मा अन्तःकरणं स्वभावो वा यस्य तस्य।

६। नरो०। दुरात्मत्वं कुतो ज्ञातमिति चेत्तत्राऽऽह—मातृकल्पामित्यादि। आत्मनस्तत्र गमनाभावमुपसंहरति—न गच्छेयमिति पद्येन।

स पूर्वबद्धवैरो मां दृष्ट्वा राजा व्यतिक्रमम्।
घातयिष्यति तीक्ष्णेन दण्डेनातिचिराद् गतम् ॥ इति ४।५३।१४।

५। दुरात्मनस्तस्य सुग्रीवस्येदानीं मद्धनने रामकार्यं मे न कृतं नूनं तन्मिषं भवेदित्यन्वयः।

६। नन्वेवम् अकृत्य त्वद्गुरूप सुग्रीव कथं कुर्यात्तत्राऽऽह—मातृकल्पामिति। ज्येष्ठभ्रातृपत्नीत्वात्तस्य कार्यविचारो नेति भावः। एषोक्तिर्बालभावेन, मृते भर्त्तरि त्रैवर्णिकव्यतिरिक्तस्त्रिया अन्योपगमस्यादूषणात्। रा०।

भ्रातृभार्यामिति। इदं तु मायाविना सह बिलं प्रविष्टस्य जीवतो वालिनो राज्यग्रहणसामयिकमिति विभावयामः। वाल्मीकीये—

भ्रातुर्ज्येष्ठस्य यः क्रुद्धो जीवतो महिषीं प्रियाम्।
धर्मतो मातरमिव स्वीकरोति जुगुप्सितः ॥ ४।५४।४।

इत्यत्र 'जीवतः' इति पददर्शनात् 'देवरेण सुतोत्पत्तिम्' इत्यादिविधिवाक्येन मृतस्य ज्येष्ठभ्रातुर्भार्यास्वीकारे दोषाश्रवणाच्च। एवञ्च 'एषोक्तिर्बालभावेन, मृते भर्त्तरि त्रैवर्णिकव्यतिरिक्तस्त्रिया अन्योपगमस्यादूषणादि'त्यादिरामवर्मकृतायाः कष्टकल्पनाया अपि नावश्यकत्वम्।

यत्तु पाश्चात्यवाल्मीकीये—

भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम्।
धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥ ४।५५।३।

---

1. च '-न्मिषो'। 2. च '-तुल्या'। 3. च '-जाया'। 4. ङ 'गच्छामि ततः'।

त्यक्ष्यामि जीवितञ्चात्र येन केनापि मृत्युना ।
इत्यश्रुनयनं केचिद् दृष्ट्वा वानरपुङ्गवाः ।
व्यथिता[1]साश्रुनयना युवराजमथाब्रुवन् ॥ ७ ॥
किमर्थं तव शोकोऽत्र वयं ते प्राणरक्षकाः
भवामो निवसामोऽत्र गुहायां भयवर्जिता ।
सर्वसौभाग्यसहितं [2]पुरं देवपुरोपमम् ॥ ८ ॥
[3]शनै परस्परं वाक्य वदतां मारुतात्मजः ।
[4]श्रुत्वाऽङ्गदं समालिङ्ग्य प्रोवाच नयकोविद ॥ ९ ॥
विचार्यते किमर्थं ते दुर्विचारो न युज्यते ।
राज्ञोऽत्यन्तप्रियस्त्वं हि तारापुत्रोऽतिवल्लभः ।
रामस्य लक्ष्मणात् प्रीतिस्त्वयि नित्य [5]प्रवर्धते ॥ १० ॥

---

७ । नरो० । मृत्युना मृत्यूपायेन ।

८ । नरो० । शोभन भग सम्पत् यत्र तस्य भाव सौभाग्य सुसम्पत, सर्वञ्च तत् सौभाग्यञ्चेति तेन सहित तत्तथा । अत एव देवपुरोपमम् ।

९ । नरो० । नयकोविदो नीतिपण्डित ।

१० । नरो० । भ्रमतामित्यादि यदुक्त तत्राऽऽह—विचार्यते किमर्थमित्यादि । राज्ञः सुग्रीवस्य, हि यतस्तारापुत्र । रामस्यातिवल्लभोऽतिप्रिय, अत एव लक्ष्मणादपि त्वयि

---

इत्यस्य टीकायां नारायणेन—

"भ्रातुरिति । ज्येष्ठस्य भ्रातुर्भार्यां धर्मेण मातरं धर्ममार्गेण वर्त्तमानां ज्येष्ठभ्रातृपत्नीं तां मातृतुल्यां जीवतो मम समक्षम् । अनेन देवराच्च सुतोत्पत्तिमित्यतोऽपि धर्मत्वं वारितम् । यद्वा जीवतो महिषीमिति मायावियुद्धकालिकस्वीकारपरम्" इत्याद्युक्त्या पक्षद्वयमङ्गीकृतम् , तत्रापि पर एव पक्ष· श्रेयान् इति विवेचयाम , पूर्वपक्षे जीवतो मम इत्यर्थस्य अस्वरसात् । अत्र पक्षे अनुभवति इत्यादिवर्त्तमानप्रयोग कथमिति चेद् आर्षत्वादिति गृहाण ।

७ । येन केनापि उद्बन्धनादिप्रकारेण । अश्रुनयनं युवराजमङ्गदमिति शेष । रा० ।

८ । अत्र जीवनरक्षणविषये । वयं ते प्राणरक्षका भवाम· । तदुपायमाह—अत्र गुहायां वसाम इति । रा० ।

पुरं गुहामध्यगतमिति शेषः । आश्रयाम इत्यध्याहारेणान्वय· ।

९ । शनै परस्परमेवं वदतां वाक्यं श्रुत्वा इत्यन्वयः । रा० ।

१० । किमर्थं विचार्यते—सुग्रीवतो वधादिकमित्यर्थ· । अयमितरवानरोक्तो दुर्विचारो

---

1. च 'चीणवदना' । 2. ख 'पर' । 3 ग 'शनै,' । 4 ग 'प्रेम्णा-' । 5 ख 'प्रवर्त्तते' ।

'अतो न राघवाद्भीतिस्तव राज्ञो विशेषतः ।
अहं तव हिते सक्तो वत्स नान्यं विचारय ॥ ११ ॥
गुहावास²स्तु निर्भेद्य इत्युक्तं वानरैस्तु यत् ।
तदेतद्रामबाणानामभेद्य किं जगत्त्रये ॥ १२ ॥

प्रीतिर्नित्यं वर्धते। यद्वा साहजिकात्यन्तप्रियत्वसूचनाय 'अत्यन्तप्रिय' इत्युक्तम्। प्रिया-सम्बन्धादपि अतिप्रियत्वसूचनाय तारापुत्र इत्याद्युक्तम्।

११। नरो०। ताभ्यां भीतेरभावमुपसंहरति—अत इति पद्येन।

१२। नरो०। 'गुहायां भयवर्जिता' इति यदुक्त तत्राऽऽह—गुहावासस्त्वित्यादि। गुहावासरूपस्तु सर्वथा न युज्यते। तत्र सुग्रीवतो भयं वारयति—राज्ञ इति। तारापुत्र इत्यनेन तारायामतिप्रीतेस्त्वयि न तथा व्यवहारसम्भावनाऽपीति भाव। रामादपि न भयमित्याह—रामस्येति। रा०।

किमर्थं विचार्यते त्वयेति शेष। ते तव दुर्विचारो न युज्यते, युवराजत्वेनास्माकं परिचालकत्वादित्याशयः। यतस्त्व तारापुत्र. अतो राज्ञ' सुग्रीवस्य अतिप्रियो वल्लभश्च इत्यर्थः समीचीन वाल्मीकीयसंवादात्।

तथाच—

प्रियकामश्च ते मातुस्तदर्थं तस्य जीवितम्।
तस्यापत्यं न चास्त्यन्यत् तस्मादङ्गद गम्यताम्॥ इति ४।९४।२२।

यतो रामस्य लक्ष्मणादपि त्वयि प्रीतिः, अत एव राघवाद् राज्ञ. सुग्रीवादपि तव भीति-र्नास्तीत्याशय.। सर्वभयनिवारकस्य रामस्य प्रीतिपात्र त्वमतस्तव सर्वत्रैवाभयमिति भाव'।

११। सीतालाभोऽपि भाव्येवेत्याह—अहमिति। अतो हे वत्स, अन्य विचारं न विचारय। रा०।

स्वसामर्थ्यादिकमनुस्मरन् आह—अहमिति। यतोऽस्मद्विधो जनस्तव हिते सक्तोऽतः अन्यं सुग्रीवतो व्यसनागमादिरूप न विचारय न चिन्तयेत्यर्थः। तव हिताकाङ्क्षिणि मयि वर्त्त-माने का शक्तिः सुग्रीवस्येति भाव।

१२। वानरीयां गुहावासोक्तिं दूषयति—गुहेति। निर्भेद्योऽभेद्य, तदेतदयुक्तमिति शेष'; यतो जगत्त्रये रामबाणानामभेद्यं किम्, न किमपीत्यर्थ.। तेनात्र वासे महद्रामभयमिति भावः। रा०।

अत्र हनूमतो बुद्धिवैशिष्ट्यमुपपादयन्नाह वाल्मीकि'—

स चतुर्णामुपायानां तृतीयमनुवर्त्तयन्।
भेदयामास तान् सर्वान् वानरान् वाक्यसम्पदा॥

1 च 'ततो'। 2 क-ख ग घ 'स्य निर्भे-', ङ 'स्तु दुर्भे-', च 'स्त्वनिर्भे-'।

ये [1]त्वां दुर्बोधयन्त्येते वानरा वानरर्षभ ।
पुत्रदारा[2]दिकं त्यक्त्वा कथं स्थास्यन्ति ते त्वया ॥ १३ ॥
[3]अन्यद् गुह्य[4]तमं वक्ष्ये रहस्यं शृणु [5]मे सुत ।
रामो न मानुषो देवः साक्षान्नारायणोऽव्ययः ॥ १४ ॥
सीता भगवती माया जनसम्मोहकारिणी ।
[6]लक्ष्मणो भुवनाधारः साक्षाच्छेषः फणीश्वरः ॥ १५ ॥
ब्रह्मणा प्रार्थिताः[7] [8]सर्वे रक्षोगणविनाशने ।
मायामानुष[9]भावेन [10]जाता लोकैकरक्षकाः[11] ।
वयञ्च पार्षदाः सर्वे विष्णोर्वैकुण्ठवासिनः ॥ १६ ॥

---

१३ । नरो० । किमर्थमित्यादि यदुक्तं तत्राऽऽह—ये त्वामित्यादि । दुर्बोधयन्ति दुर्बोधसम्बन्धं कुर्वन्तीत्यर्थः । हे वानरर्षभ वानरश्रेष्ठ ।

१४ । नरो० । एतस्मिन् गुह्यतमे श्रुते भयलेशोऽपि न स्थास्यतीति हृदि कृत्वाह—अन्यद् गुह्यतममित्यादि । अव्ययोऽपक्षयशून्यः । अंशत्ववारणाय साक्षादित्युक्तम् ।

१६ । नरो० । लोकैकरक्षका भुवनप्रधानरक्षका इत्यर्थः ।

---

तेषु सर्वेषु भिन्नेषु ततोऽभेदयदङ्गदम् ।
भीषणैर्बहुभिर्हृद्यैः शिक्षार्थं ह्यङ्गदश्च तैः ॥
सामर्थ्ये त्वं पितृतुल्यो युधि मन्त्रक्रियाविधौ ।
दृढं धारयितुं शक्तः कपिराज्यं यथा पिता ॥
नित्यमस्थिरचित्तास्तु हरयो हरिसत्तम ।
न वस्तुं विषहिष्यन्ति पुत्रदारैर्विना त्वया ॥ इत्यादि । ४।५४।६ ९ ।

१३ । यदेतैर्वानरैरुक्तं वयं ते प्राणरक्षका इति तदपि मिथ्येत्याह—ये त्वामिति । रा० ।

१४ । भेदनीत्या गुहावासस्य दोषादीन् प्रदर्श्य रामपक्षाश्रयणे सर्वथा कर्त्तव्यत्वं दर्शयति—अन्यदित्यादिना । हे सुत पुत्रतुल्य इत्यर्थः । अनेन अङ्गदे हनुमतः स्नेहाधिक्यं ध्वनितम् । गुह्यतमं गोप्यं रहस्यं वेदान्तवेद्यमित्यर्थः । वक्ष्ये अहमिति शेषः । मे मम सकाशात् शृणु त्वमिति शेषः ।

१६ । रक्षोगणविनाशने तन्निमित्तं प्रार्थिता इत्यन्वयः । मायामानुषभावेनेति । न तेषां वास्तवं मनुष्यत्वं किन्तु माययैवेति भावः । रा० ।

---

1 क 'ते' । 2 ङ 'राग्रहं' । 3 च 'अत्यद्भुततमं वाक्यं रह-' । 4 ग-ङ '-तरं' । 5 ग 'ते' । 6 ग 'लक्ष्मणस्तु बलाधारः' । 7 च छ '-तः' । 8 च छ 'सर्वरक्षो-' । 9 छ 'रूपेण' । 10 ग च-छ 'जातो' । 11 ग-च-छ '-कः' ।

मनुष्यभावमाप[1]न्ने स्वेच्छया परमा[2]त्मनि ।
वयं वानररूपेण जातास्तस्यैव मायया ॥ १७ ॥
वयन्तु तपसा पूर्वमाराध्य जगतां पतिम् ।
तेनैवानुगृहीता स्मः पार्षदत्वमुपागताः ॥ १८ ॥
इदानीमपि तस्यैव सेवां [3]कृत्वा विमायया ।
पुनर्वैकुण्ठमासाद्य सुखं स्थास्यामहे वयम् ॥ १९ ॥
इत्य[4]ङ्गदमथाऽऽश्वास्य गता विन्ध्य महा[5]चलम् ।
विचिन्वन्तोऽथ शनकैर्जानकीं दक्षिणाम्बुधेः ।
[6]तीरं [7]महेन्द्राख्यगिरेः पवित्रं [8]पादमाययुः ॥ २० ॥
दृष्ट्वा समुद्रं [9]दुष्पारमगाधं भयवर्द्धनम् ।
वानरा भयसन्त्रस्ताः किं कुर्म इतिवादिनः ।
निषेदुरुदधेस्तीरे सर्वे चिन्तासमन्विताः ॥ २१ ॥
मन्त्रयामासुरन्योन्यमङ्गदाद्या महाबलाः ।
भ्रम[10]तामेव नो मासो गतोऽत्रैव गुहान्तरे ।
न दृष्टो रावणो [11]वाऽद्य सीता वा जनकात्मजा ॥ २२ ॥

---

१७ । नरो० । प्रारब्धकर्माधीनत्वाभावसूचनाय स्वेच्छयेत्युक्तम् ।

१९ । नरो० । विमायया अकपटेन ।

२० । नरो० । पादं प्रत्यन्तपर्वतम् ।

२२ । नरो० । गुहान्तरे गुहामध्ये । वाशब्दावप्यर्थौ ।

---

१७ । नन्वेवं वानररूपमस्माकं किमर्थं तत्राऽऽह—तस्यैव माययेति । रा० ।

२० । दक्षिणाम्बुधेस्तीरे महेन्द्राख्यगिरेः पादं प्रत्यन्तपर्वतमाययुरित्यन्वयः । रा० ।

इति अङ्गदम् आश्वास्य अथानन्तरं ते विन्ध्यं महाचलं गताः, अथ दक्षिणाम्बुधेस्तीरं व्याप्य शनकैर्जानकीं विचिन्वन्तो महेन्द्राख्यगिरेः पवित्रं पादम् आययुरित्यन्वयः ।

२१ २२ । भयवर्द्धनं दर्शनमात्रेण भयवृद्धिकरम् । किं कुर्म इतिवादिनः वदनशीलाः । उदधेस्तीरे निषेदुरथ मन्त्रयामासुरित्यन्वयः ।

---

1. च 'न्नः' । 2 च '-त्मनः' । 3 क-ख-घ 'कृत्वैव मायया' । 4. ङ '-ङ्गद समा-' । 5. छ '-वनम्' । 6 क-ख-घ 'तीरे' । 7. क 'महेन्द्राचगि-' । 8. च 'पादप ययु' । 9. ख 'दुःपार-' । 10. ङ '-तां नो वने मासो' । 11. ग 'रच:' ।

सुग्रीवस्तीक्ष्णदण्डोऽस्मान् निहन्त्येव न संशयः ।
सुग्रीववधतो[1]ऽस्माकं श्रेयः प्रायोपवेशनम् ॥ २३ ॥
इति निश्चित्य तत्रैव दर्भानास्तीर्य सर्वतः ।
[2]उपाविविशुस्ते सर्वे मरणे कृतनिश्चयाः ॥ २४ ॥
एतस्मिन्नन्तरे तत्र महेन्द्राद्रिगुहान्तरात् ।
निर्गत्य शनै[3]कैरागाद् गृध्रः पर्वतसन्निभः ॥ २५ ॥

---

२३ । नरो० । प्रायेण अनशनेन आमरणमुपवेशनं प्रायोपवेशनम्, प्रायोपवेशनस्य स्वर्गजनकत्वात् श्रेयस्त्वम् ।

२५ । नरो० । महेन्द्राद्रिगुहान्तराद् महेन्द्रपर्वतस्य गुहामध्यादित्यर्थः । पर्वतसन्निभः प्रत्यन्तपर्वततुल्यः ।

---

२३ । सुग्रीववधतः सुग्रीवात् प्राप्स्यमानवधतः प्रायोपवेशनं तत्प्राप्त्युपायाभावे अनशनेन मरणसङ्कल्पः । रा० ।

२४ । उपाविविशुरित्यत्र गुण आर्षः । रा० ।

प्रायोपवेशनप्रकारमाह वाल्मीकीये—

तद्वाक्यं वालिपुत्रस्य विज्ञाय प्लवगर्षभाः ।
उपस्पृश्योदकं सर्वे प्राङ्मुखाः समुपाविशन् ॥
दक्षिणाग्रेषु दर्भेषु कृत्वा चोत्तरतः शिरः ।
तमेवानुमरिष्यन्तः सर्वे संविविशुर्भुवि ॥ इति । ४।५५।१९-२० ।

२५ । महेन्द्राद्रिगुहान्तरादित्यत्र विन्ध्यस्य कन्दरादित्याह वाल्मीकीये ।

तथाच—

कन्दरादभिनिष्क्रम्य स विन्ध्यस्य महागिरेः । इति । ४।५६।३ ।

गृध्रः सम्पातिर्नाम, स च जटायुषोऽग्रजः । व्यक्तं वाल्मीकीये—

उपविष्टास्तु ते सर्वे तस्मिन् प्राये धराधरे ।
हरयो गृध्रराजश्च तं देशं समुपस्थितः ॥
सम्पातिर्नाम नाम्ना तु दीर्घजीवी द्विजोत्तमः ।
जटायुषोऽग्रजो भ्राता प्रख्यातबलपौरुषः ॥ इति । ४।५६।१-२ ।

---

1. च '-ऽस्माभिः' । 2. ख-घ-छ 'उपाविवेशु-' । 3. च '-कैः प्रायाद्' ।

दृष्ट्वा प्रायोप[1]वेशेन स्थितान् वानरपुङ्गवान् ।
उवाच शनकैर्गृध्रः प्राप्तो [2]भक्षोऽद्य मे बहु[2] ।
एकैकशः क्रमात् सर्वान् भक्षयामि दिने दिने ॥ २६ ॥
श्रुत्वा तद् गृध्रवचनं वानरा [3]भीतमानसाः ।
भक्षयिष्यति न सर्वानसौ गृध्रो न संशयः ॥ २७ ॥
रामकार्यञ्च नास्माभिः कृतं किञ्चिद्धरीश्वराः ।
सुग्रीवस्यापि च हितं न कृतं [4]स्वात्मनामपि ।
वृथाऽनेन वधं प्राप्ता गच्छामो यमसादनम् ॥ २८ ॥
अहो जटायुर्धर्मात्मा रामस्यार्थे मृतः सुधीः ।
मोक्षं प्राप [5]दुरावाप योगिनामप्यरिन्दम[5] ॥ २९ ॥
सम्पातिस्तु तदा वाक्यं श्रुत्वा वानरभाषितम् ।
के [6]वा यूयं मम भ्रातुः कर्णपीयूषसन्निभम् ।
जटायुरिति नामाद्य व्याहरन्त[6] परस्परम् ॥ ३० ॥

२६ । बहुर्विपुलो बहुसंख्यश्च । रा० ।

अत्र वाल्मीकिः—

विधिः किल परे लोके विधानेनोपतिष्ठते ।
यथेदं विहितं भक्ष्यं चिरान्मे समुपस्थितम् ॥
वरं वराणां खादिष्ये वानराणां मृतं मृतम् ।
एवमुक्त्वा तु सम्पाती तानवैक्षत वानरान् ॥ इति । ४।५६।४-५ ।

२८ । किञ्चित् किञ्चिदपीत्यर्थः । हरीश्वरा इत्यङ्गदहनूमदादीन् सम्बोध्येतरवानरवाक्यम् । सुग्रीवहितं जानकीसमाचारोक्त्या रामसन्तोषरूपम्, आत्मनो हितं तथासुग्रीवसन्तोषरूपम् । अनेन गृध्रेण वृथा वधं नाशं प्राप्ताः प्रापिताः, यमसादनं यमगृहं गच्छाम वर्त्तमानसामीप्ये लट्, गमिष्याम इत्यर्थः । रा० ।

२९ । योगिनामपि दुरावापमित्यन्वयः । दुराङ्पूर्वादाप्नोतेः खल् । षष्ठी आर्षी शेषे वा । रा० ।

३० । कर्णपीयूषसन्निभं कर्णयोरमृततुल्यमित्यर्थः । जटायुरिति नामेत्यनेनान्वयः । रा० ।

---

1. ग-ङ-च छ '-शयने' । 2 छ 'भक्षो मयैव हि' । 3 छ 'भयमा-' । 4 च 'नाऽऽत्मना-', छ 'स्वामिना-' । 5. ङ 'दुराप यो', च 'सुदुर्लभ' । 6. छ 'यूयञ्च' ।

उच्यतां वो भयं मा भून्मत्तः प्लवगसत्तमाः ।
तमुवाचाङ्गदः श्रीमानुत्थितो गृध्रसन्निधौ ॥ ३१ ॥
रामो दाशरथिः श्रीमाँल्लक्ष्मणेन समन्वितः ।
सीतया भार्यया सार्द्धं विचचार [1]महावने ॥ ३२ ॥
[2]तस्य सीता [3]हृता साध्वी रावणेन दुरात्मना ।
[4]मृगयां निर्गते रामे लक्ष्मणे च हृता बलात् ॥ ३३ ॥
राम रामेति क्रोशन्ती[5] श्रुत्वा गृध्रः प्रतापवान् ।
जटायुर्नाम पक्षीन्द्रो युद्धं कृत्वा सुदारुणम् ॥ ३४ ॥
रावणेन हतो वीरो राघवार्थं महाबलः ।
[6]रामेण दग्धो रामस्य सायुज्यमगमत् क्षणात् ॥ ३५ ॥
रामः सुग्रीवमासाद्य सख्यं कृत्वाऽग्निसाक्षिकम् ।
सुग्री[7]वचोदितो हत्वा वालिनं [8]सुदुरासदम् ।
राज्यं ददौ वानराणां सुग्रीवाय महाबलः ॥ ३६ ॥
सुग्रीवः प्रेषयामास सीतायाः परिमार्गणे ।
अस्मान् वानरवृन्दान् वै [9]महासत्त्वान् महाबलः ॥ ३७ ॥
मासादर्वाङ् निवर्त्तध्वं नो चेत् प्राणान् हरामि वः ।
[10]इत्याज्ञया भ्रमन्तोऽस्मिन् वने गह्वरमध्यगाः ॥ ३८ ॥

---

३९ । नरो० । रामस्य सायुज्यं रामत्वमित्यर्थः ।

---

३३ । लक्ष्मणे च बहिर्गते इत्यनुकर्षः । रा० ।

३४ । राम रामेति क्रोशन्ती हृतेत्यन्वयः । श्रुत्वा तत् क्रोशनं श्रुत्वेत्यर्थः । रा० । प्रतापवान् जटायुर्नाम गृध्रः श्रुत्वा तद् विक्रोशनमिति शेषः ।

३९ । वाल्मीकीयेऽपि—

मत्कृतश्चापि रामेण गतः स्वर्गं न संशयः । इति । ४।९७।१४ ।

३७ । परिमार्गणे तन्निमित्तम् । विषयसप्तमीयम् । वानरवृन्दान् तद्युक्तानस्मान् । हनूमदाद्यपेक्षया बहुवचनम् । रा० ।

३८ । गह्वरं गुहा । भ्रमन्त इत्यस्य स्थिता इति शेषः ।

---

1 ग ङ-च-छ 'वनान्तरे' । 2 ग-च-छ 'तत्र' । 3 च 'महामा-' । 4 च 'मृगयाया गते', छ 'निर्गते मृगयां' । 5 ग च 'न्ती' । 6 च 'रामस्याऽऽज्ञां पुरस्कृत्य स स्वर्गमगमत् क्षणात्' । 7 च '-वैणोदितो' । 8. ग 'सुदुरा-' । 9. च 'महाबलपराक्रमान्' । 10 ग च-छ 'इत्याज्ञया' ।

गता मासो न जानीमः सीतां वा रावणञ्च वा ।
मर्त्तुं प्रायोपविष्टाः स्मस्तीरे लवणवारिधे ।
यदि जानासि हे पक्षिन् सीतां कथय नः शुभाम् ॥ ३९ ॥

अङ्गदस्य वचः श्रुत्वा सम्पातिर्हृष्टमानसः ।
उवाच [1]मत्प्रियो भ्राता जटायुः प्लवगेश्वराः ॥ ४० ॥

बहुवर्षसहस्रान्ते [2]भ्रातृवार्त्ता श्रुता मया ।
वाक्[3]सहायं [4]करिष्येऽहं भवतां [5]प्लवगेश्वराः ॥ ४१ ॥

भ्रातुः सलिलदानाय नयध्वं मां जलान्तिकम् ।
पश्चात् सर्वं शुभं वक्ष्ये भवतां कार्यसिद्धये ॥ ४२ ॥

तथेति निन्युस्ते तीरं समुद्रस्य विहङ्गमम् ।
सोऽपि तत्सलिले स्नात्वा [6]भ्रातुर्दत्त्वा जलाञ्जलिम् ॥ ४३ ॥

पुनः स्वस्थानमासाद्य स्थितो नीतो हरीश्वरैः ।
सम्पातिः कथयामास वानरान् परिहर्षयन् ॥ ४४ ॥

४१ । वाक्सहायं वाग्रूपं साहाय्यं न तु शरीरसाहाय्यं पक्षहीनत्वेन असामर्थ्यात् ।

४२ । नयध्वं मां जलान्तिकमित्युक्त्या मृगपक्ष्यादीनामपि यथाज्ञानं धर्माधिकारोऽस्तीति सूचयति । रा० ।

४३ । वाल्मीकीये सीताप्रवृत्तिवर्णनात् परं सम्पातेरुदकदानम् । तथाच—

उपायो दृश्यतां कश्चिल्लङ्घने लवणाम्भसः ।
अधिगम्य च वैदेहीं समृद्धार्था भविष्यथ ॥

भवद्भिर्नीतमिच्छामि आत्मानं वरुणालयम् ।
प्रदास्याम्युदकं भ्रातुः स्वर्गतस्य महात्मनः ॥

ते नीत्वा तु समं देशं तीरे नदनदीपतेः ।
निर्दग्धपक्षं सम्पातिमवतार्याथ सागरम् ॥

प्रत्यारोप्य पुनश्चापि प्रत्यारोप्य कृतोदकम् ।
बभूवुर्वानरा हृष्टाः प्रवृत्तिमुपलभ्य ते ॥ इति । ४।५८।३६-३९ ।

---

1. च 'मे प्रि-' । 2 च 'भ्रातुर्वार्त्तां' । 3. घ-ङ च-छ 'साहाय्य' । 4. च 'करिष्यामि' । 5. च 'वानरोत्तमा,' । 6 च 'भ्रातेर्द-' ।

लङ्का नाम नगर्यास्ते त्रिकूटगिरिमूर्द्धनि ।
तत्राशोकवने सीता [1]राक्षसीभिः सुरक्षिता ॥ ४५ ॥

समुद्रमध्ये सा लङ्का शतयोजनदूरतः ।
दृश्यते मे न सन्देहः सीता च परिदृश्यते ।
गृध्रत्वाद् दूरदृष्टिर्मे नात्र संशयितुं क्षमम्[2] ॥ ४६ ॥

---

४६ । नरो० । शतयोजनदूरतः सा शतयोजनेभ्यः परे इत्यर्थः । मे मया ।

---

४५ । त्रिकूटगिरिमूर्धनीति । अग्निपुराणेऽपि—

शतयोजनविस्तीर्णे लवणाब्धौ त्रिकूटके । इत्यादि । ८।१६ ।

वाल्मीकीयेऽपि—

तत्र त्रिकूटशिखरे रक्षितां रावणेन याम् ।
लङ्कां द्रक्ष्यथ दुर्द्धर्षां निहिता यत्र मैथिली ॥ इति ।४।६३।१७ ।

सीतावस्थानप्रसङ्गेनाऽऽह वाल्मीकीये—

पुत्रो विश्रवसः साक्षाद् भ्राता वैश्रवणस्य च ।
अध्यास्ते नगरीं लङ्कां रावणो राक्षसाधिपः ॥

इतो द्वीपः समुद्रस्य सम्यग्रे शतयोजने ।
तस्मिँल्लङ्कापुरी रम्या निर्मिता विश्वकर्मणा ॥

तस्यां वसति वैदेही दीना कौषेयवासिनी ।
रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता ॥ इत्यादि । ४।५८।२३—२५ ।

४६ । समुद्रमध्ये इत्यनेन चतुर्दिक्षु समुद्रपरिखमेव तद्द्वीपमिति सूचितम् । लङ्का मे मया दृश्यते सीता च दृश्यते । अत्र हेतुमाह—गृध्रत्वादिति । नात्र संशयितुं क्षमम् अत्र संशयो न कार्य इत्यर्थः । रा० ।

वाल्मीकीयेऽपि—

इहस्थोऽपि हि पश्यामि रावणं ताञ्च मैथिलीम् ।
अस्माकं ह्यतिसौपर्णं दिव्यं चक्षुर्बलं महत् ॥

तस्मादाहारलोभेन निसर्गेण च वानराः ।
आ योजनशतात् साग्रात् पश्यामो वयमामिषम् ॥ इति । ४।५८।३३-३४ ।

---

1. ग 'रक्षोभिः साम् ' । 2 क 'क्षमा ' ।

शतयोजनविस्तीर्णं समुद्रं यस्तु लङ्घयेत् ।
स एव जानकीं दृष्ट्वा पुनरायास्यति ध्रुवम् ॥ ४७ ॥

अहमेव दुरात्मानं रावणं हन्तुमुत्सहे ।
[1]भ्रातृहन्तारमेकाकी किन्तु पक्षविवर्जितः ॥ ४८ ॥

यतध्व[2]मतियत्नेन लङ्घितुं सरितांपतिम् ।
ततो हन्ता रघुश्रेष्ठो रावणं राक्षसाधिपम् ॥ ४९ ॥

उल्लङ्घ्य सिन्धुं शतयोजनायतं लङ्कां प्रविश्याथ विदेहकन्यकाम् ।
दृष्ट्वा समाभाष्य च वारिधिं पुनस्तर्तुं समर्थः कतमो विचार्यताम् ॥५०॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्ध्याकाण्डे
सप्तमोऽध्यायः ॥ ७ ॥

४७ । नरो० । शतयोजनानि विस्तीर्णं शतयोजनविस्तीर्णस्तम् । अत्र 'अविकल्पे अन्येश्चे'त्यनेन समासः ।

४८ । नरो० । एकाकीत्यनेन सहायनिरपेक्षत्वमुक्तम् ।

५० । नरो० । शतयोजनायतमिति पूर्ववत् समासः ।

[ किष्किन्ध्याकाण्डे सप्तमाध्यायव्याख्या समाप्ता ॥ ७ ॥ ]

४८ । पक्षविवर्जित इत्यनेन बलातिशयेऽपि गमनशक्तिहीनत्वं सूचितम् । रा० ।

1. च-छ 'भ्रातुर्हन्ता-' । 2 ख-ग '-मिति य' ।

# अष्टमोऽध्यायः

—— ० ——

[1]श्रीमहादेव उवाच[2]—

सम्पाति कथयामास स्ववृत्तान्त पुरा[3]कृतम् ।
अहं पुरा जटायुश्च भ्रातरौ रूढयौवनौ ॥ १ ॥

बलेन दर्पितावावां बलजिज्ञासया खगौ ।
सूर्यमण्डलपर्यन्तं गन्तुमुत्पतितौ [4]मदात् ॥ २ ॥

---

१ । नरो० । रूढयौवनौ जाततरुणत्वावित्यर्थ· ।
२ । नरो० । दर्पितौ गर्वितौ ।

---

१ । वाल्मीकीये सम्पातिं प्रति वानराणां प्रश्नो न दृश्यते ।

तत· कृतोदकं स्नातं तं गृध्रं हरियूथपाः ।
उपविष्ट गिरितटे परिवार्योपतस्थिरे ॥

ततोऽङ्गदमुपासीन निशम्य हरिभिर्वृतम् ।
जनितप्रत्ययो हर्षात् सम्पाति पुनरब्रवीत् ॥

कृत्वा नि शब्दमेकाग्रा श्रृणुत प्लवगर्षभा· ।
तथ्य सङ्कीर्त्तयिष्यामि येन जानामि मैथिलीम् ॥ ४।५९।१-३ ।

इत्यादिना मैथिलीवृत्तान्तविनिवेदनोपष्टम्भेन तेनैव स्ववृत्तान्तो विनिवेदित इति हस्तलिखितादर्शेषु नास्तीति च 'अथ ते' इत्यादिश्लोक पादटीकायामेव सन्निवेशित· ।

२ । बलजिज्ञासयेति । वाल्मीकीये गतिजिज्ञासया । तथाच—

अहञ्चैव जटायुश्च संहृष्टौ दर्पमोहितौ ।
वीर्यादुत्पतितौ वेगाज्जिज्ञासन्तौ परां गतिम् ॥ इति ।४।६०।६ ।

---

1 क ख-घ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2 अत· पर क ख-घ-पुस्तकेषु 'अथ ते कौतुकाविष्टा सम्पाति सर्ववानरा । पप्रच्छुर्भगवन् ब्रूहि स्वमुदन्तं त्वमादित ॥' इत्यय श्लोकोऽधिक । 3 च '-तनम्' । 4. ङ 'मुदा' ।

बहुयोजनसाहस्रं गतौ तत्र प्रतापितः ।
जटायुषं परित्रातुं पक्षैराच्छाद्य मोहतः ॥ ३ ॥
स्थितोऽहं रश्मिभिर्दग्धपक्षोऽस्मिन् विन्ध्यमूर्द्धनि ।
पतितो दूरपतनान्मूर्च्छितोऽहं कपीश्वराः ॥ ४ ॥
दिनत्रयात् पुनः प्राणसहितो दग्धपक्षकः ।
देशं वा गिरिकूटान् वा न जाने भ्रान्तमानसः ॥ ५ ॥
शनैरुन्मील्य नयने दृष्ट्वा तत्राऽऽश्रमं शुभम् ।
शनैः शनैराश्रमस्य समीपं गतवानहम् ॥ ६ ॥
चन्द्रमा नाम मुनिराड् दृष्ट्वा मां विस्मितोऽवदत् ।
सम्पाते किमिदं तेऽद्य विरूपं केन वा कृतम् ॥ ७

३ । नरो० । पक्षैः पत्रैः । मोहतः कर्त्तव्याकर्त्तव्यविवेकाभावात् ।

३-४ । जटायुः प्रतापितः, कनिष्ठत्वान्मोहतस्तं परित्रातुं पक्षैराच्छाद्य स्थितोऽहं सूर्यरश्मिभिर्दग्धपक्षः अत्र पतितो दूरपतनान्मूर्च्छितः आसमिति शेषः । रा० ।

जटायुषः परित्रातुमिति । वाल्मीकीयेऽपि—

पक्षाभ्याञ्च मया गुप्तो जटायुर्न व्यदह्यत ।
यच्चाहं भृशनिर्दग्धोऽपतं वायुपथाच्च्युतः ॥ इति । ४।६१।२८ ।

स्थितोऽहमिति । वाल्मीकीयेऽपि—

अस्य विन्ध्यस्य शिखरे पुराऽस्मि पतितो दिवः ।
दाहदुःखपरीताङ्गो निर्दग्धः सूर्यरश्मिभिः ॥ इति ।४।६०।४ ।

५ । दिनत्रयात्तदुत्तरं पुनः प्राणसहितो दग्धपक्षको यतोऽतो भ्रान्तमानसो देशादीन् न जाने । रा० ।

दिनत्रयादिति । वाल्मीकीये षड्रात्रात् । तथाच —

लब्धसंज्ञस्तु षड्रात्रात् सरुजो विह्वलन्निव ।
वीक्षमाणो दिशः सर्वा नाभिजानामि तत्त्वतः ॥ इति ।४।६०।८ ।

७ । अद्य ते इदं रूपं किं केन वा पूर्वं दृष्टं तदुत्तमं रूपं विरूपं कृतम् । रा० ।

विस्मित इति । विस्मयप्रकारमाह वाल्मीकीये—

ऋषिर्दृष्ट्वा तु मां तूर्णीं प्रविवेशाऽऽश्रमं प्रभुः ।
स मुहूर्त्तादिव विनिष्क्रम्य ततः कार्यं स पृष्टवान् ॥

---

1 ख घ '-युस'। 2 च 'पक्षावाच्छाद्य'। 3 ग 'ततोऽहं'। 4 च 'गिरि-'। 5 च '-ङ्कि'। 6 ङ 'दिशं वा'। 7 ग-ङ च छ 'कूटं वा'। 8 छ '-भवत्'।

जानामि त्वामहं पूर्वम[1]त्यन्त बलवानसि ।
दग्धौ किमर्थं ते पक्षौ कथ्यतां यदि मन्यसे ॥ ८ ॥
[2]तत स्वचेष्टितं सर्वं कथयित्वाऽतिदु खित ।
अब्रुवं मुनिशार्दूलं [3]दग्धोऽहं [4]दाववह्निना ।
कथ धारयितुं शक्तो विपक्षो जीवित प्रभो ॥ ९ ॥
इत्यु क्तोऽथ मुनिर्वीक्ष्य मां दयार्द्रविलोचन ।
शृणु वत्स वचो मेऽद्य श्रुत्वा कुरु यथेप्सितम् ॥ १० ॥
देहमूलमिदं दु ख देह कर्मसमुद्भव ।
[6]कर्म प्रवर्त्तते देहेऽह[7]बुद्ध्या पुरुषस्य हि ॥ ११ ॥

९ । नरो० । आत्मन औद्धत्यगोपनाय दग्धोऽह दाववह्निना इत्युक्तम् । 'दव-दावौ वनारण्यवह्नी' इत्यमर ।

१० । नरो० । दयया आर्द्रे विलोचने यस्य स तथा । उवाचेति शेष· । किमुक्तवान् इत्यपेक्षायामाह—शृणु वत्सेत्यादि ।

११ । नरो० । देहो मूल कारण यस्य तत्तथा । कर्मण समुद्भवो यस्य स तथा । देहे अहबुद्ध्या पुरुषस्य कर्म प्रवर्त्तते इत्यन्वय ।

वर्णवैवर्ण्यमालोक्य पक्षयोश्च पराजयम् ।
नाभिजानामि पूर्वं त्वां पश्चात् स्मृत्वाऽहमागत ॥ इति ४।९९।१७-१८

चन्द्रमा नामेति । वाल्मीकीये ऋषिर्निशाकरनामा । तथाच—

अस्ति चात्राऽऽश्रम पुण्य सुरैरपि सुपूजित ।
ऋषिर्निशाकरो नाम तस्मिन्नुग्रतपा अभूत् ॥ इति ।४।९९।८।

८ । पूर्वं बलवानसि इति वर्त्तमानसामीप्ये लट् ।

९ । दाववह्निना तत्तुल्यचिन्तयेत्यर्थ । चिन्तामभिनयति—कथमिति । रा० ।

११ । अत्र देहस्य तन्मूलस्य च तत्त्वज्ञानं विना छेत्तुमशक्यतया भोगैकनाश्य दु·खमिति वक्तुमुपक्रमते—देहेति ।

देहमूलमित्यादिना धर्मोपदेशेन यदाश्वासनं तद्वाल्मीकिनाऽस्वादितपूर्वम् । तत्र—

एतैश्चान्यैश्च बहुभिर्वाक्यैर्धर्मार्थसहितै ।
मामाश्वास्याभ्यनुज्ञाय प्रविवेशाऽऽश्रमं मुनि· ॥ ४।६१।१७।

इत्येतावन्मात्रम् ।

1 ग '-त्यन्तबल-' । 2 ग ङ-च छ 'ततो मचेष्टित' । 3 क ख-ग घ ङ च छ 'दग्धोऽह' । 4. ग 'दारुव-' । 5 च 'क्त स' । 6 च 'कर्मप्रवृत्ते' । 7. च '-बुद्ध्या च' ।

अहङ्कारस्त्वनादिः स्यादविद्यासम्भवो जड' ।
चिच्छायया सदा युक्तस्तप्तायःपिण्डवत् सदा ।
तेन देहस्य तादात्म्याद्देहश्चेतन'वान् भवेत् ॥ १२ ॥
देहोऽहमिति बुद्धि' स्यादात्मनोऽहङ्कृतेर्बलात् ।
तन्मूल एष ससार' सुखदु'खादिसाधक' ॥ १३ ॥
आत्मनो निर्विकारस्य मिथ्या भेदात्मन· सदा ।
देहोऽह कर्मकर्त्ताऽहमिति सङ्कल्प्य सर्वदा ॥ १४ ॥

१२ । नरो० । देहे अहबुद्ध्युत्पत्तिप्रकारमाह—अहङ्कारस्त्वित्यादि अहङ्कृतेर्बलादित्यन्तेन । अहङ्कार· अन्त करणम्, अनादिर्धारावाहिक इत्यर्थ । अविद्यासम्भवो मायाजन्य इत्यर्थ । चिच्छायया चिदाभासेन । दृष्टान्तमाह—तप्ताय पिण्डवत सदेति । तेन चिच्छायय सदा युक्तेनाहङ्कारेण चेतनवत् चेतनतुल्य' ।

१३ । नरो० । साक्षात् परम्परया च सर्वेषां देहे अहंबुद्ध्या' कारणत्व दर्शयन्नाह—तन्मूल इत्यादि । तन्मूल देहोऽहमितिबुद्धिमूल ।

१४ । नरो० । कर्मोत्पत्तिपरिपाटीमाह—आत्मन इत्यादि कर्माणीत्यनेन । आत्मनो

१२ । ननु कोऽसावहपदार्थो यद्बुद्धिर्देहे तत्राऽऽह—अहङ्कार इति । अविद्याया जडत्वात्तत्सम्भवोऽसावपि जड इति भाव । अविद्यासम्भवत्वेऽपि सम्भवकालापरिच्छेदादनादिरित्युक्त । तप्ताय पिण्डो यथा वह्निना युक्तस्तत पृथक् कर्त्तुमशक्यश्च तथाऽयमहङ्कारश्चित्त इत्यर्थः । तेन चित्तादात्म्यापन्नाहङ्कारेण चेतनवान् चेतन्यवानिव । रा० ।

[ अहङ्कारस्त्वनादि स्यादित्यादि । प्रतिकल्पे सृज्यत्वाभावादनादिरहङ्कार·, वस्तुत अविद्यासम्भव· अविद्याजन्य अतो जड· अचेतन· । ननु यदि जडस्तर्हि कुतो मादकत्वमहङ्कारस्येत्याह चिच्छायेति । यथाऽचेतनमय पिण्ड वह्नौ युक्त द्रवीभवति तथा चिच्छक्तियुक्तोऽहङ्कारादिरपि । तेनाहङ्कारेण रह देहस्य तादात्म्यात् ऐक्यात् देहश्चेतनवान् चेतनयुक्तो भवेत् । एतेन सयुक्तसमवायता । गो० ]

१३ । एवमात्मनश्चेतनस्य अहङ्कृतेर्बलात् तत्सम्बन्धबलात् अहं देह इति बुद्धि, तत्कृत एष ससार· सुखादिसाधक· कर्मद्वारेति बोध्यम् । रा० ।

[ ननु भवतु तत्सम्बन्धाद् देहश्चेतनवान्, देहेऽहंबुद्धि' पुनः कथं भवतीत्यत आह—देहोऽहमिति । आत्मनो जीवस्य अहङ्कृतेरहङ्कारस्य बलाद देहे अहमिति बुद्धिः स्यात्, तन्मूलो देहाहङ्कारमूल एष लोकेषु दृश्यमानः ससार । गो० ]

१४-१९ । एवं निर्विकारस्याप्यात्मनोऽहङ्कारादिभिर्मिथ्यातादात्म्याद्देहोऽहम्, यद्वा

1. ङ-च-छ '-वद्भम-' । 2. क-ख-घ-ङ '-तादात्म्यतः', च-टि 'तादात्म्यवत्तया' ।

जीवः करोति कर्माणि तत्फलैर्बध्यतेऽवशः ।
ऊर्ध्वाधो भ्रमते नित्यं [1]पापपुण्यात्मकः स्वयम् ॥ १५ ॥
कृतं मयाऽधिकं पुण्यं यज्ञदानादि निश्चितम् ।
स्वर्गं गत्वा सुखं भोक्ष्य इति सङ्कल्पवान् भवेत् ॥ १६ ॥
तथैवाध्यासतस्तत्र चिरं भुक्त्वा सुखं महत् ।
क्षीणपुण्यः पतत्यर्वागनिच्छन् कर्मचोदितः ॥ १७ ॥
पतित्वा मण्डले चेन्दोस्ततो नीहारसंयुतः ।
भूमौ पतित्वा व्रीह्यादौ तत्र स्थित्वा चिरं पुनः ॥ १८ ॥

---

नित्योपलब्धिस्वरूपस्य निर्विकारस्य बुद्ध्यादिविकारशून्यस्य । मिथ्या अभेदो यत्र तादृश आत्मा शरीरं यस्य तस्य तथा । सङ्कल्प्य निश्चित्य मनसि कृत्वा वा । देहोत्पत्तिपरिपाटीमाह—तत्फलैरित्यादिना । तत्फलैः कर्मफलैः पापपुण्यैः । पापपुण्यात्मकः आत्मा यस्य स पापपुण्ययुक्तात्मकः । शिलापुत्रस्य चारु शरीरमितिवदत्राभेदे भेदोऽङ्गीकृत इति बोध्यम् ।

१७ । नरो० । अध्यासतः आत्मनि कर्तृत्वाद्यारोपादित्यर्थः, देहादिषु आत्मत्वारोपादित्यर्थो वा । क्षीणपुण्यः कर्मचोदितः सन् तस्मादनिच्छन् अर्वाक् पततीत्यन्वयः ।

---

ततोऽतिरिक्तोऽपि कर्मकर्ताऽहमिति सङ्कल्पपूर्वकं प्रायो देहोऽहमिति बुद्धिरेव सर्वस्य । कस्यचित् प्राग्भवपुण्यवशात् तद्बुद्धिविलयेऽपि कर्मकर्तेति बुद्धिरस्त्येवेति भावः । कर्माणि करोति । अहं करोमीति सङ्कल्पादेवावशस्तत्फलैः सुखादिभिर्बध्यते, अनेन यो नाहं कर्तेति भावयति तस्यैव बन्ध इति सूचितम् । तद्बन्धप्रकारमाह—ऊर्ध्वेति । पुण्येनोर्ध्वं पापेनाधो भ्रमते इत्यर्थः । रा० ।

[ अहङ्कारविलसितमाह—देहोऽहमिति । अहं देहः कर्मणां कर्ता चाहम् इति सङ्कल्प्य मनसि निश्चित्य तत्फले कर्मफले सुखदुःखादिभिर्बध्यते सम्बद्धो भवति । ऊर्ध्वं देवादियोनिषु अधो वृक्षतिर्यगादिषु भ्रमते जायते । नित्यमित्यविच्छेदार्थम् । गो० ]

१६ । तदेव विवृणोति कृतमिति । इति सङ्कल्पवान् भवेत् । स्वर्गतः सुखभोगी चेति शेषः । रा० ।

[ अहङ्कारमुग्धस्य चेष्टितमाह—कृतमिति । गो० ]

१७ । तथवाध्यासतः अहं बहुपुण्यकर्तेति अध्यासेन तत्र स्वर्गे अनिच्छन्नपि पततीति अवश इत्युक्तस्य विवरणम् ।

[ पतत्यर्वागिति । अर्वाक् स्वर्लोकादधः । गो० ]

१८-१९ । ततः पातपूर्वकं येन प्रकारेण गर्भे वासस्तदुपपादयति—पतित्वेति । इन्दो-

---

1. छ 'पापमना' च ङ 'पापपुण्यवशात्' ।

भूत्वा चतुर्विध भोज्यं पुरुषैर्भुज्यते ततः ।
रेतो भूत्वा पुनस्तेन ऋतौ स्त्रीयोनि[1]सिञ्चितम् ॥ १९ ॥
योनि[2]रक्तेन संयुक्तं जरायुपरिवेष्टितम् ।
दिनेनैकेन कलल भूत्वा[3]रूढत्वमाप्नुयात् ॥ २० ॥

१९ । नरो० । चतुर्विधमिति । चर्व्यं चोष्यं लेह्यं पेयमिति एताश्चतस्रो विधा भोज्यस्य इति । तेन पुरुषेण । अत्र स्थानद्वये स्थितम् इत्यध्याहार्यम् ।

२० । नरो० । योनिरक्तेन सयुक्तमिति । अत्र रेत इति विशेष्यं बोध्यम् । जरायु-परिवेष्टितमिति । 'गर्भाशयो जरायु स्यादुल्व च कललोऽस्त्रियामि'त्यमर । आरूढत्वम् आरोहणाश्रयत्वम् ।

मण्डले पतित्वा ततो नीहारैस्तत्किरणद्वारा भूसंबद्धैरेव सबद्धो भूत्वा भूमौ पतति, ततो व्रीह्यादौ अनुशायित्वेन स्थित्वा चतुर्विध भोज्य भक्ष्यभोज्यलेह्यचोष्यरूप तदन्यतमद्भूत्वा स्थित इति शेष । ततस्तेन पुंसा स्त्रीयोनौ ऋतुकाले सिञ्चित सिक्त । आर्षत्वात् साधु । रा० ।

[ स्वर्गलोकात् पतनानन्तर यथा जायन्ते तत्क्रममाह—भूत्वा चतुर्विधमिति । चतुर्विधं चर्व्यचोष्यलेह्यपेयरूपं भूत्वा स्थितम् । गो० ]

रेतो भूत्वेति ।

पृथिव्या ओषधिर्जाता ओषधेरन्नमेव च ।
तस्माद्भवेत्तथा देवि रेत सर्वरसात्मकम् ॥ २३ पृ० ।

इत्यादिप्राणतोषणीधृतविश्वसारतन्त्रप्रथमपटलीयवचनेन भोज्याद रेतसो जननं स्पष्टमेव । तेन पुरुषेणेत्यर्थः, तद्रेत· ऋतौ रज·प्रवृत्तौ स्त्रीयोनिसिञ्चित सद योनिरक्तेन संयुक्तमित्यादिना परेणान्वय ।

ऋतौ रेतसो स्त्रीयोनिसिञ्चनमधिकृत्य शाक्तानन्दतरङ्गिण्याम्—

रजस्वला च या नारी विशुद्धा पञ्चमे दिने ।
पीडिता कामबाणेन तत· पुरुषमीहते ॥
भगलिङ्गसमायोगान्मैथुनं स्यात्तदा तयो ।
क्षरते च तदा रेत प्राणापानविसश्रितम् ॥ इति २ पृ० ।

२० । सिक्त स जीव एकेन दिनेन जरायुपरिवेष्टितं योनिरक्तेन संयुक्तं कलल कल-लाख्यपरिणामवद भूत्वा रूढत्व दार्ढ्यमाप्नुयात् । जरायुर्गर्भवेष्टनम् । रा० ।

1 क-ख घ 'सिचित', ङ-छ 'सञ्चित'। 2 क 'रम्भ्रगा'। ३ च 'रत्नमाप्न'।

[ कललं शुक्रशोणितमिश्रितं भूत्वा रूढत्वमङ्कुरत्वम् । गो० ]

कललमिति । 'दिनेनैकेन कललम्' (२ पृ०) इत्यादिशाक्तानन्दतरङ्गिणीवचनात्, शारदातिलक-व्याख्यायां 'कललं चैकरात्रेण' (३२ पृ०) इत्यादिराघवभट्टधृतविश्वसारवचनाच्च । नृजननरहस्ये विभिन्नग्रन्थगतमतानां तद्व्याख्यातॄणाञ्च परमेवानैक्यं दृश्यते । तेषां सर्वेषां सन्दर्शनं ग्रन्थ-गौरवभिया न योग्यमिति इत आरभ्य जननसम्बन्धिनां त्रिशश्लोकान्तग्रन्थांशानां समर्थकाना-मसमर्थकानाञ्च प्रमाणानां दिङ्मात्रमत्रैव उदाह्रियते । तथाच शारदातिलकटीकायां योगार्णवे इत्युपक्रम्य राघवभट्ट —

कललं चैकरात्रेण पञ्चरात्रेण बुद्बुदम् ।
शोणित दशरात्रेण मांसपेशी चतुर्दशे ॥

घनमांसञ्च विंशाहे पिण्डभावोपलक्षितम् ।
पञ्चविंशतिपूर्णाहे पलं सर्वाङ्कुरायते ॥

एकमासे तु सम्पूर्णे पञ्च भूतानि धारयेत् ।
मासद्वये तु सम्प्राप्ते शिरोभेद प्रजायते ॥

मज्जास्थि च त्रिभिर्मासै केशाङ्गुल्यश्चतुर्थके ।
कर्णाक्षिनासिकानाञ्च रन्ध्रं मासे तु पञ्चमे ॥

आस्यरन्ध्रोदरं षष्ठे पायुरन्ध्रञ्च सप्तमे ।
सर्वाङ्गसन्धिसम्पूर्णं मासैरष्टभिरिष्यते ॥ इति । १म-प० ३२-पृ० ।

तत्रैव अध्यात्मविवेके विशेष इत्युपक्रम्य स एव—

द्रवत्वं प्रथमे मासे कललाख्य प्रजायते ।
द्वितीये तु घन पिण्ड पेशी षड्घनमर्वुदम् ॥

पुंस्त्रीनपुंसकानान्तु प्रायोऽवस्था क्रमादिकाः ।
तृतीये त्वङ्कुरा पञ्च कराङ्घ्रिशिरसो मता ॥

अङ्गप्रत्यङ्गभागाश्च सूक्ष्मा स्युर्युगपत्तदा ।
विहाय श्मश्रुदन्तादीन् जन्मानन्तरसम्भवान् ॥

एका प्रकृतिरन्या तु विकृति सम्मता सताम् ।
चतुर्थे व्यक्तता तेषां भावानामपि जायते ॥

मातृजञ्चास्य हृदयं विषयानभिकाङ्क्षति ।
अतो मातुर्मनोऽभीष्टं कुर्याद् गर्भविवृद्धये ॥

तत् पुन' पञ्चरात्रेण बुद्बुदाकारतामियात् ।
सप्तरात्रेण तदपि मांस'पेशीत्वमाप्नुयात् ॥ २१ ॥
पक्षमात्रेण सा पेशी रुधिरेण परिप्लुता ।
तस्या एवाङ्कुरोत्पत्तिः पञ्चविंशतिरात्रिषु ॥ २२ ॥
ग्रीवा शिरश्च स्कन्धश्च पृष्ठवंशस्तथोदरम् ।
²पञ्चधाऽङ्गानि ³चैकैकं जायन्ते मासतः क्रमात् ॥ २३ ॥

२१ । नरो० । तद् योनिरक्तसंयुतं रेत' । बुदबुदाकारतां बुद्बुदस्वरूपताम् । सप्तरात्रेण सप्तानां रात्रीणां समाहारेणेत्यर्थ· । तदपि बुद्बुदमपि मांसपेशीत्व मांसाण्डप्रमाणपिण्डत्वम् ।

.. . .. ..

प्रवृद्ध [ बुद्ध ] पञ्चमे पिण्डं [ पिण्ड- ] मांसशोणितपुष्टता ।
षष्ठेऽस्थिस्नायुनखरकेशरोमविविक्तता ॥
बलवर्णौ चोपचितो सप्तमे त्वङ्गपूर्णता ।
अष्टमे त्वक्श्रुती स्यातामोजस्तेजश्च हृद्भवम् ॥ इति । १म-प० ३२-३३-पृ०

शाक्तानन्दतरङ्गिण्यामपि—

कलल चेकरात्रेण बुदबुदं पञ्चमे दिने ।
शोणित दशरात्रेण मांसपिण्डं चतुर्दशे ॥
मासैकेऽपि सम्पूर्णे मांसपिण्डोऽङ्कुरायते ।
... .. .. ॥
मासद्वये तु सम्पूर्णे मेदस्तत्र प्रजायते ।
मज्जास्थीनि त्रिभिर्मासै केशास्त्वक् च चतुष्टये ॥
कर्णाक्षिनासिकावक्त्र कण्ठोदरञ्च पञ्चमे ।
षष्ठे मुखं तथा पादौ सर्वाङ्गाणि च सप्तमे ।
सन्धि सपूर्णतां याति अष्टमे मासि वै तत' ॥ इति । ३-४-पृ० ।

२१ । बुद्बुदं वर्त्तुलत्वम् । मांसपेशीत्वं मांसपिण्डत्वम् । रा० ।

२२ । अङ्कुरोत्पत्ति अङ्कुरवत् शिर·संस्थानम् । 'मासेन तु शिर'' इति भागवतोक्ते । रुधिरेण परिप्लुता भवतीति शेष । तस्यैव पेशीरूपपरिणामस्यैव पञ्चविंशतिरात्रिषु गतास्विति शेष । समासान्ताभावोऽनित्यत्वात् । रा० ।

२३ । अङ्कुरानेवाऽऽह—ग्रीवेत्यादि । पञ्चधाऽङ्गानि पञ्चधाऽङ्कुरा' । मासतः मासेन । क्रमात् प्रथम ग्रीवेत्यादिक्रमेण । रा० ।

1 ग '-पिण्डल-' । 2. ङ 'पञ्च वाऽङ्गानि' । 3 ङ 'चैकैक,' च 'तेनैव' ।

[1]पाणिपादौ [2]तथा पार्श्वः कटिर्जानुस्तथैव च ।
मासद्वयात् प्रजायन्ते क्रमेणैव [3]न चान्यथा ॥ २४ ॥
त्रिभिर्मासै· प्रजायन्ते [4]अङ्गानां सन्धय क्रमात् ।
सर्वाङ्गुल्य· प्रजायन्ते क्रमान्मासचतुष्टये ॥ २५ ॥
नासा कर्णौ च नेत्रे च जायन्ते पञ्चमासत' ।
दन्तपङ्क्तिर्नखा गुह्यं [5]पञ्चमे जायते [6]तथा ॥ २६ ॥
अर्वाक् षण्मासत[7]श्छिद्रं कर्णयोर्भवति स्फुटम् ।
[8]पायुर्मेढ्र उपस्थश्च नाभिश्चापि भवेन्नृणाम् ॥ २७ ॥
सप्तमे मासि रोमाणि शिर [9]केशास्तथैव च ।
विभक्तावयवत्वञ्च सर्वं [10]सम्पद्यतेऽष्टमे ॥ २८ ॥
जठरे वर्द्धते गर्भ' [11]स्त्रिया एव विह[12]ङ्गम ।
[13]नवमे मासि चैतन्यं जीव· प्राप्नोति सर्वशः ॥ २९ ॥
नाभिसूत्रा[14]ल्परन्ध्रेण मातृ[15]भुक्तान्नसारत· ।
वर्द्धते गर्भग पिण्डो न [16]म्रियेत स्वकर्मत [17] ॥ ३० ॥

---

२६ । नरो० । पञ्चमे दन्तपङ्क्तिर्गुह्यं यथा स्यात् तथा जायते । नखाश्च गुह्यं यथा स्यात्तथा जायन्ते इति ।

२७ । नरो० । पायुर्मेढ्र इति । पायुर्गुदम्, मेढ्र शिश्न, उपस्थो योनि ।

---

२६ । पञ्चमासत पञ्चमे मासि, दन्ताद्यपि पञ्चमे एव मासि । रा० ।

२८ । विभक्तावयवत्व पृथग्ज्ञानविषयावयवत्वम्, एतद्वक्ष्यमाणञ्च गर्भोपनिषदि वैद्यकसंहितासु शारीरके च स्फुट विस्तरभयात्तन्नेह लिख्यते । रा० ।

२९ । एवम् एवरीत्या वर्धत इत्यन्वय । चैतन्य प्राप्नोति तदभिव्यक्तिं प्राप्नोतीत्यर्थ । रा० ।

३० । नाभीति । नाभिसूत्र नालाख्य मातृ रसनाड्या सबद्ध तदीयाल्परन्ध्रेण गर्भजठरं

---

1. च 'पाणी पादौ,' छ 'जङ्घापा' । 2 क ग-ङ छ 'तदा' । 3 च-छ 'च नान्यथा' । 4. छ 'चाङ्गाना' । 5. छ 'पञ्चम' । 6. ङ छ 'तदा,' च 'तत' । 7 छ '-श्छिद्रौ' । 8. क-ख ग-घ च छ 'पायुर्मेढ्रमुपस्थश्च', ङ 'स्नायु-' । 9 ङ 'केशस्त-' । 10 ङ-च-छ 'सम्पाद्य-' । 11 छ 'स्त्रिय' । 12 क- '-ङ्गमा.' । 13 क-ख ग-च 'पञ्चमे' । 14 ङ 'गरन्सेन,' च '-नुवक्त्रेण,' छ '-ल्परन्ध्रे-' । 15 ङ '-भुक्तानु-,' ग-च '-भक्तानु-' । 16 छ 'म्रियते' । 17. छ '-भि.' ।

स्मृत्वा सर्वाणि [1]जन्मानि [2]पूर्वजन्मकृतानि च ।
जठरानलतप्तोऽयमिदं वचनमब्रवीत् ॥ ३१ ॥
नानायोनिसहस्रेषु जायमानोऽनुभूतवान् ।
पुत्रदारादिसम्बन्ध कोटिश· पशुबान्धवान् ॥ ३२ ॥
कुटुम्ब[3]भरणासक्त्या न्यायान्यायैर्धनार्जनम् ।
कृतं [4]नाकरव [5]विष्णुचिन्तां स्वप्नेऽपि दुर्भग· ।
इदानीं तत्फल भुञ्जे गर्भदु·खं महत्तरम् ॥ ३३ ॥

---

३१ । नरो० । 'देहमूलमिदं दु·खमि'ति यदुक्तमिदानीं तत्राऽऽह—स्मृत्वेत्यादि अभिनिवेशत इत्यन्तेन ।

---

प्राप्तान् मातृभुक्तान्नसारतो गर्भग पिण्डो वर्धते, अल्परन्ध्रप्राप्तात्पाहारत्वेऽपि स्वकर्मतो न म्रियते इत्यर्थ· । रा० ।

मातृभुक्तान्नसारत· मातृभुक्तानामन्नानां भोज्यवस्तूनामित्यर्थ ।

मातुर्यद्विषयालाभस्तदार्त्तो जायते सुत· ।
गर्भ· स्यादर्थवान् भोगी दोहदाद् राजदर्शने ॥
अलङ्कारे सुललितो धर्मिष्ठस्तापसाश्रमे ।
देवतादर्शने भक्तो हिंस्रो भुजगदर्शने ॥
गोधाशने तु निद्रालुर्बली गोमांसभक्षणे ।
माहिषेण तु रक्ताक्ष लोमश सूयते सुतम् ॥ १म-प० ३३-पृ०

इत्यादि शारदातिलकटीकायां राघवभट्टधृताध्यात्मविवेकवचनेन न केवलं मातुर्भोज्याम्रादिना गर्भस्य वर्द्धनादिक दर्शनादिनाऽपि । स्वकर्मत· स्वपूर्वजन्मार्जितेन शुभेन कर्मणेत्यर्थ ।

३१-३२ । सर्वाणि जन्मानि तत्कृतानि कर्माणि च स्मृत्वा जठरानलयोगादतिमन्तप्तो वचनमाह । नानेति । पुत्रादिसबन्धमनुभूतवानिति सम्बन्ध· । रा० ।

३३ । तथा कुटुम्बभरणासक्त्या तन्मात्रासक्त्या न तु धर्मासक्त्या । न्यायान्यायैर्धर्माधर्मैरुपायैर्धनार्जन कृतम्, मयेति शेष । तथा विष्णुचिन्तां स्वप्नेऽपि ,नाकरवमहं न कृतवानित्यर्थ· । तत्फलभूतगर्भदु ख भुञ्जे इत्यन्वय· । रा० ।

---

1 च छ 'कर्माणि' । 2. क-ख ग घ 'पूर्वकर्माणि सर्वश ', ङ-च छ 'पूर्वजन्मानि यानि च' । 3 ग च-छ '-भरणाशक्तो,' ङ 'भरणेऽशक्तो' । 4. ख 'नाकारव' । 5. छ 'विष्णोश्चिन्तां' ।

अशाश्वते शाश्वत[1]वद्देहे तृष्णासमन्वितः ।
अकार्याण्येव कृतवान् न कृतं [2]हितमात्मनः ॥ ३४ ॥

इत्येव बहुधा दुःखमनुभूय स्वकर्मतः ।
कदा निष्क्रमणं मे स्याद् गर्भान्निरय[3]सन्निभात् ।
[4]इत ऊर्ध्वं [5]नित्यमहं [6]विष्णुमेवानुपूजये ॥ ३५ ॥

इत्यादि चिन्तयञ् जीवो योनियन्त्र[7]प्रपीडितः ।
जायमानोऽतिदुःखेन नरकात् पातकी यथा ।
पूतिव्रणान्निपतितः कृमिरेष इवापरः ॥ ३६ ॥

ततो बाल्यादिदुःखानि [8]सर्व एवं विभुञ्जते ।
त्वया चैवानुभूतानि [9]सर्वत्र विदितानि च ।
न वर्णितानि [10]मे गृध्र यौवनादिषु सर्वतः ॥ ३७ ॥

---

३४ । नरो० । अशाश्वते अनित्ये । शाश्वतवद् नित्यवत् ।

३५ । नरो० । निरयसन्निभात् नरकतुल्यात् ।

३६ । नरो० । योनिरेव यन्त्रं तेन प्रपीडितः योनियन्त्रप्रपीडितः । जायमानो गर्भात् प्रादुर्भवति । दृष्टान्तमाह—नरकात् पातकी यथेति । उत्प्रेक्षते—पूतिव्रणादिति ।

---

३४ । अशाश्वते तृणाग्रपतितजलबिन्दुवन्नश्वरे देहे शाश्वतवस्तुनीव ममेदं स्यादितीच्छायुक्तः । न कृतमित्यस्य मयेति शेषः । रा० ।

३५ । अनुभूयेत्यस्य इदानीं गर्भदुःखं भुञ्जे इत्यनेनान्वयः । रा० ।

३६ । योनियन्त्रप्रपीडितः जन्मकाले, अत एवातिदुःखेन जायमानो बहिः पततीति शेषः । नरकात् पातकीत्येको दृष्टान्तः । तथा पूतिव्रणाद्दुर्गन्धिव्रणान्निपतितोऽतः परं कृमिरिव एष पततीति शेषः । रा० ।

३७ । ततो बाल्यादिदुःखानि भुनक्ति, एवं सर्वजन्तवो विभुञ्जते न कश्चिदेवेत्यर्थः । यानि सर्वाणि विदितानि मया वर्णितानि यानि तु यौवनादिषु दुःखानि सर्वतः सर्वैः

---

1 छ '-वद्दाह्यतृष्णा-' । 2 ङ 'स्थित-' । 3 च '-सम्भवात' । 4 च 'अत' । 5 च 'विष्णु-' । 6 च 'नित्यमेवाभि-' । 7. च '-निपीडितः' । 8. च 'सर्वाण्येव,' छ 'सर्वमेव' । 9 च 'सर्वाणि' । 10. च 'ते' ।

एव देहाऽहमित्यस्मा[1]द्ध्यासान्निरयादिकम् ।
गर्भवासादिदुःखानि भवन्त्यभिनिवेशतः ॥ ३८ ॥
तस्माद्देहद्वयादन्यमात्मान प्रकृते परम् ।
ज्ञात्वा देहादि[2]ममतां [3]त्यक्त्वात्मज्ञानवान् [4]भवेत् ॥ ३९ ॥
जाग्रदादिविनिर्मुक्त सत्यज्ञानादिलक्षणम् ।
शुद्धं बुद्ध [5]सदा शान्तमात्मानमवधारयेत् ॥ ४० ॥

३८ । नरो० । उपसहरति—एवमिति । अभिनिवेशतो देहोऽहमित्यस्मादस्माद्ध्यासान्निरयादिकं भवति, गर्भवासदुःखानि च भवन्ति ।

३९ । नरो० । आत्मनो देहवैलक्षण्यमुपसहरति—तस्मादिति पद्यन । देहद्वयात् स्थूलशरीरसूक्ष्मशरीराभ्यामित्यर्थ । प्रकृते परमिति, प्रकृतिभिन्नमित्यर्थ । देहादौ ममता देहादिममता ताम् ।

४० । नरो० । किं वा आत्मन स्वरूपमित्यपेक्षायामाह—जाग्रदादिविनिर्मुक्तमित्यादि । जाग्रदादिविनिर्मुक्तमिति जाग्रत्स्वप्नसुषुप्तिवर्जितमित्यर्थ । तथा चोक्तम्—

न जाग्रन्न मे स्वप्नको वा सुषुप्तिर्न विश्वो न वा तैजस· प्राज्ञको वा ।
अविद्यात्मकत्वात् त्रयाणां तुरीयस्तदेकोऽवशिष्ट शिव केवलोऽहम् ॥

शङ्कराचार्यग्रन्था० निर्वाणदशक० । ६ ।

इति । सत्यञ्च ज्ञानञ्च ते आदी यस्य तत् लक्षण स्वरूप यस्य त तथा । शुद्धम् अन्तःकरणाद्युपाधिरहितम्, अत एव शान्त रागादिदोषरहितम्, बुद्ध तत्त्वज्ञम् । आत्मन परमार्थत किञ्चिदपि नास्तीति नास्ति विरोध· ।

---

प्राप्याणि सर्वत्र सर्वेषु जन्तुषु विदितानि सर्वैर्ज्ञातानि त्वया चानुभूतानीति सर्वविदितत्वादेव मया न वर्णितानि । रा० ।

३८ । एवमिति । इत्यस्मादित्याकारादभ्यासाज्जातादभिनिवेशत· अह कर्त्तेत्याकारात् निरयस्वर्गादिक गर्भवासादिदुःखानि च भवन्तीत्यन्वय । रा० ।

३९ । देहद्वयात् स्थूलसूक्ष्मरूपात् प्रागुक्तादन्यम् । तर्हि प्रकृतिरेव सा नेत्याह—प्रकृते पर ज्ञात्वा देहादिषु ममताम् अह ममेतिबुद्धिविषयतां त्यक्त्वा आत्मज्ञानवान् आत्मैव सर्वमिति ज्ञानवान् भवेत् । रा० ।

४० । ध्येयात्मस्वरूपमाह—जाग्रदादीति । जाग्रत्स्वप्नसुषुप्ताख्यावस्थात्रयरहितम् , शुद्धं मायादोषालिप्तम्, बुद्ध बोधस्वरूपम् । रा० ।

---

1 ख व 'द्ध्यासा-' । 2 क 'समता' । 3 ग 'त्यक्त्वा च आ' । 4. च 'भव' ।
5 क-ख 'तदा', ग 'तथा' ।

चिदात्मनि परिज्ञाते नष्टे मोहेऽज्ञसम्भवे ।
देहः पततु वाऽऽरब्धकर्मवेगेन तिष्ठतु ।
योगिनो न हि दुःखं वा [1]सुखं वाऽज्ञानसम्भवम् ॥ ४१ ॥

तस्माद्देहेन सहितो यावत् प्रारब्धसंक्षयः ।
तावत् तिष्ठ सुखेन त्वं धृतकञ्चुकसर्पवत् ।
अन्यद्वक्ष्यामि ते पक्षिन् शृणु मे परमं हितम् ॥ ४२ ॥

त्रेतायुगे दाशरथिर्भूत्वा नारायणोऽव्ययः ।
रावणस्य वधार्थाय दण्डकानागमिष्यति ।
सीतया भार्यया सार्द्धं लक्ष्मणेन समन्वितः ॥ ४३ ॥

तत्राऽऽश्रमे जनकजां भ्रातृभ्यां [2]रहिते वने ।
रावणः[3]श्चोरवन्नीत्वा लङ्कायां स्थापयिष्यति ॥ ४४ ॥

---

४१ । नरो० । आत्मज्ञानफलमाह—चिदात्मनीत्यादिना । मोहे देहे अहंबुद्धौ अज्ञे मूढे सम्भवो यस्य तस्मिन् तथा । आरब्धकर्मवेगेन प्राक्तनकर्मप्रवाहेणेत्यर्थः । तर्हि सुखदुःखादि-सम्बन्धः स्यादिति चेत्तत्राऽऽह—योगिन इत्यादि । अज्ञानात् सम्भवो यस्य तत्तथा ।

४२ । नरो० । सदुपदेशात्तवाऽऽत्मज्ञानं जातमतः परं दुःखानुभवो न भविष्यतीत्या-शयेनाऽऽह—तस्मादित्यादि । धृतः कञ्चुको येन स चासौ सर्पश्चेति तद्वत् । सर्पो यथा कञ्चुकं विहाय गच्छति तथा त्वमिदं शरीरं विहाय गमिष्यसीति भावः ।

---

[ सत्यज्ञानादिलक्षणं सत्यस्वरूपं ज्ञानस्वरूपम् आदिना आनन्दादिरूपम् । शुद्धं निर्लेपम्, बुद्धं विमोहम् । सदा शान्तं नित्यप्रकाशस्वरूपम् । अवधारयेत् चिन्तयेत् । गो० ]

४१ । अज्ञमविद्या तज्जन्ये मोहे देहादिष्वहंममताख्ये नष्टे नाशं प्राप्ते देहस्थितौ नाशे वा । योगिन आत्मज्ञस्याज्ञानजे सुखदुःखे न भवतः । रा० ।

[ अज्ञसम्भवे अज्ञानजन्ये । गो० ]

४२ । यावत् प्रारब्धक्षयो भवति तावद्देहेन सहितः सुखं तिष्ठ । यथा कञ्चुकवान् सर्पो यावत्तत्त्यागकालं तद्धत्तेऽनन्तरं त्यजति तद्वत् । रा० ।

[ धृतकञ्चुकसर्पवदिति । यथा कञ्चुकं देहे विद्यमानमपि गुणबुद्ध्या न मन्यते तथा विद्यमानमपि देहम् आत्मबुद्ध्या न मन्यते । गो० ]

---

1. ग 'यावज्ज्ञानस्य स-' । 2. ग ङ क्व 'रहिता', च 'सहिता' । 3 ग-ङ 'श्चौर-' ।

तस्याः सुग्रीवनिर्देशाद्वानराः परिमार्गणे ।
आगमिष्यन्ति जलधेस्तीरं तत्र समागमः ।
त्वया तैः कारणवशाद्भविष्यति न संशयः ॥ ४५ ॥
तदा [1]'सीतास्थितिं तेभ्य' कथयस्व यथार्थतः ।
तदैव तव पक्षौ द्वावुत्पतस्येते पुनर्नवौ ॥ ४६ ॥

सम्पातिरुवाच—

बोधयामास मां चन्द्रनामा मुनिकुलेश्वरः ।
पश्यन्तु पक्षौ मे जातौ नूतनावतिकोमलौ ॥ ४७ ॥

---

४५ । नरो० । कारणवशात् सीतान्वेषणकारणायत्तत्वात् इत्यर्थः ।

४७ । नरो० । अधुनाऽपि मम सामर्थ्यं नास्तीति सूचनाय अतिकोमलावित्युक्तम् ।

---

४५ । तीरमागमिष्यन्ति तैः सह कारणवशात्, फलमिह कारणम्, पक्षोत्पत्तिरूपफलाय तैः समागमो भविष्यति । रा० ।

४६ । तदेवाऽऽह—तदैवेति । तव पक्षौ द्वौ निश्चयमुत्पतस्येते इत्यर्थः । रा० ।

अत्राऽऽह वाल्मीकिः—

एष्यन्त्यन्वेषकास्तस्या रामदूताः प्लवङ्गमाः ।
आख्येया राममहिषी तेभ्यस्ते जनकात्मजा ॥
सर्वथा नैव गन्तव्यमीदृशः क्व गमिष्यसि ।
एवं कालं प्रतीक्षस्व पक्षौ हि प्रतिलप्स्यसे ॥ इति । ४।६१।१२-१३ ।

४७ । अत्र—

इत्युक्त्वा वानरान् सर्वान् सम्पाती खचरेश्वरः ।
उत्पपात गिरेः शृङ्गं जिज्ञासन्नात्मनो गतिम् ॥ ४।६३।९

इत्यादिवाल्मीकीयेन पक्षजननमात्रमेव उत्पतनात्—

आदित्यरश्मिभिर्दग्धौ पक्षावगमनक्षमौ ।
संवृत्तौ तत्प्रभावेण क्षणेन गमनक्षमौ ॥
यौवने वर्त्तमानस्य ममाऽऽसीद् यः पराक्रमः ।
तमेवाद्याधिगच्छामि बलं पौरुषमात्मनः ॥ ४।६३।१३-१५ ।

---

1 च 'सीतां स्थिता' ।

स्वस्ति वोऽस्तु गमिष्यामि सीतां द्रक्ष्यथ निश्चयम् ।
यत्न कुरुध्वं दुर्लङ्घ्यसमुद्रस्य विलङ्घने ॥ ४८ ॥
यन्नामस्मृतिमात्रतोऽपरिमितं संसारवारां निधिं
तीर्त्वा गच्छति दुर्जनोऽपि परमं विष्णोः पदं शाश्वतम् ।
तस्यैव स्थितिकारिणस्त्रिजगतां रामस्य भक्ताः प्रिया
यूयं किं न समुद्रमात्रतरणे शक्ताः कथं वानराः ॥ ४९ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्ध्याकाण्डे
अष्टमोऽध्यायः ॥ ८ ॥

---

४९। नरो०। दुर्लङ्घ्यसमुद्रलङ्घने अस्माकं सामर्थ्यमेव नास्ति किं तत्र यत्नेनेति चेत्तत्राऽऽह—यन्नामेत्यादि। लङ्घयितुमशक्यत्वात् संसार एव वारां निधिः समुद्रस्तं तथा। परमं परम्, यतः शाश्वतं नित्यम्। स्थितिकारिणः पालकस्य।

[ किष्किन्ध्याकाण्डे अष्टमाध्यायव्याख्या समाप्ता ॥ ८ ॥ ]

---

इत्यादिना च पौर्वसामर्थ्यप्राप्तिवर्णनश्रवणात् 'अधुनाऽपि मम सामर्थ्यं नास्तीति सूचनाय अतिकोमलावित्युक्तम्' इति यदुक्तं नरोत्तमेन तत् सम्पातेः—

अहमेव दुरात्मानं रावणं हन्तुमुत्सहे ।
भ्रातृहन्तारमेकाकी किन्तु पक्षविवर्जितः ॥ ( ४।७।४८ )

इत्याद्यवलेपमूलायाः स्वोक्तेः सामञ्जस्यसंसाधनायैवेति विभावयामः। अन्यथा पक्षाभावकृतो रावणनाशव्याघातः पक्षोद्गमे निवर्त्तमानस्तं पुना रावणवधे योजयेत्। वाल्मीकीये च सम्पातेर्लङ्कागमनादिसामर्थ्यख्यापनं कारणान्तरेण गतार्थमिति न तत्समर्थनार्थं पक्षयोः कोमलत्वविशेषणमादेयमासीदिति विभावनीयम्।

४८। निश्चयं द्रक्ष्यथ। तन्मुन्युक्तपक्षभवनिश्चयेन तदुक्तरावणवधोऽप्यवश्यं भावी स च न सीतादर्शनं विनेति तदप्यवश्यं भविष्यतीति निश्चयः। रा०।

४९। यन्नामस्मरणमात्राद् यः कश्चिद्दुर्जनोऽपि इयानिति परिच्छेदरहितं संसारसमुद्रं तीर्त्वा विष्णोः पदं गच्छति, एवं दृश्यमानप्रकारेण त्रिजगतां स्थितिकारिणः सर्वजगदुत्पत्तिस्थितिलयकर्त्तुः, स्थितिपदेनेतरदप्युपलक्ष्यते। रामस्य भक्ताः प्रियाश्च यूयं शतयोजनपरिच्छिन्नस्य समुद्रमात्रस्य तरणे किं कुतो न शक्ताः, कथञ्च न शक्ता इति व्यतिरेकालङ्कारः। रा०।

---

# नवमोऽध्यायः

—:o—

[1]श्रीमहादेव उवाच—

गते विहायसा गृध्रराजे वानरपुङ्गवाः ।
हर्षेण महताविष्टाः सीतादर्शनलालसाः ।
ऊचुः समुद्रं पश्यन्तो नक्रचक्र[2]भयङ्करम् ॥ १ ॥

तरङ्गादिभिरुन्नद्धमाकाशमिव [3]दुर्ग्रहम् ।
परस्परमवोचन् [4]वै कथमेनं तरामहे ॥ २ ॥

---

१ । नरो० । वानरपुङ्गवा वानरश्रेष्ठाः । महता हर्षेण आविष्टा व्याप्ता , यतः सीतादर्शनलालसाः । नक्रचक्रभयङ्करं कुम्भीरसमूहेन भीतिजनकमित्यर्थः ।

---

१ । गते इति, पक्षलाभादिति भावः । हर्षेणेति । मद्दृष्टि गतमिति तत्पक्ष-दर्शनप्रत्ययेन सीतादर्शनमवश्यभावीति हर्षेण च । नक्रचक्र नक्रसमूहः । रा० ।

सीतावार्त्ताश्रवणेन वानराणां हर्षमाह वाल्मीकीये—

आख्याते गृध्रराजेन समुत्पत्य प्लवङ्गमा ।
सहिताः प्रीतिसंहृष्टाः सिंहनादं विनेदिरे ॥ इति । ५।१।१ ।

२ । तरङ्गादिभिः तरङ्गा अल्पा , आदिना महत्यो लहर्यः । दुर्ग्रहं दु स्पर्शम्, आकाशस्य अस्पर्शत्वादस्य तु ग्रहादियुक्तत्वात् । कथमेनं तरामहे इति परस्परमवोचन्नित्यन्वय । रा० ।

पूर्वश्लोके ऊचुरिति । परस्परं बलविकत्थनादि कृतवन्त इत्यर्थः । त एव पुनः 'एनं कथ तरामहे' इति अवोचन् । पूर्वं सीतावार्त्ताश्रवणत एव हर्षातिशयाद विकत्थनादि, पश्चात् तादृशस्य समुद्रस्य दर्शनेन सन्देहान्दोलितचित्ततया एवमुक्तिरिति न विरोधः ।

समुद्रं विशिनष्टि वाल्मीकिः—

ते तु गत्वा समुद्रस्य दक्षिणस्योत्तरं गिरिम् ।
समुद्र ददृशुर्भीमं तिमिनक्रसमाकुलम् ॥

---

1 क ख ङ-पुस्तकेषु 'श्रीमहादेव उवाच' इति नास्ति । 2 च 'भयाकुलम्' । 3 च 'दुस्तरम' ।
4. क 'ते' ।

[1]उवाच चाङ्गदस्तत्र शृणुध्वं वानरोत्तमाः ।
भवन्तोऽत्यन्तबलिनः शूराश्च कृतविक्रमाः ॥ ३ ॥
को वाऽत्र वारिधिं तीर्त्वा राजकार्यं करिष्यति ।
एतेषां वानराणां [2]स प्राणदाता न संशयः ॥ ४ ॥
[3]अतोत्तिष्ठतु मे शीघ्रं पुरतो [4]यो महाबलः ।
वानराणाञ्च सर्वेषां रामसुग्रीवयोरपि ।
स एव पालको भूयान्नात्र कार्या विचारणा ॥ ५ ॥
इत्यु[5]क्ते युवराजेन तूष्णीं वानर[6]सैनिकाः ।
आसन् नोचुः किञ्चिदपि परस्परविलो[7]किनः ॥ ६ ॥

---

तं समुद्रं समालोक्य वानरा भीमविक्रमाः ।
सर्वलोकस्य महतः प्रतिबिम्बमिवार्णवम् ॥
सत्त्वैर्महद्भिर्विकृतैः क्रीडद्भिर्बहुभिर्जले ।
व्यादितास्यैर्महाकायैरूर्मिभिश्च समावृतम् ॥
प्रसुप्तमिव चान्यत्र क्रीडन्तमिव कुत्रचित् ।
क्वचित् पर्वतमात्रैश्च जलराशिभिरुच्छ्रितैः ॥
सङ्कुलं दानवेन्द्रैश्च पातालतलवासिभिः ।
लोमहर्षणमक्षोभ्यं दृष्ट्वा ते सागरं तदा ॥ इत्यादि । ५।१।२-६ ।

३ । कृतविक्रमाः पूर्वं बहुशः कृतपराक्रमाः । रा० ।

समुद्रदर्शनेन सन्देहान्दोलितचित्तानां भीतानाञ्च वानराणामुत्साहवर्धनार्थं नियामकोऽङ्गदः—भवन्तोऽत्यन्तबलिन इत्याद्याह ।

४ । को राजकार्यं करिष्यति तद् वदन्त्विति शेषः । यस्तद् वदिष्यति अहं कर्तेति स एषां प्राणदाता । रा० ।

५ । अतः यो महाबलः स शीघ्रमुत्तिष्ठतु । अतोत्तिष्ठतु इत्यार्षः सन्धिः । भूयाद् भवेदित्यर्थे आर्षम् । रा० ।

वानराणाञ्चेति । अग्निपुराणेऽपि—

कपीनां जीवनार्थाय रामकार्यार्थसिद्धये ।
शतयोजनविस्तीर्णं पुप्लुवेऽब्धिं स मारुतिः ॥ इति ९।२ ।

६ । अत्र वाल्मीकीयेऽपि—

अङ्गदस्य वचः श्रुत्वा न किञ्चित् कश्चिदब्रवीत् ।
स्तिमिताश्चाभवन् सर्वे तत्र ते हरियूथपाः ॥ इति । ५।१।२६ ।

---

1 च 'तानुवाचाङ्ग'। 2 ग 'हि'। 3 ग-ङ-च-छ 'अतोत्ति-'। 4 च 'हरिनन्दना.'। 5 ग-ङ-छ '-क्ता'। 6. ग '-पुङ्गवा'। 7 ग '-कना'।

अङ्गद उवाच—

उच्यतां [1]वो बलं [2]सर्वैः प्रत्येकं कार्यसिद्धये ।
केन वा साध्यते कार्यं जानीमस्तदनन्तरम् ॥ ७ ॥
अङ्गदस्य वचः श्रुत्वा प्रोचु[3]र्वीरा बलं पृथक् ।
योजनानां दशाऽऽरभ्य दशोत्तर[4]गुणं जगुः ।
शतादर्वाग् जाम्ब[5]वांस्तु प्राह मध्ये वनौकसाम् ॥ ८ ॥

७ । नरो० । तदनन्तरं बलकथनानन्तरम् ।

८ । नरो० । योजनानां दशाऽऽरभ्य शतादर्वाग् दशोत्तरगुण यथा स्यात्तथा, वीरा पृथग् बलं जगुरित्यन्वयः । दश उत्तरः अधिको गुणः अवयवो यत्र बलमाने तत्तथा । समुद्रस्य दशयोजनलङ्घने केषाञ्चित् कस्यचिद्वा सामर्थ्यम्, सप्ततियोजने केषाञ्चित् कस्यचिद्वा सामर्थ्यम्, चत्वारिंशद्योजनलङ्घने केषाञ्चित् कस्यचिद्वा सामर्थ्यम्, नवतियोजनलङ्घने केषाञ्चित् कस्यचिद्वा सामर्थ्यम् । एतदूर्ध्वलङ्घने हनूमन्तम् अङ्गदञ्च विना कस्यापि सामर्थ्यं नास्तीति भाव ।

७ । सर्वैर्युष्माभिर्वो निश्चयेन प्रत्येकं स्वस्वबलमुच्यताम् । ततः कार्यसाधकं निश्चेष्याम इत्यर्थः । रा० ।

८ । दशोत्तरगुणं दशसंख्योत्तरो गुणो यस्य तत् । एको दश परो विंशतिः परस्त्रिंशत्त्रिंशदित्यादिक्रमेण । जाम्बवांस्तु नवतिर्योजनानीत्याहेत्यर्थः । रा० ।

दशोत्तरगुणमिति । व्यक्तं वाल्मीकीये—

गयः पूर्वमुवाचेदं गमिष्ये दशयोजनम् ।
गवाक्षो योजनान्याह गमिष्ये विंशतिं परम् ॥
अब्रवीद् गवयः श्रीमांस्तस्यां वानरसंसदि ।
यामि त्रिंशतमेकाह्ना योजनानीति वीर्यवान् ॥
अथाद्रिशिखराकारो विक्रमेऽप्रतिमो हरिः ।
शरभः सुमहातेजाः प्रत्युवाचेदमङ्गदम् ॥
चत्वारिंशतमेकाह्ना योजनानि व्रजाम्यहम् ।
ततो हेमोपमः श्रीमानब्रवीद् गन्धमादनः ॥
सुखं योजनपञ्चाशत् क्रमेयं वानरर्षभाः ।
ततस्तु हिमवत्प्रायो मैन्दो वाक्यमथाब्रवीत् ॥
योजनानामहं षष्टिमुपक्रामितुमुत्सहे ।
द्विविदस्तु महातेजाः प्रत्युवाचेदमङ्गदम् ॥

1. क-ख-घ 'दे' । 2. ग 'सर्वे', ङ-छ 'सत्त्व' । 3 छ '-वीरवर' । 4. च '-शत' । 5. च '-वाँच' ।

पुरा त्रिविक्रमे देवे पादं [1]भूमानलक्षणम् ।
त्रिःसप्तकृत्वो[2]ऽहमगां प्रदक्षि[3]णविधानतः ।
इदानीं वार्द्धकग्रस्तो न शक्नोमि विलङ्घितुम् ॥९॥

[4]अङ्गदोऽप्याह मे गन्तुं शक्यं पारं महोदधेः ।
पुनर्लङ्घनसामर्थ्यं न [5]जानाम्यस्ति वा न वा ॥ १० ॥

---

९। नरो०। देवे त्रिविक्रमे सति पुराऽहं भूमानलक्षणं पादं प्रदक्षिणविधानतस्त्रिःसप्तकृत्वोऽगामित्यन्वयः। त्रयो विक्रमा यस्य तस्मिन् तथा। मीयते अनेनेति मानं भुवो मानं भूमानं तल्लक्षणं स्वरूपं यस्य तथा।

---

गमिष्यामि न सन्देहः सप्तति योजनान्यहम् ।
अग्निपुत्रस्ततो धीमान् नीलो वचनमब्रवीत् ॥
अशीतिं वै गमिष्यामि योजनानां प्लवङ्गमाः ।
त्वष्टुः पुत्रो नलः श्रीमानब्रवीद्धरिपुङ्गव ॥
गच्छेयं नवतिं पूर्णां योजनानीति हृष्टवत् । इति ५।१।४१—४९ ।

शतादर्वाग् जाम्बवांस्तु। वाल्मीकीयेऽपि—

संप्रत्येतावतीं शक्तिं गमने तर्कयाम्यहम् ।
दशोनं योजनशतं नवोनं वा न संशयः ॥ इति ।५।१।५६ ।

९। पुरा त्रिविक्रमे देवे अवतीर्णे सति तदीयं भूमानं भूपरिच्छेदलक्षणं कार्यं यस्य तादृशं भूपरिच्छेदकं पादम्। रा०।

पुरा त्रिविक्रमे देवे इति। अत्र वाल्मीकीये—

मया जटायुषा चैव बलियज्ञे सनातनः ।
विक्रमांस्त्रीन् क्रमन् विष्णुस्त्रिः प्रदक्षिणीकृतः ॥ इति। ५।१।५४ ।

१०। अङ्गदवचनं वाल्मीकीये—

अथोत्तरमुदारार्थमङ्गदो वाक्यमब्रवीत् ।
अनुमान्य महात्मानं जाम्बवन्तं महाकपिम् ॥
क्रमेयं योजनशतं सन्देहो नास्ति वानराः ।
पुनस्त्वागमने शक्तिं शीघ्रं नामर्षयाम्यहम् । इति ।५।१।५९-६० ।

---

1 च 'भूम्यवलम्बनम्', छ 'भूमावलम्बनम्'। 2 च 'स्त्वगम'। 3. क '-णावधा-' 4 ङ 'अङ्गद प्राह'। 5. ङ 'जानेऽप्यस्ति'।

तमाह जाम्बवान् [1]वीरस्त्वं [2]राजा नो नियामकः ।
न युक्तं त्वां नियोक्तुं मे त्वं [3]समर्थोऽसि यद्यपि ॥ ११ ॥

अङ्गद उवाच—

एवं चेत् पूर्ववत् सर्वे [4]स्वप्स्यामो दर्भविष्टरे ।
केनापि न कृत कार्यं जीवितुञ्च न शक्यते ॥ १२ ॥
तमाह जाम्बवान् वीरो दर्शयिष्यामि ते [5]सुत ।
येनास्माकं कार्यसिद्धिर्भविष्यत्यचिरेण [6]च ॥ १३ ॥
इत्युक्त्वा जाम्बवान् प्राह हनूमन्त[7]मवस्थितम् ।
[8]हनूमन् किं रहस्तूष्णीं स्थीयते कार्यगौरवे ।
[9]प्राप्तेऽज्ञ इव सामर्थ्यं दर्शयाद्य महाबल ॥ १४ ॥
त्वं साक्षाद्वायुतनयो वायुतुल्यपराक्रम ।
रामकार्यार्थमेव त्वं जनितोऽसि महात्मना ॥ १५ ॥

---

१२ । नरो० । दर्भविष्टरे कुशासने ।

१४ । नरो० । अज्ञ इव मूढ इव ।

---

११ । त्व नो नियामक अस्माकमाज्ञाकर्त्ता राजा त्वं यद्यपि समर्थोऽसि तथाऽपि त्वामाज्ञप्तुं मे न युक्तम् । रा० ।

अत्राऽऽह वाल्मीकीये—

तन्न शक्यं त्वया गन्तुमस्मानुत्सृज्य वै क्वचित् ।
न चास्माक क्षमं वीर मोक्तुं त्वां हरिपुङ्गव ॥ इति ।५।१।७४ ।

१२ । कार्यं केनापि न कृतं जीवितुञ्च न शक्यते राजभयात्; अतो मरणनिश्चयेन स्वप्स्याम इत्यर्थ । रा० ।

१३ । कार्यसिद्धिर्भविष्यति अचिरेण च भविष्यति तं दर्शयिष्यामि । रा० ।

१४ । कार्यगौरवे गुरुतरकार्ये प्राप्ते अज्ञेनेव भवता किं तूष्णीं स्थीयत इत्यन्वय । अत सामर्थ्यं दर्शय । रा० ।

अज्ञेनेवेति साधीयान् पाठः । नरोत्तमानुसृते प्रथमान्तपाठे तु अज्ञ इव त्वं बलं दर्शयेत्यन्वयः, मूर्खा हि स्वसामर्थ्यं दर्शयन्तीति लोकप्रसिद्धिः ।

१५ । ननु सामर्थ्याभावे किं दर्शनीयमिति चेन्नेत्याह—त्वमिति । रा० ।

---

1 ङ 'वीर त्व' । 2 च 'जनाना नि-' । 3 ङ-छ 'समर्थोऽपि' । 4 च 'स्वपामो' । 5 च 'रह.' । 6 ग 'तत्', ङ-छ 'हि', च' 'वै' । 7. छ '-मुपस्थितम्' । 8. क-ख ङ 'हनूमान्' । 9. क-ख-ग घ प्राप्तेऽज्ञेनेव', ङ 'मृगेन्द्र इव' ।

जातमात्रेण ते पूर्वं दृष्ट्वोद्यन्तं विभावसुम् ।
पक्वं फलं जिघृक्ष्यामीत्युत्प्लुत[1] बालचेष्टया ।
योजनानां [2]पञ्चशतं [3]पतितोऽसि ततो भुवि ॥ १६ ॥

१६ । नरो० । विभावसुं सूर्यम् । पञ्चानां शतानां समाहारस्तत्तथा ।

वायुतनय इति । हनूमतो वायुतनयत्वमवलम्ब्य वाल्मीकीये—

अञ्जनेति परिख्याता पत्नी केशरिण. कपे' ।
अभिशापक्षयाज्जाता पुनश्च दिवि चारिणी ॥
कपित्वे चारुसर्वाङ्गी कदाचित् कामरूपिणी ।
मानुषं विग्रहं कृत्वा साक्षादमरवर्णिनी ॥
व्यचरत् पर्वतस्याग्रे प्रावृष्यम्बुदसन्निभे ।
विचित्रमाल्याभरणा महार्हक्षौमवासिनी ॥
वस्त्र तस्या विशालाक्ष्या. पीतरक्तं सुशोभनम् ।
स्थितायाः पर्वतस्याग्रे मारुतोऽपाहरच्छनै ॥
स ददर्श ततस्तस्या वृत्तावूरू सुसंहतौ ।
स्तनौ पीनौ च रुचिरौ सुरूपौ प्रियदर्शनौ ॥
तां विशालायतश्रोणीं तनुमध्यामनिन्दिताम् ।
दृष्ट्वैव चारुसर्वाङ्गीं मारुतः काममोहित. ॥
स तां भुजाभ्यां दीर्घाभ्यां पर्यष्वजत भामिनीम् ।
मन्मथाविष्टसर्वात्मा ते मातरमनिन्दिताम् ॥
तत्र सा कोपसरक्ता सुनेत्रा वाक्यमब्रवीत् ।
एकपत्नीव्रतमिदं को नाशयितुमिच्छति ॥
अञ्जनाया वच श्रुत्वा प्रत्यभाषत मारुतः ।
न त्वा हिंसामि कल्याणि मारुतोऽस्मि शुभानने ॥
मनसाऽस्मि गतो यस्त्वां परिष्वज्य यशस्विनीम् ।
वीर्यवान् बुद्धिसम्पन्नस्तव पुत्रो भविष्यति ॥
स त्वं केशरिणः क्षेत्रे सम्भूतोऽमितविक्रम ।
मारुतस्यौरसः पुत्रस्तेजसा चासि तत्सम' ॥ इति । ७।१।१४-२४ ।

१६ । जिघृक्ष्यामीति ग्रहीष्यामीत्यर्थे आर्षम् । योजनानां पञ्चशतमुत्प्लुतं ततो भुवि पतितः । रा० ।

1, च '-त्य' । 2, च 'पञ्चशतात्' । 3 च 'पुनरुत्पतितो' ।

अतस्त्वद्बलमाहात्म्यं को वा शक्नोति वर्णितुम् ।
उत्तिष्ठ कुरु रामस्य कार्यं नः पाहि सुव्रत ॥ १७ ॥

श्रुत्वा जाम्बवतो वाक्यं हनूमानतिहर्षितः ।
चकार नादं सिंहस्य ब्रह्माण्डं स्फोटयन्निव ।
बभूव पर्वताकारस्त्रिविक्रम इवापरः ॥ १८ ॥

लङ्घयित्वा जलनिधिं कृत्वा लङ्काञ्च भस्मसात् ।
रावणं सकुलं हत्वानेष्ये जनकनन्दिनीम् ॥ १९ ॥

---

१८ । नरो० । उत्प्रेक्षते—त्रिविक्रम इवापर इति ।

---

पक्वं फलमिति । क्रीडार्थं पक्वफलग्रहणाभिलाषो हनूमत इति—

उद्यन्तं हि त्वमादित्यं बालो दृष्ट्वा महाचले ।
ग्रहीतुकाम क्रीडार्थं गिरेरुत्पतितो दिवम् ॥ ५।१।२५ ।

वाल्मीकीये क्रीडार्थमित्युक्तिदर्शनादनुमेयम् । योजनानां पञ्चशतम् इत्यस्य

शतानि त्रीणि तत्रोर्ध्वं योजनानां महाकपे । ५।१।२६ ।

इत्यादिना वाल्मीकीयेन विरोध ।

१८ । सिंहस्य नादं तस्येव नादमित्यर्थ । रा० ।

सिंहस्य नादं चकार इति । वाल्मीकीयेऽपि—

यथा विजृम्भते सिंहः प्रवृद्धः काननान्तरे ।
मारुतस्यौरस· पुत्रस्तथा संप्रत्यजृम्भत ॥

अशोभत मुखं तस्य जृम्भमाणस्य धीमत· ।
अम्बरीषोपमं दीप्तं विधूम इव पावक· ॥ इति ५।२।४-५ ।

हनूमत आकारविपरिणमनमवलम्ब्य वाल्मीकीये—

सस्तूयमानो हनुमान् व्यवर्धत महाकपि· ।
समाविध्यत लाङगूलं चरणौ चान्तकोपम· ॥

तस्य संस्तूयमानस्य वृद्धैर्वानरपुङ्गवैः ।
तेजसा पूर्यमाणस्य रूपमासीत तदद्भुतम् ॥

यथा चन्द्रमसो वृद्ध्या पूर्यते सागरोऽम्भसा ।
ववृधे स्तूयमानस्य तथा वीर्यं हनूमत· ॥ इति । ५।२।१-३ ।

यद्वा बद्ध्वा गले रज्ज्वा रावणं वामपाणिना ।
लङ्कां सपर्वतां धृत्वा रामस्याग्रे क्षिपाम्यहम् ।
यद्वा दृष्ट्वैव यास्यामि जानकीं शुभलक्षणाम् ॥ २० ॥
श्रुत्वा हनूमतो वाक्य जाम्बवानिदमब्रवीत् ।
दृष्ट्वैवाऽऽगच्छ भद्र ते जीवन्तीं जानकीं शुभाम् ।
पश्चाद्रामेण सहितो दर्शयिष्यसि पौरुषम् ॥ २१ ॥
कल्याणं भवता[1]द्भद्र गच्छतस्ते विहायसा ।
गच्छन्त रामकार्यार्थं वायुस्त्वा[2]मनुगच्छतु ॥ २२ ॥
इत्याशीर्भिः[3] समामन्त्र्य विसृष्ट' प्लवगा[4]धिपैः ।
महेन्द्राद्रिशिरो गत्वा बभूवाद्भुतदर्शन ॥ २३ ॥

२१ । नरो० । पौरुषं पुरुषक्रियाम् ।
२२ । नरो० । भवताद्विति 'तोस्ताद्धाशिषि' इति तो स्थाने तात ।
२३ । नरो० । महेन्द्राद्रिशिरो महेन्द्रस्य प्रथमशिखरमित्यर्थ ।

२० । रावणं गले बद्ध्वा एकहस्ते गृहीत्वा वामपाणिना सपर्वतां लङ्कां धृत्वा रामाग्रे क्षिपामि । यद्वेति । सीताया आनयने रामाज्ञाभावाद्विति भाव. । रा० ।
२१ । दृष्ट्वेति, न तु तां गृहीत्वा नापि रावणादीन् गृहीत्वेत्यर्थ' । रा० ।
२२ । वायुस्त्वामनुगच्छत्विति शकुनप्रार्थनम् । रा० ।
२३ । समामन्त्र्य योजयित्वा अदभुतदर्शनोऽतिमहाशरीरत्वात् । रा० ।
स्वभारधारणे पृथिवीमसमर्थां विवेचयतो हनूमतो महेन्द्राद्रिशिखरारोहणमवलम्ब्य वाल्मीकीये—

क्रामन्तं वर्धमानञ्च धरणी मां न धारयेत् ।
प्लवतो हि ममाऽऽधारं न करिष्यति मेदिनी ॥
उच्छ्रित शैलशिखरं विशालं सुदृढं महत ।
ज्ञायतां तत्र गच्छामो यन्मे वेगं सहिष्यति ॥
पार्श्वे हि मलयस्यायं रम्यः प्रस्रवणो गिरि' ।
आरुह्यैनं क्रमिष्यामि सागरं सरितां पतिम् ॥ इति ।९।३।७७-७९ ।

1 ग ङ क 'द्भद्र' । 2 ग 'स्व' । 3 ग ङ क 'भिस्समामन्त्र्य', च '-र्भिस्समानन्च्य' । 4 ग 'धिप' ।

महानगेन्द्रप्रतिमो महात्मा सुवर्णवर्णोऽरुणचारुवक्त्रः ।
महाफणीन्द्राभसुदीर्घबाहुर्वातात्मजोऽदृश्यत [1]सर्वभूतैः ॥ २४ ॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्ध्याकाण्डे
नवमोऽध्यायः ॥ ९ ॥

---

२४ । नरो० । महानगेन्द्रप्रतिमः बृहत्पर्वतश्रेष्ठतुल्य इत्यर्थः । महात्मा महामतिः, महाकायो वा । अरुणं चारु मनोहरं वक्त्रं यस्य स तथा ।

[ किष्किन्ध्याकाण्डे नवमाध्यायव्याख्या समाप्ता ॥ ९ ॥ ]

---

स तैः परिवृतः श्रीमान् वानरैर्वानरर्षभः ।
आरुरोह गिरिश्रेष्ठं महेन्द्रमरिमर्दनः ॥ इति च । ९।४।३।

२४ । तदेवाऽऽह—महानगेन्द्रेति । रा० ।

बाहू विशिनष्टि वाल्मीकीये—

तस्याम्बरगतौ बाहू शुशुभाते प्रसारितौ ।
अमलाविव निस्त्रिंशौ निर्मुक्तौ भुजगाविव ॥ ९।९।२२ ।

तस्य वर्णवैशिष्ट्यमाह तत्रैव—

स्फिग्देशेनातिताम्रेण रराज स महाकपिः ।
महता दारितेनेव गिरिर्गैरिकधातुना ॥ इति । ९।९।२६ ।

किष्किन्ध्याकाण्डं समाप्तम् ॥ ४ ॥

1. क 'भूतवर्गैः' ।